'पूर्ववदि' त्यनया रीत्याऽतिदेष्टुं शक्ये । किञ्च, "विश्वेदेवास" इत्यृचा विश्वेदेवान्, "उशन्तस्त्वे" त्यृचा पितॄनावाह्येति श्राद्धप्रकरणे याज्ञवल्क्येनोक्तम् । तथा च तत्रैकैकमन्त्रस्यैवावाहनकरणत्वश्रुतेर्मन्त्रद्वयमेव लभ्यते, न तु बहवो मन्त्राः । तथा च मन्त्रैरिति बहुवचनमलग्नकम् ।

नच "विश्वेदेवाः शृणुतेममि" त्यनेन "आयन्तु नः" इत्यनेन च सह चतुष्ट्वेंसिद्धे बहुवचनोपपत्तिः । याज्ञवल्क्येनैवानयोरावाहनेऽनुपयोजनात् । प्रत्युत "जपेन्मन्त्रं विश्वे देवाः शृणुते" ति, "जपेदायन्तुनस्तत" इति वचनाभ्यामनयोर्जपे विनियोजनाच्च । अपि च, देवावाहनमन्त्रस्य ब्रह्मादि-प्रकाशनसामर्थ्यमपिनास्ति। तल्लिङ्गाद्यभावात् । तस्मात्प्रकृतस्य याज्ञवल्क्यवचनस्यान्यथैवान्वयः ।

तथाहि, आवाह्य सुरान् तर्पयेत् । आवाह्य पितॄन् तर्पयेन्मन्त्रैः । पूर्ववत् = देववत् । तेन पितृतर्पणवाक्येऽपि प्रणवस्तृप्यतामिति च लभ्यते । एवं सति कैर्मन्त्रैः पितृतर्पणमित्यपेक्षायां तल्लिङ्गैरिति । अत्रापि कस्य मन्त्रस्य किन्तर्पणे विनियोग इति कात्यायनेन विवेचितम् । आवाहनन्तु देवानां "देवा आगच्छन्त्वित्येव, तदर्थप्रकाशकत्वात् । पित्रावाहनन्तु कार्ष्णाजिनिक्रमेण । तद्यथा–

**नाभिमात्रे जले स्थित्वा चिन्तयेदूर्ध्वमानसः ।**
**आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम् ॥ इति**

जलतर्पणपक्षे चात्र नाभिमात्रजलावस्थानं द्रष्टव्यमित्याहुः ।

देवा आगच्छन्त्वित्यस्य मन्त्रत्वाभावाद् व्याहृतिभिरावाहनम्,

**आज्यं द्रव्यमनादेशे जुहोतिषु विधीयते ।**
**मन्त्रस्य देवतायाश्च प्रजापतिरिति स्थितिः ॥**

इति छन्दोगपरिशिष्टवचनेन मन्त्रविशेषानुपदेशे व्याहृतिमन्त्रप्रतीतेः । पित्रावाहने तु "उशन्तस्त्वे" ति, "आयन्तु नः" इत्यादि, "आगच्छन्तु मे पितर" इति च त्रयो मन्त्रा इति प्रदीपकृत आहुः ।

---

(४) ण लेख पुव (५) 'च' इति नास्ति (६) ले. पु.क-६ लभ्यते । ले. पु. ७ मित्यादिभिः ।

वस्तुतस्तु–

आस्तीर्य च कुशान् साग्रान् तानावाह्य स्वमन्त्रतः ।
प्राचीनाग्रेषु वै देवान् दक्षाग्रेषु तथा पितॄन् ॥

इति ब्रह्मपुराणवचनाद् बहुवचनरहिताद् रत्नाकरादिमतं श्रेय इत्याचार-चिन्तामणिद्वैतपरिशिष्टौ ।

अत्रोपपादितेषु मतेष्वन्ये त्वित्यादीत्याहुरित्यन्तमतमवलम्बते आचार-द्वैतविवेकः । आचारादर्शस्वरसोऽप्येवम् । आचारविवेकस्तु प्रदीपकृन्म-तमवलम्बते । स्मृतिकौमुद्यां देवनाथठक्कुरैस्तु –पूर्ववत्= श्राद्धप्रकरणोक्तवत् । तेन 'विश्वेदेवास' इति देवान्, 'उशन्स्त्वेति पितॄनावाह्य, तल्लिङ्गैर्मन्त्रैस्तर्पयेदिति वाक्यार्थः । न च बहुवचनासङ्गतिः । अविवक्षितत्वादित्यादिकल्पतरुकारादीनां मतमुपपाद्य तिरस्कृत्य वस्तुतो मन्त्रैरावाह्य पूर्ववत्=देववत् तर्पयेदिति वाक्यार्थः । नच बहुवचनानुपपत्तिः, "आयन्तु नः" इत्यस्यापि गोभिलेनावाहने विधानादिति सिद्धान्तितम्" इति ।

अत्र कल्पतरुकार–श्रीदत्तोपाध्यायग्रन्थावधिकृत्य कल्पतरुकारमत-स्थापनमुद्रया "श्रीदत्तस्तु–पूर्ववत्तपर्येदिति सम्बन्धः । तेन पितृतर्पणेऽप्योङ्का-रस्तृप्यतामिति च लभ्यते । कल्पतरुव्याख्या तु "योगशास्त्रञ्च मत्प्रोक्तमि" ति याज्ञवल्क्यसंहितायामभिधानाद् योगियाज्ञवल्क्यसंहितैव पूर्वेति न साधी-यसी । मन्त्रैः=उदीरतामवर इत्यादिभिरि" इत्याह, तन्नेत्येवंरूपेण श्रीदत्तव्याख्यायाः खण्डने "सन्निहितयोजनायां सम्भवन्त्यां व्यवहितयोजनाऽनौचित्यात् । उदीरतामित्यादिमन्त्रसम्बन्धे मानाभावाच्च । याज्ञवल्क्यसंहितायाश्च योगियाज्ञवल्क्यसंहिताऽपेक्षया प्राक्तनत्वं परिभाषाप्रकाशेऽस्माभिर्बहुधा व्यवस्थापितम् । यच्च विश्वेदेवास, उशन्तस्त्वेतयोरेवाभिधानान्मन्त्रैरिति बहुवचनमनुपपन्नमिति, तदपि न । आवाहनाङ्गीभूताऽऽयान्तु नः इति मन्त्रमादाय बहुत्वोपपत्तेरि" त्याह वीरमित्रोदयः । तन्न, "आवाह्य पूर्ववदि" ति वचनस्थ पददृष्ट्या "आवाह्ये" ति पदस्य", "मन्त्रैरि" ति पदेन सह सन्निहितत्वेऽपि एतस्यापि वचनस्य तर्पण प्रकरणीयत्वेन पूर्वानुवृत्तेन प्रकरणतः सन्निहितेन च तर्पयेदिति मुख्यक्रियापदेन सम्बन्धौचित्यात् । उदीरतामित्यादिमन्त्रसम्बन्धे

"आवाह्य पूर्ववदि" ति वचनव्याख्यावसरे प्रदर्शित कात्यायनयोगियाज्ञवल्क्य-वचनयोर्मानत्वेन सत्वेऽपि मानाभावादिति कथनस्यायुक्तत्वाच्च। योगियाज्ञवल्क्यसंहितापेक्षया याज्ञवल्क्यसंहितायाः प्राक्तनत्वसिद्धये परिभाषाप्रकाशे विद्यमानो लेखोऽपि[१] यथा-

"योगियाज्ञवल्क्यवृद्धमनु-वृद्धशातातप-वृद्धवसिष्ठ लघु हारीतस्मरणानि षट् त्रिंशत्स्मृतिकारकर्तृकाण्येव, अवस्थाभेदेन तैरेव करणात्। अतएव याज्ञवल्क्येनोक्तं "योगशास्त्रञ्च मत्प्रोक्तमि" ति।

योगियाज्ञवल्क्यग्रन्थे-स्नानमब्दैवतैर्मन्त्रैर्यत्त्वयोक्तं पुराऽनघ इति योगियाज्ञवल्क्यं प्रति ऋषिप्रश्ने याज्ञवल्क्यग्रन्थोक्तस्नानानुवादाच्चेति वीरमित्रोदयकथनमपि न सर्वथा युक्तम्। एतस्मिन् ऋषिप्रश्ने याज्ञवल्क्य-ग्रन्थोक्तस्याब्दैवतमन्त्रकरणकस्नानस्यानुवादत्वे 'मत्प्रोक्तं', 'त्वयोक्तमि' त्यत्रत्य-भूतकालिक 'क्त' प्रत्ययार्थयोः परस्परं समन्वयस्य कर्त्तुमशक्यत्वात्। एतेन कस्या अपि स्मृतेः पूर्वकालिकत्वस्य परकालिकत्वस्य वा निर्णेतुमशक्यत्वात्। वस्तुतः याज्ञवल्क्यस्मृतिग्रन्थे (आचाराध्याये) अब्दैवतमन्त्रैः स्नानस्य स्नानानुकल्पस्य वा उल्लेखाभावाच्च। यथा चात्र-याज्ञवल्क्यस्मृति :-

**स्नानमब्दैवतैर्मन्त्रैमार्जनं प्राणसंयमः।**
**सूर्यस्य चाप्युपस्थानं गायत्र्याः प्रत्यहं जपः॥....**

**प्राणानायम्य संप्रोक्ष्य तृचेनाब्दैवतेन तु।**
**जपन्नासीत सावित्रीं प्रत्यगातारकोदयात्॥** इति

"प्रातःस्नानं यथाशास्त्रमब्दैवतैर्मन्त्रैः=आपोहिष्ठा इत्येवमादिभिर्मार्जनम्, प्राणसंयमः=प्राणायामः" इत्यादितन्मिताक्षरा। एवञ्चात्र वचनपठित-'स्नानमि'त्यनेन विहितस्नानादतिरिक्तस्य आपोहिष्ठेत्यादिमन्त्रैः पृथक्तयैव मार्जनस्य विधानाद् याज्ञवल्क्यग्रन्थोक्तस्नानुवादोऽसम्भावित एव। अतएव-सुष्ठूक्तं श्रीदत्तोपाध्यायेन -"अत्रापि पूर्वाध्यायेऽभिधानादि" ति। एतेन याज्ञवल्क्य-स्मृति-ग्रन्थापेक्षया योगियाज्ञवल्क्यग्रन्थः पूर्वकालिक एव सिद्धः।

---

पाठा० (१) परिभाषाप्रकाश; पृ० १६।

कल्पतरुकारेण "विश्वेदेवासः", "उशन्तस्त्वा" इत्यनयोरेवाभिधानेऽपि 'मन्त्रैरि'त्यत्र बहुवचनोपपत्त्यर्थमावाहनाङ्गीभूतायन्तुनः इति मन्त्रस्य वीरमित्रोदय-द्वारा प्रदर्शनमप्यकिञ्चित्करमेव,

**द्विगुणाँस्तु कुशान् दत्त्वा ह्युशन्तस्त्वेत्यृचा पितॄन्।**
**आवाह्य तदनुज्ञातो जपेदायन्तु नस्ततः॥**

इति याज्ञवल्क्य (आचार श्राद्ध० २२३) वचनेन, "उशन्तस्त्वाविधीमहि (ऋ० ७।६।२२।२) इत्यनया ऋचा पित्रादीनावाह्य "आयन्तु नः पितरः" इत्यादिना मन्त्रेणोपतिष्ठेदि" ति तस्य मिताक्षराव्याख्यया च "आयन्तु नः" इति मन्त्रस्य आवाहनाङ्गीभूततया स्वीकर्त्तुमशक्यत्वात् । प्रत्युत प्रकृतस्य "आवाह्य पूर्वमन्त्रैरि" ति वचनस्येव "द्विगुणाँस्तु कुशानि" ति वचनस्यापि प्रणेत्रा योगियाज्ञवल्क्येन "आयन्तु नः" इति मन्त्रस्य पित्रुपस्थान (पितृजप) मन्त्रतयैवाभिधानात्। देवावाहनार्थं कल्पतरुकार प्रतिपादि तस्य "विश्वेदेवासः" इति मन्त्रस्य तर्पणीयब्रह्मादिदेवप्रकाशनसामर्थ्याभावेन गृहीतुमशक्यतया मन्त्रैरिति बहुवचनोपपत्तेः सर्वथा दुर्लभत्वाच्चेत्यलम्।

[ हिन्दी टीका ]

यहाँ कल्पतरुकार का कहना है कि "आवाह्य पूर्ववन्मन्त्रैः" इस मूल वचनांश का तात्पर्य-योगियाज्ञवल्क्यसंहिता (स्मृति) से पूर्वकृत याज्ञवल्क्यसंहता के श्राद्धप्रकरण में आवाहन के लिए पठित 'विश्वेदेवास आगतः' , 'उशन्तस्त्वा' इत्यादि मन्त्रों से देवता और पितरों का आवाहन कर'–इस अर्थ से है । किन्तु यह अर्थ इसलिए युक्तिसंगत नहीं कि योगशास्त्र "मत्प्रोक्तम्" इस याज्ञवल्क्यसंहिता[1] [अर्थात् आत्मा में अन्य विषयों से चित्तवृत्ति का तिरस्कार पूर्वक धैर्य धारण करना योग कहा जाता है । उसे पाने के लिए आदित्य से जो बृहदारण्यक (वेद के व्याख्यारूप ब्राह्मण भागों के अन्तर्गत एकभाग, जो या तो वन में बैठकर रचे गए थे या जिनको वन में जाकर पढ़ना चाहिए–अरण्येऽनूच्यमानत्वादारण्यकमिति स्मृतम् । अरण्येऽध्ययनादेव आरण्यक मुदाहृतम् ).मैंने प्राप्त किया वह ज्ञातव्य है तथा मेरे द्वारा कहा गया योगशास्त्र भी ज्ञातव्य है] के वचन को योगियाज्ञल्क्यसंहिता की अपेक्षा दूसरी याज्ञवल्क्यसंहिता अर्थात् याज्ञवल्क्यस्मृति में कहा गया है । इससे स्वतः सिद्ध हो जाता है कि याज्ञवल्क्य संहिता (स्मृति) की अपेक्षा योगियाज्ञवल्क्य संहिता (स्मृति) ही पूर्व रचना है ।

१. प्राय० यति. ११० ।

यहाँ यह शंका की जा सकती है कि योगियाज्ञल्क्यस्मृति ग्रन्थ में भी योगियाज्ञवल्क्यके प्रति ऋषियों का प्रश्न है कि "स्नानमब्दैवतैर्मन्त्रैर्यत्त्वयोक्तं मयाऽनघ" अर्थात् "आपने पहले "आपोहिष्ठा" आदि मन्त्रों (तीनों ऋचाओं) से जो स्नान कहा है ?" । फलतः यह स्नान तो याज्ञवल्क्यस्मृति में कहे गए "स्नानमब्दैवतैर्मन्त्रैः" से कहे गए स्नान का स्मारक (स्मरण कराने वाला) है । तब क्यों न याज्ञल्क्यस्मृति को ही पूर्व रचना मानी जाय ? किन्तु यह शंका इसलिए युक्तियुक्त नहीं कही जा सकती है कि याज्ञवल्क्यस्मृति ग्रन्थ में कहे गए "स्नान मब्दैवतैर्मन्त्रैः" आदि वचन का मिताक्षरा आदि प्रामाणिक व्याख्या के अनुसार अर्थ है कि "स्नान अर्थात् शास्त्रानुसार प्रातःस्नान, आपोहिष्ठा आदि मन्त्रों से होने वाला मार्जन तथा प्राणायाम आदि द्विजाति को प्रतिदिन करने चाहिएँ ।" अतः योगियाज्ञल्क्यग्रन्थ का संकेत याज्ञवल्क्यस्मृति के वचन की ओर मानना कदापि उचित नहीं होगा । अपितु योगियाज्ञल्क्यग्रन्थ में ही इस प्रश्न वाक्यवाले अध्याय के पहले अध्याय में कहा गया है कि "शरीर की असामर्थ्य तथा अतिवृष्टि आदि की स्थिति में कितने ही मुख्य विद्वान 'मान्त्र' आदि सात प्रकार के स्नान मानते हैं । इनमें पहला "आपोहिष्ठा" आदि तीनों ऋचाओं से होनेवाला मार्जन मन्त्रस्नान कहा जाता है । इसी तरह पार्थिव, आग्नेय, वायव्य, दिव्य, वारुण और मानस स्नान (विभिन्न लक्षण वाले) हैं ।

इन योगियाज्ञवल्क्य-वचनों को उद्धृत कर आचारचिन्तामणि की व्याख्या है कि "इन स्नानों में वारुण स्नान मुख्य है । आपोहिष्ठा आदि तीनों ऋचाओं से होनेवाला मार्जन मन्त्रस्नान कहलाता है । उक्त स्थिति विशेष में सभी स्नान समानफलवाले हैं ।

परिणामतः 'त्वयोक्तंम्' की अपेक्षा "मत्प्रोक्तम्" पद प्रयोग के आधार से योगियाज्ञल्क्यसंहिता याज्ञवल्क्य की पूर्व रचित कृति निर्विध्न मानी जायगी । इससे अधिक इस लम्बी व्याख्या के अन्तवाले प्रकरण में भी देखा जा सकता है ।

अब इस तरह मूलवचन के एक अंश "पूर्ववन्मन्त्रैः" की कल्पतरुकार के द्वारा की गई व्याख्या के प्रथम भाग-"पूर्ववर्त्ती याज्ञवल्क्यसंहिता के" वाले अंश का खण्डन कर "श्राद्धावाहन मन्त्रों से आवाहन कर" इस शेष दूसरे भाग के भी खण्डन करने के उद्देश्य से दूसरे प्रकरण का उपक्रम "किञ्च" पद से किया जा रहा है ।

और भी देखें । कल्पतरुकार के अनुसार देव एवं पितरों के आवाहन निमित्त याज्ञवल्क्यसंहिता (आचार, श्राद्ध० २२९/२३३) के श्राद्धप्रकरण में निर्दिष्ट "विश्वदेवासः" तथा "उशन्तस्त्वा" ये दो ही मन्त्र मान्य होंगे । ऐसी स्थिति में वचन में पठित 'मन्त्रैः' पद से बहुवचन का कहा जाना सर्वथा अयुक्त हो जायगा ।

अन्य भी देखें। उक्त संहिता में विश्वे देव के आवाहन के लिए कहे गए ''विश्वे देवासः'' इस मन्त्र से तर्पणीय ब्रह्मा आदि देव रूप अर्थ का प्रकाशन भी नहीं होता, तब उक्त (विश्वेदेवासः) इस मन्त्र से ब्रह्मादि देवों का आवाहन करने की कल्पतरुकार की व्याख्या कैसे उपयुक्त कही जा सकती है ? अतः मेरे (श्रीदत्त उपाध्याय) द्वारा कही गई व्याख्या ही युक्तियुक्त है।

अलग से, विविधमतप्रदर्शक नित्यकृत्यार्णव आदि में उद्धत कुछ अंशो का भाव अतीव संक्षिप्त प्रकृत ग्रन्थ का भावार्थ समझने हेतु दिखाया जा रहा है। यथा–प्रकृतवचन में पठित 'पूर्वमन्त्रैः' का तात्पर्य याज्ञवल्क्य संहिता के श्राद्धप्रकरण में लिखित 'विश्वेदेवास आगत उशन्तस्त्वा' इत्यादिमन्त्रों से है। अर्थात् इन मन्त्रों से देव एवं पितरों का आवाहन कर 'उदीरतामवर' इत्यादि पितृ प्रकाशक मन्त्रों से तर्पण करें। किन्तु यह प्रकार छन्दोग (सामवेदी) से इतर व्यक्तियों के लिए है। यह मत रत्नाकर निबन्ध का है।

यहीं आचारचिन्तामणि के लेखानुसार कल्पतरु एवं प्रकाशकार (नित्यकृत्यार्णव के अनुसार रत्नाकर) का भी कहना है कि याज्ञवल्क्य संहिता के ही श्राद्ध प्रकरण में विहित ''विश्वेदेवास आगत'' तथा 'विश्वेदेवा शृणुतेमम्' इन दोनों मन्त्रों से ब्रह्मा आदि देवों का आवाहन कर तर्पण करे। 'उशन्तस्त्वा' तथा 'आयन्तु नः' इन दोनों मन्त्रों से पितरों का तर्पण करें।

यहीं इन से अन्यों (म० म० विभाकर विनिर्मित आचारद्वैतविवेक का मत तथा आचारादर्श का स्वरस) का अभिप्राय है कि ''योगशास्त्रञ्च मत्प्रोक्तम्'' (इसका अर्थ अभी–अभी पूर्व में दिखाया जा चुका है) इस याज्ञवल्क्यस्मृति के वचनानुसार योगियाज्ञवल्क्य संहिता को ही पहले निर्मित होना निश्चित होता है। तब योगियाज्ञवल्क्यसंहिता के द्वारा वर्णित तर्पण त तर्पण में के द्वारा कहे गए श्राद्धावाहन मन्त्र का ''आवाह्य पूर्वमन्त्रैः'' इस वचन में पठित 'पूर्ववत्', पद से अतिदेश (अन्य वस्तु के धर्म का अन्य पर आरोपण) करना युक्तियुरु नहीं हो सकता, क्योंकि आगे कहे जानेवाले विषय पर पूर्व में कहे गए 'पूर्ववत्' इस रीति से अतिदेश करना कहीं भी संभव नहीं हो पाता है। दूसरी बात, याज्ञवल्क्य ने श्राद्धप्रकरण में 'विश्वेदेवासः' इस ऋचा से विश्वेदेवों का और 'उशन्तस्त्वा' इस ऋचा से पितरों का आवाहन करने को कहा है। इस तरह वहाँ एक–एक मन्त्र के द्वारा ही आवाहन करने को सुने जाने के कारण योग में दो ही मन्त्र उपलब्ध हो पाते हैं, नकि बहुत से मन्त्र भी। तब तो वचनपठित 'मन्त्रैः' पद में प्रयुक्त बहुवचन अनुपपन्न अनर्थक अर्थात् असङ्गत हो जाता है। यदि यहाँ यह समाधान किया जाय कि उक्त दोनों ऋग्मन्त्रों को

''विश्वेदेवा:शृणुतेमम्'' इस मन्त्र के तथा ''आयन्तु न:'' इस मन्त्र के साथ योग कर दिया जाय तो चार मन्त्र हो जाते हैं, तब बहुवचन का कहा जाना उपपन्न हो जायगा । किन्तु यह कहना भी इस लिए उपयुक्त नहीं हो सकता, कि याज्ञवल्क्य ने तो ऊपर से जोड़े जानेवाले इन दोनों मन्त्रों को आवाहन में उपयोग करने को कहा नहीं है । प्रत्युत ''जपे मंन्त्र विश्वेदेवा: शृणुतेमम्'' तथा ''जपेदायन्तुनस्ततः'' इन दोनों मन्त्रों को जप के लिए विनियोजित किया है ।

और भी देखें । देवों के आवाहन निमित्त निर्दिष्ट ''विश्वदेवास:'' इस मन्त्र को ब्रह्मा आदि देवों के अर्थ प्रकाशन की शक्ति भी नहीं है । इस हेतु प्रकृत योगियाज्ञवल्क्य वचन का अन्वय दूसरे ही तरीके से कहना होगा । यथा- देवों का आवाहन कर तर्पण करें । पितरों का आवाहन कर ''उदीरतामवर'' आदि मन्त्रों से तर्पण करें । पूर्ववत्=अर्थात् देवों के जैसे । इससे सिद्ध होता है कि पितृतर्पण वाक्य में भी 'ओङ्कार' और 'तृप्यताम्' इन दोनों पदों का प्रयोग किया जाय । किन मन्त्रों से 'पितृतर्पण किया जाय ? इसी के समाधान हेतु आगे वचन में ''तल्लिङ्गैः'' कहा गया है और कात्यायन ने इन मन्त्रों का विवेचन भी कर दिया है । किन्तु देवों का आवाहन 'देवा आगच्छन्तु' इस मन्त्र से तथा पितरों का आवाहन कार्ष्णाजिनि के वचनानुसार ''आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम्'' इस मन्त्र से करना चाहिए । साथ ही इन्हीं के उक्त श्लोकात्मक वचन के पूर्वार्ध ''नाभिमात्रे जले स्थित्वा चिन्तयेदूर्ध्वमानसः'' के अनुसार जल तर्पण पक्ष में नाभिप्रमाण जल में खड़ा रहना चाहिए ।

यहीं प्रदीप-कार का कहना है कि ''देवा आगच्छन्तु'' यह कोई मन्त्र नहीं है । अत: छन्दोग परिशिष्ट के ''यदि हवन में किसी द्रव्य विशेष का उपादान न किया गया हो तो घृतरूप द्रव्य तथा मन्त्र एवं देवता के अनादेश स्थल में प्रजापति को समझना चाहिए'' इस वचन के अनुसार देवों का आवाहन में व्याहृति मन्त्र तथा पितरों के आवाहन में ''उशन्तस्त्वा'', ''आयन्तु नः'' और ''आगच्छंन्तु मे पितर'', इत्यादि तीन मन्त्र होने चाहिए ।

यहाँ आचारचिन्तामणि तथा द्वैत परिशिष्ट का कहना है कि वास्तव में देखा जाय तो ''पूर्वदिशा में पूर्वाग्र कुशो को बिछाकर उनपर देवों का तथा दक्षिण दिशा में बिछे हुए दक्षिणमुख कुशों पर पितरों का अपने-अपने मन्त्र से आवाहन कर तर्पण करें'' ब्रह्मपुराण के बहुवचनरहित इस वचन के अनुसार रत्नाकर आदि का मत समीचीन है (न कि श्रीदत्त प्रतिपादित मत भी) ।

यहाँ अभी तक उपपादित मतों में 'अन्येतु' से 'आहुः' (अन्यों का मत है कि आदि) पर्यन्त का मत आचारद्वैतविवेक का है। आचारादर्श का स्वरस भी ऐसा ही है।

आचार विवेक तो प्रदीपकार के मत का पक्षपाती है। स्मृतिकौमुदी में देवनाथ ठक्कुर ने तो कल्पतरुकार के मत का उपपादन एवं खण्डन कर सिद्धान्तित किया है कि मन्त्रों से आवाहन कर देव के जेसे पितरों का तर्पण करे, यह वाक्यार्थ होगा। 'मन्त्रैः' पद के बहुवचन की असंगति तो गोमिल के द्वारा आवाहन के लिए कहे गए "आयन्तु नः" मन्त्र को यहाँ भी मान लेने से दूर हो जायगी। (यहाँ नित्यकृत्यार्णव में उल्लिखित व्याख्या समाप्त हो गई)।

यहीं ऊपर से यह भी ज्ञातव्य है कि कल्पतरुकार (लक्ष्मीधर भट्ट) एवं श्रीदत्त के ग्रन्थों का उपपादन कर इस कल्पतरू के मत की स्थापन मुद्रा से श्रीदत्तस्तु..... इत्याह, तन्न (श्रीदत्त ने जो इस तरह....कहा है वह ठीक नहीं) इत्यादि रूप से श्रीदत्त कृत व्याख्या के खण्डन प्रसंग पर वीर मित्रोदय का कहना है कि "सन्निहित योजना यदि संभव हो तो व्यवहित योजना मानना उचित नहीं। दूसरी बात, 'उदीरतामवर' इत्यादि मन्त्रों के मानने में भी कोई प्रमाण नहीं। तीसरी बात, वीर मित्रोदय परिभाषा-प्रकाश (भांग) में हमने त्र्यवस्थापित कर दिया है कि योगियाज्ञवल्क्यसंहिता की अपेक्षा याज्ञवल्क्यसंहिता पूर्ववर्त्ती है। यहाँ (परिभाषा प्रकाश में) केवल इतनां ही कहा गया है कि योगियाज्ञवल्क्य वृद्धमनु-वृद्धशातातप-वृद्धवसिष्ठ एवं लघुहारीत की स्मृतियाँ परिगणित ३६ स्मृतिकारों में ही किन्हीं न किन्हीं स्मृतिकार से निर्मित हैं। इसी हेतु याज्ञवल्क्य ने (याज्ञवल्क्य स्मृति में) कहा है "योगशास्त्रञ्च मत्प्रोक्तम्" (अर्थात् मेरे द्वारा कहे गये योगशास्त्र (योगियाज्ञवल्क्यस्मृति का ज्ञान करना चाहिए)। इसी तरह योगियाज्ञवल्क्य ग्रन्थ स्मृति में योगियाज्ञवल्क्य के प्रति ऋषियों का कहना है कि "स्नानमब्दैवतैर्मन्त्रैर्यत्त्वयोक्तं मयाऽनघ" (अर्थात् 'आपोहिष्ठा' आदि तीनों ऋचाओं से होने वाला जो स्नान आपने कहा है) यह प्रश्नवाला पद्यांश याज्ञवल्क्य ग्रन्थ (स्मृति) में ("स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः" इस पद्य द्वारा) कहे गए स्नान का अनुवाद (अनुकथन - स्मारण) कर रहा है। इससे सिद्ध होता है क ये दोनों ही ग्रन्थ एक ही व्यक्ति के द्वारा निर्मित हुए हैं तथा योगियाज्ञवल्क्य ग्रन्थ की अपेक्षा याज्ञवल्क्य ग्रन्थ पहले निर्मित हो चुका था।

पहली बात, 'विश्वदेवासः' तथा 'उशन्तस्त्वा' इन दोनों मंत्रों के कहे जाने के कारण बहुवचन अनुपपन्न (असंगत) हो जायगा यह भी आचारादर्श (श्रीदत्त) का कथन उचित नहीं, क्योंकि आवाहन के अंगीभूत "आयन्तु नः" इस मन्त्र को तृतीय मन्त्र के रूप में मान लेने से बहुवचन संगत हो जायगा।"

किन्तु यह (वीरमित्रोदयका कथन ठीक नहीं। क्योंकि "आवाह्यपूर्ववन्मन्त्रैः" इस वचन में स्थित पदों की दृष्टि से 'आवाह्य' इस पद का 'मन्त्रैः' पद के साथ सान्निध्य रहने पर भी इस वचन को तर्पण प्रकरणीय होने के कारण प्रकरणवश सन्निहित एवं पूर्वानुवृत्त 'तर्पयेत्' इस मुख्य क्रियापद के साथ सम्बन्ध होना सर्वथा उचित ही है।

दूसरी बात, 'उदीरतामवर' इत्यादि मन्त्रों के सम्बन्ध में "आवाह्य पूर्ववन्मन्त्रैः" इसी वचन की व्याख्या के अवसर पर प्रदर्शित योगियाज्ञवल्क्य एवं कात्यायनवचनों के प्रमाण रूप में रहने पर भी "मानाभावत्" कहना अयुक्त है।

तीसरी बात, यदि "स्नानमब्दैवतैर्मन्त्रैर्मार्जनं प्राणसंयमः" इस याज्ञवल्क्य ग्रन्थ का अनुवाद (क) रूप से योगियाज्ञवल्क्योक्त "स्नानमब्दैवतैर्मन्त्रैर्यत्त्वयोक्तं मयाऽनघ" इस वचन को मान लिच जाय तो भले ही इससे योगियाज्ञवल्क्यग्रन्थ की अपेक्षा याज्ञवल्क्य ग्रन्थ पूर्वरचित मान लिया जायगा। किन्तु उक्त दोनों वचनों में प्रयोग किए गए 'मत्प्रोक्तम्' तथा 'त्वयोक्तम्' इन दोनों स्थलों के 'क्त' प्रत्ययों के अर्थ भूतकालोंका परस्पर समन्वय करना अशक्य (असंभव) हो जायगा। क्योंकि दोनों ही ग्रन्थों में एक की अपेक्षा एक को भूतकालिक मान लेने पर तो अन्योन्याश्रित हो जाने के कारण किसी भी ग्रन्थ को पहले या बाद में रचित होना सिद्ध नहीं हो सकेगा, जब कि इसके लिए प्रायः संभी निबन्धकार विशेषतः स्वयं वीरमित्रोदयकार भी कटिबद्ध (फँाड़ बाँध हुए) देखे जा रहे हैं।

वास्तव में देखा जाय तो याज्ञवल्क्य ग्रंन्थ में "आपोहिष्ठा" आदि तीनों ऋचाओं से होनेवाला (वैकल्पिक भी) स्नान कहा ही नहीं गया है अपितु कहा भी गया है, तो स्नान से अलग कर के इन मन्त्रों से मार्जन। अतः ऐसी अनुवादवाली बात कहाँ से सम्भव हो पायेगी। इसी हेतु श्रीदत्तोपाध्याय ने इस प्रसंग पर अपने ग्रन्थ इस आचारादर्श में कितना अच्छा कहा है कि-"यह अनूदित होनेवाला स्नान इसी योगियाज्ञवल्क्यग्रन्थ में पूर्व अध्याय में

मन्त्रस्नानादयः सप्त एक इच्छन्ति सूरयः।....
आपोहिष्ठेति वै मान्त्रं मृदालम्भस्तु पार्थिवम्।.....
शस्तं स्नानं यथोद्दिष्टं मन्त्रस्नान-क्रमेण तु।
कालादेशादसामर्थ्यात्सर्वं तुल्यफलं स्मृतम्।

इत्यादि रूप से) कह दिया गया है। इससे सारांश में सिद्ध हो जाता है कि दोनों ग्रन्थ एक याज्ञवल्क्यकर्तृक होने पर भी याज्ञवल्क्य ग्रन्थ की अपेक्षा योगियाज्ञवल्क्य ग्रन्थ ही पूर्वकालिक है।

चौथी बात, कल्पतरुकार के द्वारा 'विश्वेदेवासः' तथा 'उशन्तस्त्वा' इन दोनों मन्त्रों को कहे जाने भी "मन्त्रैः" पद के बहुवचन की संगति के लिए आवाहन के अंगीभूत "आयन्तुनः' इस मन्त्र को दिखा जाना भी ठीक नहीं, क्योंकि "आवाह्य तदनुज्ञातो जपेदायन्तु नस्ततः" इस याज्ञवल्क्य (आचार० श्राद्ध० २२३) स्मृतिवचन तथा इसकी मिताक्षरा व्यांख्या के अनुसार भी "आयन्तु नः पितरः" इत्यादि मन्त्र को आवाहन के अंग रूप में भी स्वीकार करना संभव नहीं। प्रत्युत प्रकृत "आवाह्य पूर्वमन्त्रैः" इस वचन के जेसे "द्विगुणाँस्तु......जंपेदायन्तु नस्तत" इस वचन के भी प्रयोग याज्ञवल्क्य ने पित्रुपस्थान (पितृ-जप)मन्त्र के रूप में ही अमिधान किया है।

पाँचवीं बात, देवावाहन के लिए कल्पतरुकार के द्वारा कहे गए "विश्वेदेवास" इस मन्त्र को भी तर्पणीय ब्रह्मादि देव के अर्थ प्रकाशन की सामर्थ्य न होने के कारण पकड़ा (लिया) जाना संभव न होने से "मन्त्रैः" पद के बहुवचन की संगति सर्वथा दुलर्भ रहेगी। इससे अधिक क्या ?

विशेष-यहाँ का कल्पतरुकार प्रसंगी खण्डन मण्डन संवलित तथा अतीव संक्षिप्त लेख रहने के कारण जहाँ तक हो सके ग्रन्थ भाव प्रकाशन निमित्त उपलब्ध व्याख्याओं सहित अपना भी व्याख्यालेख स्वभावतः लम्बा हो गया है। अतः इसके औचित्यपर पाठकण स्वयं विवेचन कर लेंगे।

## [ मूलम् ]

तथा[१] कार्ष्णाजिनिरावाहनमन्त्रमाह-

**नाभिमात्रे जले स्थित्वा चिन्तयेदूर्ध्वमानसः।**

**आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम्॥**

एवञ्च देवावाहनमपि देवा आगच्छन्त्विवति कर्तव्यम्। पित्रावाहन एवात्र मन्त्र-दर्शनादावाह्येत्य[२]पि तत्परमेव।

---

पाठा० (१) 'चे'त्यधिकः हस्तलिखित पुस्तक पाठः। एवमेव (२) ति।

[ संस्कृत टीका ]

तथेति । पूर्व "मावाह्य तर्पयेदि" त्युक्तं तत्र केनावाह्येत्याकाङ्क्षायां "तथा कार्ष्णाजिनि रि" ति । आवाहन मन्त्रमाह–आगच्छन्तु इत्यावाहनमन्त्रं कथयति ।

नाभिमात्रे=जल तर्पणपक्षे नाभिपर्यन्ते । जले स्थित्वा । ऊंर्ध्वमानसः=देव–पितृगतमनोवृत्तिः सन् । मे पितरः, = हे मम पितृगण । (अत्र) आगच्छन्तु । इममपोऽञ्जलिम्=मया दीयमानं जलाञ्जालिम् । गृह्णन्तु=अङ्गीकुर्वन्तु । इति । चिन्तयेत्=ध्यायेत् ।

अत्राप इत्येकवचनं षष्ठ्यामार्षम् । अथवा अपशब्दः सान्तोऽपि "अपोभिर्माजनं कृत्वे"त्यत्र यथा । तेनाञ्जलिशब्दस्य समासः । "आपः कर्माख्यायां ह्रस्वश्च" (उ० सू० ६।५७) ति साधुः ।

अत्र "चतुर्दशैते यमाः स्वस्ति कुर्वन्तु तर्पिता" इति गोभिलीय तर्पणोक्त–वाक्यं बहवः पूर्वं प्रक्षिप्य आगच्छन्त्विति मन्त्रं पठन्ति ।

एवञ्च = पित्रावाहनमन्त्रस्य नियतत्वे च । देवावाहनेति । एवमेव " एवञ्च देवावाहनमपि मे पितर इत्यत्र देवा इति पदोहेन बोध्यम् । इदञ्चावाहनं पौराणिकत्वात्सर्वशाखि–साधारणमिति वदन्ती" ति वीरमित्रोद्यः ।

अतएव "अत्र 'आवाह्य पूर्वमन्त्रैः'......इति योगियाज्ञवल्क्यवचना–दावाह्य तर्पणे नियतेऽस्मिन् कल्पे मन्त्राश्रवणात्तदर्थप्रकाशकत्वेन (ओं) तर्पणीया देवा आगच्छन्त्विति वाक्येनैव तत्कार्यमिति शिष्टाचार इति नित्यकृत्यरत्नमाला टिप्पण्यपि । पित्रावाहने एव=पितृणामावहने एव । अत्र = प्रकृतवचने । मन्त्रदर्शनात्=पितर आगच्छन्त्विति मन्त्रदर्शनात् = पितर आगच्छन्त्विति मन्त्रदर्शनात् । आवाह्येत्यपि=अनुपदपूर्वोक्त योगियाज्ञवल्क्य–वचने आवाह्येति पदमपि । तत्परमेव=पितर आगच्छन्त्विति मन्त्रपरमेव । नतु 'विश्वेदेवासः', 'उशन्तस्त्वा' इति मन्त्रद्वयपरमिति एवकारेण द्योत्यते ।

[ हिन्दी टीका ]

यहाँ आवाहन का (सविधि) मन्त्र कार्ष्णाजिनि कहते हैं । जल तर्पण पक्ष में नाभि

पर्यन्त जल में खड़ा होकर अपनी चित्तवृत्ति को पितृगत कर के 'आगच्छन्तु मे पितर इमं गृह्णन्त्वपो ञ्जलिम्' (हे मेरे पितरो, यहाँ आ जाइए और मुझसे दी जाने वाली ये जलाञ्जलियाँ लें) मन्त्र पढ़ कर पितरों का आवाहन करे।

यहाँ क्रम के अनुसार 'मे पितरः' के स्थान पर "देवाः" पद का ऊह कर अर्थात् 'तर्पणीया देवा आगच्छन्तु' वाक्य से देवगत चित्तवृत्ति कर तर्पणीय देवों का भी आवाहन करे।

यहाँ प्रकृत वचन में पितरोंके आवाहन के लिए ही मन्त्र कहा गया है। अतः ऊपर कहे गए 'आवाह्य पूर्वमन्त्रैः' इस योगियाज्ञवल्क्य वचन में 'आवाह्य' पद इसी मन्त्र परक है, न कि 'विश्वेदेवास', 'उशन्तस्त्वा' इन दोनों मन्त्र परक भी। यह अर्थ व्याख्यावाक्य के 'तत्परमेव' के 'एव' पद से द्योतित होता है।

## [ मूलम् ]

यमः—

भूमौ यदापो दीयन्ते दाता चैव जले स्थितः ।
वृथा तद्दीयते तोयं नोपतिष्ठति कस्यचित् ॥

एतेन जलस्थो जले एव तर्पण जलं प्रक्षिपेदित्युक्तम् ।

## [ संस्कृत टीका ]

भूमाविति । यदापः=यानि जलानि । भूमौ=पृथिव्याम् । दीयन्ते । दाता = तर्पणकर्ता । जले । स्थितः = उत्थितः आसीनो वा वर्तमान इति यावत् । तत्तोयम्=तज्जलम् । वृथा=व्यर्थम् । दीयते (यतः) कस्यचित्= देवादिषुकस्यापि कृते । नोपतिष्ठति = नोपस्थितं भवति । एतेन = जलस्थितेन भूमौ प्रदत्तस्य तर्पणजलस्य व्यर्थत्वकथनेन । जलस्थो जले एव तर्पणजलं प्रक्षिपेदिति, उक्तम् = बोधितं भवति ।

## [ हिन्दी टीका ]

जो तर्पणजल भूमि पर दिया जाता है और तर्पणकर्त्ता यदि जल में स्थित हो तो वह जलदान व्यर्थ हो जाता है; क्योंकि वह देवादियों में किसी के पास नहीं पहुँचता।

इस कथन से यह सिद्ध हुआ कि जल में स्थित तर्पणकर्त्ता जल में ही तर्पण जल फेके।

[ मूलम् ]

स्थलस्थेन स्थल एव[१]त्यक्तव्यमित्याह शङ्खः-

**नोदकेषु न पात्रेषु न क्रुद्धो नैकपाणिना ।**
**नोपतिष्ठ[२]ति तत्तोयं यन्न[३]भूमौ प्रदीयते ॥**

बौधायनमते स्थलस्थेनापि तर्पणजलं जल एव प्रक्षेप्तव्यम् । वासः-परिधानानन्तरमप्सु तर्पणविधानात् ।

[ संस्कृत टीका ]

नोदकेष्विति । स्थलतर्पणपक्षे व्यवस्थामाह शंखः—नोदकेष्विति । उदकेषु=जलेषु । पात्रेषु=ताम्रपित्तलादिभाजनेषु । अत्र "नोदकेष्वित्युक्त-वचनस्यावधारणपरतया व्याख्यानं कार्यम् । सावधारणं हि सर्वं वाक्यम्, अब्भक्षो वायुभक्ष इतिवदिति महाभाष्योक्तन्यायात् । ततश्च स्थलस्थाः पात्रे मृदं शिलाखण्डं वा निधाय तत्र कुशोपरि तर्पणमाचरन्ती" ति नित्यकृत्यरत्नमाला-टिप्पणी । "अयञ्च जलतर्पणनिषेधः स्थलतर्पणे सम्भवति, येषां बौधायनादीनां स्थलस्थानां जले तर्पणं विहितं, तदितरविषयक" इति उद्धृतोदक-तर्पणे पितामहः,

**पात्रादुद्धृत्य वा तोयं शुभे पात्रे विनिक्षिपेत् ।**
**जलपूर्णेऽथवा गर्ते नतु भूमौ विबर्हिषि ॥**

एवञ्च 'न पात्रेष्वि' ति पात्रतर्पणनिषेधः कुशास्तृतानिषिद्धभूमिसद्भाव-विषयः । एवञ्च वक्ष्यमाणबौधायनवाक्येन वासः-परिधानानन्तरमप्सु तर्पणविधानात् यत् स्थलस्थस्य जले तर्पणं तत् तदुक्ततर्पणप्रयोग एव, प्रयोगान्तरे च इष्टकाचितात्वादिना स्थलतर्पणयोग्यत्वे ।" इतिच वीरमित्रोदयः ।

क्रुद्धः=सञ्जातक्रोधः । एकपाणिना= दक्षिणेन वामेन वा केवलेन हस्तेन ।

**अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ।**
**तृप्यतामिति सेक्तव्यं नाम्ना तु प्रणवादिना ॥**

---

पाठा० (१) 'तर्पणजलं–ह०पु० । (२) ष्ठेत् । (३) यद्भूम्यां न

इति योगियाज्ञवल्क्यविधिवाक्यैकवाक्यत्वात् । न तर्पयेत् । एतेन वामान्वारब्धेन दक्षिणहस्तेन तर्पणं कर्तव्यमेवेति भावः । (यतः) यत्तोयम् । " भूमाविति= भूमिस्थितकुश इत्यर्थः । अतो न पूर्व ('आस्तीर्य च कुशान् साग्रान् तानावाह्य च मन्त्रतः प्राचीनाग्रेषु देवाँस्तु दक्षिणाग्रेषु वै पितॄन् ।। इत्यादितीर्थचिन्तामण्युद्धृत) वचन विरोध" इति कृत्यसारसमुच्चयः । न । प्रदीयते= देवपित्र्याद्युद्देश्येन त्यज्यते । तत्तोयं कस्यचिदपिकृते नोपतिष्ठति=नोपस्थितं भवति । एवञ्च स्थलस्थेन=भूमिस्थितेन । स्थंले=भूमौ । त्यक्तव्यम्=तर्पणजलं प्रक्षेप्तव्यमित्युक्तं भवति । अतएव

**स्थले स्थितो जले यस्तु प्रयच्छेदुदकं नरः ।**
**नोपतिष्ठेप्तितृणान्तु सलिलं तन्निरर्थकम् ।।**

इति ब्राह्मवचनमपि ।

बौधायनमत इति । बौधायनवचनं यथा—पूतः पञ्चभिर्ब्रह्मयज्ञैरद्भिरेवाप्सु यथोत्तरं देवताः पितृँस्तर्पयेदित्यादि । इदञ्च प्रणवो व्याहृतयः सावित्री चेत्येते पञ्च ब्रह्मयज्ञा इत्युपक्रमे बोधायनेनोक्तम् । एवञ्च प्रणव व्याहृतित्रय सावित्री–जपरूपैः पञ्चभिर्ब्रह्मयज्ञैः पूतः सन्नित्यर्थः । अद्भिरेवाप्स्वित्येवकारः अप्स्वित्यनेन सम्बध्यते । तेनापामधिकरणत्वनियमाद् बौधायनीयानां तर्पण-जलस्य स्थलाधिकरणत्वव्यावृत्तिः । उक्तबौधायनवचनस्य जलस्थपरत्वमेव किं न स्यादिति वाच्यम् । प्रणवव्याहृतित्रयसावित्रीरूप पञ्चब्रह्मयज्ञाः वस्त्र परिधानोत्तरकालं बौधायनेन विहिताः, तदुत्तरञ्च तर्पणस्य विधेयत्वेन सुतरामेव स्थलस्थितत्वनियमात् ।

**[ हिन्दी टीका ]**

भूमि पर स्थित तर्पणकर्ता के द्वारा भूमि पर ही तर्पण जल फेकने का नियम निषेध मुद्रा से प्रतिपादक शंख वचन से स्पष्ट होता है । यथा–

जल में ताँबें पीतल आदि के वात्र में, क्रोधावस्था में तथा एक हाथ से तर्पण नहीं करना चाहिए, क्योंकि वह जल देव पितरों को नहीं मिल पाता जो कि भूमि (स्थित कुश) पर न दिया गया हो ।

यहाँ ऊपर से ब्राह्म वचन के अनुसार यह भी ज्ञातव्य है कि भूमि पर स्थित होकर जल में तर्पण करे तो वह तर्पण जल देवपितरों को न मिलने के कारण निरर्थक हो [illegible] है ।

'दा[illegible]

स[illegible] [illegible]त्व ही ज्ञातव्य हे कि यहाँ जल में तर्पण का जो निषेध है वह यदि भूमि पर तर्पण [illegible] तभी, अथवा जिन बौधायनमतानुयायी भूमिस्थित तर्पण कर्ताओं के लिए जल में तर्पण विहित है उनसे अन्य व्यक्तियों के लिए समझें ।

इसी तरह पात्र में जो तर्पण का निषेध है उसका तात्पर्य है कि भूमि पर स्थित व्यक्ति पात्र में मिट्टी या शिलाखण्ड रखकर वहाँ कुशों के ऊपर तर्पण करे अथवा वह निषेध कुश बिछी (कुशास्तृत) अनिषिद्ध भूमि रहने पर ही समझें । तब आगे कहे जा रहे बौधायन वचनानुसार शुष्क वस्त्र पहनने के बाद तर्पण का विधान होने से जो भूमि स्थित तर्पणकर्त्ता को जल में तर्पण करने का फलितार्थ होता है वह तो बौधायनप्रोक्त तर्पण करने वालों के लिए ही है । अथवा दूसरे प्रयोग में भी शङ्ख आदि के वचनानुसार ईटोंवाली निषिद्ध भूमि होने की स्थिति में भूमि पर तर्पण की योग्यता न रहने पर समझें ।

यहाँ ग्रन्थकार का विवेचन है कि बौधायन के मत में भूमि पर स्थित भी तर्पणकर्त्ता तर्पण जल में ही फेके; क्योंकि बौधायन ने ही प्रणव, तीनों व्याहृति तथा सावित्री के जप रूप पाँच ब्रह्मयज्ञों का विधान वस्त्र पहनने के बाद कर के भूमि स्थित व्यक्ति को (भी) जल में ही तर्पण जल के प्रक्षेप का विधान भी किया है ।

### [ मूलम् ]

हरिहरस्तु जलसमीपस्थेन तर्पणजलं जल एव प्रक्षेपव्यम्[१] । यदा चोद्धृतजलेन तर्पणं तदैव स्थले[१] तर्पणजलप्रक्षेपः । तद्विषयमेव[२] प्रागग्रेषु सुरानित्याह[३]। तदयुक्तम् ।

उदके नोदकं कुर्यात् पितृभ्यश्च कदाचन ।
उत्तीर्य च शुचौ देशे कुर्यादुदकतर्पणम् ॥

इति शङ्खेन जलस्थतर्पणं निवार्य शुचौ देशे तर्पण[४] विधाय 'नोदकेष्वि' ति पुनरुदक-निषेधस्तीरस्थस्यापि जलप्रक्षेपे[५] कृत इति तन्मते स्थलस्थेन सर्वत्र

पाठा० ( १ ) तदास्थले एव ( २ ) अत्र 'च' इत्यधिक श्च ह० पु० पाठः । ( ३ ) नित्यादीत्याह ( ४ ) मिति प्रकाशतिपुस्तक पाठतः । परं हस्तलिखितपुस्तकादौनास्ति । ( ५ ) क्षेप ।

स्थल एव तर्पणजलं[६] प्रक्षेप्तव्यमिति । बौधायनमिति । बौधायनमते[७] स्थलस्थेन[८] जले जल-प्रक्षेप इति विकल्प एवेति ।

## [ संस्कृत टीका ]

हरिहरेति । पारस्करगृह्यसूत्रभाष्यकर्त्ता हरिहरस्तु । जलसमीपस्थेन= जलसन्निधिवर्त्तिना तर्पणकर्त्रा । तर्पणजलं जल एव प्रक्षेप्तव्यम् =त्यक्तव्यम् । यदा च = यस्मिन् समये च । उद्धृतजलेन=आहृतजलेन । तर्पणं विधीयते । तदैव । स्थले=कुशास्तृतभूमौ । तर्पणजलप्रक्षेपः । तद्विषयमेव = तत्परकमेव, तद्बोधकमेव । प्रागग्रेषु 'सुरानि' त्यादिपूर्वोक्तयोगियाज्ञवल्क्य वचनम्, इत्याह=इति प्रतिपादयति । तदयुक्तम्= तत्कथनमसङ्गतम् । उदके इति । कदाचन कदाचिदपि । पितृभ्यश्च । चकाराद् देवादिभ्यश्च । उदके=जले । उदकं न कुर्यात्=तर्पणजलं न प्रक्षेप्तव्यम् । (किन्तु) उत्तीर्य=जलादुपरि आगत्य । शुचौ देशे=पवित्रायां भूमौ । उदकतर्पणम्=जलतर्पणं कुर्यात् इति शङ्खवचनार्थः । एवञ्च 'उदके' इति शङ्खवचनेन जलस्थतर्पणम् = जलाधिकरण कतर्पणजलप्रक्षेपम् । निवार्य = निषिध्य शुचौ देशे तर्पणम् = तर्पणजल प्रक्षेपम् । विधाय 'नोदकेषुन पात्रेषु' इत्यादिपूर्वोक्तशङ्खवचनेन । ग। पुनः उदकनिषेधः=जले तर्पणजलप्रक्षेप निषेधः । तीरस्थस्यापि=जलतटवर्त्तिनोऽपि । जलप्रक्षेपे = जले सम्भावितं- जलाञ्चलिप्रक्षेपमुद्दिश्य । कृतः विहितः । इति, तन्मते=प्रागग्रे सुराниति वचनस्य प्रकृतशङ्ख वचनयोश्चैकवाक्यत्वे योगियाज्ञवल्क्य-मतेऽपि । स्थलस्थेन सर्वत्र स्थल एव तर्पणजलं प्रक्षेप्तव्यमिति निष्कर्षः स्पष्टत एव सम्पद्यते । किन्तु बौधायनमते स्थलस्थेन जले जलप्रक्षेपः कर्तव्य इति निर्गलितो नियमः, विकल्प एव=बौधायनोक्ततर्पणानुयायिनां (तैत्तिरीयशाखिनां) कृत एव बोध्यः । अस्य विशदार्थे आचारचिन्तामणिर्यथा "अत्र च शङ्खादिना भूमिष्ठस्य स्थले तर्पणमुक्तम् । बौधायनादिना तु जले। तत्र च व्यवस्थितविकल्पः शाखाभेदेन व्यवस्थितः। तथा च वाजसनेयिनां भूमिष्ठानां स्थल एव कुशोपरि, वाजसनेयिगुरुणा याज्ञवल्क्येन तथाऽभिघानादि"-ति । बौधायनस्य

---

(६) क्व चित् 'तपर्ण' इति पाठो नास्ति । (७) मते च स्थलस्थेनापि जले प्रक्षेप इति विकल्प एवेति-इत्युभयो ह० पु० पाठः (८) "स्थलस्थेन जलेजल स्थेन जले प्रक्षेप इति विकल्प एव" इति मुद्रित पुस्तक पाठस्तु जलभ्रमिवद् भ्रामक एव ।

तैत्तिरीयसूत्रकारत्वेन माध्यन्दिनानां शतपथोक्तएव मन्त्रा ग्राह्या इत्याहुरिति सन्ध्यावन्दन-प्रकरणीयाचारचिन्तामणिश्च ।

[ हिन्दी टीका ]

पारस्कर गृह्यसूत्र के भाष्यकर्त्ता हरिहर का कहना है कि जल के किनारे में स्थित तर्पणकर्त्ता तर्पण का जल जल में ही फेके, किन्तु जिस समय जल लेकर तर्पण करना हो वहाँ (बिछे हुए कुशवाली) भूमि पर तर्पण का जल फेके, यही तात्पर्य ''प्रागग्रेषु सुरान्'' इत्यादि योगियाज्ञवल्क्य वचन का है । परन्तु यह कथन इसलिए अयुक्त है कि शङ्खने ''कभी भी देवपितरों के निमित्त जल में तर्पण जल न फेंके, अपितु जल से ऊपर आकर पवित्र स्थान में तर्पण करे'' इस वचन के द्वारा जल में तर्पण का निषेध कर तथा पवित्र स्थान में तर्पण करने की सम्मति देकर पुनः ''न क्रोधित हो, न एक हाथ से तथा न जल में और नाहीं किसी पात्र में तर्पण करे, किन्तु जो तर्पणजल भूमि पर नहीं दिया जाता वह देवपितरों को नहीं मिलता'' इस वचन से जल में तर्पण करने का निषेध किया है । इसका तात्पर्य जल के तट (किनारे) पर स्थित तर्पणकर्त्ता को भी जल में तर्पण करने के निषेध से ही है । अतः स्पष्ट है कि योगियाज्ञवल्क्य वचन और शङ्ख के उक्त दोनों वचनों की एकवाक्यता होने पर योगियाज्ञवल्क्य के मत में भी भूमि पर स्थित तर्पणकर्त्ता सर्वदा भूमि पर ही तर्पण का जल फेके । इस सबके उपरान्त भी बौधायन के मत में भूमि पर स्थित व्यक्ति को भी जल में तर्पण जल के फेकने का जो नियम पूर्व में दिखाया गया है, वह बौधायनप्रोक्त तर्पण के अनुयायियों (तैत्तिरीय शाखा वालों) के लिए ही समझना चाहिए ।

यहाँ आचारचिन्तामणि के अनुसार प्रकृतग्रन्थ का स्पष्ट और संक्षिप्त तात्पर्य यह ज्ञातव्य है कि शंख आदि ने भूमि स्थित तर्पणकर्त्ता के लिए भूमि पर तर्पण करने को कहा है तो बौधायन आदि ने जल में । ये दोनों ही कल्प शाखाभेद से विकल्परूप में व्यवस्थित होंगे । किन्तु भूमि स्थित वाजसनेयी भूमि पर ही कुश के ऊपर तर्पण करेंगे क्योंकि वाजसनेयियों के गुरु याज्ञवल्क्य ने ऐसा ही कहा है । इसी तरह यह बौधायन प्रोक्त तर्पण तैत्तिरीयशाखा वालों के लिए ही होगा क्योंकि बौधायन तैत्तिरीय सूत्रकार हैं ।

[ मूलम् ]

सुमन्तुः-

'आकाशे तु[१]क्षिपेद् वारि जलस्थो दक्षिणामुखः ॥

आकाशे=जलोपर्येव ।

---

पाठा० ( १ ) प्रक्षिपेद् ।

[ संस्कृत टीका ]

आकाशे इति । दक्षिणामुखः=पितृतर्पणे दक्षिणदिगभिमुखः । अयञ्च पूर्वादिदिगभिमुखत्वादीनामप्युपलक्षकः । जलस्थः=जले वर्तमानः तर्पणकर्त्ता । आकाशे तु=जलोपर्येव । वारि=तर्पणजलम् । क्षिपेत्=अञ्जलिना त्यजेत् । एतेनात्रापि जलस्थो जल एव तर्पणजलं प्रक्षिपेदित्युक्तं भवति । अतएव हारीतोऽपि–

आर्द्रवासा जले कुर्यात्तर्पणाचमनादिकम् ।
शुष्कवासाः स्थले कुर्यात्तर्पणाचमनादिकम् ॥ इति ।

[ हिन्दी टीका ]

जल में स्थित तर्पणकर्त्ता पितृतर्पण के साथ दक्षिण मुंह हो जल में ही तर्पण जल का त्याग करे । इसी तरह हारीत का भी कहना है कि यदि कपड़ा भींगा हो तो तर्पण, आचमन आदि जल में करें, अन्यथा स्थल में ये कर्म हों ।

[ मूलम् ]

योगियाज्ञवल्क्यः–

यद्युद्धृतं प्रसिञ्चेद्वै तिलान् सम्मिश्रयेज्जले ।
अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः ॥

अस्यायमर्थः । यद्युद्धृतोदकमादाय तर्पणं करोति तदा जले[१] तिलाः प्रक्षेप्तव्याः। यदा तु जलाशयस्थो[२] जलमादाय तदा वामहस्तेन तिलग्रहणम् ।

[ संस्कृत टीका ]

यद्युद्धृतमिति । यदि, उद्धृतम्=जलाशयादाहृतं जलम् । प्रसिञ्चेत्=(तर्पणे) दद्यात् । तदा,जले=जलपात्रे । तिलान्=कृष्णतिलान्, एतेषां पितृतर्पणे प्राशस्त्यात् । अतोऽन्यथा तु=उद्धृतोदकेन तर्पणकरणाभावे अर्थाज्जलाशयस्थजलेनैव तर्पणकरणे तु । विचक्षणैः विद्वद्भिः । सव्येन=वामहस्तेन । तिलाः । ग्राह्याः=नेयाः । फलितार्थं प्रदर्शयति अस्यायमर्थ इत्यादिना । एतदेव किञ्चिद् विशद्य

---

पाठ० ( १ ) कृत्यशिरोमण्यनुसार–जलपात्रे । ( २ ) स्थजलम् ।

प्रतिपादयति नित्यकृत्यार्णवोद्धृताचारचिन्तामणिः "यद्युद्धृतमित्यादि । पात्रस्थितं जलमादाय तर्पणे पात्रे एव तिलाः प्रक्षेप्तव्याः। तेऽपि दक्षिण-हस्तेनैव, 'दक्षिणस्तत्र विज्ञेय' इति वचनात् । जलाशयस्थमादाय तर्पणे वामेन पाणिना गृहीत्वा तिला अञ्जलौ मेलनीया इत्यर्थः" इति । अत्र "अत्र जलपात्रे तिलमेलने तिलोदकम् । अञ्जलिस्थे अर्घपात्रस्थे वा जले तिलमेलने सतिलं जलमित्येवं वाक्यं शिष्टाः पठन्तीति नित्यकृत्यरत्नमालाटिप्पणी ।

[ हिन्दी टीका ]

जलपात्रस्थित जल लेकर यदि तर्पण किया जाय तो दाहिने हाथ से जलपात्र में तिल डालें । यदि जलाशय में स्थित जल से तर्पण करें तो बायें हाथ से तिल लेकर अञ्जलि के जल में मिला लेना चाहिए । ऊपर से यह भी ज्ञातव्य है कि जलपात्र में तिल डालने पर 'तिलोदकम्' वाक्य तथा अञ्जलिस्थित या अर्घपात्र स्थित जल में तिल मिलाने पर 'सतिलं जलम्' ऐसे वाक्य का योजन शिष्टजन करते हैं ।

## [ मूलम् ]

मरीचिः—

तिलानामप्यभावे तु सुवर्णरजतान्वितम् ।
तदभावे निषिञ्चेत्तु दर्भैर्मन्त्रेण[४]वा पुनः ॥

अत्र पूर्वपूर्वाभावे उत्तरोतरविधिरिति भ्रमो वाक्यान्तर-विरोधात्यक्तव्यः । किन्तु तिलादीनां समुदितानामप्यभावे एकदेशोपादान-प्रदर्शनमिदम् एवञ्च,

विना रूप्यसुवर्णेन बिना ताम्रतिलैस्तथा ।
विना दर्भैश्च मन्त्रैश्च पितृणां नोपतिष्ठते ॥

इतिशङ्खवचनं रूप्यादीनां सर्वेषामभावे, नत्वेकदेशाभावेऽपि ।

सौवर्णेन तु पात्रेण राजतौदुम्बरेण वा ।

खड्गपात्रेण शङ्कुना वाप्युदकं पितृतीर्थं स्पृशन् दद्यादिति शङ्खोक्तं सति सम्भवे । शङ्कुः = कीलकः । स तु सुवर्णादिनिर्मितः, प्रकृतत्वात् । मध्योर्ध्वाङ्गुलित्रयकरः शङ्कुरिति केचित् ।

## [ संस्कृत टीका ]

तिलानांमेति । तिलानामपि अभावे = अविद्यमानत्वे । सुवर्णरजतान्वितम् = सुवर्णेन रजतेन वा, सुवर्णरजताभ्यां वा संस्पृष्टं जलम् । निषिञ्चेत् = दद्यात् । तदभावे = विभवसाध्यत्वात्सुवर्णरजतयोरसम्भवे । दर्भैः = कुशैः । मन्त्रैः = तर्पणविहितमन्त्रैर्वा जलं दद्यादिति भावः ।

अत्र = वचने । पूर्वपूर्वाभावे = तिलादिषु पूर्वस्य विद्यमानत्वे उत्तरोत्तर-विधिः= अव्यहितोरोत्तरोतरस्य विधानम् । इति, भ्रमः = विपरीतज्ञानम् । वाक्यान्तरविरोधात् = विना रूप्यसुवर्णेनेत्यादिशङ्खादिवचनविरोधात् । त्यक्तव्यः = हेयः । किन्तु । तिलादीनाम् । समुदितानामप्यभावे = सर्वेषामसत्वेऽपि । एकदेशोपादानप्रदर्शनमिदम् = कस्याप्येकस्य ग्रहणप्रदर्शनार्थं वचनमिदमिति भावः । वस्तुतस्तु एकदेशपदेनात्रमन्त्रग्रहणम् । एवञ्च तिलादीनां सर्वेषामभावे मन्त्रैरपि तर्पणं कार्यमेव, 'गुणलोपे न प्रधानस्ये'ति न्यायादिति भावः। एवमेव वीरमित्रोदयोऽपि । अतएव "तिलादीनामप्यभावे तु .......इत्याद्यनेकवचनेन तर्पणमात्र एव मन्त्राङ्गताप्रतीतेस्तस्मादत्रामत्सरेण भवितव्यंमिति" द्वैतपरिशिष्टमपि । अतएव च "तर्पणेषु सर्वेषां दर्भाः । पितृतर्पणे तु त्रैवर्णिकानां मन्त्रा नियताः । तिलादयस्तु नावश्यकाः 'तिलानामप्यलाभेतु' इति मरीचिव-चनादि" त्याचारचिन्तामणिरपि ।

अत्र "अत्र मन्त्रैरिति कातीयविषयम् । वा शब्दश्चानास्थायाम् । तेन केवल-जलेनापि तर्पणमिति केचिदाचक्षते" इति तु नित्यकृत्यरत्नमाला टिप्पणी । वस्तुतस्त्वयमेव सिद्धान्तपक्षोऽपि बोध्यः । "बौधायनोऽपि 'अद्भिरेवाप्सु यथोत्तरं देवान् पितॄँश्च तर्पयेत्' अत्रैवकारेण तिलकुशाभावेऽपि केवल-जलेनापि तर्पणं कार्यमेव, 'यदेव तर्पयत्यद्भिः' इति मनूक्तेरि"ति तट्टिप्पण्या एव लेखात् ।

विना रूप्येति । "विना रूप्यसुवर्णेन = रजतेन सुवर्णेन विना । (जातिर-प्राणिनामि (पा०सू० २।४।६) त्येकवद्भावः) । ताम्रतिलैर्विना = ताम्रनिर्मितपात्राङ्गुलीयकादिनां, तिलैश्च विना । दर्भैर्मन्त्रैश्च विना । दीयमानं तर्पणजलं पितृणां नोपतिष्ठते", इत्येतदर्थकशङ्खवचनं रूप्यादीनामुक्तानां

सर्वेषामभावे ज्ञातव्यम् । नत्वेकदेशाभावेऽपि = न तु रूप्यादेरेकस्याप्यभावे । तथा चोक्तमरीचिवचनैतद्शङ्खवचनयोरेकवाक्यत्वेऽन्ततो मन्त्रैरपि तर्पणं कार्यमेवेति तात्पर्यार्थो बोध्यः । अतएव ''पित्रादि तर्पणेषु स्व-स्व-सूत्रानुरेण मन्त्र प्रयोगः कर्तव्यः 'विना दर्भैश्च मन्त्रैश्च पितृणान्नोपतिष्ठते' इति शङ्खवचनेन सम्भवति मन्त्रैश्च तदप्रयोगेऽनिष्ट-प्रतिपादनादि'' त्याचार-चिन्तामणिरपि ।

ननु मन्त्राणां प्राधान्येनावश्यकत्वे सौवर्णेनेत्यादि शङ्खवचने कथन्नोपादानमित्यत आह-सौवर्णेनेत्यादि । सौवर्णेन = सुवर्णमिर्मितेन । राजतौदुम्बरेण वा = रजतनिर्मितेन, औदुम्बरेण = ताम्रमयेनेत्याचारचिन्तामणिः । खड्गेन = खड्गो नाम यत्सम्बन्धात्खड्गीति पञ्चनखेषु भक्ष्यतया स्मर्यते। तच्छृङ्गम्, तन्निर्मितं पात्रमिह विवक्षितं खड्गपदेनेति बोध्यमिति नि० र० टिप्पणी । शङ्कुशब्दार्थोऽत्र कीलको वर्तते, सच सुवर्णादिनिर्मितो बोध्यः । प्रकृतत्वात् = प्रक्रान्तत्वात् । प्रकृतवचने प्रस्तुतद्रव्याणामेवोपस्थितिकल्पने लाघवादिति भावः । केचितु 'मध्योर्ध्वाङ्गुलित्रयकरः शङ्कुरि' ति वदन्ति । अन्ये 'खड्गघटितेने' ति कथयन्ति । उदकं दद्यादिति सम्बन्धः । किंकुर्वन्निति जिज्ञासायाम् 'पितृतीर्थम् (तर्जन्यङ्गुष्ठयोः मध्यदेशं) स्पृशन्नि'ति शङ्खोक्तम् = शङ्खकथितं वचनम् । सति सम्भवे = सम्भावनायां सत्यां बोध्यम् ।

अत्र ''एवमिदं सौवर्णादिपात्रमञ्जलिना सह विकल्पितं, समुच्चयासम्भवात् । तानि च पात्राणि अष्टाङ्गुलन्यूनानि न कार्याणि, 'वस्वङ्गुलिविहीनन्तु न पात्रं कारयेत् क्वचिद्' इति वाक्यादि'' ति वीरमित्रोदयः ।

नित्यकृत्यार्णवेस्तु ''आचारविवेकस्तु-तत्तत्पात्र सम्भवेऽप्यञ्जल्यन्वयोऽवगन्तव्यः । तेषामञ्जलिना समं विकल्पाश्रवणात् । शङ्कुना वाऽप्युदकं पितृतीर्थं स्पृशन्दद्यादिति तर्जन्यङ्गुष्ठमध्यमरूप-पितृतीर्थ-स्पर्शावश्यकताऽवगमाच्चे''ति। ''किञ्च पात्रपक्षे अञ्जल्यनन्वये दक्षिणकरेणैव तर्पणं स्यात् । नतु वामकरान्वयोऽपि –

**यत्रोपदिश्यते कर्म कर्त्तुरङ्गं न चोच्यते ।**
**दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥**

इति वचनादित्याचारद्वैतविवेकः । 'पात्रतर्पणपक्षेऽपि' नैतयोरपवादः, किन्तु समुच्चय एव । सौवर्णेन राजतेनेत्यादि । तथा,

**शुचिवस्त्रधरः स्नातो देवर्षि-पितृतर्पणम् ।**
**तेषामेव हि तीर्थेन कुर्वीत सुसमाहितः ॥**

इत्यादिनाऽञ्जलेरपेक्षितत्वादिति प्राञ्चः । तत्तुच्छम् । एकहस्ते पितृतीर्थेनापि तत्सम्भवात् । न कुद्धो नैकपाणिनेत्येकपाणिनिषेधस्यापि केवलपाणिगोचरत्वात् । एवं, तर्पणद्वितयं कुर्यादित्यप्यञ्जलिपरमैव, सावकाशत्वात् । .........विकल्पे चोभयस्याशास्त्रार्थत्वादि'' ति स्मृतिकौमुदी ।.......द्वैतनिर्णय टीका—कादम्बरी-प्रदीपे—गोकुलनाथोपाध्याया वाचस्पतिमिश्रमतमुपपाद्य देवनाथठक्कुरमतमङ्गी-कुर्वन्ति''—इत्याह । द्वैतपरिशिष्टमपि सौवर्णादिपात्रस्याञ्जलिना सह समुच्चयं मन्यते ।

प्रकृतप्रसङ्गे ''पात्रेण तु सौवर्णेन राजतेन ताम्रेण खड्गमयेन अभावे सुवर्णादिकीलकेनापि अञ्जलिना द्विगुणभुग्नकुशैर्वामहस्तस्थापित- तिलमिश्रं दक्षिणहस्तपितृतीर्थेन गृहीतं गोशृङ्गमात्रमुद्धृतं जलं जले क्षिपेदि''ति च्छन्दोगाह्निकम् ।

## [ हिन्दी टीका ]

तिलों के अभाव में सोना या चाँदी, इसके अभाव में कुशों या मन्त्रों से (जल का) तर्पण करे, यह मरीचिवचन का अर्थ हुआ ।

यहाँ पूर्व-पूर्व के अभाव में उत्तर-उत्तर का विधान है यह समझना भ्रम होगा, क्योंकि आगे के 'विना रूप्यसुवर्णेन' इत्यादि शंखवचन में ऐसा क्रम न होने के कारण विरोध हो जायगा । अतः तिल आदि सभी के अभाव में भी किसी एक का होना आवश्यक है; यही समझाने के लिए यह वचन है ।

वस्तुतः देखा जाय तो यहाँ ग्रन्थकार के एकदेश शब्द का तात्पर्य मन्त्र से है । तब फलितार्थ होगा कि तिल आदि सभी के अभाव में अन्ततः मन्त्रों से भी तर्पण करना ही चाहिए । क्योंकि अप्रधान के लोप से प्रधान का लोप होना कथमपि न्यायसङ्गत नहीं कहा जा सकता है । इसी तरह का मन्तव्य वीरमित्रोदय, द्वैतपरिशिष्ट तथा आचारचिन्तामणि का भी है ।

यहाँ मरीचिवचन का प्रसंग लेकर नि० र० टिप्पणी का कहना है कि वचन पठित 'मन्त्रैः' पद कातीयतर्पण हेतु निर्धारित मन्त्रों का बोधक है और 'वा' शब्द अनास्था का। इससे सिद्ध यह हुआ कि कातीय तर्पण केवल जल से भी सम्पन्न किया जा सकता है। क्योंकि बौधायन एवं मनुवचन के अनुसार तिल तथा कुश के अभाव में भी केवल जल से भी अवश्य कर्त्तव्य तर्पण करने का निर्देश किया गया है।

ग्रन्थकार का अग्रिम विवेचन है कि चाँदी, सोना, ताँबा, तिल, कुश तथा मन्त्रों के विना पितरों को दिया गया तर्पण जल उपस्थित नहीं होता यह शंख का कथन चाँदी आदि सभी के अभाव की स्थिति में ही है, न कि किसी एक के अभाव में भी।

(किन्तु वास्तव में देखा जाय तो उक्त दोनों वचनों की एकवाक्यता करने तथा गुणलोप में प्रधान का लोप न्यायसंगत न होने के कारण इस शंख वचन का भी अन्ततः मन्त्रों से भी तर्पण कर लेना तात्पर्यार्थ समझना चाहिए।)

''सोना, चाँदी या गैंडे के सींग के बने पात्र या इसके अभाव में इन्हीं सुवर्णादि के बने कीलक से भी (दाहिने हाथ के) पितृतीर्थ (अंगूठा और तर्जनी के मध्य भाग) का स्पर्श करता हुआ जलदान (तर्पण) करे'' यह शंख-कथन उक्त वस्तुओं के मिलने की स्थिति में समझना चाहिए।

यहाँ वीरमित्रोदय का कहना है कि अञ्जलि के विकल्प में उक्त सोने आदि का पात्र समझा जाय, क्योंकि सभी का एकत्र समुच्चय (राशि या समूह) होना संभव नहीं। हाँ, उक्त पात्र आठ अंगुल से कम के न हों।

किन्तु नित्यकृत्यार्णव से उद्धृत आचार विवेक, आचारद्वैतविवेक, स्मृतिदापिका, द्वैतनिपर्णय की टीका-कादम्बरीप्रदीप जिस में म० म० गोकुलनाथ उपाध्याय ने वाचस्पति मिश्र के मत का उपपादन कर अन्ततः देवनाथ ठक्कुर का मत अङ्गीकृत किया है, के अनुसार तथा द्वैतपरिशिष्ट और ग्रन्थकार के अपर ग्रन्थ छन्दोगाह्निक के समवेत निर्णयानुसार इस सुवर्णादिनिर्मित पात्र के साथ अञ्जलि या दाहिने हाथ के पितृतीर्थ का समुच्चय होना निश्चित होता है।

**[ टिप्पणी ]**

मरीचिः—

**संक्रान्त्यां भानुवारे च गृहे जन्मदिने तथा।**
**भृत्य-पुत्र-कलत्रार्थी न कुर्यात्तिल-तर्पणम्। इति**

एतत्प्रतिवादोऽपि कात्यायनेनोक्तः—

उपरागेऽपि तु श्राद्धे पातेऽमायाञ्च सङ्क्रमे ।
निषेधेऽपि हि सर्वत्र तिलैस्तर्पणमाचरेत् ।। इति ।
सङ्क्रान्त्यां निशिसप्तम्यां रवि शुक्रदिने तथा ।
जन्मनि श्राद्धदिवसे न कुर्यात्तिलतर्पणम् ।।

इत्यादि मात्स्यवचनानि । परमेतानि निषेधवचनानि काम्यतर्पणविषयाणि । नित्यतर्पणे नित्यवत्प्राप्तबाधायोगादिति वीरमित्रोदय–कृत्यसारसमुच्चय–टिप्पणी, नित्यकृत्यरत्नमालाटिप्पणी च : ।

[ हिन्दी टिप्पणी ]

संक्रान्ति, सप्तमी तिथि, रविवार, शुक्रवार, तथा जन्मदिन में नौकर, पुत्र एवं भार्या का कल्याण चाहने वाला तिलतर्पण न करे । किन्तु इस निषेधवचन का निषेधक कात्यायन वचन है कि ग्रहण के समय श्राद्धपात होने, अमावास्या तथा संक्रान्ति के दिन में तिलतर्पण का निषेध रहने पर भी सर्वत्र तिलों से तर्पण करना चाहिए ।

मत्स्यपुराण में संक्रान्ति के दिन, रात्रि, सप्तमी तिथि, रवि, शुक्र दिन, जन्म दिन तथा श्राद्धदिन में तिलतर्पण न करे इत्यादि जो तिलतर्पण के निषेधक वचन हैं वे वीरमित्रोदय, कृत्यसारसमुच्चयटिप्पणी एवं नित्यकृत्यरत्नमालाटिप्पणी के अनुसार काम्यतर्पण प्रसंगी हैं, क्योंकि नित्यतर्पण में तो नित्य के जैसे प्राप्त तिल का बाध युक्त नहीं । इति ।

[ मूलम् ]

यमः—

त्रींस्त्रीञ्जलाञ्जलीन्दद्यादुच्चैरुच्चतरन्ततः [१]।
गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् ।।

अस्यार्थः—पित्रादिषट्काञ्जलित्रये उत्तरोत्तरवृद्धिः कर्तव्या। गोशृङ्गमिति तृतीयाञ्जल्युच्चैस्त्वनिर्देशः। जलमध्य इति पक्षप्राप्तानुवादः ।

[ संस्कृत टीका ]

त्रींस्त्रीनिति । 'आकाशे तु क्षिपेद् वारि जलस्थो दक्षिणामुख' इति सुमन्तु वचनस्थ 'आकाशे' इत्यस्य जलोपर्य्येवोर्ध्वमित्यर्थः । तत्रावधिं,

पाठा० ( १ ) नर : ।

पितृणामञ्जलित्रयञ्चाह-यमः, त्रींस्त्रीनिति । गोशृङ्गमात्रम् = वितस्ति-प्रमाण मित्यर्थः । अतएव "उच्चैरङ्गुलिचतुष्टयमुद्धृत्य प्रथमोऽष्टाङ्गुलमुच्चतरमुद्धृत्य द्वितीयो द्वादशाङ्गुलमुद्धृत्य तृतीयोऽञ्जलिः पित्रादितर्पणे प्रक्षेप" इति स्मृति दीपिका । गोशृङ्गन्द्वादशाङ्गुलानीत्याचारचिन्तामणिः । संख्यापरिमाणमप्येव मि" ति नित्यकृत्यार्णवोऽपि । अत्र " प्रथमाञ्जलेर्वा गोशृङ्गमात्रता बोद्धव्य"ति वीरमित्रोदयः ।

जलप्राप्तेति । 'उत्तीर्य वाससी परिधाय' इति कात्यायन वचनेन, 'उदके नोदकं कुर्यादि' त्यादि शंखवचनेन च मुख्यतः स्थलतर्पणविधानेऽपि स्थलाशुचित्वपक्षे इष्टकाचितत्वादिना तर्पणकरणायोग्यभूमिसत्वे वा 'आकाशे तु क्षिपद्वारी' त्यादि सुमन्तुवचनादिना पक्षप्राप्तस्य=जले तर्पणस्य 'जलमध्य' इत्यनुवादः, नतु विधिरिति भावः । तथा सति स्थलीय-तर्पण-पक्षेऽयमुच्चैस्त्वनियमो नैव प्रवर्तेतेति सारांशः ।

देवादितर्पणे ऊर्ध्वतां प्रमाणं तर्पणीय-कुशभाग-प्रमाणञ्चाह वृद्धमनुः-

**प्रादेशमात्रमुद्धृत्य सलिलं प्राङ्मुखः सुरान् ।**
**उदंङ् मनुष्याँस्तर्पेत पितृन् दक्षिणतस्तथा ॥**

**अग्रैस्तु तर्पयेद्देवान् मनुष्यान् कुशमध्यतः ।**
**पितॄँस्तु कुशमूलाग्रै र्विधिः कौशोऽयमुच्यते ॥**

**[ हिन्दी टीका ]**

सुमन्तु वचन से जल के ऊपर ऊर्ध्वगत हस्त से तर्पण करने का विधान किया गया है । अतः तर्पण के आधार जल से ऊपर हाथ रखने तथा पितरों को तीन अञ्जलियाँ देने के संबन्ध में मूल में यम का कहना है कि पिता, पितामह, प्रपितामह, मातामह, प्रमातामह तथा वृद्धप्रमातामह इन छह पितरों के लिए दीये जाने वाली तीन तीन अञ्जलियों में जल से चार अंगुल ऊपर पहली अञ्जलि, आठ अंगुल ऊपर दूसरी अञ्जलि तथा बारह अंगुल ऊपर तीसरी अञ्जलि होनी चाहिए । आचारचिन्तामणि तथा संख्यापरिमाण के अनुसार शिष्टजन गोशृंग पद से बारह अंगुल का तात्पर्य मानते हैं । वीरमित्रोदय के अनुसार अथवा पक्ष में कहा गया है कि पहली अंजलि बारह अंगुल ऊपर हो । इसी अनुपात में शेष दो भी होंगी ।

इस वचन में आये 'जलमध्य' पद मुख्य रूप से होने वाले स्थल तर्पण की परिस्थिति न होने पर विकल्प रूप में कहे गए जल तर्पण विधान का अनुवाद मात्र है नकि विधि बोधक। यदि इसे विधि मान लें तो स्थल तर्पण में यह उच्चता का नियम लागू नहीं हो सकेगा।

ऊपर से वृद्धमनुवचनानुसार ज्ञातव्य है कि प्रादेश प्रमाण ऊपर हाथ में जल रख कर पूर्व मुख हो कुश के अग्रभाग में देवताओं का, उत्तर मुंह हो कुश के मध्य भाग में मनुष्यों का तथा दक्षिण मुंह हो कुश मूल के अग्रभाग पर पितरों का तर्पण करना चाहिए।

[ मूलम् ]

योगियाज्ञवल्क्यः—

दक्षिणे पितृतीर्थेन जलं सिञ्चेद् यथाविधि।
दक्षिणेनैव गृह्णीयात् पितृतीर्थसमीपतः॥

दक्षिणे—करे इति शेषः।

[ संस्कृत टीका ]

दक्षिण इति। "दक्षिण इत्यादि। दक्षिणकरे। तथा च दक्षिणकरेण पितृतीर्थेन जलमादाय दक्षिणकरपितृतीर्थेनैव त्यजेदित्यर्थः" इति नित्यकृत्यार्णवोद्धृताचारचिन्तामणिः।

[ हिन्दी टीका ]

दाहिने हाथ के पितृतीर्थ से जल लेकर दाहिने हाथ के पितृतीर्थ से ही तर्पण करना चाहिए।

[ मूलम् ]

मरीचिः—

मुक्तहस्तेन[१] दातव्यं मुद्रान्तत्र न दर्शयेत्।

मुद्रा=तर्जन्यङ्गुष्ठयोगेन पितृतीर्थावरोधः।

---

पाठा० ( १ ) मुक्तहस्तम्

[ संस्कृत टीका ]

मुक्तेति । मुक्तहस्तेन = प्रसारितदक्षिणकरेणेत्यर्थः । दातव्यम्–जलमितिशेषः । तत्र=मुक्तहस्ते । मुद्राम् = तर्जन्यङ्गुष्ठयोगेन पितृतीर्था-वरोधम्–पितृतीर्थावरोधकं तर्जन्यङ्गुष्ठसंयोगविशेषम् । न, दर्शयेत् = कुर्यादिति तात्पर्यम् ।

अत्र मुक्तहस्तमितिपाठं मत्वाऽऽचारचिन्तामणिस्तु ''मुक्तहस्तम्= प्रसारितहस्तं यथास्यादेवंम् । न मुद्रामित्यादि । तर्जन्यङ्गुष्ठमुद्रया पितृतीर्था-वरोधनं न कुर्यादित्यर्थः''इति व्याख्याति ।

[ हिन्दी टीका ]

फैलाए हुए दाहिने हाथ से जल दान (तर्पण) करना चाहिए किन्तु हाथ में तर्जनी और अंगूठे को मिला देने से पितृतीर्थ का अवरोध नहीं होने दें ।

[ मूलम् ]

शङ्खलिखितौ–

**नेष्टका[1] चिते देवपितॄँस्तर्पयेत् ।**

उशनाः–

**न वेष्टितशिरा न कृष्ण[2] काषायवासा देवपितृकार्यं कुर्यात् ।**

[ संस्कृत टीका ]

नेष्टकेति । इष्टकाचिते= इष्टिकाव्याप्ते स्थाने । देवपितॄन् देवादीन् पितॄँश्चैव न तर्पयेत् ।

न वेष्टितेति । वेष्टितशिराः = वस्त्रादिना आच्छादितमस्तकः । कृष्ण, कषाय (गैरिक) वस्त्रो वा देवादिपितृसम्बन्धि–तर्पणादिकार्यं न कुर्यादिति भावः ।

[ हिन्दी टीका ]

ईंटोवाली जगह पर देवादि तथा पितरों का तर्पण न करें ।

कपड़े आदि से माथा ढक कर या काला, कषाय (गोरुआ) वस्त्र पहन कर देवपितृसम्बन्धी तर्पण आदि न करें ।

---

पाठा० (१) नेष्टकारचिते इति इष्टकाशब्द प्रकरणे शब्दकल्पद्रुमः (२) कृष्णारक्तकषायवस्त्रधृक् ।

[ मूलम् ]

योगियाज्ञवल्क्यः-

**सवर्णेभ्यो जलं देयं नासवर्णे कदाचन ।**

मित्रत्वादि-प्रसक्त-जलदान-निषेधोऽयं प्रकरणादिति । नैतद्बलाद् भीष्मतर्पण-निषेधो यदि तत्र प्रमाणमस्ति ।

[ संस्कृत टीका ]

सवर्ण इति । सवर्णेभ्यः समानः वर्णः - जातिर्येषां तेभ्यः बन्धुबान्धवादिभ्यः । जलम् = तर्पणजलम् । देयम् । असवर्णे = असमानजातिकाय जनाय । कदाचन=कदाचिदपि । न, देयमिति मूलवचनार्थः ।

मित्रत्वादिप्रसक्तस्य = 'आचार्यगुरुशिष्यर्त्विग्ज्ञातिबान्धवा अतर्पिता देहाद् रुधिरं पिबन्ती'तिकात्यायनवचनेन, 'बान्धवानां कृत्वा सुहृदां कुर्यादि'ति शङ्खवचनेन च मित्रत्वादिकारणवशात्प्राप्तस्य । जलदानस्य = असवर्णेभ्यो वैमात्रेयादिभ्यस्तर्पणजलदानस्य । अयं निषेधः=उक्तनिषेधः । प्रकरणात् = तर्पणनिषेधप्रकरणीयवचनात् ।

एतद्बलाद् = उक्तसामान्यवचनप्रमाणात् । भीष्मतर्पणनिषेधः = गङ्गासुताय भीष्माय तर्पणस्य निषेधः । न, कर्तुं शक्यते । यदि तत्र प्रमाणमस्ति = प्रमाणसद्भावादिति भावः । अतएव-''भीष्माय त्वसवर्णायापि भीष्माष्टम्यां तर्पणं कार्यम् । 'भीष्माय तु जलं दद्युस्त्रयो वर्णा द्विजातयः' इति शिष्टाचारोपष्टब्ध वचनादि''त्याचारचिन्तामणिः ।

अतएव च ''इति गौडीयस्मृतेराचाराद्वा यदि भीष्मतर्पणं समूलन्तदा त्रैवर्णिकस्यैव' नो चेन्न कस्यापी''ति छन्दोगाह्निकस्मृतिसारौ । अत्र नित्यकृत्यार्णवस्तु 'अत्र वर्षकृत्यादिलिखित तद्वचनाद् भीष्मतर्पणे त्रैवर्णिकाधिकार एव प्रतीयते । बलात्सर्ववर्ण-विषयतेति लिखितम् । प्रतिहस्तकैरप्येतद्गौडीयवचनमलिखित्वैव कृत्यचिन्तामणौ विशेषानभिधानात् सर्ववर्णविषयतेति लिखितम् । सच्छूद्राणाञ्च तथैवाचारोऽपीती''त्याह ।

प्रमाणे तावद्–

''माघशुक्लाष्टमी भीष्माख्या, तस्यां भीष्मतर्पणान्याह पाद्मे–

माघे मासि सिताष्टम्यां सतिलैर्भीष्मतर्पणम्।
श्राद्धं च ये नराः कुर्युस्ते स्युः सन्ततिभागिनः ॥

भारते–

शुक्लाष्टम्यान्तु माघस्य दद्याद्भीष्माय यो जलम्।
संवत्सरकृतं पापं तत्क्षणादेव नश्यति ॥

एतत्तर्पणे सर्ववर्णानामधिकारः, इयानेव विशेषः।

ब्राह्मणः पितृतर्पणानन्तरं, क्षत्रियादयस्तु प्रथममेव भीष्मतर्पणं कुर्युरिति समाचारः। तर्पणमन्त्रो यथा–

वैयाघ्रपादगोत्राय सांकृतिप्रवराय च।
अपुत्राय ददाम्येतत्सलिलं भीष्मवर्मणे ॥
वसूनामवताराय सांकृतिप्रवराय च।
अर्घं ददामि भीष्माय आबालब्रह्मचारिणे ॥

इति मन्त्राभ्यां सलिलाञ्जलिं दत्वा पठेत्–

ओं भीष्मः शान्तनवो वीरः सत्यवादी जितेन्द्रियः।
आभिरद्भिरवाप्नोति पुत्रपौत्रोचितां क्रियाम् ॥''

इति कृत्यसारसमुच्चयः।

भीष्मतर्पणाकरणे दोषमाह तिथितत्त्वचिन्तामणि–धृत–भारते –

ब्राह्मणाद्याश्च ये वर्णा दद्युर्भीष्माय नो जलम्।
संवत्सरकृतं तेषां पुण्यं नश्यति सत्तम ॥

इति तट्टिप्पणी च –'इदञ्च आगन्तुकानामन्ते निवेश' इतिन्यायात्सर्वतर्पणान्ते कार्यम्। इदञ्च तर्पणं पितृतर्पणवत्कार्यमिति वदन्तीति वीरमित्रोदयः।

[ हिन्दी टीका ]

समान जातिवाले बन्धुबान्धव आदि के लिए ही तर्पण जल देना चाहिए, न कि कभी भी विभिन्न जाति के लोगों के उद्देश्य से भी—यह निषेध प्रकरणवश मित्रता आदि कारण वश अन्यजाति के व्यक्ति (वैमात्रेय आदि) के प्रति प्राप्त तर्पण के लिए समझना चाहिए।

यदि प्रमाण हो तो अर्थात् विशेष प्रमाण रहने के कारण इस सामान्य निषेधवचन के बल से भीष्मतर्पण का निषेध नहीं किया जा सकता है।

इसी हेतु यहाँ आचारचिन्तामणि का भी कहना है कि असवर्ण (भिन्न जाति के) भी भीष्म को भीष्माष्टभी तिथि को तर्पण करना चाहिए।

श्रीदत्तोपाध्यायकृत छन्दोगाह्निक एवं समयप्रदीप, हरिनाथोपाध्याय कृत स्मृतिसार, वाचस्पतिमिश्रकृत आचारचिन्तामणि तथा प्रतिहस्तक कृत कृत्यचिन्तामणि और नित्यकृत्यार्णव के समन्वित विवचन तथा आचार के आधार से निश्चित होता है कि सभी वर्णों के लोगों को इस भीष्म तर्पण का अधिकार है।

प्रमाण के सम्बन्ध में कृत्यसारसमुच्चयनामक निबन्धग्रन्थ के अनुसार पद्मपुराण का कहना है कि "माघमास की शुक्लाष्टमी के दिन तिलसहित जल से शान्तनुपुत्र भीष्म का जो तर्पण करता है वह सन्तानभागी होता है।"। इसी तरह महाभारत का भी कहना है कि जो माघशुक्ल अष्टमी के दिन भीष्म को जल देता हे उसका वर्षभर में किया गया पाप उसी क्षण नष्ट हो जाता है।

इस तर्पण की यही विशेषता है कि इसमें सभी जाति के लोगों का अधिकार है किन्तु ब्राह्मण पितृतर्पण के बाद और क्षत्रिय आदि तो पहले भीष्म तर्पण कर ले, यही आचार परम्परा है।

इस तर्पण के लिए संस्कृत टीका में उल्लिखित 'वैयाघ्रपादगोत्राय' आदि दो मन्त्र हैं। अनन्तर 'ओं भीष्मः शान्तनवः' आदि मन्त्र पढ़े।

वीरमित्रोदय के अनुसार यह तर्पण सभी तर्पणों के अन्त में तथा पितृतर्पण के जैसे करे।

[ मूलम् ]

**पारस्करः—**

ब्राह्मणेन[१] न कर्तव्यं शूद्रस्य त्वौर्ध्वदैहिकम्।
शूद्रेण वा ब्राह्मणस्य विना पारशवात्क्कचित्॥

पाठा० (१) पद्य। (अ) पद।

और्ध्वदैहिकमिति[२] सामान्यनिर्देशाच्छ्राद्धादिपरिग्रहोऽपि[३] । पारशवो ब्राह्मणाच्छूद्रायामुत्पन्नः, तेन पितुः कर्तव्यमित्यर्थः ।

[ संस्कृत टीका ]

ब्राह्मणेनेति । पितुरसवर्णस्यापि तर्पादि शूद्रापुत्रेण कार्यमित्याह पारस्करः ब्राह्मणेनेत्यादिना । ब्राह्मणेन = विप्रेण । शूद्रस्य = चतुर्थवर्णस्य तु । शूद्रेण वा ब्राह्मणस्य । अत्र ब्राह्मण-शूद्रपदे विजातीयोपलक्षके । 'नासवर्णे' इत्यादि योगियाज्ञवल्क्यवचन स्वरसात् । पारशवात् = ब्राह्मणवीर्याच्छूद्रायामुत्पन्नात् । (शूद्रायां विप्रतनयेः शास्त्रे पारशवो मतः । इत्यमरः) ।

**ब्राह्मणाद् वैश्यकन्यायामम्बष्ठो नाम जायते ।**
**निषादः शूद्रकन्यायां यः पारशव उच्यते ॥**

इति मनु : । इदञ्च विजातीयपुत्रापौत्रादद्युपलक्षकम् । तेन सखित्वादिप्रसक्तस्य असवर्णश्राद्धादेर्निषेधः । न तु पुत्रत्वादिना प्रसक्तस्येति सिद्धम् । अतएव 'तेन स्वपितुः कर्तव्यमित्यर्थः, इति ग्रन्थकारः । विना= ऋते । क्वचिद् = क्वचिदपि । और्ध्वदैहिकम् = देहादूर्ध्वम् ऊर्ध्वदेहः । राजदन्तादिषु पर (२ । २१ । ३१) मिति परनिपातः । ऊर्ध्वदेहे भवम्-अध्यात्मादित्वात् (४।३।६०) ठञ् । अनुशतिकादित्वात् (७।३। २०)उभयपदवृद्धिः । केचिदुत्तरपदवृद्धिं नेच्छन्ति ।।०।। प्रेतमुद्दिश्य मरणदिनमारभ्य सपिण्डरीकरणपर्यन्तं प्रत्यहं दीयमानस्य जलपिण्डादेरेकमिति रामाश्रमी सुधाव्याख्या । "मृतार्थं तदहे दानं त्रिषु स्यादौर्ध्वदैहिकम्" इत्यमर (२। ७।३०) कोशश्च । और्ध्वदेहिकमिति मरणोत्तरं सर्वकर्मपर मित्याचारचिन्तामणिः । और्ध्वदेहिकमिति सामान्यनिर्देशात् श्राद्धादिपरिग्रहइति वीरमित्रोदयः । न कर्तव्यम् = न विधेयम् ।

[ हिन्दी टीका ]

ब्राह्मण शूद्र (असवर्णजातिवालों) के लिए, मरने के बाद जलदान, पिण्डदान, तथा तर्पण आदि के रूप में दिये जाने वाले जलाञ्जलि न दे । इसीतरह शूद्र भी ब्राह्मण

---

पाठा० (१) देहिकम् (२) क्वचिदपिशब्दो नास्ति । (१ अ) ब्राह्मणैर्नैव ।

(असवर्णजाति वालों) के लिए न दे किन्तु ब्राह्मण से शूद्रा में उत्पन्न पुत्र (जो कि पारशव कहा जाता है) अपने पिता का विजातीय होने पर भी पूर्वोक्तश्राद्धतर्पणादि करे ही। इससे स्पष्ट है कि मैत्री आदि कारणवश अपने से विजातीय का श्राद्धतर्पण आदि तो नहीं ही करे।

## [ मूलम् ]

कात्यायनः—

**तर्पयेद् ब्रह्माणं पूर्वं विष्णुं रुद्रं प्रजापतिं, देवान्, छन्दांसि, वेदान्, ऋषीन्, पुराणचार्यान्[१अ], गन्धर्वानितरानाचार्यान्, संवत्सरं सावयवं[२] देवीरप्सरसो देवानुगान्नागान् सागरान् पर्वतान्सरितो मनुष्यान् यक्षान् रक्षांसि पिशाचान् सुपर्णान् भूतानि पशून् वनस्पतीनोषधीर्भूतग्रामं चतुर्विधं तृप्यतामित्योङ्कारपूर्वम्।**

पाठक्रमादेव पूर्वताप्राप्तौ[३] पूर्वमिति क्रमाभिधानात्प्रत्येकं ब्रह्मादीनां तर्पणीयत्वम्। एवञ्च तृप्यतामित्योङ्कारपूर्वमिति च[४] प्रत्येकमभिसम्बद्ध्यते, तदुक्तं योगियाज्ञवल्क्येन—

**अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु।**
**तृप्यतामिति सेक्तव्यं नाम्ना तु प्रणवादिना।**

अन्वारब्धेन[५]=पश्चाल्लग्नेन।

एवञ्च देवतर्पणे[६] ॐ ब्रह्मा तृप्यतामित्यादि रूपम्। बहुवचनान्त-श्रुत देवादि[७]-सम्बन्धे[८]नाऽर्थाद् बहुवचनम्। पुराणानितरानित्या[९] चार्य-विशेषणम्। सावयव इति संवत्सर[१०] विशेषणम्। साकाङ्क्षत्वात्[११]। चतुर्विध इति भूतग्रामविशेषणम्।

---

पाठा० (१अ) पुराणानाचायनि्। (अ) पुराणचार्य नितराचार्यान्। (१) तराचार्यान्। (२) रञ्च। (३) पूर्वत्वसिद्धौ। (४) क्वचिद् 'च' इति नास्ति। (५) क्वचित्पदयन्ति इति पदं निवेश्य त्वयाख्येयं नास्ति। (६) दैवतर्पणाम्। (७) देवती। (८) सम्बन्धे। (९) नितिच। (१०) इति च। (११) चतुर्विधमिति भूतग्राम विशेषणम्। साकाङ्क्षत्वात्।

[ संस्कृत टीका ]

तर्पयेदिति । तर्पयेदित्यारभ्य दूरवर्त्ति देहाद्रुधिरं पिबन्तीति पर्यन्तं कात्यायन-वचनमस्ति । अग्रे मूलस्याधोग्रन्थकृता कृतां व्याख्यामुल्लिख्य तदधः स्वीया व्याख्या निर्देक्ष्यते । तर्पयेत्=अञ्जलिना जलं प्रक्षिपेदित्यर्थः ।

पाठक्रमादिति । पाठक्रमादेव ब्रह्मणः पूर्वत्वसिद्धौ पूर्वमिति वचनं ब्रह्मादीनां प्रत्येकं तर्पणीयत्वसिद्ध्यर्थम् । अन्यथा ब्रह्मा विष्णुरित्युद्युक्त्वा सकृदेव तृप्यतामिति प्रयोगापत्ते रिति भावार्थः ।

एवञ्च = तथाच । प्रकृतवचने कथ्यमानं तृप्यतामित्योङ्कारपूर्वमिति च । प्रत्येकमभिसम्बध्यते = प्रत्येकं ब्रह्मादिभिः सहैषां नाम्नोऽन्ते तृप्यतामिति नाम्न आदौ च ॐकार उच्चारणीयः । यदुक्तं योगियाज्ञवल्क्येन-अन्वारब्धेनेत्यादि । अन्वारब्धेन=पश्चाल्लग्नेन । 'अत्र "सव्येन = वामेन, तथाच वामहस्तयुत दक्षिणहस्तेन तर्पयेदिति भाव" इति कृत्यसारसमुच्चयः । "तर्पणे तु देवानां वामान्वारब्धो दक्षिणकरः, अन्वारब्धेन सव्येने' ति वचना-त् । ......तथापि देवतर्पणे वामान्चारब्ध दक्षिणकर एवाञ्जलि पदेनोक्त इति द्रष्टव्यमि" ति द्वैतपरिशिष्टम् । "ब्रह्मादीनां चर्तुणां तर्पणे प्रयोगाकाङ्क्षायां योगियाज्ञवल्क्योक्त एव प्रयोगो ग्राह्यस्तथाच सः—अन्वारब्धेन सव्येन...... प्रणवादिने ति । ..... तथा चैतद्बलात् 'तौ युतावञ्जलिः पुमानि' ति-कोशोऽप्यत्र सङ्कोचनीयः । तथाच 'ॐ ब्रह्मा तृप्यतामि' त्यादि क्रमेण वाक्यं कर्तव्यम् ।" इति नित्यकृत्यरत्नमाला टिप्पणी च । अत्र वीरमित्रोदयस्तु 'एकैकमञ्जलिं देवा' इत्यादि पूर्वोदाहृत व्यासवाक्याद्देवादीनामप्यञ्जलिः सिध्यति । एवञ्च देवादितर्पणे वामहस्तेनान्वारब्धदक्षिणपाणिना सममञ्जलेर्विकल्पः इत्यधिकमाह ।

'देवाताना पितृणाञ्च जले दद्याज्जलाञ्जलीन् इति पूर्वोदाहृत-कार्ष्णाजिनिवचनात् पितृणामिव देवानां कृतेऽपि विकल्पेन जलाञ्जलिः सिध्यत्येव । एवञ्च देवतर्पणे 'ॐ ब्रह्मा तृप्यतामि'त्यादि क्रमेण मन्त्रवाक्यं सिध्यति ।

देवादिसन्बन्धेनेति। बहुवचनान्तश्रुत देवान् छन्दांसीत्यादौ बहुत्वविशिष्टि देवादि सम्बन्धेनेत्र्थः। अर्थात् =अर्थानुसारात्। बहुवचनम्=देवादिगत बहुत्वान्वयार्थं तृप्यन्तामिति तर्पणक्रियावाचकबहुवचनान्तं पदं पठनीयमिति भावः। पुराणानितरानिति = पुराणानिति इतरानितिच। आचार्यविशेषणान्। तेन ॐ पुराणाचार्यास्तृप्यन्ताम्, इतराचार्यास्तृप्यन्तामिति मन्त्रवाक्यद्वयं निष्पद्यते। एवमग्रेऽपि। कुत्रचिन्मूले पुराणाचर्यानितराचार्यानित्येव पाठः।

सावयव इति। सावयव इति पदं, साकाङ्क्षत्वात्=श्रोतुर्यावत् किञ्चित्पदश्रवण-समनन्तरमेव तदन्वयि पदान्तरश्रवणेच्छारूपाकाङ्क्षया सहितत्वात् संवत्सरस्य विशेषणम्। एवं चतुर्विध इति पदमपि साकाङ्क्षत्वादेव भूतग्रामपदेनान्वेति।

[ हिन्दी टीका ]

यहाँ मूल में 'तर्पयेत्' से लेकर दूरवर्ती 'अतर्पिता देहाद्रुधिरं पिबन्ति' पर्यन्त एकही तर्पण प्रसंगी कात्यायन वचन है। क्रमशः मूल के नीचे ग्रन्थकारकृत व्याख्या तथा विवेचन लिखे जायेंगे। जिसके नीचे पूर्ववत् संस्कृत एंव हिन्दी व्याख्याएँ उल्लिखित होंगी।

तर्पणीय देवादि नाम के पूर्व में ओंकार और अन्त में 'तृप्यताम्' पद जोड़कर आदि से चार देवों के लिएं यथा ॐ ब्रह्मा तृप्यताम्, एवं बहुवचनान्त स्थलों में ॐ देवास्तृप्यन्ताम् इस क्रम में तर्पण करे। [इस वचन में कहे गए ब्रह्मा (देवों) आदि का प्रत्येक नाम तथा क्रम आगे के प्रयोग प्रकरण से भली भाँति समझें।]

यहाँ ग्रन्थकार के विवेचनानुसार ज्ञातव्य है कि पाठक्रम से ही ब्रह्मा में पूर्वत्व (प्रथमत्व) सिद्ध था ही तब पूर्वपद देने का प्रयोजन यह है कि ब्रह्मा आदि सभी उल्लिखित देव क्रमशः तर्पणीय हैं। 'तृप्यताम्' इस पद का तथा 'ओंकार पूर्वम्' इस पद का ब्रह्मा आदि प्रत्येक पद के साथ सम्बन्ध है। जैसा कि योगियाज्ञवल्क्य ने भी कहा है-नाम के आदि में ऊँकार तथा अन्त में 'तृप्यताम्' कहकर बायें हाथ के द्वारा पीछे से संलग्न दाहिने हाथ से या दोनों हाथों से जाल दें। निष्कर्ष में सिद्ध हुआ कि ऊँ ब्रह्मा तृप्यताम्' इस क्रम से मन्त्रवाक्य होगा।

वचन में बहुवचनान्तरूप से पढ़े गए देवान् छन्दांसि' इत्यादि स्थलमें पदप्रतिपादित अर्थ के अनुसार बहुवचनान्त 'तृप्यन्ताम्' पद का ऊह (प्रयोग) कर लेना चाहिए। यथा, 'ॐ देवास्तृप्यन्ताम् , इत्यादि।

पुराणपद तथा इतरपद आचार्य का विशेषण है। फलतः 'ॐ पुराणाचार्यास्तृप्यन्ताम्।' 'ॐ इतराचार्यास्तृप्यन्ताम्' ये दो मन्त्र वाक्य होंगे।

सावयवपद साकांक्ष (श्रोता को कोई पद सुनने के बाद तुरंत उसके अन्वयी पदान्तर सुनने की इच्छा को आकांक्षा कहते हैं, तत्सहित) होने के कारण संवत्सर का विशेषण है। इसी तरह 'चतुर्विध' पद भूतग्राम का विशेषण है। फलितार्थ में 'ॐ संवत्सरः सावयवस्तृप्यताम्, एवं ॐ भूतग्रामश्चतुर्विधस्तुप्यताम् ये मन्त्रवाक्य हुए।

[मूलम्]

ततो निवीती मनुष्यान्-

**सनकञ्च[1] सनन्दञ्च तृतीयञ्च सनातनम्।**

**कपिलञ्चासुरिञ्चैव वोढुं पञ्चशिखन्तथा॥**

ततो निवीतीत्यभिधानात्पूर्वमुत्सर्गसिद्धमुपवीतित्वमेव। उक्तञ्च योगियाज्ञवल्क्येन

**ब्रह्मादीनुपवीती तु देवतीर्थेन तर्पयेत्।**

**निवीती कायतीर्थेन मनुष्यान् सनकादिकान्॥**

मनुष्यतर्पणमपि ऊँ सनकस्तृप्यतामित्योङ्कारपूर्वमेव, तृप्यतामिति वाक्यस्य तदुत्तरत्वात्।

[संस्कृत टीका]

मूले तत इति। ततः देवतर्पणानन्तरम्। निवीती=कण्ठावलम्बितयज्ञसूत्रः सन्। मनुष्यान्=सनकादीन् सप्त। तर्पयेदिति पूर्वक्रिया सम्बन्धः।

उत्सर्गसिद्धम्=स्वभावसिद्धम्। उपवीतित्वेमेव=वामस्कन्धावलम्बित-दक्षिणबहुभागस्थितब्रह्मसूत्रत्वमेव, कृतसव्यत्वमिति यावत्। यथोक्तं योगि-याज्ञ्यवल्क्येन ब्रह्मादीनित्यादि। कायतीर्थेन=कनिष्ठामूलेन प्रजापतितीर्थेनेत्यर्थः। को-ब्रह्मा, सदेवताऽस्येत्यर्थेऽणि कस्येत् (पा० ४।२।२५) इतीदादेशे वृद्धौ आयादेशः।

---

पाठा० (१) सनकञ्च सनन्दश्च तृतीयश्च सनातनः। कपिलश्चासुरिश्चैव बोढुः पञ्चशिखस्तथा। इति सर्वत्र प्रथमान्ततयाऽऽचार चिन्तामणौ पाठः।

मनुष्यतर्पणमपि=इदानीमुक्तसनकादिमनुष्यतर्पणमपि । ॐ सनकस्तृप्यता-मित्योङ्कारपूर्वमेव=तृप्यतामित्यन्तम् ओङ्कारपूर्वञ्च बोध्यम् । तृप्यतामिति-वाक्यस्य="तृप्यतामिति सेक्तव्यं नाम्ना तु प्रणवादिना" इति योगियाज्ञवल्क्य-वचनस्य । तदुत्तरत्वात्=मनुष्यतर्पणविध्युत्तरं पाठात् ।

[ हिन्दी टीका ]

देवतर्पण के बाद निवीती (कण्ठावलम्बितयज्ञोपवीत) हो सनक, सनन्दन आदि सात मनुष्यों का तर्पण करे, यह मूलवचन का अर्थ हुआ ।

यहाँ निवीती होने के विधान से पूर्व में स्वाभाविक रूप से सव्य रहने का भाव स्पष्ट हो जाता है; क्योंकि योगियाज्ञवल्क्य ने कहा है–सव्य हो देवतीर्थ से ब्रह्मा आदि देवों का तथा निवीती हो प्रजापतितीर्थ (कनिष्ठामूल) से सनक आदि मनुष्यों का तर्पण करे ।

यह मनुष्यतर्पण भी पहले ओंकार तथा अन्त में तृप्यताम् जोड़कर "ॐ सनक स्तृप्यताम्" ऐसे आकर के वाक्य से ही होगा; क्योंकि "पहले ओंकार पश्चात् तृप्यताम् के साथ तत्तन्नाम कहकर जलदान करे" यह याज्ञवल्क्य का वचन मनुष्य तर्मण विधि के बाद में कहा गया है ।

[ मूलम् ]

ततोऽपसव्यं तिलमिश्रं कव्यवाड[१] नलं यममर्यमण[२]मग्निष्वात्तान् सोमपान[३] बर्हिषदो, यमञ्चैके,[४]

यमाय धर्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्वभूतक्षयाय च ॥
औदुम्बराय दध्नाय नीलाय परमेष्ठिने ।
वृकोदराय चित्राय चित्रगुप्ताय वै नमः ॥
एकैकस्य तिलैर्मिश्राँस्त्रींस्त्रीन्दद्याज्जलाञ्जलीन्।
यावज्जीवकृतं पापं तत्क्षणादेव नश्यति ॥

जीवत्पितृकोऽप्येतानन्यश्चेतरः ।

पाठा० ( १ ) कव्यवाडनलम् । (अ) कव्यवालं । ( २ ) मणन्तथा । ( ३ ) षदश्च । ( ४ ) श्चेत्येके ।

ततोऽपसव्यमिति । पितृ[१]धर्मोपलक्षणमेतत् । तेनात ऊर्ध्वं दक्षिणामुखत्वमपि । कव्यवाडदि[२] दिव्यपितृतर्पणे स्वधानम इतियोज्यम्[३]। नमस्कारस्वधान्वितानिति योगियाज्ञल्क्यवचनात् । पितृतर्पणेऽपि स्वधा नमः इति । हरिहरमते कव्यवाडनल इत्येका देवतेति कल्पतरुकारः तत्तु कव्यवाडादय[४] इति गोभिलाभिधानादयुक्तम् । अतएव कामधेन्वादौ कव्यवाड[५] नलमिति पाठः । यमाँश्चैके इति मतान्तरे[६]-णाभिधानादनावश्यकत्वम् । अतएवैकैकस्येत्यादिना पापक्षयरूपफलाभिधानम् । नम इति सर्वत्र चतुर्थ्यन्तसम्बद्धम् । एतान्[७]=यमान्। तेन यमतर्पणपर्यन्तं जीवत्पितृकेणापि कर्तव्यम् । अन्याँश्चेतरः इतरः=प्रमीतपितृकः, अन्यान्=स्वपित्रादीनपि[८] तर्पयेदित्यर्थः ।

**[ संस्कृत टीका ]**

ततोऽपसव्यमिति । पितृधर्मेति । पितृधर्मोपलक्षणम्=पितृकर्मारम्भात्पूर्व-मनुष्ठेयस्य बोधकम्, सूचकमिति यावत् । तेनात ऊर्ध्वम्=तेन हेतुना पितृतर्पणकरणात्पूर्वम् । दक्षिणामुखत्वमपि=दक्षिणदिक्संमुखत्वमपि । अपिशब्दाद्-

**दक्षिणं पातयेज्जानुं देवान् परिचरन् सदा ।**
**पातयेदितरं जानुं पितॄन् परिचरन्नपि ॥**

इति छन्दोगपरिशिष्टात्,

**देवानामृजवो दर्भाः पितॄणां द्विगुणाः स्मृताः ।**

इति स्मृतिवचनात्,

**तर्पणादीनि कार्याणि पितॄणां यानि कानिचित् ।**
**तानि स्युर्द्विगुणैर्दर्भैः सप्तपत्रैर्विशेषतः ॥**

इति व्यासवचनात्,

---

पाठा० ( १ ) पितृतर्पणधर्मोपलक्षणम् । ( २ ) वालादि । ( ३ ) प्रयो० । ( ४ ) वाला । ( ५ ) वालम् । ( ६ ) मतान्तरत्वेनोपन्यासाद । ( ७ ) क्वचिद् 'एतान्- यमानिति पाठो नास्ति । ( ८ ) क्वचिद् 'नपी'त्यत्र अपीति पाठो नास्ति ।

सपिण्डीकरणं यावद् ऋजुदर्भैः पितृक्रिया।
सपिण्डीकरणादूर्ध्वं द्विगुणैर्विधिवद् भवेत्॥

इति शालङ्कायनवचनादेश्च पातितवामजानुत्वद्विगुण (मोटक) कुशग्रहणादि च बोध्यम्।

मूले तिलमिश्रमिति। तिलमिश्रम् =

पितॄन् भक्त्या तिलैः कृष्णैः स्वसूत्रोक्तविधानतः॥
देवान् ब्रह्मं ऋषीँश्चैव तर्पयेदक्षतोदकैः।

इति कूर्मपुराणोक्तवचनेनापि कृष्णैस्तिलैर्मिश्रितं जलं प्रसिञ्चेदित्यग्रिम-क्रिययाऽन्वयः। पितृतर्पणेऽपीति। दिव्यपितृतर्पणवत् पितृतर्पणेऽपि 'स्वधानमः' इति प्रयोज्यमिति हरिहरमतमितिभावः। न केवलमेतद्धरिहरमत एव, अपितु कल्पतरुरत्नाकरादयोऽप्येव।। तथाचात्र मतभेदविश्लेषणार्थमाचार-चिन्तामणि र्यथा—"योगीति

यदि स्याज्जीवपितृक एतान् दिव्यान् पितृंस्तथा।
येभ्यो वापि पिता दद्यात्तेभ्यो वापि च दापयेत्॥
एतांश्चं वक्ष्यमाणांश्च प्रमीतपितृको द्विजः।
वसून् रुद्रांस्तथादित्यान्नमस्कारस्वधान्वितान्।
एते सर्वस्य पितर एष्वायत्ताश्च मानुषाः॥

नमस्कारेत्यादिकं वक्ष्यमाणानां सर्वेषां विशेषणम्, असङ्कोचात्। तेन वस्वादीनामिव स्वपित्रादीनामपि वक्ष्यमाणपदार्थानां स्वधा नम इत्येव त्यागः। कल्पतरु-रत्नाकरादयोऽप्येवम्। श्रीदत्ताह्निके तु दिव्यपितृष्वेव नमस्कारो नत्वन्येष्वपि। तस्यायं भावः—वक्ष्यमाणत्वाविशेषेऽपि वसुरुद्रादित्यानामेव नमस्कारस्वधान्वयो दिव्यपितृत्वात्, न तु स्वपितॄणामपि, दिव्यत्वाभावेन नमोयोगे बीजाभावात्। वाक्यस्य वस्वाद्यन्वयेनापि चरितार्थत्वादिती"ति। प्रकृताचारचिन्तामणिलेखमुद्धृत्य "द्वैतपरिशिष्टस्वरसोऽप्येवम्। देवनाथ ठक्कुरैस्तु कल्पतर्वादिमतङ्गीकृत्य "......... साफल्यादि"ति स्मृति कौमुद्यामुक्तम्। आचारविवेकाचारद्वैतविवेकौ तु श्रीदत्तमवलम्बेते" इति नित्यकृत्यार्णवः।

एवञ्चैतद् योगियाज्ञवल्क्यवचनानुसारमेषां वसुरुद्रादित्यानामिव प्रकृत-कात्यायन-गोभिलवचनाभ्यां तर्पणकल्पभेदेन कव्यवाडादीनामपि दिव्यपितृत्वं बोद्धव्यम् ।

कल्पतरुकार इति । "हव्यवाहनो वै देवानां, कव्यवाहनः पितृणामि" ति श्रुतिमाधारीकृत्य कव्यं वहतीति कव्यवाट्, कव्यवाट् चासौ अनलश्चेति कव्यवाट्त्व-गुणविशिष्टोऽनलः = कव्यवाडनल इत्येका देवतेति भावः । तत्तु अयुक्तम् । "कव्यवाडादयो दिव्याः" इति गोभिलाभिधानात् = इति गोभिलवचनात् ।

अतएव = देवताद्वयस्य स्वीकारादेव । कामधेन्वादौ=कामधेनुप्रभृतिनि-बन्धग्रन्थे । कव्यवाडं नलमिति पृथक्तया पाठः = उल्लेखः । एवञ्च ग्रन्थकारमतेऽत्र द्वे एव देवते इति बोध्यम् ।

अत्र श्रीदत्तोपाध्यायप्रतिपादितदेवता-द्वयमध्ये कव्यवाडित्यत्र निम्ननि-बन्धभेदेन डलयोः पाठभेद उपलभ्यते । तदत्र वीरमित्रोदयो यथा- "कव्यवाड्त्वगुणविशिष्टोऽनल एको देवतेति कल्पतरुहरिहरादयः । श्रीदत्तस्तु-कव्यवाडादयो दिव्या इति गोभिलवचनात् कव्यवाडनलमिति कामधेन्वादौ पाठाच्च द्वे एव देवते इत्याह" इति । अत्रैवाचारचिन्तामणि र्यथा-"तथा च कव्यवाट्त्वगुणविशिष्ट एवानलः पितृगणान्तर्गत इति लक्ष्मीधरः । कामधेनु-रत्नाकर-हरिनाथश्रीदत्ताह्निकेषु तु कव्यवालो नलश्च द्वे एव देवते इत्युक्तं, कव्यवालादयो दिव्ययमा इति गोभिलवचनात्, श्रुतेस्तु वह्निः पितॄन् प्रति कव्यवाह इत्यर्थकतया प्रकृतास्पर्शात् । अतएव कव्यवालं नलमिति कामधेन्वादौ पाठः" इति । एवमेव पण्डिततुलसीदत्तओझा-कृत सटीक-गयाश्राद्धपद्धत्यनुसारं यदि लान्तः पाठः प्राप्यते तथापि नित्यकृत्यरत्नमालाटिप्पण्युद्धृत-छन्दोगपरिशिष्टवचनानुसारं डान्तं हान्तं वा पदं स्वीकर्तुं शक्यत एव । अतएवात्र विकल्पो बोध्यः ।

मूले-यमाँश्चेति । चतुर्दशविधयमानित्यर्थः । एके = अन्ये आचार्याः । (एकमुख्यान्यकेवला इत्यमरः) । एवञ्च एके आचार्या यमानपि तर्पणीयानाहुरित्यर्थः । एतेनैकेषां मते यमतर्पणमपि नित्यम् । परं कात्यायनमते

तु काम्यमिति सिद्ध्यति । अतएव "एक इति मतान्तरेणाभिधानादनावश्यकत्वमिति ग्रन्थकृद्व्याख्याऽपि । अतएव = अनावश्यकत्वादेव । एकैकस्येत्यादिना = एकैकस्य तिलैर्मिश्रानित्यादिप्रकृतवचनेन । पापक्षयरूपफलाभिधानम् = "यावज्जीवकृतं पापं तत्क्षणादेव नश्यती"ति प्रकृतवचनांशादिति भावः । यमतर्पणेऽञ्जलिसंख्यामाह = त्रीँस्त्रीनिति । मूले नम इति सर्वत्र = चतुर्दशविधयमतर्पणे, चतुर्थ्यन्तसम्बद्धम्ः । तेन 'ॐ यमाय नमः' इत्यादि तर्पणवाक्यं सिद्ध्यति । जीवत्पितृकः = जीवन्-प्राणधारी, पिता-जनको यस्य सः । जीवपितृक इति पाठं मत्वा जीवो-जीवन्नित्यर्थ इति त्वाचारचिन्तामणिः । मूले-एतान् = यमान्-यमादिचित्रगुप्तान्तानिति यावत् । एतेन विद्यमानपितृकोऽप्येतान् ब्रह्मादीन् चित्रगुप्तान्तान् तर्पयेदिति भावः । इतरः = प्रमीतपितृकः = मृतजनकः । अन्यान् = वक्ष्यमाणान् पित्रादीनपीत्यर्थः ।

## [ हिन्दी टीका ]

मनुष्यतर्पण के बाद अपसव्य (प्राचीनावीती) दक्षिणमुंह हो तथा अपने दाहिने घुटने को पृथ्वी पर गिराकर और मोटक रूप कुशलेकर कृष्णतिलमिश्रित जल से दिव्यपितर–कव्यवाड्, नल, यम अर्यमा, अग्निष्वात्ता, सोमप तथा वर्हिषद्–का तर्पण करें ।

उक्त इन कव्यवाड् आदि दिव्यपितरों के तर्पणवाक्य में (अन्त से) 'स्वधा नमः' इन पदों को जोडदेना चाहिए, क्योंकि योगिया ज्ञवल्क्या का वचन है कि "नमः शब्द तथा स्वधाशब्द से युक्त तर्पण (वाक्य) हो"। फलितार्थ में 'ओं कव्यवाडस्तृप्यतामिदं तिलोदकं तस्मै स्वधा नमः' इत्यादिरूप से दिव्यपितृ तर्पणवाक्य निष्पन्न होंगे ।

कात्यायनसूत्र भाष्ययकर्त्ता हरिहर के मत में तो सामान्यतः दिव्यपितर तथा अपने पितरों के भी तर्पणवाक्य में 'स्वधा नमः' पद जोडे जाने चाहिए ।

यहाँ आचारचिन्तामणि के लेखानुसार ऊपर से ज्ञातव्य है कि ग्रन्थ (आचारादर्श) प्रतिपादित हरिहर मत ही कल्पतरु, रत्नाकर आदि का भी अभिप्रेत मत है । क्योंकि–

एताँश्च वक्ष्यमाणांश्च प्रमीतपितृको द्विजः ।
वसून् रुद्राँस्तथाऽऽदित्यान्नमस्कारस्वधान्वितान् ॥

इत्यादि योगियाज्ञवल्क्यवचन साधारणतः सभी पितरों के लिए है। दिव्यपितरों के लिए ही मान कर इन से भिन्न अपने पितरों के लिए न मानने का संकोच करना उचित नहीं। अतः वसु आदि दिव्यपितरों के जैसे अपने पितरों के भी तर्पणवाक्य में 'स्वधा नमः' का प्रयोग होना चाहिए। परन्तु श्रीदत्तकृत आह्निकग्रन्थ का मत है कि दिव्यपितरों में ही 'स्वधा नमः' का प्रयोग हो, इन से अन्यों में नहीं। इनके ग्रन्थ का भावार्थ यह है कि उक्त योगिवचन में वक्ष्यमाण (आगे कहे जानेवाले) पद से यद्यपि सभी पितर लिए जा सकते हैं फिर भी दिव्यपितर होने के कारण वसु रुद्र तथा आदित्य के साथ ही नमस्कार और स्वधा (स्वधा नमः) पदों का अन्वय होना उपयुक्त है ना कि अपने पितरों के साथ भी, क्योंकि इन्हें दिव्य न होने के कारण 'स्वधा नमः' के प्रयोग करने में कोई प्रमाण (बीज) नहीं कहा जा सकता है। वचन निर्दिष्ट 'वक्ष्यमाण' आदि पद समूह रूप वाक्य वाक्य मो दिव्य पितर वसु आदि के साथ अन्वय करने पर भी चरितार्थ हो जाता है।''

यहाँ नित्यकृत्यार्णव के लेखानुसार ज्ञातव्य है कि उक्त चिन्तामणि के अनुरूप ही 'द्वैतपरिशिष्ट' का भी स्वरस है। देवनाथ ठक्कुर ने अपने ग्रन्थ 'स्मृतिकौमुदी' में कल्पतरुकार आदि के मत का अङ्गीकार किया है। किन्तु आचारविवेक और आचारद्वैतविवेक तो श्रीदत्तमत का अवलम्बन करते हैं।

ऊपर से ज्ञातव्य है कि योगियाज्ञवल्क्य के वचनानुसार इन वसु रुद्र और आदित्य के जैसे कात्यायन एवं गोभिल के वचनानुसार तर्पण के कल्पभेद से कव्यवाड् आदि भी दिव्यपितर माने जाते हैं।

कल्पतरुकार के मतानुसार कव्यवाडनल यह एक देवता है तो ग्रन्थकार के मत से ''कव्यवाडादयो दिव्याः'' इस गोभिल वचन तथा कामधेनु आदि निबन्ध ग्रन्थों के उल्लेखानुसार कव्यवाड और नल दोनों में भेद है (यहाँ विभिन्न निबन्धों के विभिन्न पाठानुसार कव्यवाड के स्थानपर कव्यवाल भी पाठान्तर समझना चाहिए। विवरण संस्कृत टीका नें देखें।)

किसी अन्य (एक) आचार्य के मतानुसार चौदह प्रकार के यमों का भी तर्पण करें। ये तर्पणवाक्य 'ओं यमाय नमः', 'ओं धर्मराजाय नमः' 'ओं धर्मराजाय नमः' इत्यादि रूप के होंगे)।

एक एक यम को तीन तीन तिलमिश्रित जलाञ्जलियाँ दें। इस से तर्पणकर्त्ता के सारे पाप उसी क्षण नष्ट हो जाते हैं।

मूल के '' यमाँश्चैके'' में 'एके' पद देने से अन्यमत का उपादान (कथन) होने के कारण यह तर्पण आवश्यक नहीं माना जाता। इसीलिए ''एकैकस्य'' इत्यादि वचन

से उक्त फलकथन किया गया है। फलतः किन्हीं आचार्य के मत से नित्यविधि होने पर भी कात्यायन के मत से तो यह काम्यविधि हो जाता है और काम्यविधि होने से इच्छाधीन तर्पण हो जाता है।

"यमायं धर्मराजाय". इस क्रम से वचन में कहे गए चतुर्थ्यन्त सभी पदों के साथ एक ही स्थान पर कहा गया भी "नमः" पद जोड़ देना चाहिए।

यहाँ तक कहे गए ब्रह्मा आदि देवों के साथ चतुर्दशयम पर्यन्त का तर्पण जीवितपितृक (जिसके पिता जीवित हो) को भी करना चाहिए। जिसका पिता मर गया है उसे तो उक्त तर्पण के साथ अपने मृत पिता आदि का भी तर्पण करना चाहिए।

## [ मूलम् ]

जीवत्पितृकस्यापि पितामहादितर्पणं पितृपातित्यपक्षे,

**येभ्यो वाऽपि[१] पिता दद्यात्तेभ्यो वाऽपि प्रदापयेत्।**

इति याज्ञवल्क्यवचनात्। अत्र पित्रादितर्पणे अञ्जलित्रय[३], यमतर्पण [४]प्रकृतत्वात्। एवञ्च[५] दिव्यपितृ-तर्पणेऽप्यञ्जलित्रयं, तद्धर्मकत्वात्[६]। एकैकस्येति तत्रापि सम्बन्धात्। ब्रह्मादितर्पणे ऋष्यादितर्पणे मनुष्यतर्पणे[७] चानुवृत्तौ प्रमाणाभावादेक एवाञ्जलिः।

## [ संस्कृत टीका ]

जीवदिति। जीवत्पितृकस्यापि = प्राणधारिपितृकस्यापि जनस्य। पितामहादितर्पणम् = पितुः पित्रादेः तर्पणकरणम्। पितृपातित्यपक्षे = स्वपितुः निजधर्मैः च्युतिपक्षे। पितृतर्पणयोग्येभ्यः पुत्रोऽपि जलाञ्जलीन् दद्यादित्यर्थक "येभ्यो वाऽपी"ति योगियाज्ञवल्क्य-वचनात्। अतएव "पितुश्च संन्यासादिना तर्पणानर्हत्वे जीवत्पितृकोऽपि पितामहादितर्पणं कुर्यादित्याचारचिन्तामणिरपि। अत्र = कातीयतर्पणकल्पे। पित्रादितर्पणे = पित्राद्युद्देश्यकतर्पणे। यमतर्पणकल्पे। यम-तर्पण-प्रकृतत्वात् = यमतर्पणं प्रकृतम्-आरम्भकं यस्य तस्य भावस्तत्वं

---

पाठा० (१) येभ्योऽपि वापिता दद्यात्तेभ्यो वाऽपि प्रदापयेत्। (२) वापि च दापयेत्। (३) गोञ्ज। (४) यमतर्पणे तथैव प्रकृतत्वात्। (५) एक न्दिव्य (६) तत्कर्मकत्वात्। (७) क्वचिद् 'ऋष्यादितर्पणं' इति पाठो नास्ति।

तस्मात् । यमतर्पणानन्तरं पितृतर्पणस्यारभ्यमाणत्वेन यमतर्पणं प्रकृतमिति भावः । एवञ्च यमतर्पणे विधीयमानस्याञ्जलित्रयस्य पितृतर्पणेऽप्यनुवृत्तिरिति सारांशः । तद्धर्मकत्वात् = पितृधर्मविशिष्टत्वात् । दिव्यपितृतर्पणेऽपि = कव्यवाड़मारभ्य बर्हिषदः पर्यन्तस्य तर्पणेऽपि । अञ्जलित्रयम् = तिलमिश्रितजलाञ्जलित्रयम् । ज्ञातव्यमितिशेषः । एकैकस्येति = एकैकस्य तिलैर्मिश्रानित्यादिवचनस्य । तत्रापि = दिव्यपितृतर्पणेऽपि । सम्बन्धात् = अन्वयात् । (किन्तु) ब्रह्मादिदेवतर्पणे । ऋष्यादितर्पणे = मरीच्यादि-ऋषितर्पणे । मनुष्यतर्पणे = सनकसनन्दना दिमनुष्यतर्पणेच । अनुवृत्तौ = "एकैकस्ये" ति वचनस्य सम्बन्धे । प्रमाणाभावात् = अन्यतोऽपि प्रामाणिक-वचनानुपलम्भात् एक एवाञ्जलिर्बोद्धव्यः ।

## [ हिन्दी टीका ]

पिता यदि पतित (अपने धर्मों से च्युत) अर्थात् संन्यास आदि के द्वारा तर्पण करने को अयोग्य हो गया हो तो जीवित पितावाले व्यक्ति भी पितामह आदि का तर्पण करे क्योंकि याज्ञवल्क्य वचन है कि जिन्हें पिता तर्पण करता हो उन्हें पुत्र भी जलाञ्जलि दे ।

इस कातीयतर्पण कल्प में पिता आदि के तर्पण में तीन-तीन अञ्जलियाँ दे क्योंकि यमतर्पण में तीन अञ्जलि के विधान के बाद पितृतर्पण का विधान किया गया है । अतः इस (तीन अञ्जलि) की अनुवृत्ति वहाँ (पितृतर्पण में) भी होगी । साथ ही पितृतर्पण की तरह ही होने के कारण दिव्यपितृ (कव्यवाड् से लेकर बर्हिषद् पर्यन्त) के तर्पण में भी तीन-तीन अञ्जलियाँ होंगी क्योंकि यहाँ भी "एकैकस्य तिलैर्मिश्रान्" इत्यादि वचन का सम्बन्ध है । किन्तु ब्रह्मा आदि देवों के तर्पण, मरीच्यादिऋषितर्पण, एवं सनक सनन्दन आदि मनुष्य तर्पण में तीन अञ्जलि को समझाने वाले एकैकस्य इत्यादिवचन के सम्बन्ध में कोई प्रमाण नहीं । अतः यहाँ एक ही अञ्जलि होगी ।

## [ मूलम् ]

केचिद् विष्णुपुराणकल्पे 'त्रिरपः प्रीणनार्थाय देवानामपवर्जयेदि'ति दर्शनाद्देवतर्पणेऽप्यञ्जलित्रयमेवेत्याहुस्तदयुक्तम् । पितॄन्मातामहानिति प्रतिपुरुषमभ्यसेदिति छन्दोगपरिशिष्टे षट्पुरुषमात्रे आवृत्तिदर्शनात् । एवञ्च

स्त्रीपर्तणेऽप्येक[१] एवाञ्जलिः, ''त्रीँ स्त्रीञ्जलाञ्जलीनि''ति[२] यमोक्तं षट्पुरुषमात्रगोचरमिति बोद्धव्यम्[३] ।

## [ संस्कृत टीका ]

केचिदिति । केचिद् केचन निबन्धारः । विष्णुपुराणकल्पे = विष्णुपुराण-वचनानुसारेण क्रियमाणतर्पणकल्पे । त्रिरप इति । देवानाम् । प्रीणनाय = तृप्त्यर्थम् । अपः = जलानि । त्रिः वारत्रयम् । अपवर्जयेत् = प्रक्षिपेत् । इति दर्शनात् = इति विष्णुपुराणवचनात् । एतदग्रिमं श्लोकात्मकवचनं यथा–

**ऋषीणाञ्च यथान्यायं सकृच्चापि प्रजापतेः ।**
**पितॄणां प्रीणंनार्थाय त्रिरपः पृथिवीपते ॥ इति ।**

अञ्जलित्रयमेव । इत्याहुः = इति कथयन्ति । तदयुक्तम् = तन्न युक्तम्, ''पितॄन् मातामहानि''त्यादि छन्दोग-परिशिष्टवचनेन षट् पुरुषमात्रे = पितृपितामह-प्रपितामहमातामह-प्रमातामहवृद्धप्रमातामहानाममीषां षट्पुरुषाणां कृत एव । आवृत्तिदर्शनात् = त्रिरभ्यस्ताञ्जलिदानबोधनात् । तथा च कल्पान्तरमिदमिति मन्तव्यम् । अत्र छन्दोगाह्निकाधारेण श्रीदत्तप्रदर्शितकेचिदिति मतमत्रत्यं यत्त्वित्यनेन विशदयन् वीरमित्रोदयः–'' श्रीदत्तस्तु–देवास्तृप्यन्तामिति त्रिः ।........यत्तु–त्रिरपः प्रीणनार्थायेत्यादि श्लोकेन कल्पान्तरप्राप्त तत्तद्देवादितर्पणे त्रिरावृत्तिरूपो गुणो विधीयते इति । तन्न । असन्निधौ गुणविध्ययोगात् । अतएव निबन्धेषु कल्पान्तरमध्य एवास्य लिखनं, नेतिकर्तव्यतामध्ये । तस्मात्क- ल्पान्तरमेवैतदित्याहे'' त्याह । अत्राचारचिन्तमणिर्यथा–''त्रिरप इत्यादि । ओं देवास्तृप्यन्तामिति वाक्येन देवेभ्योऽञ्जलित्रयम् ।ओम् ऋषय स्तृप्यन्तामिति वाक्येन ऋषिभ्योऽञ्जलित्रयम् । ओं प्रजापतिस्तृप्यतामिति वाक्येन प्रजापतय एकोऽञ्जलिरित्येव जीवत्पितृकेण तर्पणीयम् ।

---

पाठा० ( १ ) तर्पणे एव । (२) नित्यादि । (३) अत्र प्रकाशितपुस्तके 'तथा च, 'एकै कमञ्जलिं देवा द्वौ द्वौ तु सनकादयः । अर्हन्ति पितर स्त्रीँ स्त्रीँ स्त्रियोऽप्येकै कमञ्जलिम्' ।। इत्यधिक पाठो दृश्यतें । परं नित्यकृत्यार्णवेऽत्रत्योद्धृताचारादर्शपाठेऽनुल्लेखान्मयाऽपि व्याख्याऽऽत्मक मूले न स्थापितः ।

केचित्तु-इतएव वचनाद्देवादितर्पणेऽञ्जलित्रयम् । कात्यायनादौ संख्याऽऽकाङ्क्षाया अपूर्त्तेः । अतएव यन्मतेऽपि कल्पान्तरमिदं तन्मतेऽपि देवादितर्पणे कातीयादिकल्पेऽप्यञ्जलित्रयमेव । स्मृतिशास्त्रविकल्पस्तु- 'आकाङ्क्षापूरणे सतीति वचनात्, प्रकृतेच तदपूरणात् । अतएव कल्पतरुरप्येवमित्याहुस्तंत्र, पृथग्विधौ गुणविधानासम्भवात् । किञ्चं विशिष्यैवाभ्यासस्यकथनाद्देवर्ष्योरनभ्याससिद्धेः । पारिजातादयोऽप्येवम् । पितॄणामित्यादि प्रमीतपितृकपरमि'' ति । ''अत्रापि (सनकादिमनुष्यतर्पणे) सनकस्तृप्यतामित्येवमादि प्रयोक्तव्यम्, उपस्थिततत्वात् । प्रत्येकमेकैकोऽञ्जलिर्देयः, आवृत्तौ मानाभावात् ।

**एकैकमञ्जलिन्देवा द्वौ द्वौ तु सनकादयः ।**
**अर्हन्ति पितरस्त्रीँस्त्रीन् स्त्रियश्चैकैकमञ्जलिम् ।**

इति वाक्यस्य कल्पतरु-कामधेनु-रत्नाकरादिष्वदर्शनेन निर्मूलत्वावसायात् । केचित्तु- इदमेव प्रमाणं मन्वानाः सनकादावञ्जलिद्वयं प्रत्येकमाहुरि'' त्यपि स एव । अत्र नित्यकृत्यरत्नमालाटिप्पणी तु ''एकैकमञ्जलिं देवाः इति वचनस्य समूलत्वेऽपि गोभिलीयतर्पणपरत्वस्यैव युक्तत्वात् । अतएवाह्निकोद्धारे महामहत्तक-गणेश्वर-महामहोपाध्याया अप्यत्रैकमञ्जलिं दद्यादिति लिखितवन्तः । रघुनन्दनं भट्टाचार्यस्तूक्तवचनात्सनकश्चेति मन्त्रस्यैव द्विःपाठ इत्याह । तन्मते द्वौ द्वौ इति वीप्सा विरोधः स्पष्ट एवेति बोध्यमि''त्याह ।

एवञ्चेति । एवञ्च=देवतर्पणे एकाञ्जलेः सिद्धौ च । स्त्रीतर्पणेऽपि=मात्रादि-स्त्रीतर्पणेऽपि । एक एवाञ्जलिः = ''स्त्रियोऽप्येकैकमञ्जलिमि'' त्यग्रिम-वचनादिति भावः ।

ननु देवादितर्पणे स्त्रीणां तर्पणे च एकाञ्जलौ निर्णीते –

**त्रीँस्त्रीन् जलाञ्जलीन् दद्यादुच्चैरुच्चतरं ततः ।**
**गोशृङ्गमात्रमुद्धृत्य जलमध्ये जलं क्षिपेत् ॥**

इति यमवचनं कथं सङ्गतं स्यादित्य आह त्रींस्त्रीनिति । एवञ्चेदं यमवचनं पितृमातामहादिषट्पुरुषमात्रविषयं बोद्धयम् । पितॄन्मातामहादीनित्यादिना मूलोक्त-छन्दोग-परिशिष्ट-वाक्यैकवाक्यत्वात् ।

## [ हिन्दी टीका ]

''देवताओं की तृप्ति के लिए तीन अञ्जलियाँ दे'' इस विष्णु पुराण के तर्पण प्रकरणीय वचन के आधार पर किन्हीं का कहना है कि 'देवतर्पण में तीन अञ्जलियाँ होनी चाहिए'। किन्तु यह पक्ष इसलिए अयुक्त है कि ''पिता, पितामह, प्रपितामह, मातामह, प्रमातामह तथा वृद्धप्रमातामह इन छह पुरुषों में प्रत्येक को तीन-तीन अञ्जलियाँ दे'' इस छन्दोग परिशिष्ट के वचनानुसार इन छह पुरुषों के लिए अभ्यास रूप से तीन-तीन अञ्जलियाँ विहित हैं। तब विष्णु पुराण के वचन से कहा गया अञ्जलित्रय कल्पान्तर ही समझें।

यहाँ श्रीदत्त कृत छन्दोगाह्निक के आधार से 'केचित्' वाले ग्रन्थ का विवेचन दिखाते हुए वीरमित्रोदय का कथन है कि 'त्रिरप: प्रीणनार्थाय' इत्यादि श्लोकों के द्वारा कात्यायन आदि कल्प में भी उन उन देवादियों के तर्पण में तीन-तीन अंजलियां होंगी अर्थात् इस जलाञ्जलि में त्रिरावृत्ति रूप गुण का विधान किया जायेगा, ऐसा किन्हीं का कहना है। किन्तु मीमांसा शास्त्र के सिद्धान्त के अनुसार अन्य कल्प के विचन के आधार से अन्य कल्प में गुण का विधान (लागू) नहीं होता। अतएव इस अंजलित्रय को सभी निबन्धकारों ने अपने अपने निबन्धों में कल्पान्तर के मध्य में (रूप से) ही लिखा है, न कि अन्य कल्प में आचारण के निमित्त भी। अत: विष्णु पुराणोक्त यह अंजलित्रय तर्पण कल्पान्तर ही है। यहीं आचार चिन्तामणि के द्वारा किया गया इसका विशद विवेचन इस प्रकार है कि ''विष्णु पुराण के वचनानुसार 'ओं देवास्तृप्यन्ताम्' इस वाक्य से ऋषियों के लिए तीन अञ्जलियाँ, तथा 'ओं प्रजापतिस्तृप्यताम्' इस वाक्य से प्रजापति के लिए एक अञ्जलि का तर्पण जिन्दे पितावाले (जीवितपितृक) व्यक्ति को भी करना चाहिए।

इस प्रसङ्ग पर किन्ही का कहना है कि इसी विष्णु पुराण वचन के आधार से 'देवादि तर्पण में तीन अञ्जलियाँ हों क्योंकि कात्यायन आदि के द्वारा प्रतिपादित तर्पणों में संख्या विषयक आकांक्षा की पूर्त्ति नहीं हो पाई है। अतएव जिनके मत में भी यह कल्पान्तर माना जा सकता है उन के मत में भी देवादि तर्पण में कात्यायनादि के द्वारा प्रतिपादित तर्पण कल्प में भी तीन अञ्जलियाँ ही हों। यहाँ यह कहना संभव नहीं कि तीन तथा एक अञ्जलि में विकल्प मान लें क्योंकि स्मृतिशास्त्र का विकल्प वहीं होता है जहाँ आकांक्षा की पूर्ति हो रही हो। प्रकृत में यह स्पष्ट है कि आकांक्षा की पूर्त्ति नहीं हो रही है। इसीलिए कल्पतरुकार का भी कहना ऐसा ही है।

किन्तु किन्हीं का उक्त कथन युक्त (उचित) नहीं, क्योंकि पृथग् विधि स्थल में गुण विधि का होना संभव नहीं। (इस अति संक्षिप्त उत्तर का विश्लेपण ऊपर लिखे

गए वीर मित्रोदय वाले हिन्दी अर्थ के अनुसार ही समझें)। दूसरी बात, छन्दोग-परिशिष्ट वचन के द्वारा विशेषरूप से छह पितरों (पुरुषों) के लिए ही तीन-तीन अञ्जलियों का अभ्यास कहा गया है । अत: देव एवं ऋषि तपणों में तीन तीन अञ्जलियों वाले अभ्यास की सिद्धि नहीं की जा सकती है । पारिजात आदि निबन्धों का भी ऐसा ही विवेचन है ।''

पुन: आचारचिन्तामणि का ही कहना है कि सनक आदि मनुष्य तर्पण में भी कात्यायन कल्प में 'ओं सनकस्तृप्यताम्' इत्यादि रूप से ही वाक्य प्रयोग होगा तथा इनके प्रत्येक को एक एक ही अञ्जलि देनी चाहिए । आवृत्ति करने में कोई प्रमाण नहीं । हाँ, ''एक-एक अञ्जलि देवों को, दो दो अञ्जलियाँ सनक आदि मनुष्यों को, छह पुरुष पितरों को तीन-तीन अञ्जलियाँ तथा स्त्रियों के लिए एक एक अञ्जलि देनी चाहिए'' इस वचन प्रमाण के बल से सनक आदि के लिए दो दो अञ्जलियाँ मानना इसलिए अयुक्त होगा कि यह वचन ही कल्पतरु, कामधेनु, रत्नाकर आदि निबन्धग्रन्थों में न देखे जाने के कारण निर्मूल ही माना जायगा । किन्तु कितने लोग तो इसी वचन को प्रमाण मान कर सनक आदि प्रत्येक को दो दो अञ्जलियों का विधान करते हैं ।

यहीं नित्यकृत्य रत्नमाला टिप्पणी का कहना है कि अञ्जलि विधान करने वाले उस वचन को यदि समूल भी मान लिया जाय तो भी गोभिलीय तर्पण परक ही मानना उपयुक्त रहेगा । इसीलिए महामहत्तक एवं महामहोपाध्याय गणेश्वर ठक्कुर ने भी अपने 'आह्निकोद्धार' ग्रन्थ में यहाँ (सनकादि के लिए) एक एक अञ्जलि देने को ही लिखा है । रघुनन्दन भट्टाचार्य ने तो उक्त वचन के आधार पर पद्मपुराण प्रतिपादित ''ओं सनकश्च सनन्दश्च तृतीयश्च सनातन:'' आदि मन्त्र का ही दो बार पाठ करने को कहा है किन्तु इनके मत में 'एकैकमञ्जलिं देवा द्वौ द्वौ तु सनकादय:' इस तरह के वचन में पठित 'द्वौ द्वौ',' इन पदों द्वारा दिखाई गई वीप्सा (शब्द द्विरुक्ति) का विरोध हो जाना स्पष्ट ही है । क्योंकि अञ्जलि-प्रकरणमें इसके विशेषण रूप से कहे गए द्विवचनान्त द्विरुक्त 'द्वौ द्वौ' इन पदों का यदि 'पाठ:' का विशेषण माना जाय तो ''क्रिया विशेषणानां कर्मत्वमेकवचनान्तत्वं नपुंसकत्वञ्च'' इस व्याकरण के नियमानुसार एक 'द्वि:' का प्रयोग होना ही उचित होगा । परन्तु सनकादि के प्रत्येक या समुदित सनकादि को दो दो अञ्जलि अर्थ विवक्षित होने पर पदार्थान्वय में कहीं कोई विरोध नहीं ।

## [ मूलम् ]

उदीरताम्, अङ्गिरस:, आयन्तु न:, ऊर्जम्, पितृभ्यो, ये चेह, मधुवाता, इति तृचं जपन् प्रसिञ्चेत् ।

एवञ्च[1] उदीरतामवर इत्यादिमन्त्रनवकस्यापि[2] पित्रादि त्रिकाञ्जलिनवके सम्बन्धः, ''जपन्मन्त्रान् यथाक्रममि'' ति योगियाज्ञवल्क्यवचनात् । प्रत्येकमञ्जलीनां देयत्वान्मन्त्राणामपि प्रत्येकं प्रकाशनसामर्थ्यात् । सर्वत्र च[3] सर्वान्वये आवृत्तिर्विकल्पो वा स्यात्। एवञ्चैकैकमन्त्र-पाठानन्तरमे-कैकाञ्जलिदानम्, मन्त्रान्ते कर्मादिसन्नि-पातनियमात् । अत एव 'जपन्नि'-ति वर्तमान-सामीप्यान्नतु मन्त्रपाठकाल एव जल[4] सेकः, गोत्राद्युच्चारणाभाव-प्रसङ्गात् । नच मन्त्रात्प्राग्वाक्यमित्यपि[5] युक्तम्, त्यागार्थकत्वात् ।

## [ संस्कृत टीका ]

एवञ्चेति । एवञ्च=पित्रादिषट्पुरुषाणां प्रत्येकमञ्जलित्रयस्य सिद्धौ च । उदीरतामवर अङ्गिरस इत्यादेः मूले प्रोक्तस्य, मन्त्रनवकस्य=नवसंख्याकानां मन्त्राणाम् । पित्रादित्रिकाञ्जलिनवके=पितृपितामहप्रपितामहरूपपितृ-त्रयस्य नवसंख्याकाञ्जलिषु । सम्बन्धः=अन्वयः ।'पितॄन् ध्यायन् प्रसिञ्चेद्वै जपन्मन्त्रान् यथा क्रमम्' इति योगियाज्ञवल्क्य वचनात् । प्रत्येकम्=पितुः पितामहस्य प्रपितामहस्य च । अञ्जलीनाम्=त्रिरभ्यस्ताञ्जलित्रयस्य । देयत्वात् । मन्त्राणामपि=उदीरतामवर.इत्यादिमन्त्र नवक स्यापि । प्रत्येकम्=पितॄणामेकैकस्य । प्रकाशनसांमर्थ्यात्=बोधनक्षमत्वात् । सर्वत्र=सर्वस्मिन्नञ्जलिदाने । सर्वान्वये=सर्वेषां मन्त्राणां सम्बन्धे सति । आवृत्तिः=मन्त्र-नवकेन एकैकाञ्जलेर्दानापत्तिः । विकल्पो वा स्यात् = एषु केनापि मन्त्रेण सर्वेषामञ्जलीनां क्रमशः दानापत्ति र्वास्यात् । एवञ्च=तस्मात् 'मन्त्रान्ते कर्मादिः सन्निपात्यः' इति परिभाषाबलाच्च एकैकमन्त्रपाठानन्तरमेकैकाञ्जलिदानमिति सिद्धान्तः । अतएव ''अञ्जलित्रय-स्थले अञ्जल्यावृत्या प्रत्यञ्जलित्यागबोधक-मन्त्रावृत्तिः करणीया, 'तृप्यतामिति सेक्तव्यं नाम्ना तु प्रणवादिना' इत्यनेन सेके मन्त्रस्य करणत्वावगमात् । अतएव एकमन्त्रकरणकैकदेवताकनानाहोमेषु मन्त्रावृत्तिः सर्वसम्मते''ति वीरमित्रोदयोऽपि ।

---

पाठा० (१) अत्रच । (२) क्वचिदपिर्नास्ति । (३) क्वचिच्चं 'ति नास्ति । (४) क्वचिज्जलेति पाठो नास्ति । (५). क्वचित्प्रागेवेति पाठः ।

अतएव=मन्त्रपाठानन्तरमञ्जलिदानस्य 'मन्त्रान्ते' इत्यादि नियमबलेन सिद्धत्वादेव । जपन्निति वर्तमानसामीप्यात्मूलपठित 'जपन् प्रसिञ्चेदि' त्यत्रस्य 'जपन्' पदे लट्स्थानिक-शतृ-प्रत्ययस्य "वर्तमान सामीप्ये वर्तमानवद्वा" (पा. सू. ३।३।१३१) इत्यनुशासनबलेन वर्तमान-सामीप्ये निर्देशात् । न तु मन्त्रपाठकाल एव=नहि मन्त्रोच्चारणसमय एव । जलसेकः=जलाञ्जलिदानं तर्पणमिति यावत् । गोत्राद्युच्चारणाभावप्रसङ्गात्="नामगोत्रस्व-धाकारैस्तर्पयेदनुपूर्वशः' इति योगियाज्ञवल्क्यवचनानुसारमवश्यमुच्चार्यस्य नामगोत्रप्रभृतेरभाव प्रसक्तेः । एतेन मन्त्रपाठकालिकतर्पणप्रयोगवादिनां हरि-हरादीनां मतं कटाक्षितम् ।

नचेति । नच नाम गोत्रादिवाक्यमुच्चार्य नियतमन्त्रपाठानन्तरं जलसेकोऽस्त्विति वाच्यम् । त्यागार्थकत्वात् । त्यागः =तत्तत्तर्पणकर्तृकतर्पण-जलत्याग एव,अर्थः=प्रयोजनं फलं यस्य (नामगोत्राद्युच्चारणस्य) तस्य भावस्तत्त्वं, तस्मात्यिर्थः । अयमर्थः-अत्र तर्पण जल प्रक्षेपे करणद्वयं प्रसक्तम् । मन्त्रपाठः, नाम गोत्र सम्बन्धोच्चारणपूर्वकं पित्रादि-निर्देशक-वाक्य-प्रयोगश्च । किन्तु तत्र निश्चितानुपूर्विकाणां मन्त्राणां पाठस्य श्राद्धादिष्वप्युपयोगो भवति, परं नाम-गोत्र-सम्बन्धभेदेन तत्तत्तर्पयितृ-प्रयुज्यमानानां विविध-वाक्यानां तर्पणजलदानमात्र- प्रयोजनकत्वेन तत्पूर्वं, मन्त्रपाठात्परस्ताच्च वाक्यप्रयोगः सर्वथा समुचितः। अन्यत्रापि वह्निना जलेन च तण्डुलं पचतीत्यादौ करणयोः करणानां वा मध्ये पौवापर्यं स्थित्यनुसारमवश्यमङ्गीकर्तव्यं भवत्येवेत्यलम् ।

मूले-प्रसिञ्चेदिति । **'यद्युद्धृतं प्रसिञ्चेत्तु तिलान् सम्मिश्रयेज्जले'** ।

इति योगियाज्ञवल्वय-वचनानुसारं प्रसेकपदस्य तर्पणवाचित्वनिश्चयात्, 'मन्त्रैस्तु देयमुदकं पितृणां प्रीतिवर्धनैः' इति योगियाज्ञवल्क्यवाक्येन मन्त्राणामुदकदानकरणत्वनिश्चयाच्च 'उदीरतामवर' इत्यादि मन्त्र-नवकेन नववारं तर्पयेत्- अञ्जलिना जलं प्रक्षिपेदिति तात्पर्यार्थः ।

**[ हिन्दी टीका ]**

मृतपितृ (१) उदीरताम्, (२) आङ्गिरसः, (३) आयन्तु नः, (४) ऊर्जम्, (५) पितृभ्यः, (६) येचेह, (७,८,९,) तथा मधुवाता की तीनों ऋचाएँ पढ़ते हुए तर्पण करे, यह मूल वचन का अर्थ हुआ । (सम्पूर्ण मन्त्र कातीय तर्पण प्रयोग प्रकरण में देखें) ।

पूर्व विवेचन के अनुसार पिता आदि छहो पुरुषों में प्रत्येक को तीन-तीन अञ्जलि देना सिद्ध होने पर उक्त 'उदीरतामवर' इत्यादि नवों मन्त्रों का सम्बन्ध पिता पितामह तथा प्रपितामह को प्रदेय तीन तीन अञ्जलियों के योग में हुए नवों अञ्जलियों के साथ है। क्योंकि योगियाज्ञवल्क्य का कहना है कि क्रमानुसार मन्त्रों को पढ़ते हुए तथा पितरों का ध्यान करते हुए तर्पण करे।

पिता आदि तीनों पूर्वजों को तीन तीन अञ्जलियाँ दी जाने तथा इन अञ्जलिदानों के मन्त्रों से पिता आदि प्रत्येक को वोधित होने के कारण यदि सभी मन्त्रों का सभी अञ्जलियों के साथ अन्वय (सम्बन्ध) हो तो नवों मन्त्रों से प्रत्येक अञ्जलिदान की आपत्ति हो जायगी। अथवा जिस किसी मन्त्र से भी नवों अञ्जलिदान होने लगेंगे। अतः "मन्त्र का अन्त होने पर कर्म आदि करना चाहिए" इस नियम (परिभाषा) के अनुसार एक एक मन्त्र का पाठ होने पर एक एक अञ्जलिदान हो यह निश्चित हुआ।

ऐसा निश्चय होने तथा मूल में कहे गए "जपन्" पद में लट्लकारस्थानिकशतृ प्रत्यय को वर्तमानसामीप्य अर्थ में निर्दिष्ट होने के कारण मन्त्र पाठ काल में जल सेक (तर्पण) नहीं होगा। अपितु मन्त्रोच्चारण के समीपवर्ती उत्तरकाल में ही। इसमें अन्य कारण यह भी है कि यदि मन्त्र पाठ काल में तर्पण हो तो ओंकार (नमः), गोत्र, नाम सम्बन्ध जात्यनुसार शर्मा आदि उपाधि तथा तृप्यताम् आदि का उच्चारण नहीं हो सकेगा। यदि यह प्रश्न करें कि मन्त्रोच्चारण के पहले ही गोत्र तथा नाम आदि का उच्चारण हो जाय तो यह भी युक्तियुक्त इसलिए नहीं होगा कि गोत्र आदि का उच्चारण (तर्पण) के ही निमित्त होता है। अर्थात् मन्त्रपाठ का उपयोग विभिन्न श्राद्धकर्मों में भी होता है किन्तु उन उन तर्पण कर्त्ताओं के द्वारा नाम सम्बन्ध आदि के भेद से प्रयुक्त होनेवाले विविध तर्पण वाक्य प्रयोग तो जल त्याग (तर्पण) के ही निमित्त होता है। अतः प्रथम सामान्यतः होने वाला मन्त्र पाठ, अनन्तर नाम गोत्रादि वाला विविध वाक्य प्रयोग, इसके बाद तर्पण (जलदान) होने का समुचित क्रम होगा। अनवसर में मन्त्रपाठ के पहले वाक्य प्रयोग नहीं होगा क्योंकि बीच का यह मन्त्रपाठ तर्पणीय उन-उन व्यक्तियों के साथ तर्पण (जलदान) सम्बन्धन में साधक न बन कर बाधक ही बन सकता है।

मूल के 'प्रसिञ्चेत्' पद का तात्पर्य 'उदीरतामवर' इत्यादि नौ मन्त्रों से नौ वार तर्पण (जलाञ्जलि) दे, इस अर्थ से है।

(यहाँ प्रकृत लेख सन्दर्भ से ग्रन्थकार द्वारा विना नाम लिए ही हरिहर आदि के मतों के ऊपर किया गया कटाक्ष भी समझना चाहिए)।

## [ मूलम् ]

यदाहुः वाक्यमात्रेण तर्पणमादौ, उदीरतामित्यादि मन्त्रैश्च¹ सेकमात्रं पाठकाल एव, स्तोत्रमन्त्रवददृष्टार्थमिति, तन्न । कर्मान्तरकल्पनापत्तेः । 'मन्त्रैश्च देयमुदकमि'ति विरोधाच्च ।

## [ संस्कृत टीका ]

यदाहुरिति । यदाहुः=हरिहरादय इति शेषः । वाक्यमात्रेण=ओमद्यामुकगोत्रः पितेत्यादिवाक्येनैव । आदौ=प्रथमम् । तर्पणम्=जलाञ्जलिदानम् । मन्त्रैस्तु=उदीरतामित्यादि नवभिर्मन्त्रैस्तु । पाठकाल एव स्तोत्रमन्त्रवत्= पितृस्तुत्यात्मक उदीरतामित्यादिवैदिक स्तुत्यात्मक मन्त्रपाठवत्, अथवा 'नागेन्द्रहाराये'त्यादि लौकिकस्तोत्रपाठवद् नमः शिवायेत्यादि मन्त्रपाठवच्च । अदृष्टार्थम्=अदृष्टो ( धर्मो ) त्पादन प्रयोजनकम् । सेकमात्रम्=केवलं जलप्रक्षेपो भवेत् । तथाच पितृपितामह प्रपिता महान् वाक्यमात्रेण तर्पयित्वा उदीरतामित्यादि नवर्चो जपन्=पठन्, प्रसिञ्चेत्=स्तोत्र मात्रवददृष्टार्थकं क्रमशः प्रसेकाख्यं कर्म कुर्यात्–अञ्जलिना अपः प्रक्षिपेदित्येतन्मतसारांशः । इति तन्न । कर्मान्तर-कल्पनापत्तेः=तर्पणप्रकरणे तर्पणकर्मापेक्षयाऽन्यस्य प्रसेकाख्यकर्मणः नव्यकल्पना-प्रसङ्गात् । 'मन्त्रैश्च देयमुद कं पितृणां प्रीतिबर्धनैः' । इति योगियाज्ञवल्क्य वचनानुसार मुक्त मन्त्राणामुदकाञ्जलिदाने करणत्व निश्चयेन, प्रसेकशब्दस्य च 'यद्युद्धृतं प्रसिञ्चत् तु तिलान् सम्मिश्रयेज्जले' इत्यत्र तर्पणवाचित्वदर्शनेन च प्रसेकाख्यनूतनकर्मकल्पनायाः स्पष्टतो विरोधाच्च । एवञ्च पूर्वोक्तपित्रदित्रिकाञ्जलिनवके एव मन्त्रनवकस्यकरणत्वमिति ग्रन्थकारा-भिप्रेतम् । अत्रोक्तमतद्वयविश्लेषको वीरमित्रोदयो यथा–"एवं पितृपितामह-प्रपितामहाँस्तर्पयित्वा प्रसेकाख्यं कर्म कुर्यादित्याह, उदीरतामित्यादिना जपन् प्रसिञ्चेदित्यन्तेन । एता नवर्चो जपन् = उपांशु आम्नायस्वरेणच पठन्, प्रसिञ्चेत्–अञ्जलिना अपः प्रक्षिपेत् । न च उदीरतामित्यादेः पूर्वोक्तपित्रदितर्पणएव करणत्वमस्त्विवतिवाच्यम् । करणत्वे 'मन्त्रान्ते कर्मादिः

---

पाठा० ( १ ) स्तु ।

सन्निपात्य:' इति परिभाषया मन्त्रसमाप्तौ अञ्जलिदानापत्तेः। तथा च सति शतृप्रत्ययार्थबाध:, प्रसेक पदस्य च दानार्थत्वे लक्षणापात्तिश्च। तस्मात्प्रसेकाख्यं कर्मान्तरमेवेति हरिहरादयः।

श्रीदत्तादयस्तु-'मन्त्रैस्तु देयमुदकमि' त्यादियोगियाज्ञवल्क्यवचनेन मन्त्राणामुदंकदानकरणत्वावगते:, प्रसेकशब्दस्य च

यद्युद्धृतं प्रसिञ्चेत्तु तिलान् सम्मिश्रयेज्जले।

इत्यत्र तर्पणवाचित्वावसायात्, शतृप्रत्ययस्य च वर्तमानसामीप्येऽपि निर्देशोपपत्तेः पूर्वोक्त-पित्रादित्रिकाञ्जलिनवके मन्त्रनवकस्य करणत्वमिति आहुः। मन्त्रपाठानन्तरमेवामुकगोत्र: पितेत्यादि वाक्यप्रयोगस्ततो जलादिप्रक्षेप इति वदन्ती''ति।

### [हिन्दी टीका]

यहाँ ''जपन् प्रसिञ्चेत्'' इस मूलवचन के अर्थ करण में कात्यायनसूत्रभाष्यकर्ता हरिहर आदि का कहना है कि 'ओमद्यामुकगोत्र: पिता' इत्यादिवाक्यमात्र से पहले पिता, पितामह तथा प्रपितामह का तर्पण करे। अनन्तर 'उदीरताम्' इत्यादि नवों मन्त्रों को पढता हुआ पाठकाल में ही प्रसेक नाम का कर्म करे यथा 'उदी रताम्' आदि पितृमन्त्र, तथा 'नमस्ते रुद्र' आदि रुद्रदेव मन्त्र अर्थात् वैदिक स्तुत्यात्मक मन्त्र अथवा लौकिक स्तोत्र 'नागेन्द्रहाराय त्रिलोचनाय' आदि तथा मन्त्र 'नम: शिवाय' आदि के पाठ का फल जैसे अदृष्ट (धर्म) होता है उसी तरह अदृष्ट फल देने वाला अञ्जलि से जलप्रक्षेपमात्र होगा। किन्तु यह मत इसलिए तर्कसंगत नहीं कि तर्पण प्रकरण में तर्पणकर्म से भिन्न इस नवीन 'प्रसेक'नाम के कर्म की कल्पना हो जायगी। दूसरी बात, ''पितरों की प्रीति बढ़ाने वाले उन 'उदीरताम्' इत्यादि मन्त्रों से उदकाञ्जलि दे'' इस योगियाज्ञवल्क्य के कथनानुसार उक्त मन्त्र उदकाञ्जलिदान के करण निश्चित होते हैं तथा 'प्रसिञ्चेत्तु' पद के 'प्रसेक' शब्द का अर्थ ''यद्युद्धृतं प्रसिञ्चेत्तु'' इत्यादि योगियाज्ञवल्क्यवचनानुसार तर्पण होता है। फलत: इन मन्त्रों से तर्पण का ही विधान किया जाता है न कि सेकमात्र वाले कर्मान्तर का भी। अत: प्रसेकरूप नूतन कर्म की कल्पना करने में स्पष्ट विरोध भी हो जाता है। निष्कर्ष में उन मन्त्रों से पिता आदि तीन पुरुषों के लिए दिये जाने वाले (९) नौ अञ्जलिदान तथा मन्त्रपाठ के बाद ही 'अमुक गोत्र: पिता' इत्यादि वाक्य प्रयोग के अनन्तर जलादि प्रक्षेप का होना ग्रन्थकार सम्मत मत सिद्ध हुआ।

## [ मूलम् ]

तृप्यध्वमिति त्रिः ।

तृप्यध्वमिति त्रिरिति । पित्रादित्रयं मिलितमुद्दिश्य तृप्यध्वमित्यनेन वारत्रयमुदकन्देयमित्यर्थः । नतु पाठमात्रमेतत् । अदृष्टार्थतापत्तेः । प्रसिञ्चेदित्यन्वयाच्च ।

## [ संस्कृत टीका ]

तृप्यध्वमितीति । तृप्यध्वमित्यनेन = प्रत्यञ्जलि तृप्यध्वमित्युक्त्वेति भावः । न तु पाठमात्रमेतत् = उदकदानं विना न केवलं पाठ एव । तथा सति, अदृष्टार्थतापत्तेः, अदृष्टम्-धर्मएव अर्थः प्रयोजनं यस्य तस्य भावस्तत्ता, तस्या आपत्तेः-प्रसङ्गात् । सम्भवति दृष्टफलकत्वेऽदृष्टफलकल्पनाया अन्याय्यत्वमिति न्यायेन धर्ममात्र-फलकत्व-कल्पनस्यायुक्तत्वात् । अत्रापि प्रसिञ्चेदित्यस्यान्वयेन उदकदानस्यावश्यकत्वाच्च । त्रिः = वारत्रयम् ।

## [ हिन्दी टीका ]

पिता, पितामह तथा प्रपितामह इन तीनों को मिलित रूप में उद्देश्य कर 'तृप्यध्वम्' यह क्रियापद प्रत्येक अञ्जलि में पढ़कर तीन बार जल देना चाहिए। न कि 'तृप्यध्वम्' का केवल पाठ ही होगा । ऐसा होने पर इसका धर्म ही केवल प्रयोजन हो जायगा जो कि उचित नहीं । क्योंकि यदि दृष्टफल सम्भव हो तो अदृष्ट फल की कल्पना करना न्याय संगत नहीं । दूसरी बात, यहाँ भी 'प्रसिञ्चेत्' पद का अन्वय (सम्बन्ध) होने के कारण उदकदान आवयक ही होगा ।

## [ मूलम् ]

'नमो व' इत्युक्त्वा मातामहाचार्यगुरुशिष्यर्त्विग्-ज्ञातिबान्धवा न तर्पिता देहाद् रुधिरं पिबन्ति' ॥

मातामहादित्रिके तु[1] 'नमोव' इत्युक्त्वेत्यभिधानादेकवारमेव मन्त्रमुच्चार्य तर्पणम् । प्रसिञ्चेदिति श्रवणाज्जलसेकमात्रं तर्पण[2], न पितृनुद्दिश्य त्याग इति भ्रमो हेयः । 'नामगोत्रस्वधाकारैस्तर्प्याः[3] स्युरनुपूर्वशः' इति योगियाज्ञवल्क्येन त्यागस्यैवावगमात् । एवञ्च देवतादितर्पणेऽपि त्याग एव तुल्यतया निर्देशात् ।

---

पाठा० ( १ ) च । ( २ ) तर्पणमपि कुर्वन्ति । ( ३ ) तृप्याः । अथवा-तर्पयेद ।

[ संस्कृत टीका ]

मातामहादीति । मातामहादित्रिके तु = मातामह-प्रमातामह-वृद्धप्रमातामहत्रये तु । 'नमो वः' इत्युक्त्वा । इत्यभिधानात् = इति मूले कथनात् । एकवारमेव = सकृदेव । मन्त्रम् = 'नमो व' इत्यादिकम् । उच्चार्य = पठित्वा । तर्पणम् । विधेयमितिशेषः । 'नमो व' इत्यष्टौ यजूँषि सकृत्पठित्वा मातामहादीँ स्त्रीँ स्तर्पयेदिति भावः ।

मातामहादित्रयतर्पणेऽपि 'पितॄन् मातामहानिति प्रतिपुरुषमभ्यसेदि'ति छन्दोगपरिशिष्टवचनेन षट्पुरुषतर्पणे अभ्यासविधानादञ्जलित्रयमेव कार्य-मिति न विस्मर्तव्यम् । प्रत्यञ्जलि वाक्यप्रयोगविषये तु = "इति मन्त्रं पठित्वा ओमद्यामुकगोत्रोऽस्मन्मातामहोऽमुकशर्मा तृप्यतामिदं तिलोदकंतस्मै स्वधा नम इति मातामहायाञ्जलित्रयं दद्यात् । अत्र वाक्यं प्रत्यञ्जलीत्यन्ये । एवमेव प्रमातामह वृद्धप्रमातामहयोरपी" त्याचार चिन्तामणिः. "वस्तुतः ..... ..समन्त्रकेऽपि मातामहादितर्पणे प्रत्यञ्जलि तु न वाक्यम्, सकृदेवाञ्जलित्रय-दानसिद्धेरावृत्तौ बीजाभावादि"ति. ..............."एतत्सर्वमभिसन्धाय वर्धमानोपाध्यायाः प्रत्यञ्जलि त्यागबोधकवाक्यमाहुरिती"ति च द्वैतपरिशिष्टमपि उभय-पक्ष-प्रतिपादकतया द्रष्टव्यं ।

प्रसिञ्चेदितीति । मूले प्रसिञ्चेदिति श्रवणात् । जल-सेक-मात्रम् = अपः प्रक्षेपमात्ररूपं तर्पणं भवतु । पितृनुद्दिश्य = पितृध्यानपूर्वकं नामगोत्रादिकमुच्चार्य । त्यागः = अंजलिना जलत्यागो न विधेयः । इति । भ्रमः = विपरीतज्ञानम् । हेयः = त्याज्यः । "नामगोत्रे"त्यादि योगियाज्ञवल्क्यावचने 'तर्प्या' इति पदोपादानेन अञ्जलिना जलत्यागस्यैव बोधनात् । एवञ्च कात्यायनो( मूलो) क्त प्रसिञ्चेदिति पदेन पितृनुद्दिश्य अञ्जलिनाजलत्यागस्यैव बोधः । नह्येषा त्यागस्थितिः पितृतर्पण एव किन्तु देवतादितर्पणेऽपि देवाद्युद्देश्येन वामपाण्यन्वारब्धेन दक्षिणपाणिनाञ्जलिनाऽपि वा जलत्याग एव बोद्धव्यः । तुल्यतया =

कात्यायनवचने 'तर्पयेत्' 'प्रसिञ्चेदि' ति पदयोः समानार्थकतया । निर्देशात् = उल्लेखात् । योगियाज्ञवल्क्येनापि–

ततः सन्तर्पयेद्देवानृषीन् मर्त्यान् पितॄँस्तथा ।

तथा,

तृप्यतामिति सेक्तव्यं नाम्ना तु प्रणवादिना ।

इत्यादिना पित्राद्युद्देश्यक-जलत्यागार्थक 'तृप्' (प्रीणने) धातु-समानार्थकस्य सिच क्षरणे) धातोः निर्देशो विहितोऽस्ति । अतएव नादृष्टार्थतापत्तिरपि।

अत्र ''नामग्रहणे विशेषमाह बौधायनः –

शर्मान्तं ब्राह्मणस्योक्तं वर्मान्तं क्षत्रियस्य च ।
गुप्तान्तं चैव वैश्यस्य दासान्तं शूद्रजन्मनः ॥

यमश्च–

शर्मा देवश्च विप्रस्य वर्मा त्राता च भूभुजः ।
भूतिर्गुप्तश्च वैश्यस्य दासः शूद्रस्य नामतः ॥

गोभिलः--

गोत्रं स्वरान्तं सर्वत्र गोत्रस्याक्षय्यकर्मणि ।
गोत्रस्तु तर्पणे प्रोक्तः कर्त्ता एवं न मुह्यति ॥
सर्वत्रैव पितः प्रोक्तं पिता तर्पण-कर्मणि ।
पितुरक्षय्यकालेतु अक्षयं तृप्तिमिच्छता ॥
शर्मन्नर्घ्यादिके प्रोक्तं शर्मा तर्पण-कर्मणि ।
शर्माणोऽक्षय्यकाले तु पितृणां दत्तमक्षयम् ॥

नामाज्ञाने पिण्डपितृ-यज्ञप्रकरणे आश्वलायनः –

नामान्यविद्वाँस्तातपितामहप्रपितामहेति ।

ततेति तातवाचकम् । पित्रादीनां नामाज्ञाने तातादयः शब्दाः प्रयोक्तव्या

इत्यर्थः। एवं गोत्राज्ञाने गोत्रपदमेव प्रयोक्तव्यमित्याहुः। केचित्तु गोत्राज्ञाने यथागोत्रेति, नामाज्ञाने यथानामेति, उभयाज्ञाने यथा गोत्रनामेति प्रयोगं कुर्वन्ति। विधवामधिकृत्य काशीखण्डे-

प्रत्यहं तर्पणं कार्यं भर्तुः कुशतिलोदकैः।
तत्पितुस्तत्पितुश्चापि नामगोत्रादिपूर्वकम् ॥

इति वीरमित्रोदयः।

मूले आचार्येति। ''षट्पुरुषतर्पणानन्तरं तेषांस्त्रियः तर्प्याः'' इत्यग्रे ग्रन्थकृता वक्ष्यते। तत आचार्यादीँस्तर्पयेत्। आचार्यः = उपनीय साङ्गैकवेदाध्यापकः। गुरुः = अल्पस्य बहुनो वा श्रुतस्योपदेष्टा। ज्ञातिः = पितृव्यादिः वंश्यः। बान्धवः = मातुलादि-मातृष्वस्रीय-पितृष्वस्रीयादिः। तानिति भावः।

तर्पणजलदानाभावे पितृस्थितिमाह अतर्पिता इत्यादिना। अतर्पिताः= अदत्ततर्पणजलाः जलार्थिनस्तदीयपितरः। देहात् = शरीरात्। रुधिरम् = शोणितम्। पिबन्ति =पिपासाशान्त्यर्थमितिभावः।

अत्र योगियाज्ञवल्क्योऽपि यथा-

नास्तिक्यभावाद्यश्चापि न तर्पयति वै सुतः।
पिबन्ति देहनिस्रावं पितरोऽस्य जलार्थिनः॥ इति।

[ हिन्दी टीका ]

मातामह, प्रमातामह तथा वृद्ध प्रमातामह के उद्देश्य से एक बार ही 'नमो वः' इत्यादि आठों ऋचाओं को पढ़कर क्रमशः तर्पण करना चाहिए। इस तरह अपने छह पूर्वजों के तर्पण हो जाने के बाद उनकी स्त्रियों (माता, पितामही, प्रतितामही, मातामही प्रमातामही तथा वृद्धप्रमातामही) का तर्पण करे। अनन्तर आचार्य (उपनयन करा कर अङ्गसहित किसी एक वेद का अध्यापक), गुरु (कम या बहुत शास्त्र का उपदेशक), शिष्य, ऋत्विक् (यज्ञ कराने वाले), चाचा आदि ज्ञाति (बन्धु) तथा मामा आदि बान्धव का तर्पण करे।

जलार्थी पितरों को यदि तर्पण जल न दिया जाय तो वे प्यासे पितर तर्पणकर्त्ता की देह का अन्ततः शोणित (खून) पीते हैं और उसीसे अपनी प्यास बुझाते हैं। (यहाँ तक मूल (कात्यायन) वचन का अर्थ हुआ।)

इस प्रसंग पर योगियाज्ञवल्क्य का तो कहना है कि जो पुत्र पाखण्ड वश भी अपने पितरों को तर्पण जल नहीं देता है तो जल के लिए लालायित उसके पितर तर्पणकर्त्ता की देह से निकले मूत्र (जल) का ही पान कर लेते हैं।

यहाँ मूल में 'प्रसिञ्चेत्' पद देख कर किन्ही का कहना है कि तर्पण तो केवल जलसेक (जल छिड़क देना) ही है, न कि नाम गोत्र आदि का उच्चारण कर अञ्जलि से जल त्याग है। किन्तु ऐसा कहना भ्रमपूर्ण होगा जो त्याज्य है। क्योंकि "नाम गोत्र तथा स्वधा शब्द का उच्चारण कर पिता आदि का क्रम से तर्पण करे" इस योगियाज्ञवल्क्य के कथनानुसार नाम गोत्र आदि के उच्चारणपूर्वक जलत्याग ही तर्पण कहा जाता है। यह स्थिति केवल पितृतर्पण में ही नहीं अपितु देवादितर्पण स्थल में भी 'देवादि के उद्देश्य से बायें हाथ से संलग्न दाहिने हाथ या अञ्जलि के द्वारा किया गया जल त्याग ही' तर्पण कहा जाता है। क्योंकि प्रकृत कात्यायनवचन में देवादितर्पण के लिए 'तर्पयेत्' पद प्रयोग के जैसे ही इसके समानार्थक 'प्रसिञ्चेत्' पद का पितृतर्पण स्थल के लिए उल्लेख किया गया है। इसीतरह योगियाज्ञवल्क्य वचनों में भी 'तृप्' धातु के समान अर्थ में पितृतर्पण के लिए किया गया 'सिच्' धातु का प्रयोग ऊपर से देखा जा सकता है। इस तरह जल छिड़क देने मात्र को तर्पण मान लेने की अपेक्षा देवपित्रादि के उद्देश्य से किये गये जलत्याग को तर्पण मानने से ग्रन्थकार द्वारा पूर्व में दिखाई गई अदृष्टर्थतापत्ति रूप दोषापत्ति भी नहीं देखी जा सकेगी।

यहाँ ऊपर से ज्ञातव्य है कि कात्यायनतर्पण कल्प में पिता आदि तीन पुरुषों के तर्पर्ण में मन्त्रों के व्यवधान हो जाने से एक एक पुरुष के तर्पण निमित्त जल त्याग बोधक तीन तीन वाक्यों की आवृत्ति हो जाना स्वाभाविक है किन्तु मातामह आदि तीन पुरुषों के तर्पण में तो एक एक ही बार मन्त्र पढ़े जाने के कारण वाक्यों की आवृत्ति हो या नहीं ? इसी तरह पद्मपुराण या विष्णु पुराण के अनुसार होने वाले छहों पुरुषों के तर्पणों में वाक्यों की आवृत्ति हो या नहीं ? इसके समाधान निमित्त आचारचिन्तामणि में निर्दिष्ट कात्यायनकल्प के मातामहतर्पण के लिए लेख—"ओमद्यामुकगोत्रोऽस्मन्माता-महोऽमुकशर्मा तृप्यतामिदं तिलोदकं तस्मै स्वधानमः' इति मातामहायाञ्जलित्रयं दद्यात्। अत्र वाक्यं प्रत्यञ्जलीत्यन्ये" – के अनुसार आचारचिन्तामणिकार के मत से एक वाक्य द्वारा ही तीन अञ्जलियाँ देना सिद्ध होती है तो अन्यनिबन्धकारों के अनुसार प्रत्येक अञ्जलि के लिए अगल-अलग वाक्य होना सिद्ध होता है।

इसी तरह आचारचिन्तामणि के ही अन्यस्थलीय विवेचन के अनुसार किन्हीं 'एक' के मत से एक वाक्य के द्वारा अञ्जलित्रयदान दिखाकर प्रदीपकार के मत से

प्रत्येक अञ्जलि के लिए प्रत्येक वाक्य की आवश्यकता पर दिखाया गया जोर दर्शाया गया है । अन्त में पुनः वस्तुतः के उपक्रमवाले लेख से प्रत्येक अंञ्जलि के लिए त्यागबोधक प्रत्येकवाक्य प्रयोग का खण्डन कर दिया गया है । यहाँ का संस्कृत मूल लेख विस्तार के साथ मूल ग्रन्थ से ही अवलोकन किया जा सकता है ।

इसी तरह द्वैत (सुश्लिष्ट) परिशिष्ट ग्रन्थ के अनुसार वस्तुतः के उपक्रम वाले लेख से एक ही त्यागबोधक वाक्य से तीनो अञ्जलिदान दिखाये गए हैं तो वर्धमानोपाध्याय के विवेचनानुसार प्रत्येक अञ्जलि के लिए प्रत्येक त्यागवाक्य की आवश्यकता दिखाई गई है । नित्यकृत्यार्णव में अन्य निबन्धकारों के भी विस्तृत विवेचन देखे जा सकते हैं । इस तरह विभिन्न निबन्धकारों के उभयपक्षीय विवेचन से दोनों ही पक्ष शास्त्र सम्मत माने जायेंगे । तर्पणकर्त्ता आचारानुसार विचार तथा आचारण रखें । वीरमित्रोदय में उद्धृत विविधवचनानुसार यहाँ अपेक्षित विविध विषय ज्ञातव्य हैं । यथा–बौधायन का कथन है–ब्राह्मण, क्षत्रिय, वैश्य एवं शूद्र के नाम क्रमशः शर्मान्त, वर्मान्त, गुप्तान्त, तथा दासान्त होने चाहिए । यमवचनानुसार ब्राह्मण के नाम के अन्त में शर्मा या देव शब्द, क्षत्रिय के नाम के आगे वर्मा या त्राता शब्द, वैश्य के नाम के आगे भूति या गुप्त शब्द तो शूद्र के नाम के आगे दास शब्द का प्रयोग होना चाहिए ।

गोभिलवचन के अनुसार–पितर के निमित्त अर्घ्यदान आदि के समय सम्बोधनान्त गोत्र पद, पितः पद, तथा शर्मन् पंद, तर्पण के समय प्रथमान्त गोत्रः पद, पिता पद, तथा शर्मा पद, और अक्षय्योदक दान के समय षृष्ठ्यन्त गोत्रस्य पद, पितुः पद तथा शर्मणः पद का प्रयोग हो । (इसी क्रम से क्षत्रिय आदि के लिए वर्मा, गुप्त आदि पदस्थल में तत्तद्विभक्त्यन्त प्रयोग का ऊह कर लेना चाहिए । इस तरह करने से पितरों के निमित्त दी गई वस्तुएँ अक्षय होकर मिलती हैं और कर्ता भी दोषभागी नहीं बनता है ।'' (क्यों कि ''पितरो वाक्यमिच्छन्ति भावमिच्छन्ति देवताः'' अर्थात्–पितृगण विशेषतः शुद्ध वाक्य की कामना करता है तो देवगण भाव की,–वाला वचन समाज में अतीव प्रचलित है ही.) ।

नाम का ज्ञान न होने पर–पिण्डपितृयज्ञप्रकरण में आश्वलायन का कथन है कि– ''नाम ज्ञात न होने पर तत, पितामह, तथा प्रपितामह पद का प्रयोग कर लेना चाहिए ।'' यहाँ 'तत' शब्द तात अर्थ का बोधक है ।

इसी तरह यदि गोत्र का ज्ञान न हो तो केवल गोत्र पद का प्रयोग कर लें । अथवा गोत्र का ज्ञान न होने पर 'यथागोत्र' शब्द का, नाम का ज्ञान न होने पर 'यथानाम' शब्द

का, तथा दोनों का ज्ञान न होने पर 'यथागोत्रनाम' या 'यथानामगोत्र' शब्द का प्रयोग कर लेना चाहिए।

विधवा के लिए काशीखण्ड में कहा गया है कि विधवा नारी नाम गोत्र आदि का उच्चारण कर अपने पति, इनके पिता (श्वशुर) तथा इनके भी पिता परमश्वशुर को कुशतिल सहित जल से प्रतिदिन तर्पण करे।

## [ मूलम् ]

कात्यायनानुक्तमपि देवतर्पण-मनुष्यतर्पणयोर्मध्ये ऋष्यन्तरोक्तं मरीच्यादि-तर्पण[1] कुर्वन्ति। युक्तञ्चैतत्। 'देवर्षिपितृर्पणमि[2] त्यस्य पूर्व[3] मुक्तत्वात्। अतएव योगियाज्ञवल्क्य-कल्पात् स्मृतिमहार्णव-लिखितमपि[4] मरीच्यादितर्पणम् पद्मपुराणाद्धरिहरेणोक्तम्। कामधेनौ तु[5] योगियाज्ञवल्क्यवचनमेव लिखितम्। तथा, षट्पुरुष-तर्पणानन्तरं तेषां[6] स्त्रियस्तर्प्याः[7] त्रीन् पितृतस्त्रीन् मातृतः पत्न्यश्च पितृतर्पणमि''ति गोभिलवचनात्।[8] बौधायनेन पितृतर्पणानन्तरं[9] मातृतर्पणं ततो मातामहादि[10] तर्पणम्। ततो मातामह्यादितर्पणमुक्तम्।

## [ संस्कृत टीका ]

कात्यायनेति। कात्यायनानुक्तमपि = कात्यायनेनाकाथितमपि। ऋष्यन्तरोक्तं मरीच्यादितर्पणम्=

तर्पणन्तु शुचिः कुर्यात्प्रत्यहं स्नातको द्विजः।
देवेभ्य श्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमम्॥

इत्यादिना शातातपादिभिः कथितम्,

मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम्।
प्रचेतसं वसिष्ठञ्च भृगुं नारदमेव च॥

पाठा० (१) क्वचिदपिरस्ति। (२) निति। (३) प्रागु। (४) तम्। (५) क्वचित् 'तुः' नास्ति। (६) ञ्चैषां। (७) तर्पणीयाः। (८) दर्शनात्। (९) मात्रादितर्पणं पितृतर्पणानन्तरं विहितम्। (१०) क्वचिद् आदि पदन्नास्ति।

इति पद्मपुराणादिना प्रतिपादितञ्च मरीच्यादेस्तर्पणम् । देवतर्पण-मनुष्य-तर्पणयोर्मध्ये । कुर्वन्ति = कात्यायनोक्त-तर्पणमाचरन्तो वाजसनेयिनश्शिष्टा इति शेषः । एतत् = मरीच्यदितर्पणकरणम् । युक्तञ्च = युक्तियुक्तमेव । पूर्वमुक्तत्वात् = शुचिवस्त्रधरः स्नातो शिशष्टा इति शेषः । एतत् = मरीच्यादितर्पण-करणम् । युंक्तञ्च = युक्तियुक्तमेव । पूर्वमुक्तत्वात् =

**शुचिवस्त्रधरः स्नातो देवर्षिपितृतर्पणम् ।**

**तेषामेव हि तीर्थेन कुर्वीत सुसमाहित ॥**

इति विष्णुपुराणवचनस्य तर्पणप्रकरणे आदिभाग एव मयोल्लिखितत्वात् । अतएव = मरीच्यादि ऋषितर्पणस्य युक्तियुक्तत्वादेव । योगियाज्ञवल्क्यकल्पात् = "ततः सन्तर्पयेद्देवानृषीन्मर्त्यान् पितॄँस्तथा" इत्यादि योगियाज्ञवल्क्य-वचनानुसारमेतत्कल्पात् । स्मृतिमहार्णवलिखितमपि = स्मृतिमहार्णवग्रन्थ-प्रतिपादितमपि । मरीच्यादितर्पणम् । पद्मपुराणात् = "देवान् ब्रह्मऋषीन् सर्वाँस्तर्पयेदक्षतोदकैः" इत्यादि पद्मपुराणवचनानुसारमेतत्कल्पात् । हरिहरेणोक्तम् । तु = किन्तु । कामधेनौ = गोपालप्रणीतेऽस्मिन्निबन्धग्रन्थे । योगियाज्ञवल्क्यवचनमेव लिखितम्। एतेन निबन्धलेखपरम्परानुसारं हरिहरेणापि वाजसनेयिवृद्धयोगियाज्ञवल्क्यवचनमुल्लिख्य मरीच्यादितर्पणं वक्तव्य-मासीदित्यरुचिरत्र द्रष्टव्या।

तथा, षट्पुरुषेति । एवञ्च कात्यायनानुक्तमपि मात्रादिस्त्रीतर्पणं "त्रीन् पितृत स्त्रीन्मातृतस्तत्पत्न्यश्च पितृतर्पणमि" ति गोभिलसूत्रात् षट् पुरुषतर्पणानन्तरं देव्यन्तनामादिकमुच्चार्य कर्तव्यमेव । अत्र "पितृतः = पितृपक्षे । मातृतः = मातृपक्षे । स्त्रीणाञ्च तर्पणे नावृत्तिः प्रमाणाभावात् । "त्रीनित्यस्य पुरुषानित्यर्थे तर्पयेदितिशेषः" इति नित्यकृत्यरत्नमाला टि० ।

**यत्राम्नातं स्वशाखायां पारक्यमविरोधि च ।**

**विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥**

इति च्छन्दोगपरिशिष्टे (कर्मप्रदीपे) कात्यायनेनैवाभिधानात् वाजसनेयिकल्पेऽपि सामगगुरोः गोभिलस्य वचनानुसारमुक्त-तर्पण-क्रमस्य मिथिलायामादृतत्वात्। आचारचिन्तामण्यादिनाऽ प्युक्त गोभिलवचनस्यैवोल्लेखाच्च।

बौधायनेनेति। बौधायनेन स्वधर्मसूत्रग्रन्थे द्वितीयप्रश्ने दशमे खण्डे तथोक्तमिति भावः।

[हिन्दी टीका]

कात्यायन के द्वारा न भी कहा गया किन्तु अन्य ऋषि शातातप आदि के द्वारा कहा गया मरीच्यादि ऋषितर्पण भी देवतर्पण और सनकादिमनुष्य तर्पण के बीच में कात्यायनोक्त पद्धति से तर्पण करने वाले द्विजगण करते हैं। यह मरीच्यादितर्पण करना युक्तियुक्त भी है क्योंकि इसके प्रमाण स्वरूप विष्णु पुराण का ''देवर्षि पितृतर्पणम्'' इत्यादि वचन है, जो तर्पण प्रकरण के आदि में कह दिया गया है।

अतएव 'जपके बाद देवता, ऋषि, मनुष्य तथा पितरों का अच्छी तरह तर्पण करें' इस योगियाज्ञवल्क्य के कथनानुसार इसी योगियाज्ञवल्क्य से स्मृतिमहार्णवनामक ग्रन्थ में मरीच्यादि तर्पण लिखा गया है। किन्तु कात्यायनसूत्र भाष्यकर्त्ता एवं पद्धतिकर्त्ता हरिहर ने तो पद्मपुराण के वचन के आधार से मरीच्यादि तर्पण कहा है। इन दोनों वचनों में प्रमाण रूप से योगियाज्ञवल्क्यवचन को ही निबन्धकार गोपालने कामधेनु नामक अपने धर्मशस्त्रीय निबन्ध ग्रन्थ में लिखा है।

(निबन्ध ग्रन्थ ककनानुसार हरिहर के द्वारा वाजसनेयि गुरु (वृद्ध) योगियाज्ञवल्क्य के वचन का उल्लेख कर मरीच्यादितर्पण कहा जाना चाहिए था। यही अरुचि यहाँ समझें)

इसी तरह कात्यायन के द्वारा न भी कहा गया उभयपक्षीय माता आदि छह स्त्रीजनों का तर्पण पुरुष पक्षीय पिता आदि छह पूर्वजों के तर्पण के बाद करना चाहिए। जैसा कि गोभिल ने कहा है ''पितृपक्षीय तीन पुरुष (यथा-पिता, पितामह तथा प्रपितामह) एवं मातृपक्षीय तीन पुरुष (यथा, मातामह, प्रमातामह, और वृद्ध प्रमातामह) के तर्पण के बाद उनकी स्त्रियों (यथा माता, पितामही, प्रपितामही, मातामही, प्रमातामही तथा वृद्धप्रमातामही) का तर्पण करना चाहिए। इस तरह पितृतर्पण होता है। (यही क्रम मैथिल समाज में प्रचलित है)।

ऊपर से यह भी समझ लेना चाहिए कि स्त्रियों के तर्पण में तथा उक्त छः पुरुषों (पूर्वजों) से अन्य बन्धु बान्धवों के तर्पण में भी अञ्जलि की आवृत्ति नहीं होगी। अर्थात् एक ही अञ्जलि का तथा अयुग् (अयुग्मवर्ण का) दान्त (यथा यशोदा धनदा आदि) स्त्रीणां देव्यन्तं (नाम) जिस स्त्री नाम के अन्त में देवी पद जोड दिया गया। इति गोभिवचनात् (इस गोभिलवचननुसार) स्त्रियों के नाम के आगे देवी पद जोड़कर तर्पण होगा।

बौधायनने तो अपने 'धर्मसूत्र ग्रन्थ के द्वितीय प्रश्न के दशवें खण्ड में पिता पितामह तथा प्रपितामह के तर्पण के बाद माता पितामही तथा प्रपितामही का तर्पण और मातामह प्रमातामह तथा वृद्धप्रमातामह के तर्पण के बाद मातामही, प्रमातामही तथा वृद्धप्रमातामही के तर्पण करने को कहा है।

## [ मूलम् ]

शङ्खः–

**स्नातः कृतजपो[१]ऽन्तर्जानुरुदङ्मुखश्च[२] दिव्येन तीर्थेन देवानुदकेन तर्पयेत्।**

तथा,

**अथ कृतापसव्यो दक्षिणामुखोऽन्तर्जानुः पित्र्येण तीर्थेन पितृभ्यो[३] यथाश्रद्धं यथा प्रकाशमुदकं दद्यात्। पित्रे, पितामहाय, प्रपितमहाय, मात्रे, पितामह्यै, प्रपितामह्यै मातामहाय, प्रमातामहाय, वृद्धप्रमातामहाय, मातामह्यै, प्रमातामह्यै, वृद्धप्रमातामह्यै च आसप्तमात् पुरुषात् पितृपक्षे यावतां नाम जानीयात् पितृपक्षाणामुदंकतर्पणं कृत्वा गुरूणां कुर्यात्[४]। मातृपक्षाणां कृत्वा सम्बन्धि-बान्धवानां कुर्यात्। तेषां कृत्वा सुहृदां कुर्यात्।**

## [ संस्कृत टीका ]

स्नात इति। स्नातः=कृतस्नानः। कृतजपः=सम्पादितगायत्रीजपः। अन्तर्जनुः=जानुमध्यकृतकरः-जानुनोरन्तः कृत हस्त इति यावत्। उदङ्मुखश्च = उत्तरदिगभिमुखः चकारात् प्राङ्मुखो वा। दिव्येन तीर्थेन देवतीर्थेन। देवान्= वक्ष्यमाण देवान्। उदकेन तर्पयेत्।

---

पाठा० (१) जप्यः। (२) मुखो। (३) पितृन्। (४) गुरूणांकृत्वा मातृपक्षाणां कुर्यादित्यधिकः पाठः।

अथ=अनन्तरम् । कृतापसंव्यः = प्राचीनावीती सन् । दक्षिणामुखः=दक्षिण-दिगभिमुखः । अन्तर्जानुः । पित्र्येण तीर्थेन=तर्जन्यङ्गुष्ठयोर्मध्यदेशेन । पितृभ्यः=वक्ष्यमाणपितृभ्यः.। यथाश्रद्धम्=ज्ञायमानेष्वपि येषु श्रद्धा भवति यथाप्रकाशम् = यथानामज्ञानम् । उदकं दद्यात् = तर्पयेत् ।

आसप्तमादिति । आसप्तमात् पुरुषात्=सप्तम-पुरुषपर्यन्तम् । पितृपक्षे=स्वपितृ-क्रमे । यावतां नाम जानीयात् (तावताम्) । पितृपक्षाणाम् = पितृपक्षीयाणाम् । उदकतर्पणं कृत्वा । गुरूणाम् = आचार्याणां गुरूणाञ्च । कुर्यात्=तर्पणं विदध्यात् । मातृपक्षाणाम् = मातृपक्षीयाणां मातामहादीनाम् । कृत्वा । सम्बन्धि-बान्धवानाम् = सम्बन्धिनां पितृव्यादिनां मातुलादीनाञ्च बान्ध- वानाम् । सुहृदाम्= मित्राणाम् । कुर्यात् = तर्पणमिति शेषः ।

## [ हिन्दी टीका ]

स्नान तथा गायत्री जप कर लेने के बाद दोनों घुटनों के बीच दोनों हाथ, (आखिर दाहिना हाथ भी रखकर) उत्तर या पूर्व दिशा की ओर हो देवतीर्थ से आगे कहे जाने वाले देवताओं का तर्पण करे ।

अनन्तर अपसव्य एवं दक्षिण दिशा की ओर मुंहकर के तथा दोनों घुटनों के बीच दोनों हाथ या अन्ततः दाहिना हाथ रखकर पितृतीर्थ से अपनेपितरों का, एवं जान पहचान के व्यक्तियों में जिनके ऊपर श्रद्धा व जिनके नाम ज्ञात हों उन्हें जलाञ्जलि दें फलतः पिता, पितामह, प्रपितामह, वृद्धप्रमातामही का तर्पण कर अपने पितृ क्रम में ऊपर के सात पुरुष तक पितृपक्ष में जितने का नाम जानते हों उन्हें, चाचा आदि सम्बन्धी, मामा आदि बान्धंव तथा मित्रो के क्रमशः तर्पण करे ।

## [ मूलम् ]

मनुशातातपयोगियाज्ञवल्क्याः-

**यदेष[1] तर्पयत्यद्भिः पितृन् स्नात्वा द्विजोत्तमः ।**
**तेनैव सर्वमाप्नोति पितृयज्ञक्रियाफलम् ॥**

---

पाठा० ( १ ) (अ) यदेव । (आ) यएवम् ।

## [ संस्कृत टीका ]

यदेषेति । 'यत्र स्नानानन्तरमुदकतर्पणं द्विजः करोति तेनैव सर्वं नित्यश्राद्धफलं प्राप्नोति । द्विजोत्तमपदं द्विजपरम् । पाञ्चयाज्ञिकश्राद्धासम्भवे विधिरयमिति मन्वर्थमुक्तवाली । एवमेवशङ्खोऽपि यथा–

स्नातः सन्तर्पणं कृत्वा पितृणान्तु तिलाम्भसा ।
पितृयज्ञमवाप्रोति प्रीणाति च तथा पितॄन् ॥ इति ।

## [ हिन्दी टीका ]

द्विज स्नान के बाद पितरों के उद्देश्यों से जो जल तर्पण करता है उसी से वह पितृयज्ञकर्म (नित्यश्राद्ध) का अशेषफल प्राप्त करता है । (यह विधि पञ्चयज्ञ के अन्तर्गत नित्यश्राद्ध न हो सकने की स्थिति में ज्ञातव्य है, ऐसी मन्वर्थ मुक्तावली की व्याख्या है ।)

इसी तरह शङ्ख का भी कहना है कि स्नान के बाद तिल मिश्रित जल से जो पितरों को तृप्त कर देता है, वह पितृयज्ञ का फल प्राप्त कर लेता है ।

❁ इति तर्पणम् ❁

# पद्मपुराणीय-तर्पण-विधिः

[ मूलम् ]

अथ पद्मपुराणीयतर्पण-विधिः । पद्मपुराणे-

ब्रह्माणं तर्पयेत्पूर्वं विष्णुं रुद्रं प्रजापतिम् ।
देवा यक्षास्तथा नागा गन्धर्वाप्सरसोऽसुराः ॥
क्रूराः सर्पाः सुपर्णाश्च तरवो जृम्भकाः[१] खगाः ।
विद्याधरा जलाधारास्तथैवाकाशगामिनः ॥
निराधाराश्च ये जीवाः पापेधर्मे रताश्च ये ।
तेषामाप्यायनायैतद्दीयते सलिलं मया ॥
कृतोपवीती देवेभ्यो निवीती तु[२] भवेत्ततः[३] ॥
मनुष्याँस्तर्पयेद्भक्त्या ऋषिपुत्रानृषींस्ततः[४] ॥
सनकश्च सनन्दश्चतृतीयश्च सनातनः ।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा ॥
सर्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा ।

अत्र हरिहरः-देवादीनाम् ॐ देवास्तृप्यन्ताम् इत्यादिवाक्येन तर्पणम् । तेषामाप्यायनायैतदिति तद्ध्यानमात्र[५] मित्याह । तदयुक्तम् । श्रुतवाक्यं विहाय वाक्यान्तर-कल्पनाया ध्यान-कल्पनायश्चायुक्तत्वात् । तस्माद् यत्र ब्रह्माणमित्यादौ[६] वाक्यं न श्रुतन्तत्रैव योगियाज्ञवल्क्याद्युक्तवाक्यपरिगृहः । 'निवीती[८] भवेत्तत' इति श्रवणा[९] दूषितर्पणे निवीतित्वभ्रमो हेयः । निवीतस्य[१०] मनुष्यधर्मतया तत्र तत्राभिधानात् ।

---

पाठा० ( १ ) जम्भकाः । ( २ ) च । ( ३ ) था ( ४ ) तथा । ( ५ ) क्वचित्तवद्' पदंनास्ति । ( ६ ) ब्रह्माणिमित्यादि यत्र । ( ७ ) दुक्त । ( ८ ) च । ( ९ ) वचनात् । ( १० ) निवीतित्वस्य ।

केचित्तु ''अथ निवीती ऋषींस्तर्पयामी''ति बौधायनदर्शनान्मरीच्यादि-तर्पणे निवीतित्वमेबाहुः ।

[ संस्कृत टीका ]

मूले ब्रह्माणमिति । अत्र तर्पण-प्रकारः वक्ष्यमाण-पद्मपुराणीय-तर्पण-प्रयोग-प्रकरणतोऽवसेयः ।

अत्र हरिहर इति । अत्र ब्रह्मादीनां चतुर्णां तर्पणं ॐ ब्रह्मा तृप्यतामित्यादि वाक्यैः विधाय तद्वदेव प्रथमश्लोकस्य द्वितीयार्धादितोऽपि 'ओं देवास्तृप्यन्ताम्' ओं यक्षास्तृप्यन्तामित्यादिवाक्यैः धर्मरतपर्यन्तानां तर्पणं कार्यम् । तेषामाप्याय नायैतदिति तु=''तेषामाप्यायनायैतद्दीयते सलिलं मया'' इति वचनन्तु । तद्ध्यान मात्रम्=देवयक्षादि ध्यान बोधकमेव, नत्वनेनापि वाक्येन तर्पणमिति हरिहरः व्याख्यातवान् । परं, तदयुक्तम्=तन्न युक्तम् । श्रुतवाक्यम्='देवा यक्षा' इत्यादि वचनरूपं वाक्यम् । विहाय=परित्यज्य । वाक्यान्तरकल्पनायाः=स्वेच्छयैव ओं देवास्तृप्यन्तामित्यादि तर्पणवाक्यकल्पनायाः । ध्यानकल्पनायाश्च = तेषामेव देवादीनां ध्यानकल्पनायाश्च । अयुक्तत्वात्=अनुपयुक्तत्वात् । श्रुतवाक्यत्यागे हेत्वभावात् । ''पापे धर्मे रताश्च ये'' इत्यत्र 'ये' इत्यस्यानन्वयापत्तेश्च ।

ननु ''तृप्यंतामिति सेक्तव्यं नाम्ना तु प्रणवादिना'' इति योगियाज्ञवल्क्य-वचनादुपर्युक्तवाक्यकल्पनं युक्तमे वेत्यत आह 'तस्माद्यत्रे'त्यादि । तस्मात् = स्वेच्छया वाक्यान्तरकल्पनस्यायुक्तत्वात् । यत्र=आदिमश्लोकस्य पूर्वार्द्धे । ब्रह्माणमित्यादौ=''ब्रह्माणं तर्पयेत्पूर्वं विष्णुं रुद्रं प्रजापतिमि'' त्यादौ । वाक्यम् = तर्पणोपयोगिवाक्यम् । न श्रुतम्=न कथितम् । तत्रैव=तादृश स्थल एव । उक्त-योगियाज्ञवल्क्य-वाक्यात्

**अन्वारब्धेन सव्येन पाणिना दक्षिणेन च ।**
**तृप्यतामिति सेक्तव्यं नाम्ना तु प्रणवादिना ॥**

इत्युक्तयोगियाज्ञवल्क्यवचनात्। युक्तवाक्यपरिग्रहः=ॐ ब्रह्मा तृप्यता मित्यादि-क्रमेण तर्पणोपयोगिवाक्यं करणीयमिति भावः। देवादीनान्तु "देवा यक्षा इत्यादिना "मये" त्यन्तेन सार्ध श्लोक द्वयात्मकेन मन्त्रेणैक एवाञ्जलि-र्विधेयः। मूले कृतोपवीतीति। कृतम्=धारितम्, उपवीतम् यज्ञोपवीतम् -"उपवीतं ब्रह्मसूत्रं प्रोद्धृते दक्षिणे करे" इत्यमर प्रतिपादितमिति यावद्, अस्त्यस्येत्यर्थे इनिः प्रत्ययः। "न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थ प्रतिपत्तिकर" इति नियमस्तु "असुब्वत" इति भाष्यप्रयोग-निर्देशादनित्यः।

ऋषि तर्पणे निवीतस्यायुक्तत्वं विविच्यते निवीतीत्यादिना। "निवीती च भवेत्ततः" इति मूलवचनेन मरीच्यादि-ऋषितर्पणे निवीतित्वमावश्यकमिति ज्ञानन्तु विपरीत-ज्ञानमतो हेयमेव। निवीतस्य=निवीतं कण्ठलम्बितमित्यमरोक्त-लक्षणलक्षितस्य। मनुष्यधर्मतया=सनकादि मनुष्य तर्पण एवाचरणीयतया। तत्र तत्र = कात्यायनाद्युक्तमनुष्य तर्पण विधौ। अभिधानात्=कथनात्।

केचित्त्विति। केचित्तु "अथ निवीती ऋषींस्तर्पयामी"ति बौधायन-वचनं पश्यन्तः मरीच्यादि-ऋषि-तर्पणेऽपि निवीतमेव कथयन्ति।

एतेन 'यत्र च प्रयोगे ऋषितर्पणे विशेषो नोक्तस्तत्रोपवीतित्वनियमो" ऽवगन्तव्यः। उपरिष्टात्-

**प्रादेशमात्रमुद्धृत्य सलिलं प्राङ्मुखः सुरान्।**
**उदङ् मनुष्यान् तर्पेत पितॄन् दक्षिणतस्तथा॥**
**अग्रैस्तु तर्पयेद्देवान्मनुष्यान् कुशमध्यतः।**
**पितॄँस्तु कुशमूलाग्रैर्विधिः कौशोयमुच्यते॥**

इति वीरमित्रोदयोद्धृत-वृद्ध-मनुवचनानुसारं पृथक् पृथग् दिङ्नियमः कुश-स्थाननियमश्च बोध्यः। अत्र नित्यकृत्य-रत्नमाला तु विष्णुपुराणीयच्छन्दोग-तर्पणकृत्य-प्रयोगप्रकरणे देवर्षि-तर्पणार्थं प्राङ्मुखत्वमेवोल्लिख्यापि पद्मपुराणीय-वाजसनेयि-तर्पणकृत्य-प्रयोग प्रकरणे देवतर्पणार्थं प्राङ्मुखत्व-मुदङ्मुखत्व मैशान्यभिमुखत्वं वा निर्दिशति।

[ हिन्दी टीका ]

उपवीती (सव्य) तथा पूर्व उत्तर या ईशान कोण के अभिमुख हो अंगुलियों के अग्रभाग रूप देवतीर्थ से ब्रह्मा आदि चार एवं 'दैवायक्षा': से लेकर 'दीयते सलिलं मया' पर्यन्त के एक मन्त्र से देवतर्पण कर लेने के बाद निवीती (कण्ठावलम्बित यज्ञोपवत वाला) तथा उत्तराभिमुख हो कानी अंगुलि के मूल देश रूप कायतीर्थ से 'सन कश्चसनन्दश्च' इत्यादि डेढ़श्लोक रूप एक ही वचन पढ़कर मनुष्यतर्पण करे।

यहाँ 'देवा यक्षा:' इत्यादिवचन प्रसंग में कात्यायनसूत्र (वचन) भाष्यकर्त्ता हरिहर का कहना है कि 'ओं ब्रह्मा तृप्यताम्' इत्यादि वाक्यों से ब्रह्मा आदि चार देवों को तर्पण के जैसे 'ओं देवास्तृप्यन्ताम्', 'ओं यक्षास्तृप्यन्ताम्' इत्यादि वाक्यों से 'धर्मरत' पर्यन्तों का तर्पण करना चाहिए।

''तेषामाप्यायनायैतद्दीयते सलिलं मया'' (अर्थात् उन देवताओं की तृप्ति के लिए यह जल मेरे द्वारा दिया जा रहा है) यह वचन तो देवयक्षादि उन देवों के ध्यानमात्र के लिए है न कि 'तेषाम्' इत्यादि प्रकृतवचन से तर्पण भी हो, किन्तु यह कहना इसलिए युक्तियुक्त नहीं कि वचन के द्वारा श्रुत 'देवा यक्षा:' से लेकर '' दीयते सलिलं मया'' पर्यन्त के ढाई श्लोक के रूप मन्त्र वाक्य से एक ही जलदान को छोड़कर अपनी इच्छा से ही 'ओं देवास्तृप्यन्ताम्' इत्यादिवाक्यों की कल्पना कर लेना तथा 'तेषामाप्यायनाय' इत्यादि वचन से उन्हीं देवादि का ध्यान मात्र की कल्पना कर लेना सर्वथा अयुक्त है। क्योंकि श्रुत वाक्य के त्याग में कोई कारण नहीं कहा जा सकता है। साथ ही ''पापे धर्मे रताश्च ये'' इस वचन में पठित ''ये' इसपद का कहीं भी अन्वय न हो सकने की आपत्ति भी हो जायगी। अत: जहाँ प्रथम श्लोक के पूर्वार्ध – ''ब्रह्माणं तर्पयेत्पूर्वम् इत्यादिस्थल में तर्पण वाक्य नहीं कहा गया है वहीं 'तृप्यतामिति से क्तव्यं नाम्ना तु प्रणवादिना'। इस योगियाज्ञवल्क्य के वचनानुसार ओं ब्रह्मा तृप्यताम् आदि उपयुक्त वाक्य का ज्ञान करना चाहिए। अब इस व्याख्या सन्दर्भ से सिद्ध हुआ कि देवादियों के लिए ''ओं देवा यक्षास्तथ नागा'' आदि से लेकर ''दीयते सलिलं मया'' पर्यन्त के डेढ़ श्लोक वाले एक मन्त्र से एक ही जल (अञ्जलि) दान होगा।

अव ऋषि तर्पण में निवीती होने की अयुक्तता का विवेचन किया जा रहा है। यथा, ''निवीती च भवेत्तत:'' (देव तर्पण के बाद निवीती हो जाय) इस मूल वचन के अनुसार ऋषि तर्पण में भी निवीती होने को समझना भ्रम ही होगा क्योंकि निवीत होना (कण्ठ में माला के आकार से यज्ञोपवीत को करना) मनुष्य तर्पण के लिए ही कत्यायनादि प्रोक्त तर्पण विधि में कहा गया है। अत: यहाँ भी निवीती होकर सनक सनन्द आदि सात मनुष्यों का ही तर्पण करें।

"अथ निवीती ऋषींस्तर्पयामि" (अब निवीती होकर ऋषियों का तर्पण कर रहा हूँ) इस बौधायान वचन को देखते हुए कितनों का कहना है कि 'मरीचि आदि ऋषि तर्पण में भी निवीत होना चाहिए'। अब उक्त निवीत प्रसंगी सन्दर्भ में सिद्ध हुआ कि जिस तर्पण प्रयोग के ऋषि तर्पण में विशेष रूप से कुछ नहीं कहा गया हो वहाँ उपवीत (सव्य) होने का नियम मान लेना चाहिए।

अब ऊपर से वीर मित्रोदय में उद्धृत बृद्ध मनुवचन के वचनानुसार ज्ञातव्य है कि- प्रादेश (बारह अंगुलि) प्रमाण ऊपर में हाथ करके पूर्व मुंह हो देवों, उत्तर मुंह हो सनक आदि मनुष्यों तथा दक्षिण मुंह हो पितरों का तर्पण करना चाहिए। इसी तरह कुश के अग्रभागों से देवों, कुश के मध्यभागों से मनुष्यों तथा कुश मूल के अग्रभागों से (इसका उचित रूप द्विगुण भुग्न मोटक स्वरूप कुश में बन जाता है) से पितरों का तर्पण करना चाहिए। किन्तु दिशाओं के नियम क्रम में नित्य कृत्य रत्नमाला तो विष्णु पुराणीय छन्दोग तर्पण कृत्य प्रयोग प्रकरण में देव तथा ऋषि तर्पण के लिए पूर्व मुंह होने को लिख कर भी वाजसनेयियों के लिए पद्मपुराणीय तर्पण कृत्य प्रयोग प्रकरण में देवतर्पण के लिए विकल्प रूप से पूर्व मुंह, उत्तर मुंह या ईशान कोण की ओर मुंह करने का निर्देश करती है।

[मूलम्]

मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम्।
प्रचेतसं वसिष्ठञ्च भृगुं नारदमेव च ॥
देवान् ब्रह्मऋषीन् सर्वाँस्तर्पयेदक्षतोदकैः।
अपसव्यं ततः कृत्वा सव्यञ्जानु[1] च भूतले ॥
अग्निष्वातास्तथा सौम्यान् हविष्मन्त[2] स्तथोष्मपान्।
सुकालिनो बर्हिषदस्तथा[3] चैवाजपान् पुनः ॥
तर्पयेच्च[4] पितॄन् भक्त्या सतिलोदकचन्दनैः।
दर्भपाणिस्तु विधिना प्रेतान् स्वाँ[5] स्तर्पयेत्ततः ॥

---

पाठा०(१) जान्वाच्य। आच्य=पातयित्वेति वीर मित्रोदयः। (२) म। (३) त्तु। त। (४)(क) आज्यपाँस्तर्पयेत्ततः। (ख) तथैव ह्याज्य पाः पुनः। (५) प्रेताँस्तान। (क) हस्ताभ्यां तर्पयेत्ततः।

पित्रादीन्नामगोत्रेण तथा मातामहानपि ।
सन्तर्प्य भक्त्या विधिवदिमं श्लोक[1] मुदीरयेत् ॥
येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः ।
ते तृप्तिमखिला यान्तु यश्चास्मत्तोऽभिवाच्छति ॥

अक्षतोदकैरित्यत्राक्षतपदं यवपरं, "यवाद्भिस्तर्पयेद्देवानि" ति परिशिष्ट-दर्शनात् ।

[ संस्कृत टीका ]

मरीचीति । मनुष्यतर्पणानन्तरं मरीच्यादिऋषितर्पणमाह–मरीचिमित्यादिना । मरीचिमित्यादौ तर्पयेदिति शेषः । मरीच्यादीनां देवधर्मत्वात्प्राङ् मुखेन सव्येन सकृत्सकृत्तर्पणं कार्यमिति भावः । वाक्यरचना तु मरीचिस्तृप्यतामत्रिस्तृप्तयता-मित्यादिः । अक्षतोदकैरिति । अक्षतपदस्य तण्डुलवाचकत्वे अत्राक्षतपदं यवपरं, "यवाद्भिस्तर्पयेद्देवानि"ति परिशिष्टदर्शनात् । "अक्षतास्तु यवाः प्रोक्ता" इति कातीयवचनाच्च । एवञ्च ब्रह्मण आरभ्य नारदपर्यन्तं यवोदकैस्तर्पयेत् । तिलविधानवद् यवकुश–विधानमप्यत्राधिकफलार्थं नत्वावश्यकम् । केवलमुदकेनापि तर्पणस्य–

अद्भिरेवाप्सु यथोत्तरं देवान् पितॄँस्तर्पयेत् ।

इति बौधायन-वचनेन,

यदेव तर्पयत्यद्भिः पितॄन् स्नात्वा द्विजोत्तमः ।
तेनैव कृत्स्नमाप्नोति पितृयज्ञक्रियाफलम् ॥

इति वचनेन च सम्मतत्वात् । अपसव्यमिति । अत्र "अपसव्यं ततः कृत्वे"-त्यारभ्य "तर्पयेत्ततः" पर्यन्तमिति पद्मपुराणीयमिदं वचनमुद्धृत्य अपसव्यमिति सकलपितृधर्मोपलक्षणम् । अतएवाञ्जलित्रयदानमपीति केचित् । बहवस्तु–

(१) मन्त्र ।

कव्यवाहं जलं सोमं यममर्यमणं तथा।

अग्निष्वात्तान्सोमपाँश्च बर्हिषदश्च सकृत्सकृत्।

इति छन्दोग-परिशिष्टदर्शनादेक एवाञ्जलिरिति वदन्ति। भूयसामाचारोऽप्येवमिति नित्यकृत्यरत्नमालाटिप्पणी। वस्तुतस्तु "एवञ्च दिव्यपितृतर्पणेऽप्यञ्जलित्रयं तद्धर्मकत्वात्। 'एकैकस्ये'ति तत्रापि सम्बन्धात् प्रमाणाभावादेक एवाञ्जलिरि''ति कातीय-तर्पण-प्रकरणीयाचारादर्श-विवेचनानुसारमञ्जलि-विवेचनानुसारं स्वयं नित्य कृत्यरत्नमालाऽपि अग्निष्वात्तादिदिव्यपितॄणां कृते अञ्जलित्रयमेव समुल्लिखति।

हविष्मन्त इत्यत्र द्वितीयार्थे आर्षत्वात्प्रथमा। क्वचिद् हविष्मन्तमित्येक-वचनान्तपाठेऽपि प्रयोगे बहुवचनान्तमेव प्रयुञ्जते शिष्टाः। अग्निष्वात्तादि-दिव्य-पितृतर्पणे नमस्कार स्वधाऽन्वितं वाक्यं कार्यम्। 'ॐ अग्निष्वात्तास्तृप्यन्ता-मिदं तिलोकदं तेभ्यः स्वधा नम' इत्यादि वाक्य-प्रयोगाः।

अग्निष्वात्तादि-दिव्य-पितृ-तर्पण-विधानानन्तरं पद्मपुराणे यम-तर्पणं नोक्तं तथापि "यमाँश्चैके" इति दिव्यपितृतर्पणोत्तरं कात्यायनेनाभिधानात्तद-विरोधित्वेनात्रापि तत्प्रयुञ्जते शिष्टाः। यमतर्पणे तु यमानुक्त्वा-'एकैकस्य तिलैर्मिश्राँस्त्रीन् त्रीन दद्याज्जलाञ्जलीन्' इति कात्यायन-वाक्यात्प्रत्येक-मञ्जलित्रयमिति श्रीदत्तादयः" इति वीरमित्रोदयः। यद्यप्यत्र-

एकैकस्य तिलैमिश्रांस्त्रींस्त्रीन्दद्याज्जलाञ्जलीन्।

यावज्जीवकृतं पापं तत्क्षणादेव नश्यति॥

इति कात्यायनवचनानुसारमञ्जलित्रयमेव स्मर्यते तथाप्याचारादेक एवाञ्जलिरिति सतर्कं निरूपितवन्तः स्वपद्धतिव्याख्यायां कर्मकाण्डोद्धारका महामहो० परमेश्वरशर्माण इति नि. कृ. र. मा० टि०। एवञ्च यावज्जीवपापक्षय-कामोऽञ्जलित्रयेण, निष्कामस्तु एकैकाञ्जलिनैव चतुर्दश यमाँस्तर्पयेत्। एतत्तर्पणोत्तरं "चतुर्दशैते यमाः स्वस्ति कुर्वन्तु तर्पिताः" इति गोभिलीय-तर्पणोक्त-वाक्यं बहवः पठन्तीत्यपि सैव। तर्पयेच्चेति। ततः

=दिव्यपितृतर्पणयमतर्पणंयोरनन्तरम् । दर्भपाणिः मोटकरूपकुशहस्तः । विधिना=अपसव्यादि विधिनैव । सतिलोदकचन्दनैः तिलचन्दनमिश्रितजलैः । चन्दनञ्चास्मिन्नेव प्रयोगे बोद्धव्यम् । विशेषतस्तदुपादानात् । नामगोत्रेण = नामगोत्रादिकथनपूर्वकम् । अत्र ''पित्रादीन्नामगोत्रेणेति विधिर्नतु विशेष-विधिः । तेन त्रैवर्णिकैरेतदनुसारेण तर्पणे क्रियमाणे पित्रादितर्पणेषु स्वस्वसूत्रानुसारेण मन्त्रप्रयोगः कार्यम''इत्याचार चिन्तामणिः । प्रेतान् = मृतान् । स्वान् = स्वकीयान् । पित्रादीन् = पितृपितामह प्रपितामहान् । तथा मातामहान् = मातामह प्रमातामहवृद्धप्रमातामहानित्यर्थः । ''न वृद्‌भ्यश्चतुर्भ्यः (पाठ सू० ७ । २ । ५९) इत्यादौ वृद्‌भ्य इत्यत्र बहुवचनकरणेन ''बहुवचन-निर्देशादाद्यर्थावगतिरि'' ति वैयाकरणनियमात् । सन्तर्प्य = सम्यक्तया तर्पयित्वा । एतेन तर्पणं यो यो जीवति तं तं परित्यज्य परं परं पुरुषमन्त-धार्यकार्यम्िति फलति । तृप्यध्वमितित्रिरिति कातीयवचनानुरोधादत्रापि पित्रादित्रिकंतर्पणानन्तरम् 'ओं तृप्यध्वं, तृप्यध्वं, तृप्यध्वमि'ति मिलितपित्रादिकमुद्दिश्याञ्जलित्रयं दत्त्वा आचारान् मातामहादित्रिकतर्पणानन्तर-मपि मिलित मेनमप्युद्दिश्यैवमेवाञ्जलित्रयं दद्यात् । एवं षट्पुरुषतर्पणं विधाय देव्यन्तनामान्युचार्य तेषांस्त्रियस्तर्प्याः ''त्रीन् पितृतस्त्रीन् मातृतस्तत्पत्न्याश्च पितृतर्पणमि''ति गोभिलवचनात् । मातृतर्पणे सामान्यतोऽन्यस्त्रीतर्पणे स्वपितृषट्पुरुषातिरिक्तपुरुषतर्पणे चैकैकएवाञ्जलिः, ''अर्हन्ति पितरस्त्रीं स्त्रीन् स्त्रियस्त्वेकैकमञ्जलिम्'' इति गोभिलोक्तेः, ''अथ स्वान् पितॄन् मातामहान् त्रिः प्रतिपुरुषमभ्यसेत्'' इतिच्छन्दोग- परिशिष्टोक्तेश्च । अत्र गोमिलवचने पितृपदेन षडपि पितरो गृह्यन्ते । अतएव, ''पिण्डार्थं ये स्तृता दर्भा यैः कृतं पितृतर्पणम्'' इति लघुहारीतवाक्ये पितृपदं शक्त्याजनका-दिषट्पुरुषवाचकमेव, नतु यावत्तर्पणीयपरं प्रमीतमात्रपरं वा, लक्षणापत्तेः । नच विनिगमनाविरहात्तातमात्र-परतैवास्तु, प्रकरणबलेन षट्पुरुष परतायां न्याय्यत्वादि'' ति द्वैत (सुश्लिष्ट) परिशिष्टमपि । मातृतर्पणमिव वचनान्तरसिद्धमाचार्य-तत्पत्नी-मन्त्रगुरु-तत्पत्नी-स्वपत्नी-पितृव्य-ज्येष्ठादिभ्रातृ-मातुल-तत्पत्नीश्वश्रूश्वशुरादिराजान्तानां यथाकाममेकैकाञ्जलिनैव

तर्पणं विधेयम्। अत्र "अत्र (तर्पणे) 'देवानामृजवो दर्भाः पितृणां द्विगुणाः स्मृताः'

इति स्मर्यते। तत्र' द्विगुणा' इत्यस्य द्विगुणभुग्ना मोटकरूपाः सार्धत्रय-(द्वय) ग्रन्थिबद्धा इत्यर्थो ब्रह्मग्रन्थेरावश्यकत्वादि"ति, "अत्र षट्पुरुषतर्पणे मोटक ग्रहणं तर्पणाम्नायप्राप्तं तदुत्सृजन्ति के चिद्। वाचस्पति मिश्रेणानुमतत्वात्। तदेतन्महत्याऽऽरभट्या खण्डितं स्मृतिदीपिकायाम्। ततश्च प्रमीतमातृतर्पणानि कृत्वा मोटकस्त्याज्यः। दक्षिण करधृता ऋजवोऽपि कुशास्त्याज्या एव। बहवस्तु न त्यजन्ति, तत्रमानं मृग्यमि" ति च नित्यकृत्यरत्नमाला टिप्पणी मन्तव्या। अत्र षट्पुरुषतर्पणानन्तरं मोटकत्यागं लिखन्ति केचित्। के चित् प्रमीतमात्रतर्पणानन्तरन्तत्र यथाऽऽचारमाद्रियतामिति नित्यकृत्यार्णव-पद्धति-टिप्पणी। अतएव-"वस्तुतस्तु पितृपदस्यात्र (लघु हारी वचने) शक्याशक्योभय साधारणप्रमीत्वसाधर्म्येण जहत्स्वार्थलक्षणया प्रमीतमात्रपरत्वं तथैव शिष्टाचारादित्याचारद्वैताचाविवेकाविति नित्यकृत्यार्णवः। विधिवदिति। विविधत् = यथाविधि-पितृविधिनेतियावत्। यथाचात्राचार चिन्तामणिरपि "पद्मपुराणीय-विष्णुपुराणीय तर्पण प्रयोगौ तु स्पष्टावेव; किन्तु 'येऽबान्धवा' इत्यनेन पितृविधिनाऽञ्जलिरिति विशेष" इति। भक्त्या। श्लोक (मन्त्र)-मुदीरयेत् = निम्नोपात्त 'येऽबान्धवा' इति मन्त्रमुच्चार्यावसानाञ्जलिमेकं दद्यात्। यथा च वीरमित्रोदयोऽपि-"मन्त्रमुदीरयेदिति च मन्त्रपाठपूर्वकजल-सेकोपलक्षणम्। तस्यैव तृप्त्यर्थत्वात्समाचाराच्चे"ति।

**[ हिन्दी टीका ]**

मनुष्यतर्पण के बाद 'ऊँ मरीचिस्तृप्यताम्' इत्यादि वाक्यों से मरीचि आदि दश ऋषियों का तर्पण करें। यहाँ ज्ञातव्य है कि मरीचि आदि को देवसमान होने के कारण यह ऋषितर्पण पूर्व मुंह तथा सव्य होने पर हो। यह ऋषितर्पण तथा देव तर्पण अर्थात् ब्रह्मा से नारद पर्यन्त का तर्पण यव मिश्रित जल से (तथा पितृ तर्पण कृष्ण तिल जल से) होगा। फलतः मूल के अक्षत पद का तात्पर्य यहाँ यव से है क्योंकि परिशिष्ट एवं कात्यायन के वचन अक्षत पद का अर्थ यव (भी) बतलाते हैं। पितृ तर्पण में तिल व कुश के विधान के जैसे देवादितर्पण में यव (जौ) एवं कुश का विधान भी अधिक फल के लिए ही है, न कि आवश्यक भी। क्योंकि बौधायन एवं मनुवचन के द्वारा अन्ततः जल से भी तर्पण का विधान कर दिया गया है।

अनन्तर अपसव्य तथा बायें घुटने को पृथिवी पर गिरा कर "ओं अग्निष्वात्तास्तृप्यन्तामिदं तिलोदकं तेभ्यः स्वधानमः" इत्यादिवाक्योंके द्वारा अग्निष्वात्तादि सातों दिव्य पितरों का तीन-तीन अञ्जलियों से तर्पण करें। (यहाँ तीन या एक अञ्जलि से सम्बन्धित विशेष विचार संस्कृत टीका में देखा जा सकता है)।

दिव्यपितृतर्पण विधान के बाद यद्यपि पद्मपुराण में यमतर्पण नहीं कहा गया है तथापि कात्यायन ने अपने दिव्यपितृतर्पण के बाद "यमाँश्चैके" सूत्र से यमतर्पण कहा है। अतः इसके अविरोध से शिष्टजन यहाँ भी इस तर्पण का प्रयोग करते आ रहे हैं।

यद्यपि यहाँ के कात्यायन ग्रन्थ के आधार से किये गए निबन्धकार श्रीदत्त उपाध्याय प्रभृति के विवेचन से तीन अञ्जलियाँ होनी चाहिएँ फिर भी नित्यकृत्यरत्नमाला टिप्पणी के लेखानुसार अपनी पद्धतिव्याख्या में कर्मकाण्डोद्धारक महामहो० परमेश्वर झाने तर्क के साथ निरूपित किया है कि आचारवश एक ही अञ्जलि होनी चाहिए। अब सारांश सिद्ध यह हुआ कि सकल जन्मों के पापक्षय की कामनावालों को तीन अञ्जलियों से तथा निष्काम व्यक्तियों को एक अञ्जलि से यह यमतर्पण करना चाहिए। इन चौदह यमों के तर्पण के बाद-बहुत से लोग "चतुर्दशैते यमाः स्वस्ति कुर्वन्तु तर्पिताः" इस गोभिल प्रोक्त वाक्य का पठन करते हैं।

दिव्यपितृ एवं यमतर्पण के बाद मोटक रूप कुश तथा अपसव्यादिपूर्वक ही रहकर तिल चन्दन सहित जल से नाम गोत्र आदि का कथन पूर्वक मृत पिता, पितामह, प्रपितामह, मातामह, प्रमातामह तथा वृद्ध प्रमातामह का तर्पण करे। इससे यह सिद्ध होता है कि इनमें जो जो जिन्दे हों उन्हें उन्हें छोड़कर पितृ एवं मातृ पक्षीय मृत तीन तीन पूर्वजों का तर्पण करे। किन्तु "तृप्यध्वमिति त्रिः" इस कातीयवचन के अनुरोधसे इस पद्मपुराणीय तर्पणपक्ष में पिता आदि तीन पुरुषों के तर्पण के बाद मिलित इन तीनों के उद्देश्य से भी उक्त मन्त्र से आचारवश तीन अञ्जलियों से तर्पण करे।

इस तरह छह पुरुषों का तर्पण कर लेने के बाद नाम के अन्त से देवी पद लगाकर गोभिलवचनानुसार इनकी स्त्रियों का भी एक-एक अञ्जलि से तर्पण करे।

इन मातृतर्पण के बाद अन्य वचनों से सिद्ध आचार्य, उनकी पत्नी, मन्त्रगुरु, उनकी पत्नी, अपनी पत्नी, चाचा, बड़े भाई आदि, मामा, मामी, सास, ससुरादि राजापर्यन्त का तर्पण एक अञ्जलि से करे।

कुशत्याग के सम्बन्ध में आचारचिन्तामणि का कहना है कि

**पिण्डार्थं ये स्तृता दर्भाः यैः कृतं पितृतर्पणम्।**
**मूत्रोच्छिष्टै धृता ये च तेषां त्यागो विधीयते॥**

इस लघु हारीत वचनानुसार छह पूर्वज पुरुषों के तर्पण के बाद मोटक का त्याग कर दूसरे मोटक से माता आदि का तर्पण करना चाहिए । इस सन्दर्भ को संकेतित कर नित्य कृत्य र० मा० टि० का कहना है कि ''उक्त विवेचना के आधार से कितने ही लोग पितृतर्पण के बाद मोटक त्याग कर देते हैं किन्तु स्मृतिदीपिका में उक्त विवेचन का बड़े समारम्भ के साथ खण्डन कर दिया गया है । अत: उचित है कि मातृतर्पण के बाद मोटक का त्याग हो । इसी तरह दाहिने हाथ में स्थित कुश का भी त्याग कर देना चाहिए किन्तु बहुत से लोग त्याग नहीं करने है । इस प्रसंग का प्रमाण अन्वेषणीय है ।''

यहाँ नित्यकृत्यार्णव टिप्पणी का कहना है कि कितने निबन्धकार (वाचस्पति मिश्र प्रभृति) छह पुरुष पितरों के तर्पण के बाद मोटकत्याग करने को लिखते हैं तो कितने (म० म० विभाकर उंपाध्याय एवं म० म० शूलपाणि उपाध्याय) मृतमात्र व्यक्ति के तर्पण कर लेने के बाद । अत: अपने अपने कुलाचार के अनुसार आचरण करें ।

(आजकल तो प्राय: सभी लोग पितृपक्ष-आश्विन कृष्ण प्रतिपत्-से कुशग्रह्य कर पक्षान्त तथि में तर्पण के बाद कुशत्याग कर देते हैं । अत: प्राय: पितृ पक्ष-महालय-निमित्तक तर्पण के उद्देश्य से रचित एवं गृहीत कुशों का त्याग निमित्तान्त-पितृपक्षान्त तिथि में कर देते हों, यह कल्पना की जा सकती है) ।

अन्त में भक्तिपूर्वक ''येऽबान्धवा:'' इत्यादिश्लोक (मन्त्र) पढ़कर अपसव्य आदि पितृविधि से अन्तिम जलाञ्जलि दें ।

(इस से अधिक अग्रिम इसी तर्पण प्रयोग प्रकरण में देखें। )

❁ पद्मपुराणीयतर्पण विधि प्रकरण समाप्त ❁

# पद्मपुराणीयतर्पणप्रयोगः

## [ मूलम् ]

अथ पद्मपुराणीयतर्पणप्रयोगः । अत्र ब्रह्मादि-चतुष्टयम् ऊँकारादिना तृप्यतामित्यन्तेन नाम्ना, देवादीन् "देवायक्षाः" इत्यादिना "दीयते सलिलं मया" इत्यन्तेन उपवीती । ततो निवीती सनकादीन् "सनकश्चे" त्यादिना "सदे"त्यन्तेन । तत उपवीती मरीच्यादीन् दश ऋषीन् 'ॐ मरीचिस्तृप्यतामि'त्यादिना[१] । एतान् सर्वान् यवमिश्रितजलैः । ततः प्राचीनावीती अग्निष्वात्तादीन् सप्त दिव्यपितृगणान् ॐ अग्निष्वात्तास्तृप्यन्तामिदं तिलोदकं तेभ्यः स्वधानमः इति[२] रूपेण ।" ॐ अद्यामुकगोत्रः पिता अमुकशर्मा तृप्यतामिदं जलं सतिलं तस्मै स्वधा' इत्यादिवाक्यैःषट् पुरुषान् । 'ॐ अद्यामुकगोत्रा माता अमुकीदेवी तृप्यतामिदं जलं सतिलं तस्यै स्वधा' इत्यादिवाक्यैस्तेषां स्त्रियस्तर्पयित्वा 'येऽबान्धवाः' इत्यादिश्लोकेनावसानाञ्जलिं दद्यादिति प्रयोगः ।

## [ संस्कृत टीका ]

अत्र ब्रह्मादीति । अत्र = पद्मपुराणीयतर्पण कल्पे । उपवीती = सव्यभावेन यज्ञोपवीतधारी । उपवीतीति तु अकषायादिवासा, अवेष्टितशिराः, जानुद्वयमध्यकृतकरः, प्राङ्मुखः, उदङ्मुखः, ऐशान्यभिमुखो वा द्विराचान्तो दर्भपवित्रपाणिरङ्गुल्यग्रात्मकदेवतीर्थेन वामान्वारब्धदक्षिणकरेण सयव-ऋजुकुशत्रयेण स्थलेचेत्तदोपविश्य पातितदक्षिणजानुरास्तीर्ण प्रागग्रकुशत्रये शुचिभूमौ, स्थलाशौचपक्षे स्थलस्थोऽपि जले कुशास्तरणं विनैव, जले चेदूर्ध्वजानुर्नाभिमात्रजलस्थः तदभावे जानूर्ध्वजलस्थोऽपीत्यस्यापि नित्यकृत्यार्णवानुसारमुपलक्षणम् । "ओं तर्पणीया देवा आगच्छन्तु" इति मन्त्रेण देवानावाह्य ब्रह्मादिचतुर्णाम् 'ऊँ ब्रह्मा तृप्यताम्, ऊँ रुद्रस्तृप्यताम्, ऊँ प्रजापतिस्तृप्यतामि' ति वाक्यैस्तर्पणं विधाय ऊँ "देवा यक्षा" इत्यादिना "दीयते सलिलं मया" इत्यन्तेन सार्धश्लोकद्वयाकमन्त्रेणैकाञ्जलिना देवादीनुद्दिश्य जलं दद्यादिति भावार्थः ।

---

पाठा० (१) मान्तेन । (२) इत्येदंरूपतया ।

ततो निवीतीति । ततः = ब्रह्मादीनामेकैकाञ्जलिना सन्तर्पणानन्तरम् । निवीती = कण्ठावलम्बितयज्ञसूत्रः, उदङ्मुखः सन् । कनिष्ठाङ्गुलिमूलरूप-काय (प्रजापति) तीर्थेन आस्तीर्णकुशत्रयमध्ये पूर्ववत् 'ॐ सनकादय आगच्छन्तु' इति मन्त्रेण सनकादिसप्तमनुष्यानावाह्य ''ॐ सनकश्चे''त्यादिना ''सदे'' त्यन्तेन सार्द्धश्लोकात्मकमन्त्रेण एकेनाञ्जलिना सकृत् सनकादीन् सन्तर्पयेत् । ॐ सनकस्तृप्यतामित्यादिक्रमेण । वाक्यन्तु कातीयतर्पण एव ।

तत उपवीतीति । उपवीती = कृतापसव्यः । प्राङ्मुखः सन् देवतीर्थेन ''ॐ मरीच्यादय आगच्छन्तु'' इति मन्त्रेणावाह्य 'ॐ मरीचिस्तृप्यताम्' 'ॐ अत्रिस्तप्पयतामि'त्यादिवाक्यैः मरीच्यादीन् दश ऋषीन् क्रमशस्तर्पयेत् । एतान् सर्वान् = ब्रह्मण आरभ्य नारदपर्यन्तान् यवमिलितजलैस्तर्पयेदिति भावः।

ततः प्राचीनावीतीति । प्राचीनावीती= कृतापसव्यः । दक्षिणामुखः स्थले चेत्तदाऽऽस्तीर्णदक्षिणाग्रकुशत्रयशुचिभूमौ पातितवामजानुः, जले चेत्तद्विनैव, दक्षिणहस्तानामिकायां तदीयमध्यमानामिकयोर्वा कुशत्रयं (पवित्रं) धृत्वाऽङ्गुष्ठानवरुद्धेन दक्षिणहस्ततर्जन्यङ्गुष्ठमध्यमात्मकपितृतीर्थेन अञ्जलिस्थेन सौवर्णेन राजतेन ताम्रेण खड्गमयेन वा पात्रेण एषामभावे सुवर्णादिकीलकेन, सर्वाभावे केवलाञ्जलिनाऽपि द्विगुणभुग्नकुशत्रयेण (मोटकेन) उद्धृतोदकेन चेत्पात्रस्थजल एव तिलान् प्रक्षिप्य, जलाशयस्थजलेन चेत्तदा वामहस्तस्थापिततिलमिश्रं दक्षिणहस्तपितृतीर्थगृहीतं जलं त्यजेत् । तद्यथा–'' ॐ अग्निष्वात्तास्तृप्यन्तामिदं तिलोदकं तेभ्यः स्वधा नमः'' इति नमस्कारस्व-धाऽन्वितैः वाक्यैरग्निष्वात्तादिसप्तदिव्यपितृगणान् त्रिभिरञ्जलिभिस्तर्पयेत् । ततः ओं यमादय आगच्छन्तु इति काक्येनावाह्य नित्यकृत्यार्णव-प्रदर्शितपद्धत्यनुसारं तथैवाञ्जलित्रयेण यावज्जीवपापक्षयकामः । निष्कामस्तु एकैकाञ्जलिनैव ॐ यमाय नमः इत्यादिवाक्यैश्चतुर्दश यमान् संतर्प्य ''ॐ चतुर्दशैते यमाः स्वस्ति कुर्वन्तु तर्पिताः'' इति वाक्यं पठनीयम् । ततः 'ॐ आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम्' इति मन्त्रेण पितॄनावाह्य ''नामगोत्र-स्वधाकारैस्तर्पयेदनुपूर्वशः'' इति इति योगियाज्ञवल्क्यवाक्यानुसारं नामगोत्र-

पुरस्सरं क्रियमाणेऽग्रिमतर्पणे वाक्यान्तसम्बध्यमानस्य स्वधाशब्दस्य षट्पुरुषतर्पणे अञ्जलेरावर्तनेन प्रत्यञ्जलि (त्रिष्वप्यञ्जलिषु) भवेदावर्तनम् । प्रत्यञ्जलि त्यागबोधकवाक्यप्रयोगविचारोऽधस्ताद् (मातामहादेः कातीयतर्पणविचारप्रसङ्गे) उक्त एव । तथा च षट्पुरुषतर्पणेषु–"ॐ अद्यामुकगोत्रः† पिता अमुकशर्मा तृप्यतामिदं जलं सतिलं तस्मै स्वधा" इत्येवं क्रमेण, प्रथमाञ्जलेश्चतुरङ्गुलमुद्धृत्य, द्वितीयाञ्जलेरष्टाङ्गुलमुद्धृत्य, तृतीयाञ्जलेश्च द्वादशाङ्गुलमुद्धृत्य जलदानक्रमेण च, पित्रादित्रिकतर्पणानि विधाय मिलितमेनमुद्दिश्य 'ॐ तृप्यध्वं तृप्यध्वं तृप्यध्वमि' ति मन्त्रैरञ्जलित्रयं दत्त्वा "ॐ अद्यामुकगोत्रो मातामहोऽमुकशर्मा तृप्यतामिदं जलं सतिलं तस्मै स्वधा" इत्यादिवाक्यैः पूर्ववत् मातामहादित्रिकतर्पणानन्तरमपि मिलित- त्रिकमेनमप्युद्दिश्यैवमेवा-ञ्जलित्रयं दद्यादिति भावः । ततस्तेषां पित्रादीनां स्त्रियः "ॐ अद्यामुकगोत्रा माता अमुकी देवी तृप्यतामिदंजलं सतिलं तस्यै स्वधा" इत्यादिवाक्यैरेकेनाञ्जलिना तर्पयित्वा "ॐ अद्यामुकगोत्रः (गोत्रा) आचार्यः, गुरुः, पितृव्यः, मातुलादिर्वा अमुकशर्मा (अमुकीदेवी) तृप्यतामिदं जलं सतिलं तस्यै (तस्यै) स्वधा" इत्यादिवाक्यैरेकेनाञ्जलिना आचार्यगुरुपितृव्यमातुलादीनपि तर्पयेत् । ततः पितृविधिनैव 'येऽबान्धवाः' इति श्लोकात्मकं मन्त्रं पठित्वा अन्तिमाञ्जलिं दद्यात् ।

ततः पितृविधिनैव 'येऽबान्धवा' इति श्लोकात्मकं मन्त्रं पठित्वा- अन्तिमाञ्जलिं दद्यात् ।

अत्र नि. कृ. र. मा० टिप्पणी –

अत्र च पित्रादि-तर्पणोत्तरम्

**आब्रह्म-स्तम्ब-पर्यन्तं देवर्षि-पितृ-मनवाः ।**
**तृप्यन्तु पितरः सर्वे मातृमातामहादयाः ॥ १ ॥**
**अतीतकुलकोटीनां सप्त द्वीपनिवासिनाम् ।**
**आब्रह्म-भुवनाँल्लोकानिदमस्तु तिलो (कुशो) दकम् ॥ २॥**

---

† अत्रत्या टिप्पणी संस्कृत टीका समाप्तौ द्रष्टव्या ।

इति श्लोकद्वयं क्वाचित्कं केचित्पठन्ति । तदयुक्तम् । पद्मपुराणे तन्मन्त्रादर्शनादनङ्गव्यवायापत्ते र्निमूलत्वाच्च । अतएव शिष्टा न पठन्ति । ततो "येऽबान्धवा" इति मन्त्रेणैकोऽवसानाञ्जलिर्देयः ।" इत्याह । परमद्यत्वेऽपि कतिपये जनास्तथा कुर्वन्तो दृश्यन्ते । अत एतदाधारेण मूलं मृग्यमनुमेयं वा । तथापि दरभंगा मिथिला पुस्तक केन्द्रतः प्रकाशिते डा० रवीन्द्रनारायण झा-महोदयेन सङ्कलिते सदाचारपुंस्तके, गोरखपुर गीताप्रेसतः प्रकाशिते नित्यकर्म प्रयोगाभिधपुस्तके (सप्तदश संस्करण) च "ॐ आब्रह्मस्तम्बे" ति-श्लोकद्वयसहितस्य 'येऽबान्धवाः' इति श्लोकस्योल्लेखोऽवलोक्यते । एवमेव स्व. प० भुवनेश्वर झा सङ्कलिते प. श्री सुरेन्द्र झा सुमन- सम्पादिते च सदाचारपुस्तके तथा मधुवनीतः प्रकाशिते प. सुरेशमिश्र कृते नित्यकर्मपद्धतौ (वाजसनेयिकृत्ये) च 'येऽबान्धवा' इति तृतीयश्लोकसहितस्य ॐ आब्रह्मेति श्लोकद्वयस्याप्युल्लेखो दृश्यते ।

ततः आचारादर्शस्थाग्रिमलेखानुसारमत्र दक्षिणाभिमुखः कृतापसव्य एव मृज्जलाभ्यां त्रिः प्रक्षालितां स्नानशाटीं कुशत्रयास्तृतायां भूमावुच्छिष्टभागिनो जीवानु (असंस्कृत प्रमीतादीनु) द्दिश्य-

**ॐ ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः ।**
**ते पिबन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥**

इति गोभिलोक्तमन्त्रेण निष्पीडयेत् । ततो विष्णुपुराणानुसारमाचम्य-अञ्जलौ जलमादाय-

**ॐ नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे ।**
**जगत्सवित्रे शुचये सवित्रे कर्मदायिने ॥**

एषोऽर्घः ॐ भगवते श्री सूर्याय नमः इति सूर्याय त्रिरर्घ्यं दत्त्वा तं नमस्कुर्यात् ।

शूद्राणां धौतपरिधानादिकं त्रैवर्णिकप्रयोगवद् बोध्यम् । तिलकमर्धचन्द्राकार मिति विशेषः ।

नित्यकृत्यार्णवनिर्देशानुसारं शूद्राणां विधवास्त्रीणां च सर्वमेतत्पद्मपुराणीय-तर्पणकृत्यं प्रणवस्वधावर्जं भवेत् । तत्र ब्रह्मा तृप्यताम् रुद्रस्तृप्यताम् इत्येवं क्रमेण पूर्ववद् ब्रह्मादीन् सन्तर्प्य "देवा यक्षाः" इत्यादि सार्ध-श्लोकद्वयेन देवादीन् उत्तराभिमुखश्च सन् "सनकश्चे"ति सार्धश्लोकेन सनकादि-सप्तमनुष्यान्, पुनः पूर्वाभिमुखः देवविधिना मरीचिस्तृप्यतामित्यादि वाक्यैः नारदान्तान्, दक्षिणाभिमुखश्च, पूर्वोक्तप्रकारेण अग्निष्वात्तास्तृप्यन्तामिदं जलं तेभ्यो नमः इत्यादि-वाक्यैः दिव्यपितॄन् यमाय नमः इत्येवं क्रमेण चित्रगुप्तान्तान्, सन्तर्प्य अद्यामुकगोत्रः पिताऽमुकदासस्तृप्यतामिदं सतिलं जलं तस्मै नमः '३' इत्येवं पित्रादि-पितृव्यमातुल श्वशुर गुर्वादीन् सन्तर्पयेत् । ततः पूर्वप्रदर्शितं शेषमपि कर्तव्यम् ।

विधवास्त्रीषु-ब्राह्मणी-नमोद्यामुकगोत्रः पिताऽमुकशर्मा तृप्यतामिदं जलं सतिलं (उद्धृतोदक-तर्पण-पक्षे जलपात्रे एव तिलान् प्रक्षिप्य इदं तिलोदकं) तस्मै नमः ३, एवं पितामहादि पञ्च सन्तर्प्य नमोऽद्यामुक गोत्रपतिरमुकशर्मा तृप्यतामिदं जलं सतिलं (इदं तिलोदकं वा) तस्मै नमः । एवं श्वशुर-परम-श्वशुरौ तर्पयेत् । क्षत्रिया तु नमोऽद्यामुकगोत्रः पिताऽमुकवर्मा तृप्यता मित्यादि वाक्यं कुर्यात् । वैश्या तु नमोऽद्यामुकगोत्रः पिताऽमुक देवस्तृप्यतामित्यादि वाक्यं कुर्यात् । शूद्रा तु नमोऽद्य काश्यपगोत्रः पिताऽमुकदासः (माताऽमुक देवी) तृप्यतामित्यादिवाक्यं कुर्यादन्यत्सर्वं पूर्ववदिति पद्मपुराणीय-तर्पण-प्रयोगः । अयञ्च प्रयोगः पौराणिकत्वात् सर्वशाखिसर्ववर्णसाधारणः पद्मपुराणीयस्नानप्रयोगवन्मन्तव्यः ।

## [ टिप्पणी ]

अत्र "अस्मत्पदञ्च देयम् । नच सम्बन्धिशब्दत्वादेव तल्लाभः, सम्बन्धि पदानां समभिव्याहृतपदार्थान्वित-स्वार्थबोधकत्वव्युत्पत्तेः । प्रकृते च तर्प्पयितृवाचकपदाभावात् । अतएव कल्पतरुरप्येवमित्याचारचिन्तामणिः । ... ....द्वैतपरिशिष्टे तर्पणवाक्यन्तु-ओमद्यामुक-सगोत्रोऽस्मत्पिताऽमुकशर्मा तृप्यतामिदं सतिलोदकं स्वधा नम इति कल्पतरुः । सपदास्मत्पदे विहायैवमेवेति रत्नाकरः । कल्पतरुप्रयोगे सकारमात्रस्य त्याग इति वर्द्धमानाह्निकम् । एवमेव

परमगुरवोऽपीति विशेषः उक्तः । अस्मत्पितामुकशर्मा इति कैश्चित्; तन्न । प्रयोगे क्रियमाणेऽस्मच्छब्दसशब्दौ न प्रयोज्यौ मानाभवांत् । सम्बन्धिशब्दत्वादेव तल्लब्धेरिति रत्नाकर इति'' नित्यकृत्यार्णवः । अत्र ''अत्र वाक्ये 'अस्मत्पितेति 'ति सम्बन्धयन्तो भ्रान्ताः । सम्बन्धिपदादेव तदर्थप्रतीतेः । तथाच महाभाष्यम् 'मातरि वर्त्तितव्यम्, पितरि शुश्रूषितव्यमिति । नचोच्यते स्वस्यां मातरि स्वस्मिन् पितरीति । सम्बन्धिशब्दादेवैतद्गम्यते या यस्य माता यो यस्य पितेति' इति । अतएव च 'एते पितरः सोम्यासः' इति श्रुतिरपि व्याख्याता भवती'' ति ''अत्रास्मत्पितेति प्रयोगस्यावश्यकैतैव नास्ति 'आगच्छन्तु मे पितरः' इति स्वपितृणामेवावाहनात् । एतेन 'एत पितरः सोम्यास इति मन्त्रोऽपि व्याख्यात'' इति च नित्यकृत्यरत्नमाला टिप्पणी ।

''अत्र केचित्प्रलपन्ति-जीवन्मातृकस्य पितामह्यादितर्पणन्नार्हतीति तेषामति-स्थूलः प्रमादः । प्रमीतपितृकत्वेनैव प्रमीतमात्रस्वसम्बन्धि-पितामह्यादि साधारण-बान्धवादि-तर्पणाधिकारत्वात् । ब्रह्मादिदेवकव्यवालादिदेव-पितृनमिधाय-

यदि स्याज्जीवपितृक एतान् दिव्यान् पितृंस्तथा ।
एतांश्च वक्ष्यमाणाँश्च प्रमीतपितृको द्विजः ॥

इति योगिवचनात् पितामह्यादिसाधारण्येनैव निर्वचनात् । .......तथा च प्रमीतपितृकत्वेनैव प्रमीततर्पणाधिकारित्वन्न तु प्रमीतमातृकत्वेन पितामह्या दितर्पणाधिकारित्वम्प्रमाणाभावादित्याचारविवेक'' इति नित्यकृत्यार्णवः ॥ इति ॥

[ हिन्दी टिप्पणी ]

यहाँ नित्यकृत्यार्णव के अनुसार ''आचारचिन्तामणि का कहना है कि 'तर्पण वाक्य में अस्मत्पद लगाकर अर्थात् 'अस्मत्पिता' ऐसा वाक्य प्रयोग करना चाहिए । सम्बन्धि शब्द-पिता आदि-के कथन से ही अस्मत् (हमारे) शब्दार्थ का लाभ हो जायगा, यह शंका नहीं करनी चाहिए, क्योंकि पिता आदि सम्बन्धि पद साथ में कहे गए 'अस्मत्' पद आदि के अर्थ से अन्वित (सम्बद्ध) होकर ही अपने अर्थ का बोध क होता है । प्रकृत में तर्पणकर्त्ता के वाचक किसी पद का कथन तो किया जाता नहीं,

अतः 'अस्मत्' पद जोड़ना चाहिए । अतएव कल्पतरुने भी ऐसा ही कहा है' । द्वैतपरिशिष्ट में कल्पतरु के अनुसार 'ओमद्यामुकसगोत्रास्मत्पिता अमुकशर्मा तृप्यतामिदं सतिलोदकं स्वधा नमः, ऐसा तर्पण वाक्य कहा गया है । उक्त कल्पतरुग्रन्थ पर रत्नाकार का आपेक्ष है कि तर्पण वाक्य में 'अस्मत्' शब्द तथा 'स' शब्द का प्रयोग नहीं होना चाहिए क्योंकि ऐसा करने में कोई प्रमाण नहीं है । दूसरी बात, पिता आदि सम्बन्धि पद से ही 'अस्मत्' पदार्थ का लाभ हो जाता है । यहीं वर्धमान के आह्निक ग्रन्थ का कथन है कि कल्पतरु प्रदर्शित प्रयोग में सकार मात्र का त्याग हो । ऐसा ही मेरे परमगुरू ने भी माना है ।''

यहाँ नि. र. टिप्पणी का कहना है कि तर्पण वाक्य में 'अस्मत्पिता' पद को जोड़ने वाले लोग भ्रान्त (भ्रम में पड़े हुए) हैं; क्योंकि पिता आदि पद के कथन से ही मेरे पिता आदि अर्थ का बोध हो जाता है । जैसा कि महाभाष्यने भी कहा है–'माँ के साथ अच्छा वर्तावं रखना चाहिए या पिता की सेवा करनी चाहिए' इन भावों को समझाने के लिए कोई भी नहीं कहता है कि अपनी माँ, या अपने पिताजी......आदि । सम्बन्धी पिता आदि पदों का ही स्वभाव है कि जिसकी जो माँ होती है या पिता हो है, उसी का ज्ञान होता है ।

दूसरी बात, ''हे मेरे पितृगण । आप यहाँ आ जाइए और मेरे द्वारा दी जाने वाली जलाञ्जलियाँ ग्रहण करें'' ऐसे वाक्य के द्वारा जब अपने ही पितरों का आवाहन कर लिया गया हो तो फिर 'अस्मत्पि' आदि पद जोड़ने का क्या तुक हो गया ?

तीसरी बात, श्राद्ध के समय पितरों के आवाहन मन्त्र ''एत पितरः सोम्यास आवह पितॄन् हविषः'' आदि श्रुतिवाक्य में 'अस्मत्' आदि पदों का प्रयोग नहीं किया गया है ।

पुनः नित्यकृत्यार्णव में उद्धृत आचारविवेक का कहना है 'जिनकी माँ जीवित हों उन्हें मृत पितामही आदि के तर्पण करने का अधिकार नहीं है, ऐसा कहनेवालों का यह अति स्थूल प्रमाद है । क्योंकि ''यदि स्याज्जीवपितृकः'' आदि योगियाज्ञवल्क्य के वचनानुसार पिता के मर जाने के बाद ही पुत्र मृतपितामही आदि सकल बान्धवों के तर्पण का अधिकारी हो जाता है । अतः किसी के भी तर्पण के अधिकार में माता का मरना या न मरना कुछ भी कारण नहीं कहा जा सकता है । क्योंकि कि इसमें कोई प्रमाण नहीं है । इति ।

## [ हिन्दी टीका ]

काला गेरुआ आदि वस्त्र न लगाकर, नाहीं माथा ढककर दोनों घुटनों के बीच हाथकर सव्य एवं पूर्वमुंह (या उत्तर या ईशान कोण की ओर मुंह करके) हो द्विराचमन

कर दाहिने हाथ में कुश की पवित्री पहन कर अंगुलियों के अग्रभाग रूप देवतीर्थ पीछे से बायें हाथ से संलग्न-दाहिने हाथ अथवा अञ्जलि तथा जौ सहित तेकुशा से, स्थल हो तो बैठकर दाहिना घुटना गिराकर पवित्र भूमि पर बिछे पूर्वाग्र तेकुशा (कुशत्रय) के ऊपर, स्थल अशुचि हो तो स्थलस्थ होकर भी जल में कुशास्तरण के विना ही, जल में तर्पण करने की परिस्थिति हो तो नाभि प्रमाण जल या इसके अभाव में घुटने से ऊपर वाले जल में भी खड़ा होकर 'ॐ तर्पणीया देवा आगच्छन्तु' इस मन्त्र से तर्पणीय देवों का आवाहन कर (१) ॐ ब्रह्मा तृप्यताम, (२) ॐ विष्णु स्तृप्यताम्, (३) ॐ रुद्रस्तृप्यताम् (४) ॐ प्रजापतिस्तृप्यताम्, (५)

ॐ देवा यक्षास्तथा नागा गन्धर्वाऽप्सरसोऽसुराः ।
क्रूराः सर्पाः सुपर्णाश्च तरवो जृ (ज)म्भकाः खगाः ॥
विद्याधरा जलाधारास्तथैवाकाशगामिनः ।
निराधाराश्च ये जीवाः पापे धर्मे रताश्च ये ॥
तेषामाप्यायनायैतद्दीयते सलिलं मया ॥

इन प्रत्येक मन्त्र से क्रमशः एक एक अञ्जलि द्वारा ब्रह्मा आदि देवों का तर्पण करें।

अनन्तर निवीती (कण्ठावलम्बित यज्ञोपवीत वाला) तथा उत्तर मुख हो कानी अंगुलि के मूल देश रूप प्रजापतितीर्थ से उत्तराग्र बिछे हुए तेकुशा पर 'ॐ सनकादय आगच्छन्तु' इस मन्त्र से आवाहन कर

ॐ सनकश्च सनन्दश्च तृतीयश्च सनातनः ।
कपिलश्चासुरिश्चैव वोढुः पञ्चशिखस्तथा ॥
सर्वे ते तृप्तिमायान्तु मद्दत्तेनाम्बुना सदा ।

इस मन्त्र से एक ही बार में एक अञ्जलि से सनक आदि सात मनुष्यों का तर्पण करें। (यहाँ ज्ञातव्य है कि ॐ सनकस्तृप्यताम् ॐ सनन्दस्त् प्यताम् इत्यादि तर्पण वाक्य कातीय तर्पण कल्प में ही होंगे।)

बाद में पुनः पूर्वाभिमुख एवं सव्य हो देवतीर्थ से पूर्ववत्, 'ॐ मरीच्यादय आगच्छन्तु' इस मन्त्र से आवाहन कर (१) ॐ मरीचिस्तृप्यताम् (२) ॐ

अत्रिस्तृप्यताम् (३) ॐ अङ्गिरास्तृप्यताम्, (४) ॐ पुलस्त्यस्तृप्यताम्, (५) ॐ पुलहस्तृप्यताम् (६) ॐ क्रतुस्तृप्यताम्, (७) ॐ प्रचेतास्तृप्यताम्, (८) ॐ वसिष्ठस्तृप्यताम्, (९) ॐ भृगुस्तृप्यताम्, (१०) ॐ नारदस्तृप्यताम्, इन प्रत्येक वाक्य से क्रमशः दसों ऋषियों का भी यव मिश्रित जल से तर्पण करें।

अनन्तर दक्षिण मुंह तथा अपसव्य हो बायें घुटने को भूमिपर गिराकर, स्थलपर संभव हो तो दक्षिणाग्र कुशों वाली पवित्र भूमि पर, शुचि भूमि के अभाव में जल में , (दाहिने हाथ की अनामिका या मध्यमा अंगुलि में पवित्री पहन कर) अंगूठे से अनवरुद्ध दाहिने हाथ की तर्जनी और अंगूठे के मध्यदेश रूप पितृतीर्थ से, अञ्जलि में स्थित सोना-चाँदी-ताम्बे या गैंडा (हिंस्रक जन्तु विशेष) के सींग से बने पात्र के द्वारा इनके अभाव में इन्हीं में से बने किसी के कील (क) के द्वारा इनके भी अभाव में केवल अञ्जलि से भी, दाहिने हाथ में मोटक रूप कुश लेकर पृथ्वी पर स्थापित दक्षिणाग्र कुशत्रय पर, जलाशय से निकाले गए जल से तर्पण करना हो तो जलपात्र के जल में ही तिल गिराकर × या यदि जलाशय के जल से करना हो तो बायें हाथ से रखे गये तिल (काले) से मिले हुए तथा दाहिने हाथ के पितृतीर्थ से लिए जल का त्याग करें। इसका क्रम इस प्रकार से होगा कि 'ॐ अग्निष्वात्तादय आगच्छन्तु' इस वाक्य से आवाहन कर

(१) ॐ अग्निष्वात्तास्तृप्यन्तामिदं तिलोकदं तेभ्य:स्वधा नमः। ३।

(२) ॐ सौम्यास्तृप्यन्तामिदं तिलोदकन्तेभ्यः स्वधा नमः।। ३।

(३) ॐ हविष्मन्तस्तृप्यन्तामिदं तिलोदकन्तेभ्यः स्वधा नमः। ३।

(४) ॐ उष्मपास्तृप्यन्तामिदन्तिलोद कन्तेभ्यः स्वधा नमः। ३।

(५) ॐ सुकालिनस्तृप्यन्तामिदन्तिलोदकन्तेभ्यः स्वधा नमः। ३॥

(६) ॐ बर्हिषदस्तृप्यन्ता मिदन्तिलोदकन्तेभ्यः स्वधा नमः। ३॥

(७) ॐ आज्यपास्तृप्यन्तामिदन्तिलोदकन्तेभ्यः स्वधा नमः। ३॥

---

×इस पक्ष में जलदान करते समय दान वाक्यों में इदं तिलोदकम् अथवा अञ्जलि या अर्घपात्र के जल में तिल मिलाने वाले पक्ष में 'सतिलं जलम्' का पयोग शिष्ट जन करते आ रहे हैं। तर्पणकर्त्ता को स्थिति के अनुसार ऊह कर लेना चाहिए।

इन प्रत्येक मन्त्र से सातों दिव्य पितृगणों का तीन-तीन अञ्जलियों से तर्पण कर, सकल जन्मों के पापक्षय की कामनावाले तीन-तीन अञ्जलियों से किन्तु निष्काम व्यक्ति एक-एक अञ्जलि से चौदहों यमों का ॐ यमादय आगच्छन्तु, इस मन्त्र से आवाहन कर निम्नलिखित एक एक मन्त्र से तर्पण करे। यथा-

(१) ॐ यमाय नमः। (२) ॐ धर्मराजाय नमः। (३) ॐ मृत्यवेनमः। (४) ॐ अन्तकाय नमः। (5) ॐ वैवस्वतायनमः। (६) ॐ कालाय नमः। (७) ॐ सर्वभूतक्षयाय नमः। (८) ॐ औदुम्बराय नमः। (९) ॐ दध्नाय नमः (१०) ॐ नीलाय नमः। (११) ॐ परमेष्ठिने नमः। (१२) ॐ वृकोदराय नमः। (१३) ॐ चित्राय नमः। (१४) ॐ चित्रगुप्ताय नमः॥

इसके बाद -"ॐ चतुर्दशैते यमाः स्वस्ति कुर्वन्तु तर्पिताः" यह प्रार्थनावाक्य भी पढ़ लें। इसके बाद "ॐ आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम्" इस मन्त्र से अपने मृत पितरों का आवाहन कर पितृपक्षीय तीन पुरुषों तथा मातृपक्षीय तीन पुरुषों (पितरों) का तीन-तीन अञ्जलियों से तर्पण करें। पहली अञ्जलि चार अंगुलि ऊपर, द्वितीय अञ्जलि आठ अंगुल ऊपर, तथा तीसरी अञ्जलि बारह अंगुल ऊपर से होनी चाहिए। वाक्य इस प्रकार होंगे-

(१) ॐ अद्यामुकगोत्रः पिताऽमुकशर्मा तृप्यमामिदं जलं सतिलं तस्मै स्वधा। ३।

(२) ॐ अद्यामुकगोत्रः पितामहोऽमुकशर्मा तृप्यतामिदं .........।

(३) ॐ अद्यामुकगोत्रः प्रपितामहोऽमुकशर्मा तृप्यतामिदं .........।

मिलित इन तीनों के उद्देश्य से 'ॐ तृप्यध्वं तृप्यध्वं तृप्यध्वम्' ऐसा पढ़कर तीन अञ्जलियाँ दे।

(४) ॐ अद्यामुकगोत्रो मातामहोऽमुकशर्मा तृप्यतामिदं जलं सतिलं तस्मै स्वधा। ३।

(५) ॐ अद्यामुकगोत्रः प्रमातामहोऽमुकशर्मा तृप्यतामिदं ........।

(६) ॐ अद्यामुकगोत्रो वृद्धप्रमातामहोऽमुकशर्मा तृप्यतामिदं .........।

यहाँ भी पूर्ववत् ॐ तृप्यध्वम् आदि मन्त्र से मिलित तर्पण होगा। इसके बाद इनकी स्त्रियों का एक-एक अञ्जलि से तर्पण करें। यथा–

(१) ॐ अद्यामुकगोत्रा माताऽमुकी देवी तृप्यतामिदं जलं सतिलं तस्यै स्वधा ।१।

(२) ॐ अद्यामुकगोत्रा पितामही अमुकी देवी तृप्यतामिदं .........।

(३) ॐ अद्यामुकगोत्रा प्रपितामही अमुकी देवी तृप्यतामिदं.........।

(४) ॐ अद्यामुकगोत्राः मातामही अमुकी देवी तृप्यतामिदं.........।

(५) ॐ अद्यामुकगोत्रः प्रमातामही अमुकी देवी तृप्यतामिदं .......।

(६) ॐ अद्यामुकगोत्रा वृद्धप्रमातामही अमुकी देवी तृप्यतामिदं .........।

ॐ अद्यामुकगोत्रः (गोत्रा) आचार्यः, गुरुः, पितृव्यः मातुलादिः अमुकशर्मा (अमुकी देवी) तृप्यतामिदं जलं सतिलं तस्यै (तस्यै) स्वधा (१) आदि वाक्यों के द्वारा आचार्य (आचार्याणी, आचार्या), गुरु (गुरुपत्नी), पितृव्य (पितृव्या) (चाचाचाची), मातुल, मातुलानी(मामा मामी) आदि का भी एक-एक अञ्जलि से तर्पण करे अन्त में –

**ॐ येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः ।**

**ते[1] तृप्तिमखिला यान्तु यश्चाऽस्मत्तोऽभिवाञ्छति ॥**

(जो मेरे बान्धव से इतर या बान्धव हों या अन्य जन्म के बान्धव हों तथा मुझ से जलाञ्जलि चाहते हों वे सभी इस जलाञ्जलि से तृप्त हों) इस मन्त्र से पितृविधि से ही एक जलाञ्जलि द्वारा तर्पण करे। अनन्तर–

**ॐ ये (के) चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः ।**

**ते पिबन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥**

(जो हमारे कुल में अपुत्र गोत्री मर चुके हैं वे मेरे द्वारा दिये गए वस्त्र निष्पीड़ित जल पियें अर्थात् इस जल से तृप्त हों।)

---

पाठा० (१) ते सर्वेतृप्तिमायान्तु मया दत्तेन वारिणा।

इस मन्त्र द्वारा पूर्वोक्तरीति से कुशत्रय (तेकुशा) वाली भूमि पर उच्छिष्टभागी जीवों (असंस्कृत प्रमीत आदि) के उद्देश्य से स्नान वस्त्र के निचोड़े हुए जल का त्याग कर दे। अनन्तर आचमन कर अञ्जलि में (सम्भव हो तो तिल और पुष्प सहित) जल ले कर–

**ॐ नमो विवस्वते ब्रह्मन् भास्वते विष्णु-तेजसे।**

**जगत्सवित्रे शुचये सवित्रे कर्मदायिने।**

एषोऽर्घः भगवते श्रीसूर्याय नमः' कहकर सूर्य भगवान् को तीन बार अर्घ देकर नमस्कार कर ले।

यहाँ नित्यकृत्यरत्नमाला टिप्पणी के अनुसार ऊपर से ज्ञातव्य है कि पिता आदि सकल सम्बन्धियों के तर्पण के बाद और 'येऽबान्धवाः' इत्यादिश्लोक पढ़कर होने वाले काम्य तर्पण के पूर्व में ये दो श्लोक–

**आब्रह्मस्तम्बपर्यन्तं देवर्षि-पितृ-मानवाः।**

**तृप्यन्तु पितरः सर्वे मातृ-मातामहादयः॥ १॥**

**अतीत-कुल-कोटीनां सप्तद्वीपनिवासिनाम्।**

**आब्रह्मभुवनाल्लोकादिदमस्तु तिलो (कुशो) दकम्॥ २॥**

(अर्थात्-ब्रह्माजी से लेकर कीटों तक जितने जीव हैं, वे तथा देवता, ऋषि, पितर, मनुष्य और माता, नाना आदि पितृगण-ये सभी तृप्त हों; मेरे कुल की बीती हुई करोडों पीढ़ियों में उत्पन्न हुए जो जो पितर ब्रह्मलोकपर्यन्त सात द्वीपों के भीतर कहीं भी निवास करते हों, उनकी तृप्ति के लिए मेरा दिया हुआ यह तिल (कुश) मिश्रित जल उन्हें प्राप्त हों) पढ़कर कितने लोग यह तीसरा–'येऽबान्धवाः' इत्यादि श्लोक पढ़ते हैं, 'पर यह युक्ति संगत नहीं। क्यांकि ये दोनों श्लोक पद्मपुराण में न देखे जाने, अङ्गबहिर्भूत क्रिया की आपत्ति हो जाने तथा निर्मूल रहने के कारण शिष्टजन नहीं पढ़ते हैं।

वास्तव में देखा जाय तो उक्त दोनों श्लोकों के साथ ही 'येऽबान्धवाः' श्लोक पढ़कर काम्यतर्पण करते हुए कितने लोग आज भी देखे जा रहे हैं। अतः इस आधार से पद्मपुराण से अन्यस्थल का भी मूल अन्वेषणीय तथा अनुमेय है। फिर भी मिथिलापुस्तक केन्द्र दरभंगा से प्रकाशित एवं डा० रवीन्द्र नारायण झा द्वारा संकलित वाजसनेयिकृत्य सम्बन्धी 'सदाचार' पुस्तक तथा गीता प्रेस गोरखपुर से प्रकाशित

नित्य कर्म प्रयोग सतरहवें संस्करण में 'आब्रह्मस्तम्ब' आदि दोनों श्लोकों के साथ 'येऽबान्धवाः' श्लोक का उल्लेख देखा जा रहा है। इसी तरह प. सुरेश मिश्र कृत तथा मधुवनी से प्रकाशित नित्यकर्म पद्धति (वाजासनेयिकृत्य) पुस्तक और स्व० पण्डित भुवनेश्वर झा सङ्कलित तथा प० श्री सुरेन्द्र झा सुमन द्वारा सम्पादित सदाचार पुस्तक में भी उक्त तीनों ही श्लोक पाये जा रहे है।

वस्त्रपरिधान (पहनना) शूद्रों का द्विजाति के जैसे ही होगा। किन्तु तिलक-अर्धचन्द्र के आकार का होगा। नित्यकृत्यार्णव के लेखानुसार शूद्र तथा विधवा स्त्रियों के लिए प्रणव (ओंकार) तथा स्वधा से वर्जित यह पद्मपुराणीय तर्पण कृत्य होगा। यथा– पूर्व मुंह हो देवविधि से एक अञ्जलिसे ब्रह्मा तृप्यताम्, रुद्रस्तृप्यताम् इसक्रम से ब्रह्मा आदि चारों देवों का तर्पण कर। देवायक्षाः' इत्यादि ढाई श्लोकवाले एक ही मन्त्र से देवादि का, उत्तर मुंह हो प्रजापति तीर्थ से सनकश्च' आदि डेढ श्लोकवाले मन्त्र से सनक सनन्द आदि सातों मनुष्यों का, पुनः पूर्व मुंह हो देवविधि से मरीचिस्तृप्यताम् आदि वाक्यों द्वारा मरीचि से नारद पर्यन्त का एक ही अञ्जलि से तर्पण कर दक्षिणमुह हो पितृतीर्थ से अग्निष्वात्तास्तृप्यन्तामिदंजलं सतिलं (तिलोदक वा) तेभ्योनमः' इस क्रम से औंकर तथा स्वधाशब्द वर्जित कर तर्पण करे। यामाय नमः आदिवाक्यों द्वारा यम से चित्रगुप्त पर्यन्त का तर्पण कर–अदयामुक गोत्रः पिताऽमुकदासस्तृप्यतामिदं सतिलं जलं तस्यै नमः इत्यादि क्रम से पिता माता आदि तथा मामा श्वशुर गुरुआदि का तर्पण कर इसी क्रम में पूर्व प्रदर्शित शेष कृत्य का भी आचरण करे।

विधवा स्त्रियों में ब्राह्मणी–नमोऽद्यामुकगोत्रः पिताऽमुकशर्मा तृप्यतामिदं जलं सतिलं (तिलोदकंवा) तस्मैनमः इत्यादि वाक्यों के द्वारा पितामह आदि पाँचों का तर्पण कर नमोऽद्यामुकगोत्रः पतिः अमुकशर्मा तृप्यतामिदं जलं सतिलं (इदं तिलोदकं वा) तस्मै नमः। १। इत्यादि क्रम से श्वशुर और परमश्वशुर का भी तर्पण करे। क्षत्रिया तो–नमोऽद्यामुकगोत्रः पिता अमुकवर्मा तृप्यताम् इत्यादि वाक्यों का प्रयोग करे। वैश्या तो नमोऽद्यामुकगोत्रः गोत्रा पिता अमुकदेवस्तृप्यताम् इत्यादि वाक्यों का प्रयोग करे। शूद्रा तो– नमोऽद्य काश्यपगोत्रः पिता अमुकदासः (माताऽमुकदेवी दासीवा) तृप्यताम् इत्यादि वाक्यों का प्रयोग करे।

यह पद्मपुराणीय तर्पण प्रयोग ग्रन्थकार के पूर्वविवेचनानुसार सर्वशाखिसर्ववर्ण-साधारण पद्मपुराणीय स्नान-प्रयोग के जैसे सर्वशाखिसाधारण और सर्ववर्ण-साधारण माना जायगा, क्योंकि संकोच में कोई प्रमाण नहीं कहा जा सकता है। यहाँ पद्मपुराणीय तर्पण प्रयोग प्रकरण समाप्त हुआ।

### [ टिप्पणी ]

## छन्दोगानां विष्णुपुराणीयतर्पणप्रयोगः

अत्र सामवेदि (छन्दोगा)-नां सौविध्यार्थं श्रीदत्ताह्निकग्रन्थानुसारि नित्य-कृत्यार्णव-'नित्यकृत्यरत्नमाला-प्रदर्शितो विष्णपुराणीयतर्पणप्रयोगः प्रदर्श्यते (पूर्वोक्त-देवविधिना)-ॐ देवास्तृप्यन्ताम् इति त्रिः। ॐ ऋषयस्तृप्यन्ताम् इति त्रिः। प्रजापतिस्तृप्यतांम् इति सकृत्। इति देवर्षितर्पणं कृत्वा पित्र्य-विधिना (दक्षिणाभिमुखः पातितवामजानुः पितृ-तीर्थेन सतिल-भुग्नकुशत्रयेण-मोटकेनऋजुकुशत्रयोपरि भूमौ) नित्यं सस्त्रीक-षट्पुरुषतर्पणं कृत्वा यथाऽव-काशमन्यानपि ज्येष्ठभ्रातृ-पितृव्य-मातुलादि-राज-पर्यन्तं तर्पयेत्। तद् यथा-(१) ॐ अद्यामुकगोत्रः पिताऽमुकशर्मा तृप्यतामिदं तिलोदकं (सतिलं जलं वा) तस्मै स्वधा (२) ॐ अद्यामुकगोत्रः पितामहोऽमुकशर्मा तृप्यतामित्यादिपूर्ववत्, (३) ॐ अद्यामुकगोत्रः पितामहोऽमुकशर्मा तृप्यतामित्यादि पूर्ववत्, (३) ॐ उद्यामुकगोत्रः प्रपितामहोऽमुकशर्मा तृप्यतामित्यादि पूर्ववत्, (४) ॐ अद्यामुकगोत्रो मातामहोऽमुकशर्मा तृप्यतामित्यादि, (५) ॐ अद्यामुक गोत्रः प्रमातामहोऽमुक शर्मा तृप्यतामित्यादि ०, (६) ॐ अद्यामुकगोत्रो वृद्धप्रमातामहोऽमुकशर्मा तृप्यतामित्यादि०, क्रमेण चतुरष्टादशाङ्गुलं द्वादशाङ्गुलं चोद्धृत्य षट्पुरुष-तर्पणं विधाय मात्रादि-राजपर्यन्तं सकृत्तर्पयेत्। यथा- (१) ॐ अद्यामुकगोत्रा माता अमुकी देवी तृप्यतामिदं तिलोदकं (सतिलं जलं वा) तस्यै स्वधा। (२) ॐ अद्यामुक गोत्रा पितामही अमुकी देवी तृप्यतामित्यादि०(३) ॐ अद्यामुकगोत्रा प्रपितामही अमुकी देवी तृप्यतामित्यादि सकृत् (४) ॐ अद्यामुकगोत्रा मातामही अमुकी देवी तृप्यतामिदमित्यादि सकृत् (५) ॐ अद्यामुकगोत्रा प्रमातामही अमुकी देवी तृप्यतामिदमित्यादि सकृत् (६) ॐ अद्यामुक गोत्रा वृद्ध-प्रमातामही अमुकी देवी तृत्यतामिदमित्यादि यथासाध्यमन्यानपि राजपर्यन्तं तर्पयेत्। ॐ येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः। ते तृप्तिमखिला यान्तु यश्चास्मत्तोऽभिवाञ्छति। इति पठित्वैकोऽञ्जलि र्देयः। ततो जलादुत्तीर्य शुष्कद्विवासा दक्षिणाऽभिमुखः स्नानशाटीं मृदा त्रिःसंशोध्य स्थले दक्षिणा ऽग्रकुशोपर्येव (प्राचीनावीती पूर्ववत्) असंस्कृत प्रमीतानुद्दिश्य स्नानीयं वासो

निष्पीडयेत् । तत्र मन्त्रः—

**ॐ ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः ।**
**ते पिबन्तु मया दत्तं वस्त्र निष्पीडनोदकम् । इति ॥**

॥ इति विष्णुपुराणीयतर्पण-प्रयोगः ॥

**[ हिन्दी टीका ]**

यहाँ सामवेदियों (छन्दोगों) की सुविधा के लिए उनका विष्णु पुराणीय तर्पण प्रयोग दिखाया जा रहा है । यथा- पूर्वोक्त देवविधि से ॐ देवास्तृप्यन्ताम् पढ़ कर तीनवार ॐ ऋषयस्तृप्यन्ताम्, पढ़ कर तीन बार ॐ प्रजापतिस्तृप्यताम् पढ़ कर एक बार जल देबकर तर्पण करे । बाद में पितृ विधि (दक्षिण मुंह एवम् अपसव्य हो वाया घुटना गिराकर तेकुशा पर मोटक से पितृतीर्थ के द्वारा अपने पूर्वज छह पुरुष तथा उनकी स्त्रियों—छह माताओं का क्रमशः छह—छह अंको से अंकित मन्त्र पढ़ कर पुरुष पक्ष में तीन अञ्जलियों से तथा माता पक्ष से लेकर आचार्य गुरु चाचा चाची मामा मामी आदि राजापर्यन्त का एक एक अञ्जलि से तर्पण करे । अनन्तर ॐ येऽबान्धवाः इत्यादि एक श्लोक पढकर एक अन्तिम अञ्जलि दे । इस के बाद 'ॐ ये चास्माकम्' इत्यादि श्लोक पढ़कर दक्षिणाग्र कुशवाली भूमि पर अपने स्नानवस्त्र का निचोड़ा हुआ जल फेक दे । यह हुआ छन्दोगों के लिए विष्णु पुराणीय तर्पण प्रयोग ।

## शूद्राणां विष्णुपुराणीयतर्पणप्रयोगः

अथ नित्यकृत्यार्णवानुसारं शूद्राणां विष्णुपुराणीयतर्पणप्रयोगः ।

यदि पद्मपुराणीयस्नानं न कुर्यात्तदा पूर्वोक्तविष्णुपुराणीयतर्पणमेव कुर्यात् । तद् यथा—देवास्तृप्यन्ताम् ३। ऋषयस्तृप्यन्ताम् । प्रजापतिस्तृप्यताम् १ । ततः पित्र्यविधिना षट्पुरुषतर्पणं ततस्तदीयस्त्रीषट्कतर्पणमुक्त प्रकारेणैव कुर्यात् । ततः काम्यपितृव्यादितर्पणम् । ततो देवविधिना—

**देवाः सुरास्तथा नागा यक्षाः गन्धर्वकिन्नराः ।**
**पिशाचा गुह्यकाः सिद्धाः कूष्माण्डास्तरवः खगाः॥**
**जले चरा भूनिलया वाट्वाधाराश्च जन्तवः ।**
**तृप्तिमेते प्रयान्त्वाशु मद्दत्तेनाम्बुनाऽखिलाः ॥**

इति प्रत्येकमञ्जलिं दद्यात् । ततो

"नरकेषु समस्तेषु यातनासु च ये स्थिताः ।
तेषामाप्यायनायैतद्दीयते सलिलम्मया" ॥

इत्यनेनैकमञ्जलिं दद्यात् । ततो यथोक्तविधिना वस्त्रं निष्पीड्याचम्य–

नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे ।
जगत्सवित्रे शुचये सवित्रे कर्मदायिने ॥

इति मन्त्रेण तिलपुष्पजलपूर्णमञ्जलिं कुशसहितं मूर्धपर्यन्तमुत्थाप्य सूर्याय दद्यादिति शूद्रतर्पणप्रयोगः । इति

विधवास्त्रीकर्त्तृकवाक्यप्रयोगस्त्वेत । दर्थं पूर्वप्रदर्शितलेखानुसारमेव बोध्यम् । किन्तु "देवविधिना चैतत्कर्तव्यम् । 'अम्बुददि' त्यभिधानाद्देवाद्युद्देश्येनाम्बु त्यजता 'देवाः सुराः' इत्यादि–मन्त्रः पठितव्य" इति तु च्छन्दोगाह्निकम् । अत्र नि० र० टिप्पणी तु "इदं देवासुरादितर्पणं काम्यं देवविधिना यथारुचि कार्यम् । अतएवाधुनातनाछन्दोगा नानुतिष्ठन्ति किन्त्वेतत्स्थाने पद्मपुराणीयं 'येऽबान्ध वा बान्धवा वे' ति अवसानाञ्जलिं पित्र्येण विधिना प्रयच्छन्ती" त्याह ।

[ हिन्दी ]

अब नित्यकृत्यार्णवानुसार शूद्र एवं विधवा स्त्रियों के लिए छन्दोग व्यक्तियों द्वारा आचरणीय विष्णुपुराणीय तर्पणप्रयोग ।

यदि पद्मपुराणीय स्नान न करना चाहे तो उसे विष्णुपुराणीय तर्पण ही करना चाहिए । यथा देवास्तृप्यन्ताम् ३। ऋषयस्तृप्यन्ताम् ३ । प्रजापतिस्तृप्यताम् १ । मन्त्र पढ़कर पूर्ववत् तर्पण करे । अनन्तर पितृविधि से पूर्ववत् छह पुरुष तथा इनकी स्त्रियों का पूर्व प्रकार से ही तर्पण करे । इसके बाद चाचा आदि का काम्य तर्पण करे । बाद में देवविधि से 'देवासुराः' से लेकर 'अम्बुनाऽखिलाः' पर्यन्त मन्त्र पढ़कर इन देवादि के उद्देश्य से एक अञ्जलिसे तर्पण करे । अनन्तर पुनः 'नरकेषु' से लेकर 'सलिलं मया' पर्यन्त मन्त्र पढ़कर एक अञ्जलि से तर्पण करे । पूर्व विधि के अनुसार स्नानवस्त्रको निचोड़ कर और आचमन कर 'नमो विवस्वते' से लेकर 'दायिने' पर्यन्त मन्त्र पढ़कर

मस्तक तक ऊपर उठाकर तिल पुष्प कुश सहित जल पूर्ण अञ्जलि सूर्य भगवान् को दे, यह हुआ शूद्रतर्पण-प्रयोग ।

विधवा स्त्रियों के द्वारा होने वाला प्रयोग इन्हीं के लिए पद्मपुराणीय तर्पण प्रयोग प्रकरण में दिखाये गये वाक्य प्रयोग के अनुसार ही समझे । इस तरह विधवास्त्री तर्पण प्रयोग प्रकरण भी समाप्त हुआ ।

## कातीयतर्पणप्रयोगः

### [ मूलम् ]

'ॐ ब्रह्मा तृप्यताम्, ॐ विष्णुस्तृप्यताम्, ॐ रुद्रस्तृप्यताम्, ॐ प्रजापतिस्तृप्यताम्, ॐ देवास्तृप्यन्ताम्, ॐ छन्दांसि तृप्यन्ताम्, ॐ वेदास्तृप्यन्ताम्, ॐ ऋषयस्तृप्यन्ताम्, ॐ पुराणाचार्यास्तृप्यन्ताम्, ॐ गन्धर्वास्तृप्यन्ताम्, ॐ इतराचार्यास्तृप्यन्ताम्, ॐ संवत्सरः सावयवस्तृप्यताम्, ॐ देव्यस्तृप्यन्ताम्, ॐ अप्सरसस्तृप्यन्ताम्, ॐ देवानुगास्तृप्यन्ताम्, ॐ नागास्तृप्यन्ताम्, ॐ सागरास्तृप्यन्ताम्, ॐ पर्वतास्तृप्यन्ताम्, ॐ सरितस्तृप्यन्ताम्, ॐ मनुष्यास्तृप्यन्ताम्, ॐ यक्षास्तृप्यन्ताम्, ॐ रक्षांसि तृप्यन्ताम्, ॐ पिशाचास्तृप्यन्ताम्, ॐ सुपर्णास्तृप्यन्ताम्, ॐ ओषधयस्तृप्यन्ताम्, ॐ भूतग्रामश्चतुर्विधस्तृप्यताम्, इति उपवीती प्राङ्मुख उदङ्मुखो वा देवतीर्थवर्त्तिना यवोदकेनोदकनैव वा तर्पयेत् ।

### [ संस्कृत टीका ]

ॐ ब्रह्मेति । कातीयसूत्रानुसारं दर्शितैतत्तर्पणप्रयोगस्यातिरोहितार्थतया हिन्दीभाषयैवार्थः प्रकाशयिष्यते ।

### [ हिन्दी टीका ]

उपवीती तथा पूर्व या उत्तर मुंह हो यव मिश्रित जल या जल से ही देवतीर्थ के द्वारा ॐ ब्रह्मा तृप्यताम् से लेकर ॐ भूतग्रामश्चतुर्विधस्तृप्यताम् पर्यन्त का एक-एक वाक्य पढ़ कर एक-एक अञ्जलि से तर्पण करे ।

### [ मूलम् ]

(१) ॐ मरीचिस्तृप्यताम्, (२) ॐ अत्रिस्तृप्यताम्, (३) ॐ अङ्गिरास्तृप्यताम्, (४) ॐ पुलस्त्यस्तृप्यताम्, (५) ॐ पुलहस्तृप्यताम्,

(६) ॐ क्रतुस्तृप्यताम्, (७) ॐ प्रचेतास्तृप्यताम्, (८) ॐ वसिष्ठस्तृप्यताम्, (९) ॐ भृगुस्तृप्यताम्, (१०) ॐ नारदस्तृप्यताम्, इति ऋषीन् देववत् ।

[ हिन्दी टीका ]

देवतर्पण के प्रत्येक तृप्यताम् के बाद एक-एक अञ्जलि से दशों ऋषियों का तर्पण करना चाहिए ।

[ मूलम् ]

ततः (१) ॐ संनकस्तृप्यताम्, (२) ॐ सनन्दस्तृप्यताम्, (३) ॐ सनातनस्तृप्यताम्, (४) ॐ कपिलस्तृप्यताम्, (५) ॐ आसुरिस्तृप्यताम्, (६) ॐ वोढुस्तृप्यताम्, (७) ॐ पञ्चशिखस्तृप्यताम्, इति मनुष्यान् निवीती कायतीर्थेनेति विशेषः ।

[ हिन्दी टीका ]

निवीती (कण्ठावलम्बितयज्ञोपवीतधारी) हो प्रजापति तीर्थ (कानी अंगुलि के मूल देश) से पूर्ववत् सनक आदि सातो मनुष्यों का तर्पण करे ।

[ मूलम् ]

ततोऽपसव्यः (१) ॐ कव्यवाट्तृप्यतामिदं तिलोदकं तस्मै स्वधा नमः । (२) ॐ नलस्तृप्यतामिदं तिलोदकं तस्मै स्वधा नमः । (३) ॐ सोमस्तृप्यतामिदं तिलोदकं तस्मै स्वधा नमः । (४) ॐ यमस्तृप्यतामिदं तिलोदकं तस्मै स्वधा नमः । (५) ॐ अर्यमा तृप्यतामिदं तिलोदकं तस्मै स्वधा नमः । (६) ॐ अग्निष्वात्तास्तृप्यन्तामिदं तिलोदकं तेभ्यः स्वधा नमः । (७) ॐ सोमपास्तृप्यन्तामिदं तिलोदकं तेभ्यः स्वधा नमः । (८) बर्हिषदस्तृप्यन्तामिदं तिलोदकं तेभ्यः स्वधा नमः इति दिव्यपितृन् प्राचीनावीती दक्षिणामुखः पातितवामजानुः सतिलजलाञ्जलित्रयेण पितृतीर्थेन तर्पयेत् ।

[ हिन्दी टीका ]

अनन्तर प्राचीनावीती (अपसव्य) तथा दक्षिणमुख हो अपने बायें घुटने को पृथ्वी पर गिराकर पितृतीर्थ (दाहिने हाथ की तर्जनी और अंगूठे का मध्यदेश) के द्वारा तिलसहित तीन तीन अञ्जलियों से ऊपर निर्दिष्ट एक एक वाक्य से आठो पितरों का (कुछ पितृगणों का भी ) तर्पण करे ।

[ मूलम् ]

ततः (१) ॐ यमाय नमः, (२) ॐ धर्मराजाय नमः, (३) ॐ मृत्यवे नमः, (४) ॐ अन्तकाय नमः, (५) ॐ वैवस्वताय नमः, (६) ॐ कालाय नमः, (७) ॐ सर्वभूतक्षयाय नमः, (८) ॐ उदुम्बराय नमः, (९) ॐ दध्नाय नमः, (१०) ॐ परमेष्ठिने नमः, (१२) ॐ वृकोदराय नमः, (१३) ॐ चित्राय नमः, (१४) ॐ चित्रगुप्ताय नमः, इति चतुर्दश-यमान् प्रत्येकं सतिलाञ्जलित्रयेण तर्पयेत् ।

[ हिन्दी टीका ]

ॐ यमाय नमः आदि वाक्यों द्वारा उक्त चौदहों यमों का तिल सहित तीन-तीन अञ्जलियों से तर्पण करें ।

[ मूलम् ]

"आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिमि"ति पितॄनावाह्य

(१) ॐ उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः । असुं य ईयुरवृका ऋतज्ञास्ते नोऽवन्तु पितरो हवेषु (यजुः १९ । ४९) ॐ अद्यामुकगोत्रः पिताऽमुकशर्मा तृप्यतामिदं जलं सतिलं तस्मै स्वधा, इति मन्त्रेण वाक्येन च प्रथममञ्जलिं पित्रे दद्यात् ।

(२) ॐ अङ्गिरसो नः पितरो नवग्वा अथर्वाणो भृगवः सोम्यासः । तेषां वयꣳ सुमतौ यज्ञियानामपि भद्रे सौमनसे स्याम । (यजुः १९ । ५०) इति मन्त्रेण वाक्येन च द्वितीयाञ्जलिं दद्यात् ।

(३) ॐ आयन्तु नः पितरः सोम्यासोऽग्निष्वात्ताः पथिभिर्देवयानैः । अस्मिन् यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान् । (यजु० । १९ । ५८) इति मन्त्रेण वाक्येन च तृतीयाञ्जलिं पित्रे दद्यात् ।

[ हिन्दी टीका ]

"ॐ आगच्छन्तु मे पितर इमं गृह्णन्त्वपोऽञ्जलिम्" इस मन्त्र से पितरों का आवाहन कर-

(१) ॐ उदीरतामवर से पितरो हवेषु तक का मन्त्र पढ़ कर तथा 'ॐ अद्यामुकगोत्रः पिता अमुकशर्मा तृप्यतामिदं जलं सतिलं तस्मै स्वधा' यह वाक्य पढ़कर (इस वाक्य में प्रथम अमुक स्थान में अपना गोत्र तथा द्वितीय अमुक स्थान में पिता का नांम बोलकर) पिता का प्रथम अञ्जलिसे तर्पण करे।

(२) 'ॐ अङ्गिरसो नः' 'सौमनसे स्याम' तक मन्त्र तथा पूर्ववत् वाक्य पढ़ कर द्वितीय अञ्जलि दे।

(३) '' ॐ आयन्तु नः' से ''त्वस्मान्'' तक मन्त्र तथा पूर्ववत् वाक्य पढकर पिता के उद्देश्य से तृतीय अञ्जलि दें।

गीता प्रेस गोरखपुर के प्रकाशनानुसार तर्पणप्रकरणीय वैदिक मन्त्रों के अर्थ क्रमशः उन उन स्थानों पर दिये जा रहे हैं।

आदिवाले अंकों के अनुसार क्रमशः मन्त्रार्थ–

इस लोक में स्थित, परलोक में स्थित और मध्य लोक में स्थित सोमभागी पितृगण क्रम से ऊर्ध्व लोकों को प्राप्त हों। जो वायु रूप को प्राप्त हो चुके हैं, वे शत्रुहीन सत्यवेत्ता पितर आवाहन करने पर (यहाँ उपस्थित हों) हम लोगों की रक्षा करें॥ १॥

अङ्गिरा के कुल, अर्थव मुनि के वंश में, तथा भृगुकुल में उत्पन्न हुए नवीन गतिवाले एवं सोमपान करने योग्य, हो हमारे पितर इस समय पितृलोक को प्राप्त हैं, उन यज्ञ में पूजनीय पितरों की सुन्दर बुद्धि में तथा उनके कल्याणकारी मन में हम स्थित रहें (अर्थात् उन की मन बुद्धि में हमारे कल्याण की भावना रहे॥ २॥

हमारे सोमपान करने योग्य अग्निष्वात्त (जिन के शरीर का अग्नि ने आस्वादन किया है अर्थात् इस लोक में मृत्यु के पश्चात् जिन का शरीर दग्ध किया गया है, वे अग्निष्वात्त हैं।) पितृगण देवताओं के साथ गमन करने योग्य मार्गों से यहाँ आवे और इस यज्ञ में स्वधा से तृप्त होकर हमें मानसिक उपदेश दें तथा वे हमारी रक्षा करें॥ ३॥

## [ मूलम् ]

(१) ॐ ऊर्जं वहन्तीरमृतं घृतं पयः कीलालं परिस्रुतम्। स्वधा स्थ तर्पयत मे पितॄन्। (यजुः २।३४)।

'ॐ अद्यामुकगोत्रः पितामहोऽमुकशर्मा तृप्यतामिदं जलं सतिलं तस्मै स्वधा' इति पितामहाय प्रथमंमञ्जलिं दद्यात्।

(२) ॐ पितृभ्यः स्वधायिभ्यः स्वधा नमः, पितामहेभ्यः स्वधायिभ्यः स्वधा नमः। अक्षन्पितरोऽमीमदन्त[१] पितरोऽतीतृपन्त पितरः पितरः शुन्धध्वम्। (यजुः १९।३६)इति मन्त्रेण वाक्येन च द्वितीयाञ्जलिम्।

(३) "ॐ ये चेह पितरो ये च नेह याँश्च विद्म याँ उ च न प्रविद्म त्वं वेत्थ यति ते जातवेदः स्वधाभिर्यज्ञ ँ सुकृतं जुषस्व, (यजुः १९।६७) इति मन्त्रेण वाक्येन च तृतीयाञ्जलिं दद्यात्।

[ हिन्दी टीका ]

(१) 'ॐ ऊर्जम् से' 'मे पितृन्' तक मन्त्र तथा ॐ अद्यामुकगोत्रः से 'तस्मै स्वधा' पर्यन्त वाक्य ( इसमें पहले अमुक स्थान पर अपना गोत्र तथा द्वितीय अमुक स्थान पर पितामह (दादा) का नाम जोड़कर) पढ़कर पितामह को प्रथम अञ्जलि दे।

(२) 'ॐ पितृभ्यः' से 'शुन्धध्वम्' पर्यन्त मन्त्र तथा पूर्ववाक्य पढ़कर द्वितीय अञ्जलि दे।

(३) 'ॐ ये चेह' से 'जुषस्व' तक मन्त्र तथा पूर्व वाक्य पढ़कर तीसरी अञ्जलि दे।

**क्रमशःमन्त्रार्थ–**

हे जल! तुम स्वादिष्ट अन्न के सारभूत रस, रोग-मृत्यु को दूर करने वाले घी और सब प्रकार का कष्ट मिटाने वाले दुग्ध का वहन करते हो तथा सब और प्रवाहित होते हो, अतंएव तुम पितरों के लिए हवि स्वरूप हो, इसलिए मेरे पितरों को तृप्त करो ॥ १ ॥

स्वधा (अन्न) के प्रति गमन करने वाले पितरों को स्वधा ('स्वधा वै पितृणामन्नम्' इति श्रुतेः) संज्ञक अन्न प्राप्त हो, उन पितरों को हमारा नमस्कार है। स्वधा के प्रति जानेवाले पितामहों को स्वधा प्राप्त हो, उन्हें हमरा नमस्कार है। स्वधा के प्रति गमन करने वाले प्रपितामहों को स्वधा प्राप्त हो; उन्हें हमरा नमस्कार है। पितर पूर्ण आहार कर चुके, पितर आनन्दित हुए, पितर तृप्त हुए। हे पितरो! अब आप लोग (आचमन आदि कर के) शुद्ध हों ॥ २ ॥

---

पाठा० (१) मदन्तः पितरस्तृप्यन्तु।

जो पितर इस लोक में वर्तमान है और जो इस लोक में नहीं (किन्तु पितृलोक में विद्यमान) हैं तथा जिन पितरों को हम जानते हैं ओर जिनको (स्मरण न होने के कारण) नहीं जानते हैं; वे सभी पितर जितने हैं उन सव को हे जातवेदा-अग्नि देव ! तुम जानते हो। (पितरों के निमित्त दी जाने वाली) स्वधा के द्वारा तुम इस श्रेष्ठ यज्ञ का सेवन करो-इसे सफल बनाओ ॥ ३ ॥

[मूलम्]

(१) ॐ मधु वाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः। (यजुः - १३।२७) ॐ अद्यामुकगोत्रः प्रपितामहोऽमुकशर्मा तृप्यतामिदं जलं सतिलं तस्मै स्वधा' इति मन्त्रेण वाक्येन च प्रपितामहाय प्रथमाञ्जलिं दद्यात् ।

(२) ॐ मधु नक्तमुतोषसो मधुमत्पार्थिव ँ रजः । मधु द्यौरस्तु नः पिता । (यजुः १३।२८) इति मन्त्रेण वाक्येन च द्वितीयाञ्जलिम्।

(३) ॐ मधुमान्नो वनस्पति मधुमाँ अस्तु सूर्यः । माध्वी र्गावो भवन्तु नः। (यजुः १३।२९) इति मन्त्रेण वाक्येन च तृतीयाञ्जलिं प्रपितामहाय दद्यात् ।

[हिन्दी टीका]

(१) ''ॐ मधुवाता ''से'' सन्त्वोषधीः'' तक मन्त्र तथा 'ॐ अद्यामुक गोत्रः प्रपितामहः अमुकशर्मा तृप्यतामिदं जलं सतिलं तस्मै स्वधा' यह वाक्य (यहाँ भी प्रथम अमुक स्थान पर अपना गोत्र दूसरे पर प्रपितामाह का नाम जोड़ दें) पढ़कर प्रपितामह को प्रथम अञ्जलि दें।

(२) 'ॐ मधु नक्त' से 'नः पिता' तक मन्त्र तथा पूर्व वाक्य पढ़कर द्वितीय अञ्जलि दे ।

(३) ''ॐ मधुमान्नो'' से ''भवन्तु नः'' तक मन्त्र तथा पूर्व वाक्य पढ़कर प्रपितामह को तीसरी अञ्जलि दें ।

[मन्त्र का हिन्दी अर्थ]

यज्ञ की इच्छा करनेवाले यजमान के लिए वायु मधु (पुष्परस-मकरन्द) की वर्षा करती है। बहनेवाली नदियाँ मधु के समान मधुर जल का स्रोत बहाती है । समस्त ओषधियाँ हमारे लिए मधुर रस से युक्त हों ॥ १ ॥

हमारे रात-दिन सभी मधुमय हों। पिता के समान पालन करनेवाला द्युलोक हमारे लिए मधुमय-अमृतमय हो। माता के समान पोषण करनेवाली पृथ्वी की धूल हमारे लिए मधुमयी हो ॥ २ ॥

वनस्पति और सूर्य भी हमारे लिए मधुमान् (मधुर रस से युक्त) हों। हमारी समस्त गौएँ माध्वी-मधु के समान दूध देनेवाली हों ॥ ३ ॥

[ मूलम् ]

ॐ तृप्यध्वं तृप्यध्वं तृप्यध्वम् इति पित्रादिभ्योऽञ्जलित्रयं दद्यात्।

[ हिन्दी टीका ]

उक्त मिलित तीनों पितरों के उद्देश्य से ॐ तृप्यध्वम्, तृप्यध्वं तृप्यध्वम्, क्रमशः तीन अञ्जलियाँ दें।

[ मूलम् ]

"ॐ नमो वः पितरो रसाय, नमो वः पितरः शोषाय, नमो वः पितरो जीवाय, नमो वः पितरः स्वधायै, नमो वः पितरो घोराय, नमो वः पितरो मन्यवे। नमो वः पितरः पितरो नमो वो गृहान्नः पितरो दत्त सतो वः पितरो देष्मैतद्वः[1] पितरो वासः" (यजुः २।३२) इति मन्त्रं पठित्वा 'ॐ अद्यामुकगोत्रो मातामहोऽमुकशर्मा तृप्यतामिदं जलं सतिलं तस्मै स्वधा' इति मातामहायाञ्जलित्रयं दद्यात्। एवं प्रमातामहाय वृद्धप्रमातामहाय च।

[ हिन्दी टीका ]

'ॐ नमो वः' से 'पितरो वासः' तक मन्त्र एक ही बार पढ़कर तथा 'ॐ अद्यामुकगोत्रो मातामहोऽमुकशर्मा तृप्यतामिदं जलं सतिलं तस्मै स्वधा' यह वाक्य (यहाँ पहले अमुक स्थान पर मातामह का गोत्र तथा दूसरे पर मातामह का नाम) जोड़कर एक ही बार या तीन बार पढ़कर मातामह (नाना) का तीन अञ्जलि से तर्पण करे। अनन्तर इसी तरह प्रमातामह (परनाना) तथा वृद्ध प्रमातामह (बूढ़ा परनाना) का नाम शर्मा शब्द के पूर्व जोड़कर इन दोनों का भी क्रमशः तीन तीन अञ्जलिदान से तर्पण करें।

---

(१) क्वचिद् 'देष्म' पर्यन्तमेवोद्धृतो विद्यते पाठः।

[ मन्त्र का हिन्दी अर्थ ]

हे पितृगण ! तुमसे सम्बन्ध रखने वाली रसस्वरूप वसन्तऋतु को नमस्कार है, शोषण करने वाला ग्रीष्म ऋतु को नमस्कार है, जीवन स्वरूप वर्षा ऋतु को नमस्कार है, स्वधारूप शरद् ऋतु को नमस्कार है, क्रोध स्वरूप शिशिर ऋतु को नमस्कार है । [अर्थात् तुम से सम्बन्ध रखनेवाली सभी ऋतुएँ तुम्हारी कृपा से सर्वथा अनुकूल होकर सब को लाभ पहुँचाने वाली हों] हे षड्ऋतुरूप ('षड्वा ऋतवः पितरः इति श्रुतेः) उत्तम गृह प्रदान करो । हे पितृगण इन प्रस्तुत दातव्य वस्तुओं को हम तुम्हें अर्पण करते हैं, तुम्हारे लिए यह (सूत्ररूप) वस्त्र है, इसे धारण करो ॥ ३ ॥

[ मूलम् ]

ततः, ॐ अद्य अमुकगोत्रा माता अमुक देवी तृप्यतामिदं जलं सतिलं तस्यै स्वधेति मातरम् । एवमेव पितामही-प्रपितामही-वृद्धप्रमातामहीस्तर्पयेत् ।

[ हिन्दी टीका ]

इसके बाद 'ॐ अद्य अमुकगोत्रा माता अमुक देवी तृप्यतामिदं जलं तस्यै स्वधा' यह वाक्य मात्र, न कि इसमें कोई मन्त्र भी पढ़ा जाता है किन्तु पूर्ववत् दोनो अमुक स्थान पर अपना गोत्र, तर्पणीय स्त्री का नाम लेकर पितामही (दादी), प्रपितामही (पर दादी) का भी, साथ ही पहले अमुक स्थान पर नाना के गोत्र का तथा द्वितीय अमुक स्थान पर तर्पणीय स्त्री का नाम लेकर मातामही (नानी) प्रमातामहनी (परनानी) एवं वृद्ध प्रमातामही (बूढ़ी परनानी) का एक एक अञ्जलि से तर्पण करे । (यहाँ के पूर्व वाक्य प्रयोग पद्मपुराणीय तर्पण प्रयोग प्रकरण से स्पष्ट रूप में अवगत करें ।)

[ मूलम् ]

ततः, आचार्यादीन्नाम-गोत्र-स्वधाकारैस्तर्पयेत् ।

[ हिन्दी टीका ]

इसके बाद आचार्य,गुरु, चाचा, मामा आदि तथा इनकी स्त्री आदि का भी नाम, गोत्र तथा स्वधा शब्द जोड़कर एक-एक अञ्जलि से तर्पण करे ।

❀ इतिं कातीय-तर्पण-प्रयोगः ❀

## तर्पणावश्यकर्तव्यता

### [ मूलम् ]

अथ तर्पणावश्यकर्तव्यता । विष्णुपुराणे –

इदञ्चापि ज़पेदम्बु ददद्दात्मेच्छया नृप ।
उपकाराय भूतानां कृतदेवादितर्पणः ॥

देवासुरास्तथा यक्षा नागा गन्धर्वराक्षसाः ।
पिशाचा गुह्यकाः सिद्धाः कूष्माण्डास्तरवः खगाः ॥

जलेचरा भूनिलया वाय्वाधाराश्च जन्तवः ।
प्रीतिमेते प्रयान्त्वाशु मद्दत्तेनाम्बुनाऽखिलाः ॥
नरकेषु समस्तेषु यातनासु च ये स्थिताः ।
तेषामाप्यायनायैतद्दीयते सलिलं मया ॥

येऽबान्धवा बान्धवा वा येऽन्यजन्मनि बान्धवाः ।
ते तृप्तिम खिला यान्तु यश्चास्मत्तोऽभिवाञ्छति ॥

इदञ्च काम्यतर्पणमेभिरेव श्लोकैर्देवविधिना कर्तव्यम् ।

### [ संस्कृत टीका ]

इदञ्चेति । हे नृप, कृतदेवादितर्पणः=सम्पादितदेवमनुष्यर्षि–पित्रादि–तर्पणः । भूतानाम्=प्राणिनाम् । उपकाराय=तृप्तये । आत्मेच्छया=स्वेच्छया । अतएव काम्यमिदं तर्पणम् । अम्बु=जलम् । ददत्=प्रयच्छन् । इदञ्चाऽपि=देवासुरा इत्यादिकम् । जपेत्=पठेत् ।

अत्र "देवविधिना चैतत्कर्तव्यम् । अम्बु ददद्दित्यभिधानाद् देवाद्युद्देश्येनाम्बु त्यजता 'देवासुराः' इत्यादि मन्त्रः पठितव्यः" इतिच्छन्दोगाह्निकम् । मुख्यतः देवादीनां तर्पणीयत्वाद्देवविधिना जलं दद्यादिति भावः ।

"अत्र मयेत्यन्तः सव्येन । पद्मपुराणे अपसव्योत्तरमभिधानेन सम्बन्ध्यसम्ब–न्धिप्रमीतोद्देश्यकत्वेन च "येऽबान्धवा" इत्यादिरपसव्येन कार्यः। नरकेष्वित्यादौ

नरकोत्तीर्णा इहलोके वर्तमाना एवोद्देश्या: । स्थिता इत्यतीतत्वावगमादिति सव्यमविरुद्धम् । 'देवासुरा:' इत्यादिना 'मये' त्यन्तेनैकं तर्पणम् । इदञ्चापि जपेदम्बु ददिति मन्त्रे तर्पणे जले चैकत्वावगमात्। 'ये बान्धवा' इत्यादेरपसव्यपाठ्यतया मन्त्रान्तरत्वं तर्पणान्तरकरणत्वञ्च मन्तव्यमिति स्मृतिदीपिके'' ति नित्यकृत्यार्णव: । ''इदं देवासुरादितर्पणं काम्यं देवविधिना यथारुचि कार्यम् । अतएवाधुनातनाश्छन्दोगा नानुतिष्ठन्ति किन्त्वेतत्स्थाने पद्मपुराणीयं 'येऽबान्धवा बान्धवा वेति अवसानाञ्जलिं पित्र्येण विधिना प्रयच्छन्तीति नि०र०टि० ।

''इदञ्च देवासुरा इत्यादि काम्यतर्पणं कल्पान्तरेऽप्यविरुद्धमिति श्रीदत्त: । पितृतर्पणशेषेऽभिधानाद्देवासुरा इत्यादि श्लोकचतुष्टयेन पित्र्यविधिनैव जलदानमिति केचित् । आद्यश्लोकद्वयेन देवविधिना अन्त्यश्लोक-द्वयेन पित्र्यविधिना दानं, तथैवोद्देश्य प्रतीतेरित्यपरे'' इति वीरमित्रोदय: ।

[ हिन्दी टीका ]

देव, मनुष्य, ऋषि तथा पितर आदि का तर्पण कर लेने के बाद समस्त प्राणियों के तृप्तिरूप उपकार के लिए निरन्तर जलदान के साथ ही 'देवासुरा:' से 'वाञ्छति' पर्यन्त का चार श्लोकों वाला यह मन्त्र पढ़ते हुए तर्पण करना चाहिए । मुख्यत: देव आदि के उद्देश्य से होने वाला यह काम्य तर्पण देवविधि से करे । यह तर्पण कल्पान्तर में भी विरुद्ध नहीं ।

यहाँ नित्यकृत्यार्णव में उद्धृत स्मृतिदीपिका का कहना है कि 'देवासुरास्तथा यक्षा:' से लेकर 'दीयते सलिलं मया' पर्यन्त के वचन से एक ही तर्पण होगा । वह भी सव्य होने के बाद । क्योंकि इन तीन श्लोकों वाले एक ही वचन के अन्तिम श्लोक–'नरकेषु' इत्यादि के द्वारा नरक एवं अन्य विविध यातनाओं को भुगत कर आये तथा इस भूलोक में वर्तमान प्रणी ही इस तर्पण के उद्देश्य बताये गये हैं । यह इस लिए कि इस वचन में पठित 'स्थित:' पद में भूतकालिक 'क्त' प्रत्यय का प्रयोग किया गया है । अत: भूतकाल का बोध होना स्वाभाविक हे ।

दूसरी बात 'इदञ्चापि जपेदम्बु ददद्' इस वचन में सर्वत्र एकवचन का प्रयोग होने से मन्त्र, तर्पण तथा जल से एकपना का भाव बोधित होता है । किन्तु पद्मपुराण में

अपसव्य होने के बाद कहे जाने तथा संबन्धी व असंबन्धी मृतव्यक्ति के उद्देश्य से 'येऽबान्धवाः' इत्यादि मन्त्र के द्वारा होने वाला यह तर्पण अपसव्य होने के बाद किया जाना चाहिए । फलतः अपसव्य होकर इसे पढ़े जाने के कारण सिद्ध हो जाता है कि यह 'येऽबान्धवाः' मन्त्र अलग है तथा इससे होने वाला तर्पण भी अलग ही है ।

वीरमित्रोदय के अनुसार यहाँ किन्हीं के मत से पितृ विधि से तो अन्य किन्हीं के मत से आदिम दो श्लोवों के द्वारा देवविधि से तथा अन्तिम दो श्लोकों द्वारा पितृ विधि से तर्पण हो क्योंकि ऐसी उद्देश्य प्रतीति हो रही हे । परन्तु ये दोहो ही म त अग्राह्य हैं ।

यहीं नित्यकृत्य रत्न माला टिप्पणी का कहना है कि आज कल के छन्दोग (सामवेदी) जन भी देवासुरा मन्त्र से होने वाला काम्य तर्पण नहीं करते किन्तु इसके स्थान पर पद्मपुराण कथित येऽबान्धवा इस मन्त्र से पितृतीर्थ के द्वारा अन्तिम अञ्जलि दान करते हैं ।

मन्त्र का अर्थ–देव, असुर, यक्ष, नाग, गन्धर्व, राक्षस, पिशाच, गुह्यक, सिद्ध, कूमाण्ड, वृक्ष ।।१।। पक्षी, जलच्चर, भूवासी एवं वायु के आधार पर रहने वाले प्राणी हैं वे सभी मेरे द्वारा दिये गए जल से शीघ्र तृप्ति पाये ।।२।। समस्त नरकों एवम् विविध प्रकार के कष्टों को भुगतकर इस भूलोक में समस्त नरकों एवं विविध कष्टों में स्थित जो प्राणी है, उनकी तृप्ति के लिए भी मैं यह जल दे रहा हूँ ।। ३ ।। जो मेरे बान्धव न रहे हों या इस जन्म के बान्धव रहे हों या अन्य जन्म के बान्धव रहे हों तथा जो मेरे जल से तृप्ति पाने की इच्छा रखते हों वे सभी मेरे द्वारा दिये जा रहे तर्पण जल से तृप्त हों ।।४।।

## [ मूलम् ]

अत्र[1] वसिष्ठः–

स्नानशाट्यान्तु दातव्या मृदस्तिस्रो विशुद्धये । इति ।

## [ संस्कृत टीका ]

अत्रेति । अत्र = उक्ततर्पणानन्तरं कर्तव्य–विषये । अथेति पाठान्तरपक्षेऽपि अनन्तरमित्येवार्थः । स्नानेति । स्नानशाट्याम् = स्नानवस्त्रे । तु = निश्चयेन । तिस्रो मृदः = वारत्रयं क्षारमृत्तिकाः । विशुद्धये = मलापनोदनपुरस्सरं शुद्ध्यर्थम् । दातव्याः=लेपनीयाः ।

(१) अथ ।

[ हिन्दी टीका ]

सफाई के साथ शुद्धि के लिए स्नानवस्त्र में तीन बार खार मिट्टी लगावें ।

[ मूलम् ]

पराशरः –

जलमध्ये तु यः कश्चिद् द्विजातिर्ज्ञानदुर्बलः ।
निष्पीडयति तद् वस्त्रं स्नानं तस्य वृथा भवेत् ॥

[ संस्कृत टीका ]

जलेति । तु = किन्तु । यः कश्चित् = यः कोऽपि । ज्ञानदुर्बलः = शास्त्रविरुद्धार्थज्ञानवान् । द्विजातिः = द्विजः । स्नानोत्तरं जलसाध्यकर्म चिकीर्षुः । तद्वस्त्रम् = स्नानवस्त्रम् । जलमध्ये = जलाशयस्थजलोपरि । निष्पीडयति = पीडयति । तस्य=जलेन कर्म कर्त्तुः । स्नानम् = स्नानं, स्नानोत्तरमाचरिता विहितक्रियाश्चेत्यर्थः । स्नानमारभ्य देवविसर्जनान्तक्रियायाः स्नानतया कात्यायनेन परिभाषणात् तु = निश्चयेन । वृथा = व्यर्थम् भवेत्, सद्योदूषित-जलेन तदाचरणात् । अतः स्नानवस्त्रं न कदाचिदपि नीरे निष्पीडनीयमिति भावः ।

[ हिन्दी टीका ]

शास्त्रीय ज्ञान से हीन जो कोई भी द्विज (कर्मकर्त्ता) जिस वस्त्र से स्नान किया हो उसे जल में निचोड़ता है तो स्नान के बाद उस जल से की ग ई सारी विहित क्रियाएँ व्यर्थ हो जाती हैं फलतः उसका स्नान भी निष्प्रयोजन हो जाता है । वस्तुतः देखा जाय तो कात्यायन ने स्नान से लेकर अग्रिम देव विसर्जन तक की क्रिया को स्नान ही कहा है । अतः प्रदूषण से जल को दूषित नहीं होने दें । अन्ततः जिससे स्वास्थ की भी सुरक्षा हो सके ।

[ मूलम् ]

योगियाज्ञवल्क्यः–

अन्नप्रकरवत्तस्य[१] अपसव्येन पीडनम् ।
पीडयित्वा ततः पश्चाज्जपं कुर्यात्सुविस्तरम् ॥

---

पाठ (१) स्या ।

अन्नप्रकरवत् = श्राद्धोच्छिष्ट-समीपान्नविकिरवत् । तेन दक्षिणामुखत्वादि, असंस्कृतप्रमीतोद्देश्यत्वञ्च । तथा च गोभिलीयो मन्त्रः –

**ये के[2] चास्मत्कुले जाता अपुत्रा गोत्रिणो मृताः ।**

**ते तृप्यन्तु[3] मया दत्तं वस्त्रनिष्पीडनोदकम् ॥**

"पीडयित्वे" त्यादिना दर्शितो जपश्छन्दोगविषयः, कात्यायनादिभिरनभिधानात्[4] । गोभिल-संवादाच्च ।

[ संस्कृत टीका ]

अन्नप्रकरेति । अत्राचारचिन्तामण्यनुसारमितः प्राक्तनं श्लोकद्वयात्मकं वचनं, मनूक्तं वचनद्वयञ्च यथा–

**वस्त्रनिष्पीडितं तोयं स्नातस्योच्छिष्टभागिनाम् ।**

**भागधेयं श्रुतिः प्राह तस्मान्निष्पीडयेत् स्थले ॥ १ ॥**

**निष्पीडयति यः पूर्वं स्नानवस्त्रन्तु तर्पणात् ।**

**निराशाःपितरस्तस्य यान्ति देवा महर्षिभिः ॥ २ ॥**

उच्छिष्टभागिनो मनूक्ता यथा–

**असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम् ।**

**उच्छिष्टं भागधेयं स्याद्दर्भेषु विकिरश्च यः ॥** (मनुः ३।२४५)

**उच्छेषणं भूमिगतमजिह्मस्याशठस्य च ।**

**दासवर्गस्य तत्पित्र्ये भागधेयं प्रचक्षते ॥** (मनुः ३।२४६)

उक्तमनुवचनयोः मन्वर्थमुक्तावलीव्याख्या यथा–असंस्कृतेति । "नास्य कार्योऽग्निसंस्कारः" (५।६९) इति निषेधात्संस्कारानर्हबालानां तथा कुलस्त्रीणामदृष्टदोषाणां ये त्यक्तारस्तेषां पात्रस्थमुच्छिष्टं दर्भेषु च यो विकिरः स भागः स्यात् । अन्ये तु त्यागिनामिति गुर्वादित्यागिनां कुलयोषितामिति स्वातन्त्र्येण तु कुलयोषितामनूढकन्यानामिति व्याचक्षते । गोविन्दराजस्तु

पाठ (२) ये चास्माकं । (३) पिबन्तु । (४) रन्यथाभि ।

त्यागिनां कुलयोषितामिति सामान्योपक्रमादिदं विशेषाभिधानम् संस्कृतं भक्षाः (पा० ४।२।१६) इति यत्, ततः स्वकुलं त्यक्त्वा गतानां कुलस्त्रीणामित्याह ।। २४५ ।।

उच्छेषणमिति । उच्छिष्टं यद् भूमिगतं तद्दासससमूहस्यानलसस्याकुटिलस्य च, पित्र्ये = श्राद्धकर्मणि, भागधेयं मन्वादयो वदन्ति ।।२४६।।

अन्नप्रकरेति । अन्नप्रकरवत् = श्राद्धोच्छिष्ट-समीपान्नविकिरवत् । अर्थात् श्राद्धे आद्यैकोद्दिष्टपार्वणादि सपात्रक श्राद्धकर्मणि। उच्छिष्टम् = पितृकर्मक्षेत्र एव कृतभोजनानां (महापात्र) ब्राह्मणानां भुक्तावशेषम् । तत्समीपे =तत्सन्निधौ दक्षिणस्यां दिशि । सैकत पिण्डिकापश्चिमदिशि च आस्तृत कुशत्रयोपरि । अन्नविकिरः = पुटकस्थितस्य जलाप्लावित तिलधृतमधुसहित सर्वप्रकारकान्नस्य भुक्तवतामुक्तब्राह्मणाानामग्रे मोटकेन प्रक्षेपः । तद्वत् । तथा चोक्तमुक्तांन्ननिक्षेपसम्बन्धे मनुना (३।२४४) ।।

**सार्ववर्णिकमन्नाद्यं सन्नीयाप्लाव्य वारिणा ।**
**समुत्सृजेद् भुक्तवतामग्रतो विकिरन् भुवि ।। इति ।।**

अस्य मन्वर्थमुक्तावली यथा—वर्णशब्दः प्रकारवाची । सर्वप्रकारकमन्नादिकं व्यञ्जनादिभिरेकीकृत्योदकेनाप्लावयित्वा कृतभोजनानां ब्राह्मणानां पुरतो भूमौ "दर्भेषु विकिरश्च यः" (३।२४५) इति वपक्ष्यमाणाद्दर्भोपरि निक्षिपेत् त्यजेदि"ति । श्रीदत्तोपाध्यायकृता पितृभक्तिरप्येनमनुसरति यथा "तान् (मन्दं मन्दं भोजितान् ब्राह्मणान्) तृप्तान् ज्ञात्वा उच्छिष्टसन्निधौ दक्षिणां भूमिं प्राप्य सर्वप्रकारक-मन्नमुद्धृत्य सतिलमेकीकृत्य वारिणाऽऽप्लाव्य—

**ॐअग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम ।**
**भूमौ दत्तेन तृप्यन्तु तृप्ता यान्तु परां गतिम् ।।**

इति मन्त्रेण तत्फलमुद्दिश्य विकिरेदि" ति ।

[ टिप्पणी ]

वैदिकदामोदरझा-शर्म-विरचित-मन्त्रार्थचन्द्रोदयेन कृतः 'ॐ अनग्नि-दग्धा ये जीवा येऽप्यदग्धाः कुले मम' इत्याद्याकारकस्यास्य मन्त्रस्यार्थो यथा-

"अनग्निदग्धपितृदेवत्यः पार्वणश्राद्धेऽन्नविकिरणे विनियुक्तोऽयं श्राद्धसूत्रस्थो मन्त्रः । मम कुले=मम. वंशे । ये अनग्निदग्धाः जीवाः । अग्निनादग्धाः= अग्निदग्धाः-श्रौत-स्मार्ताग्निदग्धाः । न अग्निदग्धाः=अनग्निदग्धाः- लौकिका-ग्निदग्धा अश्राद्धार्हा अनुपनीता एव ये मृतास्ते इत्यर्थः । अनुपनीतानामेव 'असौ स्वर्गाय लोकाय स्वाहेति' वैदिकमन्त्रेण दाहो न भवति, अतस्ते लौकिकाग्निदग्धा अपि सन्तोऽनग्निदग्धा एवोच्यन्ते । अपीत्ययमुपसर्गश्चार्थे । तथा च मम कुले येऽपि=ये च अदग्धा जीवाः = न दग्धा अदग्धाः -

**ऊनद्विवार्षिकं प्रेतं निदध्युर्बान्धवा बहिः ।**
**अलङ्कृत्य शुचौ भूमावस्थिसञ्चयनादृते ॥**

इति मनूक्तेः अदाहार्हा ऊनद्विवार्षिका ये जीवा मम कुले मृता इति शेषः । ते उभयविधा अपि भूमौ दत्तेन अनेन अन्नेन । तृप्यन्तु = तृप्ता भवन्तु । तृप्ताश्च, परां गतिं यान्तु = उत्कृष्टगतिं प्राप्नुवन्त्वित्यर्थः । एवमयं मन्त्रो व्याख्यातः । अग्निदग्धाश्चेति पौराणिको मन्त्रः" इति ।

अत्र प. जगद्धर झा-सङ्कलित-श्रीमन्त्रार्थसंग्रहो यथा-

"अग्निदग्धाश्चेति पौराणिकः स्त्रीशूद्रकर्तृकश्राद्धे येऽप्यदग्धेति विशेषस्तत्र, अतः अनग्निदग्धेति निगदव्यांख्यातम्, इति मन्त्रार्थदीपिकायां शत्रुघ्नमिश्राः" । "मम कुले = वंशे । ये जीवाः = प्राणिनोऽग्निदग्धाः = लौकिकाग्निना येन केनापि दग्धा एव पिण्डोदकभाजो न भूताः, तथा ये दुर्भिक्षमरणे अदग्धाः= दाहमेव नालभन्त ते जीवा मामका, मद्दत्तेन विकिरणान्नेन तृप्यन्तु = तृप्ताः सन्तः, परां गतिम् = उत्कृष्टस्थानम् । प्रयान्तु = गच्छन्तु" इति रघुनन्दन-भट्टेन मन्त्रार्थप्रकाशे व्याख्यातम् ।।१टी०।।

वाजसनेयि-प्राचीन-पद्धति-निबन्धेषु-अनग्निदग्धा इत्येव पाठः । छन्दोग-पद्धतौ गोभिलसूत्रानुसारि 'ये अग्निदग्धा' इति पाठः सर्वत्र । अन्यत्समानम् ।। टी० ।।" इति

अत्रेदमुपरिष्टाद् बोध्यम्–वाचस्पतिमिश्रकृत–पितृभक्तितरङ्गिणी–श्राद्धपद्धति–रुद्रधरकृत–वर्षकृत्यस्थश्राद्धपद्धतिषु छन्दोगानां कृत एव पितृभक्तिप्रतिपादित–पुरोदीरित–विकिरदानमन्त्रो दृश्यते। वाजसनेयिनां कृते तु–"अनग्निदग्धा ये जीवा ये प्रदग्धाः कुले मम" इत्याद्याकारकोऽवलोक्यते (मन्त्रः)। यस्य सम्पुष्टिरत्रत्यटिप्पणी–लेखेनापिजायते। परमार्थे न कोऽपि भेदः।

अत्र प्रकरणे "पितृ (त्रादि) ब्राह्मणोच्छिष्टसन्निधौ चतुरस्रं मण्डलाकारं वा रमणीयं हस्तमात्रं दक्षिणाप्लवनं चतुरङ्गुलोच्छ्रितं पिण्डपातनार्थं स्थानं निर्माय" इति पितृभक्त्यनुसारमेतदुच्छिष्टसन्निधावेवाग्नेयकोणे सैकतपिण्डिका-निर्माणं जायते।

एवमेव कृत्यसारसमुच्चय–परिशिष्टानुसारं "पिण्डसमीपे विकीर्यमाणं पिण्डशेषान्नं भृत्यपितृणां भागः। तथा चोक्तं मार्कण्डेयपुराणे–अन्नन्तु विकिरेद् भक्त्या भृत्यभागस्तु स स्मृतः। इत्यपि बोध्यम्।

अत्र वीरमित्रोदयस्तु–"अन्नप्रकरः=श्राद्धे विकिरदानम्। तद्वत्। तेन भूमौ सतिलदक्षिणाग्रकुशोपरि दानं सिद्ध्यति। अपसव्येनेत्यनेन पित्र्यतीर्थ-दक्षिणामुखत्वाद्युपलक्षणमि"त्याह।

## [ संस्कृत टीका ]

तेनेति। तेन=दृष्टान्तदार्ष्टान्तिकभावस्य उपमानोपमेयभावस्य वा प्रदर्शनेन। दक्षिणामुखत्वादीत्यत्रत्यादिपदेन पित्र्य–तीर्था देर्बोधः। असंस्कृत प्रमीतोद्देश्यत्वञ्च = असंस्कृताः–'नास्य कार्योऽग्निसंस्कारः' इति (मनु ५।६९) निषेधात्संस्कारानर्हा अदग्धा बालाः, अलब्धदाहा दुर्भिक्षक्षता वा जनाः, अन्नविकिरदानमन्त्रानुसारञ्च अनग्निभिर्दग्धाः–वैदिकमन्त्रेणाकृतददाहा अनुपनीताः कुमाराः, कृत्रिमाकृत्रिम-विद्युत्सूर्यकिरणाद्युज्ज्वलज्योतिषा ऊष्मणा वा मृताः सन्तोऽपि लौकिकेन वैदिकेन वह्निना अलब्धदाहाः यथोक्तमुल्काभ्रमणमन्त्रेऽपि –

अग्निदग्धाश्च ये जीवा येऽप्यदग्धाः कुले मम।
उज्ज्वलज्योतिषा दग्धास्ते यान्तु परमां गतिम्॥ इति।

(१) पाठ (१) थ।

अत्र (अनग्निदग्धेति) मन्त्रे ईषदर्थे नञः स्वीकारपक्षे तु अल्पेनाऽग्निनाऽल्पदग्धाश्चेत्यर्थः। अतएव, एभिः क्वचित्प्रदग्धा वा जीवाः, एवमेव, "ये दुर्भिक्षमरणे अदग्धाः = दाहमेव नालभन्त ते जीवाः" इति मन्त्रार्थप्रकाशीयव्याख्याया उपलक्षणत्वेनैव मन्तव्यतया, वायुयानधूमयान-गकटयान-नौयानादिना हस्तपादाद्यभिघातादिना वा उत्क्रान्तप्राणाः परमप्राप्तदाहा जीवाः तथा विकिरदानस्यापरविधमन्त्रानुसारम् अग्निदग्धाश्च = लौकिकाग्निना येनकेनापि भस्मीभूतशरीरा एव पिण्डोदकभाजो न भूताः जीवाश्च एते, प्रमीताः= मृता एव। उद्देश्यां: = बुद्धिस्थीकृताः लक्ष्यभूता इति यावत्। यस्य (मुख्यतया श्राद्धीयविकिरदानस्य, गौणतया वस्त्रनिष्पीडितजलस्य वा) तत्, तस्य भावस्तत्त्वम्। श्राद्धीयविकिरदाने स्थितस्य असंस्कृत-प्रमीतोद्देश्यत्वस्य वस्त्रनिष्पीडितोदकदानेऽतिदेशो (आरोपो) बोध्य इति निष्कर्षः। अत्र चकारादनन्तरं 'लभ्यते' इति शेषः।

एवञ्चासंस्कृतप्रमीत-प्रभृतय उच्छिष्ट भागिनो वस्त्रनिष्पीडितजलभागिनो भवन्तीत्यवगन्तव्यम्। तंथा चैतानुद्दिश्यास्तृतकुशत्रयायां भूमौ वस्त्रनिष्पीडि-तोदकमपसव्येन मोटकेन दद्यादिति सिद्धम्।

ये के चेति। अस्मत्कुले = अस्माकं वंशे। जाताः = उत्पन्नाः। गोत्रिणः = गोत्रम्-वंशपरम्परा प्रसिद्धमादि पुरुष ब्राह्मणरूपमिति शब्दकल्पद्रुमः। परम्परया तदुत्पन्ना इत्यर्थः अत्र गोत्रपदोपादानाद् विद्याकृतवंशजातानां मातृवंशजातानाञ्चा-पुत्रमृतानां विगोत्रिणां व्यावृत्तिः। वचनेनानेन स्वगोत्रिणामेवैतत्तर्पणोद्देश्यत्व-बोधनात्। ये के च। चकारादेतदन्ये दासवर्गादय उच्छिष्टभागिनो ग्राह्याः। मृताः। ते मया दत्तम्। वस्त्रनिष्पीडनोदकम्। पीत्वेतिशेषः। तृप्यन्तु। पिवन्त्विति पाठे तु नाध्याहारावश्यकता।

अत्राचारचिन्तामणिः-"अन्न प्रकरवत् =श्राद्धोच्छिष्टान्नविकिरवत्। तेन दक्षिणामुखत्वमसंस्कृत -प्रमीतोद्देश्यता च लभ्यते। अतएवात्र स्थलदाननैयत्यम् असंस्कृतप्रमीतानां त्यागिनां कुलयोषिताम् इत्यादिना तत्रैव दाननियमात्। मृत्तिकादानमप्यपसव्येनैव, तादृश निष्पीडनाङ्गत्वात्।.......अथैतत्प्रयोगः-कृतापसव्यः शुष्कवासा मृण्मयेनाधरीयं वस्त्रं प्रक्षाल्य भूमौ कुशत्रयोपरि

पितृदासादीनुद्दिश्य सतिलं वस्त्रनिष्पीडनोदकं पितृतीर्थेन मोटकेन दक्षिणामुखो दद्यात्'' इति । ''अत्रच येन कल्पेन स्नानं कृतं तेनैव तर्पणमपि कार्यम् उपस्थानादेर्निवेदनान्तस्य स्नानत्वात्, विजातीयप्रयोगस्य च व्यवधायकत्वादिती''- ति चाह । एवमेव ''प्राचीनावीती दक्षिणाऽभिमुख आस्तीर्णकुशत्रये स्थले स्थलस्थः पितृतीर्थेन सतिलं वासो निष्पीडयेदिति छन्दोगाह्निकञ्च ।

मूले पीडयित्वेति । पीडयित्वा = स्नानवस्त्रं निष्पीड्य । ततः पश्चात् । सुविस्तरम् = अधिकविस्तृतम् । जपम् = गायत्रीजपं कुर्यादित्यर्थः ।

छन्दोगेति । छन्दोगविषयं: = सामवेदिसम्पादनीयः । कात्यायनादिभिः = वाजसनेयिकर्मोपदेशिभिः कात्यायनप्रभृतिभिः । अनभिधानात् = गायत्रीजपात्पूर्ववस्त्रनिष्पीडनस्याकथनात् । अपितु '' निष्पीड्य वस्त्रमाचम्य ब्राह्म-वैष्णवरौद्र-सावित्र-मैत्र-वारुणैस्तल्लिङ्गैरर्चयेदि''त्यादिना तदनन्तरं देवपूजा प्रकरणस्यैव कथनात् । गायत्रीजपं तु ''सूर्यमुदीक्षन्नुद्वयमुदुत्यं चित्रं तच्चक्षुरिति, गायत्र्या च यथाशक्त्ये'' त्यादिना सूर्योपस्थानाङ्गतयैव निरुच्य तर्पयेद् ब्रह्माणं पूर्वं विष्णु-रुद्रमित्यादिना तर्पणप्रकरणस्य कथनाच्च । वाजसनेयिगुरुणा योगियाज्ञवल्क्येनापि-

निष्पीड्य स्नानवस्त्रन्तु आचम्य प्रयतः शुचिः ।
देवानामर्चनं कुर्याद् ब्रह्मादीनाममत्सरः ॥

इत्यादिवचनेन वस्त्र-निष्पीडनोत्तरं देवपूजाऽभिधानात् । गोभिल-संवादाच्च=''नमो ब्रह्मणे इत्युपजायचेत्यन्तेनाग्निस्तृप्यत्विति च देवाँस्तर्पयेयुरि'' त्यादिना तर्पणमुक्त्वा ''गायत्र्यष्टशतमादौ कृत्वे''त्यादिना सामवेदि-गुरुणा गोभिलेन तर्पणोत्तरं गायत्रीजपस्य विधानाच्च ।

[ हिन्दी टीका ]

प्रकृत ग्रन्थ को समझने के लिए अवश्य ज्ञातव्य इसके पूर्व के दो श्लोको का अर्थ हं कि ''वेद के कथनानुसार स्नान किये हुए व्यक्ति के स्नानवस्त्र से निचोडा हुआ जल उच्छिष्टभागियों (इसका वर्णन अभी ही आगे किया जा रहा है) का भाग होता है । अतः इसे स्थलपर निचोड़ना चाहिए ।।१ ।। तर्पण के पहले जो कोई अपने स्नानवस्त्र

को निचोड देता है उसके पितर और ऋषि सहित देव निराश होकर चले जाते हैं ।।२।।

उच्छिष्टभागियों को बतानेवाले दोनों मनुवचनों (३।२४५, तथा २४६) का कुल्लूक भट्टके अनुसार अर्थ है–

मनु (५।६९) वचन के अनुसार अग्नि संस्कार के अयोग्य मृत दो वर्ष के अन्दर के बालकों तथा दोषरहित कुलाङ्गना को त्यागनेवाले या अन्य व्याख्याकार के अनुसार गुरु आदि पूज्य जनों को त्यागनेवाले या अन्य व्याख्याकार के अनुसार गुरुआदि पूज्यजनों को त्यागनेवाले तथा अविवाहिता कन्याओं या अन्य व्याख्याकार-गोविन्दराज के अनुसार अपने कुलको त्यागकर चलीजाने वाली कुलाङ्गनाओं का भाग, श्राद्धारम्भ के पहले या उस समय में भोजन किये हुए (महापात्र) ब्राह्मणों का पात्रस्थित जूठा अन्न तथा बालू की बनी पिण्डिका की पश्चिम दिशा में कुशों के ऊपर बिखेरा गया अन्न होता है ।।१।।

श्राद्ध के समय भूमिपर गिरा हुआ वह जूठा अन्न शील सरल स्वभाववाले आलस रहित सच्चे सेवकों का भाग होता है ऐसा मनु आदि मुनि लोग कहते हैं ।।२।।

मूल में कहे गए योगियाज्ञवल्क्यवचन का अर्थ है–अन्न प्रकर के जैसे–अर्थात् आद्य, वार्षिक तथा पार्वण आदि श्राद्धकर्म में उच्छिष्ट (पार्वण श्राद्ध में अधिक किन्तु एकोद्दिष्ट में भोजन किये हुए एक भी ब्राह्म का जूठा) अन्न के समीप में तथा बालू की पिण्डि का के पश्चिम (दिशा) में तेकुशा (तीन कुशो) के ऊपर जल से आप्लावित (डुबोयेगए) तिल घृत मधुसहित सभी प्रकार के अन्न को सपात्रक श्राद्धपक्ष में भोजन किये हुए (महापात्र) ब्राह्मणों के समक्ष मोटक से बिखरने के जैसे– अपसव्य हो स्नानवस्त्र को निचोड़े इसके पश्चात् अधिक विस्तृत (गायत्री) जप करे ।

यहाँ अन्नप्रकर को दृष्टान्तरूप में कहे जाने से सिद्ध होता है कि वस्त्रनिष्पीडनस्थल में भी इसी के जैसे पितृतीर्थ दक्षिणमुंह होने आदि का व्यवहार होगा । साथ ही अन्नप्रकार के–''अनग्निदग्धा ये जीवा ये प्रदग्धाः कुले मम'' इत्यादि मन्त्र तथा ''नास्य कार्योऽग्निसंस्कारः'' इस मनुवचन (५।६९) के अनुसार असंस्कृत प्रमीत दो वर्ष के भीतर के मृत बच्चे जिन्हें अग्नि संस्कार न कर भूमि में ही गाड़ दिया गया है, व दुर्भिक्ष में मरे हुए व्यक्ति जिनका अग्नि दाह न हुआ हो तथा कृत्रिम या अकृत्रिम (इलेक्ट्रिक या लाइटिंग) बिजली, सूर्य की तीखी किरण, ऊष्मा (गर्मी या ठण्डक की तेजी) आदि या अग्नि सहित पूर्वोक्तों में से किसी के द्वारा कम या अधिकरूप में जल कर (या ठण्ढक से ) मरे व्यक्तियों एवं बिना उपनयन के ही मरे हुए वे कुमार जिन का वैदिक मन्त्र पढ़कर अग्नि संस्कार नहीं किया जाता है उनकी इसी तरह आकाशीय हवाई जहाज आदि जलीय नाव आदि स्थलीय ट्रेन आदि वाहनों से भरे तथा हाथ पैर

आदि के दबाव आदि से मरे हुए किन्तु जलाये न गए जीवों (व्यक्तियों) की, सारांश में अकालमृत्यु से भरे हुए किन्तु उचित दाह संस्कार से वञ्चित अथवा अग्नि से जलकर भस्मीभूत शरीर वाले तथा पिण्डोदक के भागी न होने वाले जीव अपने वंशज निस्सन्तान गोत्री व्यक्तियों (जीवों) की तृप्ति के उद्देश्य से वस्त्र के निचोड़े हुऐ जल का तर्पण होगा।

इस तरह निष्कर्ष में सिद्ध हुआ कि ये असंस्कृत प्रमीत तथा इनसे अन्य कहे गए उच्छिष्टभागी जीव इस वस्त्रनिष्पीडित जल तर्पण के भागी हैं। साथ ही यह भी स्वतः सिद्ध हो जाता है कि इन उच्छिष्टभागियों के उद्देश्य से विछे हुए तेकुशावाली भूमि पर वस्त्र का निचोड़ा हुआ तर्पण जल फेका जाय।

इस निचोड़े जल के तर्पण हेतु गोभिलोक्त मन्त्र का अर्थ है हमारे कुल तथा गोत्र में उत्पन्न (गांतिया) अपुत्रजन ओर इनसे अन्य पितृ-दास आदि उच्छिष्टभागी जन जो निधन (मृत्यु) को प्राप्त कर चुके हैं वे मुझ से दिया गया यह वस्त्र निष्पीडित जल तृप्ति हेतु ग्रहण करें।

यहाँ आचारचिन्तामणि के अनुसार वस्त्र-निष्पीडित ज़ल तर्पण का प्रयोग इस प्रकार ज्ञातव्य है कि अपसव्य एवं दक्षिणमुंह हो सूखा वस्त्र पहन कर खार मिट्टी से स्नान वस्त्र को धो-पखाल कर भूमि के ऊपर रखे गए कुशत्रय पर पितरों के सेवको आदि (उच्छिष्टभागियों) के उद्देश्य से वस्त्र से निचोड़ा गया जल जो तिल सहित हो-पितृ तीर्थ एवं मोटक के द्वारा दे अर्थात् फेके। साथ ही यह भी ज्ञातव्य है कि जिस कल्प से स्नान किया गया हो उसी के अनुसार तर्पण भी हो, क्योंकि विजातीय तर्पण प्रयोग का अनुष्ठान वर्जनीय है।

ग्रन्थकार का विवेचन है कि यहाँ मूल वचन से वस्त्र निष्पीडन के बाद जो विस्तृत (गायत्री का) जप कहा गया है वह सामवेदियों के लिए समझना चाहिए क्योंकि वाजसनेयियों के मार्गदर्शक कात्यायन, योगियाज्ञवल्क्य आदि ने ऐसा करने को नहीं कहा है, प्रत्युत सूर्योपस्थान के बाद गायत्री जप कहकर तर्पणप्रकरण का प्रारम्भ कर दिया गया है। किन्तु सामवेदिगुरु गोभिल ने तर्पण के बाद गायत्री जप का विधान किया है।

## [ मूलम् ]

हरिहरस्तु—वाजसनेयिनां जपानन्तरमेव एतदनुष्ठानेनैव 'अजपी पूयशोणितम्' इत्यस्यापि सिद्धिमाह[१]।

---

पाठा० (१) जपस्य सिद्धिरित्याह।

[ संस्कृत टीका ]

हरिहरेति । भाष्यकर्ता पद्धतिकर्ता च हरिहरः । वाजसनेयिनाम्= यजुर्वेदिनाम् । जपानन्तरम्=गायत्री-जप-करणानन्तरमेव । एतदनुष्ठानेनैव=तर्पणोत्तर-कालीन-वस्त्र निष्पीडनैव । अजपी पूयशोणितमित्यस्यापि=जपमविधाय भोक्ता पूयशोणितमेव भक्षयतीत्यर्थकाजपीपूयशोणितमिति वचनबोधितस्य जपस्यापि ।

**अस्नाताशी मलं भुङ्क्ते अजपी पूयशोणितम् ।**
**अहुत्वा तु कृमिं भुङ्क्ते अदत्त्वा विड्भोजनम् ॥**

इति जाबाले: सम्पूर्णं वचनम् ।

सिद्धिम्=पूर्त्तिम् । आह=वक्ति । एतेनैदत्वचनबोधितार्थपालनाय नातिरिक्तजपस्यावश्यकता भवेदिति सूचितं भवति । अत्र वीरमित्रोदयस्तु 'श्रीदत्तस्तु......इत्याहे' तिरीत्या श्रीदत्तमतमत्रत्यं वक्ष्यन्, ''पीडयित्वा=पीडनार्थं स्थापयित्वा । जपोत्तरकालीन-तर्पणानन्तरमेव निपीडनस्य

**पूर्वं निष्पीडनं केचित्प्राग्देवपितृतर्पणात् ।**
**स्नान-वस्त्रस्य नेच्छन्ति तस्मादूर्ध्वं निपीडयेत् ॥**

इत्यनेन कथनात् । अतएव एतदग्रे आचान्तः पुनराचामेदित्यादिना सेतिकर्तव्यताकं जपमुक्त्वाऽनन्तरं तर्पणमुक्त्वा ''निष्पीड्य स्नानवस्त्रन्त्वि''त्यनेन तेनैव तर्पणोत्तरं वस्त्रनिष्पीडनमुक्तमि'' त्याह ।

[ हिन्दी टीका ]

यहाँ भाष्य एवं पद्धतिकर्ता हरिहर का कहना है कि मूलवचनों में पठित ''पीडयित्वा=पीडनार्थं स्थापयित्वा'' अर्थात् ''स्नान वस्त्र को निचोडने के लिए रखकर'' व्याख्या है । क्योंकि जपके बाद होने वाले तर्पण के अनन्तर ही वस्त्र का निचोडना वचन सिद्ध है । इस तरह अनुष्ठान करने पर ''अजपी पूयशोणितम्''- विना जप (कर) के खानेवाला पीप और शोणित ही खाता है-वचन से कहे गए अतिरिक्त जप की भी सिद्धि (प्राप्ति) हो जाती है । इति ।

❀ इति तर्पणावश्यकर्तव्यता ❀

# तर्पणोत्तरकर्म

## [ मूलम् ]

अथ तर्पणोत्तरकर्म । तत्र विष्णुपुराणे–

आचम्य च ततो दद्यात्सूर्याय सलिलाञ्जलिम् ।
नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे ।
जगत्सवित्रे शुचये सवित्रे कर्मदायिने ॥

## [ संस्कृत टीका ]

तत्रेति । तत्र=तर्पणोत्तरे कर्मणि । ततः=स्नानवस्त्रनिष्पीडितजलेन तर्पणोत्तरम् । सामवेदी तु गायत्रीजपब्रह्म-यज्ञयोरनन्तरम् । आचम्य। सूर्याय=दिवाकराय । सलिलाञ्जलिम्=अर्घरूपेण अञ्जलौ सलिलमादाय । दद्यात्=निम्नमन्त्रं पठित्वा समर्पयेत् । मन्त्रमाह नम इत्यादि । तदर्थो यथा–हे ब्रह्मन् ! = हे आदित्यदेव, हिरण्यगर्भोपाध्यवछिन्न देव । वा, विज्ञानानन्दस्वभावपरमात्मरूपिन् । वा, तस्मै नमः, कस्मै, इत्याकाङ्क्षायाम् विवस्वते रश्मिवृष्ट्यन्नप्रजादिभिः विश्वाच्छादकाय । [विवस्वते=विविधं वस्ते आच्छादयति । वस आच्छादने (अ० आ० अ०) क्विप् (३।२।७६) विवो-रश्मिः । विवोऽस्यास्ति । मतुप् (५।२।९४)। इत्यमर (१।१३।२९) स्य रामाश्रमी व्याख्यातः "आदित्याज्जायते वृष्टि र्वृष्टेरन्नं ततः प्रजाः" इति नियमाच्च । भास्वते = भासः सन्त्यस्य । मतुप् (५।२।९४) 'भास्वान् दीप्ते रवौ' इति रीत्या प्रदीप्तप्रभाकराय । विष्णुतेजसे= सर्वव्यापकस्य विष्णोस्तेजोरूपाय । "ध्येयः सदा सवितृमण्डल-मध्यवर्त्ती नारायणः सरसिजासन-सन्निविष्टः" इति ध्यानवचनानुसारं विष्णुसूर्य-योरभेदाध्यवसानात् । जगत्सवित्रे=जगज्जनकाय । यथाच गायत्रीमन्त्र( ऋग्वेद ३।१०।३।५)भाष्ये सवितृपदव्याख्यां-"सवितुः=सर्वस्य प्रसवितुः । देवस्य=द्योतमानस्य सूर्यस्ये" ति सायणः । शुचये बाह्याभ्यन्तराभ्यां पवित्राय । सवित्रे=सकलपदार्थ प्रेरकाय। यथाच । षू प्रेरणे (तु. प. से०) तृच् (३।१।१३३) । यत्तु सूयते सूते -इति स्वामि-मुकुटाभ्यामुक्तम् । तन्न । स्वरति सूति सूयति (७।२।४४) इतीड्विकल्पात्पक्षे 'सोता' इति रूपप्रसङ्गात् ।

उक्तधात्वोरर्थासङ्गतेश्चे''ति। 'तपनः सविता रविरि' त्यमरस्य (१।३।३२) व्याख्यासुधाव्याख्याऽपि । अतएव ''धियो यो नः प्रचोदयादि'' ति गायत्री-मन्त्रशेषांशोऽपि सङ्गच्छते । कर्मदायिने=शुभ-कर्मणः -शुभकर्म-फलस्य चतुर्वर्गस्य प्रदात्रे ।

[ हिन्दी टीका ]

यजुर्वेदी लोग स्नान वस्त्र के निचोड़े जल से तपर्ण के बाद किन्तु सामवेदी गायत्री जप एवं ब्रह्मयज्ञ के बाद आचमन कर अर्घदान के लिये अञ्जलिमें जल भरकर सूर्य भगवान् को (मूल में नीचे दिखाये गए श्लोक रूप मन्त्र को पढ़कर तीन बार) समर्पित करे । मन्त्र का अर्थ है- हे सूर्य देव । या हिरण्यकर्म के नाम से प्रसिद्ध देव या विज्ञानानन्द स्वभाव परमात्मा देव । आप को प्रणाम है । जो (आप) रश्मि, वृष्टि, अन्न, प्रजा आदि के प्रदान द्वारा विश्व में सर्वत्र व्यापक, प्रदीप्त प्रभावाले, सर्वव्यापक विष्णु के तेजःस्वरूप, जगत् को जन्म देने वाले, बाहर और भीतर से पवित्र, सकल पदार्थ के प्रेरक, और शुभकर्म के फल-चतुवर्ग को देने वाले हैं ।

[ मूलम् ]

कात्यायनः-

**निष्पीड्य वस्त्रमाचम्य ब्राह्म-वैष्णव-रौद्र-सावित्र- मैत्र-वारुणै स्तल्लिङ्गैरर्चयेत् ।[1] अदृश्रमस्य हꣳस इत्युपस्थाय प्रदक्षिणीकृत्य नमस्कृत्य दिशश्च देवताश्च ब्रह्माग्निपृथिव्यौषधि-वाग्वाचस्पतिविष्णु- महद्भ्योऽद्भ्योऽपांपऽतये वरुणाय नम इति सर्वत्र, संवर्चसेति मुखं विमृशेत्[2]। देवागातुविद इति विसर्जयेदेष स्नानविधिः[3] एष स्नानविधिः ।**

तल्लिङ्गैः=ब्रह्मादिप्रकाशकैः । अर्चयेदिति ब्रह्मादीनिति शेषः । एषा च पूजा पुष्पैरेव । तथा च योगियाज्ञवल्क्यः-

**ध्यात्वा प्रणवपूर्वन्तु दैवतं सुसमाहितः[4] ।**
**नमस्कारेण पुष्पाणि विन्यसेत्तु पृथक् पृथक् ॥**

---

पाठा० (१) अदश्र ꣳ । (२) विमृज्य । (३) स्नान विधिरेष स्नान विधिः । स्नान विधिरेष स्नान विधिरेषः । एषएव स्नान विधिः (४) अथवा तु ।

कात्यायनेनाप्यादौ सुमनस आहृत्येति सूर्याञ्जलिदानार्थमेतत्पूजार्थञ्च पुष्पोपादानमुक्तम्।

### [ संस्कृत टीका ]

निष्पीड्येति। तल्लिङ्गैः ब्रह्मादि-प्रकाशकैः मन्त्रैरिति भावः। अर्चयेदिति क्रियापदस्य ब्रह्मादीनिति कर्माध्याहारः। 'ध्यात्वे' त्यादि योगियाज्ञवल्क्य-वचनेन अत्रत्यैषा पूजा पुष्पैरेव बोध्या। एतदर्थं, मध्याह्नकालिक सन्ध्यायां सूर्यायाञ्जलिदानार्थञ्च कात्यायानेनापि आदौ सुमनस आहृत्योदकान्तं गत्वे'' त्यादिस्नानप्रकरणीयवचनेन पुष्पाहरणमुक्तम्। (प्रकृतमूल-वचनार्थस्याग्रिम-'पूजादि-प्रकार-प्रकरणे' स्पष्टप्रतिपत्तिर्भवेत्)

### [ हिन्दी टीका ]

स्नान वस्त्र को निचोड़ने के बाद आचमन कर ब्रह्मा, विष्णु आदि के मन्त्रों से क्रमशः ब्रह्मा, विष्णु, रुद्र, सविता, मित्र तथा वरुण की पूजा करें। 'अदृश्रमस्य' एवं 'हꣳ स' इन दोनों ऋचाओं से सूर्य का उपस्थान (स्तुति प्रार्थना) करे। पूर्वोक्त सभी देव, दिशा, दिग्देवता, ब्रह्मा, अग्नि, पृथिवी, ओषधि, वाक्, वाचस्पति, विष्णु, महत्, अप् (जल), अपांपति (जलपति) तथा वरुण को नमस्कार करे। ''संवर्चसा'' इत्यादि ऋचा पढ़कर शुद्ध जल से मुंह को पोंछकर 'देवागातु विद' इत्यादि मन्त्र से उक्त पूजित देवों का विसर्जन कर दें यही स्नान विधि है।

यहाँ कही गई पूजा केवल फूलों से होगी; क्योंकि योगियाज्ञवल्क्न ये कहा है कि अनन्यमनस्क हो प्रणव पूर्वक देवता का ध्यान करके पृथक्-पृथक् देवता को नमस्कार के साथ पुष्प समर्पण करे।

कात्यायन ने भी स्नान प्रकरण में जो फूल लेकर नदी किनारे में आने को कहा है उसका उपयोग भी एक तो मध्याह्नसन्ध्या के समय सूर्य को अर्घदान के लिए, दूसरा इस पूजा के लिए ज्ञातव्य है।

### [ मूलम् ]

आवाहनमित्यादि[१] विष्णुपूजाप्रकारान्तरं योगियाज्ञवल्क्यमते। एवं ''सावित्रैर्मैत्रवारुणैरि''ति सावित्रादिमन्त्रबहुत्वं तन्मत एव, कात्यायनेन ब्रह्मादीनां

पाठा० (१) हनादिक।

समासेनोक्तत्वात्[२] । एकैकपरत्वेऽपि बहुत्वोपपत्तेः । दिशाश्चेति चकारान्नमस्कृत्येति पूर्वत्रापि सम्बध्यते । देवताः[३] दिशामेव ।

अत्र केचित्—श्रुत[४]-दिगादिशब्दमनादृत्य प्राच्यादिपदेन दिङ्नमस्कारमिन्द्रादिपदेन[५] दिग्देवतानमस्कारं कुर्वन्ति[६] । ब्रह्माग्नीत्यादौ समासनिर्दिष्टत्वेऽपि पृथङ्नमस्कार्यत्वम्, नम इति सर्वत्रेत्युपसंहारात् । 'विष्णुमहद्भ्य' इति तु[७] मिलितस्यैव नमस्कार्यत्वम् । अद्भ्य इति पृथगुपादानात् । एषएव स्नानविधिरित्युपसंहारः एतत्पर्यन्तं स्नानप्रयोगानुवृत्तेर्ज्ञापनार्थः । एतच्च प्रागेव प्रपञ्चितम् ।

[ संस्कृत टीका ]

आवाहनेति । आवाहनमित्यादि विष्णुपूजा=आवाहनमित्यादिना योगियाज्ञवल्क्यवचनेनावाहनादिपूर्विका या विष्णुपूजा प्रतिपादिता (तत्) प्रकारान्तरम्=अन्यः प्रकारः । तन्मत एव बोध्यम् । एवमत्र—

**ब्राह्मवैष्णवरौद्रैश्च सावित्रैर्मैत्रवारुणैः ।**
**तल्लिङ्गैरर्चयेन्मन्त्रैः सर्वान् देवान् समाहितः ॥**

इति योगियाज्ञवल्क्य-वचनानुसारं सवितुर्मित्रस्य वरुणस्य च बहुभिर्मन्त्रैः पूजा विहिता । किन्तु कात्यायनेन "ब्राह्मवैष्णवरौद्रसावित्रमैत्रवारुणै-(स्तल्लिङ्गै)रि"ति समस्त-बहुवचनान्तपदेन ब्रह्मादीनामेकैकेनापि मन्त्रेण सम्पादनीया पूजा कथिता, अत्रत्यबहुवचनस्य एकैकमन्त्रपरतयाऽपि विवक्षायामुपपत्तेः । अतः सवित्रादिपूजने मन्त्रबहुत्वमपि योगियाज्ञवल्क्यमत एव मन्तव्यम् । एकैकपरत्वेऽपि=प्रति-देवताभेदेन एकैक-मन्त्रबोधनेऽपि । बहुत्वोपपत्तेः=बहुवचनत्वसिद्धेः ।

पूर्वत्रापीति । अपि शब्दाद्दिशश्चेत्यादावपि नमस्कृत्येत्यनुषङ्गः ।

मूले देवताश्चेति । देवताः कस्या इत्याकाङ्क्षायां, सन्निधानात्, "आहृत्य तु नमस्कुर्या द्दिशो दिग्देवता अपि" इति येगियाज्ञवल्क्य वचनाच्च दिशामेव बोध्याः । तेन दिग्भ्यो नमः, दिग्देवताभ्यो नम इत्येवात्र वाक्यप्रयोगः सिध्यति ।

---

(२) नाभिधानात् । (३) ताश्च । (४) दिग्देवता मना पदेनेत्यनन्तरं चेति पाठः । (६) क्वचित् कुर्वन्तीत्यनन्तरमेव केचिदिति पदमस्ति । (७) क्वचित् 'तु' नास्ति ।

अत्र केचित्तु-श्रुतदिगादिशब्दम् । अनादृत्य=उपेक्ष्य । प्राच्यादिपदेन दिङ्नमस्कारम्=सर्वत्रैव ॐकार पूर्वं, (१) प्राच्यै नमः, (२) आग्नेय्यै नमः, (३) दक्षिणायै नमः , (४) नैर्ऋत्यै नमः, (५) पश्चिमायै नमः, (६) वायव्यै नमः, (७) उदीच्यै नमः, (८) ऐशान्यै नमः (९) ऊर्ध्वायै नमः (१०) अधरायै नमः इत्येवं रूपेण दिशामेव नमस्कारं कुर्वन्ति । तथा, इन्द्रादिपदेन दिग्देवतानमस्कारं कुर्वन्ति । यथा सर्वत्रैव ऊँकार पूर्वं पूर्वोक्त-दिक्क्रमेण (१) इन्द्राय नमः, (२) अग्नयेनमः, (३) यमाय नमः, (४) निर्ऋतयेनमः, (५) वरुणाय नमः, (६) वायवे नमः, (७) सोमाय नमः, (८) ईशनाय नमः, (९) ब्रह्मणे नमः, (१०) अनन्ताय नमः, इत्येवं रूपेण नमस्कारं कुर्वन्तीत्यर्थः। परमेतन्मतं न युक्तम् । श्रुतदिगादिशब्दमनादृत्य स्वेच्छयैव मन्त्रवाक्य-कल्पनाया अन्याय्यत्वात् । विष्णुमहदित्येका देवता, अद्भ्य इति पृथक् कथनात् । पृथङ्नमस्कार्यत्वम्=ब्रह्माग्नि-पृथिव्यौ-षधीत्यादौ समासेन निर्दिष्टत्वेऽपि उपात्त-प्रत्येक-देवस्य पृथक् पृथगेव नमस्करणीयत्वम् । एतदुत्तरं ''नम इति सर्वत्रापी''ति मूले एव कथितोपसंहारवचनात् । ''ब्रह्मणेऽग्नये पृथिव्यै चौषधीभ्यस्तथैव च'' इत्यादि योगियाज्ञल्क्य-वचनेऽपि तथा दर्शनाच्च ।

उपसंहारः=प्रकरणबद्धलेखान्ते सारांशः । एतत्पर्यन्तम्=देवविसर्जनपर्यन्तम् । स्नान-प्रयोगानुवृत्तेः स्नान-प्रयोग-सम्बन्धस्य । ज्ञापनार्थः=बोधनार्थ एव।पात्तः । प्रपञ्चितम्=विस्तरेण निरूपितम् । अत्राचारचिन्तामणिरपि यथा-''स्नानविधिरेष इत्युपसंहारः । सच एतत्पर्यन्तस्नानानुवृत्तिज्ञापनार्थः । पुनः स्नानविधि-रिति मध्याह्निक-स्नानविधेरन्यत्रातिदेशार्थ'' इति ।

**[ हिन्दी टीका ]**

''आवाहनम'' इत्यादि वचन से जो आवाहन आदि के द्वारा विष्णु पूजा कही गई है वह योगियाज्ञवल्क्य के मत में ही प्रकारान्तर ज्ञातव्य है । इसी तरह इन के वचनों द्वारा जो बहुत मन्त्रों से सविता, मित्र तथा वरुण आदि (एकएक)का पूजन कहा गया है, वह भी इन्हीं के मत में प्रकारान्तर समझें । क्योंकि कात्यायन के ''ब्राह्म वैष्णव रौद्र'' इत्यादि समस्त (समास किये गए) वचन के द्वारा एक एक मन्त्र से भी एक एक देव पूजन कहा या समझा ज़ा सकता है । फलतः कात्यायन मत में यहाँ निर्दिष्ट छहों

देवों के उद्देश्यों से क्रमश: एक-एक मन्त्र को मान लेने से वचन में कहे गए बहुवचन उपपन्न (संगत) हो जाता है । अत: वह बहुत मन्त्रवाला एक एक पूजन योगियाज्ञवल्क्य के मत में ही समझना चाहिये ।

मूल के 'दिशाश्च' पद में कहे गए चकार से 'नमस्कृत्य' पद का पूर्व में कहे गए देव तथा दिशा आदि के साथ भी सम्बन्ध समझना चाहिए ।

मूल के 'दिशाश्च देवताश्च' में देवता पद से सन्निधिवर्त्ती दिशाओं का ही देवता लेना चाहिए । अत: ॐ दिग्भ्यो नम:, ॐ दिग्देवताभ्यो नम: ये दो मन्त्र वाक्य होंगे ।

यहाँ किन्हीं का कहना है कि प्राच्य आदि पद से दिशाओं का यथा ॐ प्राच्यै नम:, तथा इन्द्र आदि पद से दिग्देवाताओं का यथा इन्द्राय नम: आदि रूप से नमस्कार करना ही वचन का तात्पर्य है । (पूरा प्रयोगवाक्य संस्कृत टीका से समझें) । किन्तु यह मत इसलिए युक्ति संगत नहीं कि मूल वचन में श्रुत 'दिक्' आदि शब्द की अवहेलना कर अपनी इच्छा से प्रयोगवाक्य की कल्पना कर लेना न्याय सङ्गत नहीं ।

''ब्रह्माग्निपृथिव्यौषधि'' इस वाक्य में समास से निर्देश होने पर भी कहे गए प्रत्येक देवता का पृथक्-पृथक् रूप से नमस्कार होगा । क्योंकि आगे ''नम इति सर्वत्र''-नम: पद का सम्बन्ध सभी के साथ है- यह उपसंहार वचन कहा जाता है और योगियाज्ञवल्क्य के वचन में तो असमस्त पद से स्पष्ट रूप में प्रत्येक का नमस्कार देखा भी जाता है । 'विष्णु महद्भ्य:'' कहने से 'विष्णु महत्' नाम का एक ही देवता है अत: एक ही नमस्कार होगा । क्योंकि इस से अलग भी 'अद्भ्य:' पद का उपादान कर दिया गया है ।

अन्त में एष एव स्नानविधि:-यही स्नान विधि है-यह उपसंहार कथन यहाँ तक (देव विसर्जन तक) स्नान प्रयोग के सम्बन्ध को दिखलाने के उद्देश्य से है । यह विषय पहले भी कह दिया गया है ।

यहाँ के आचारचिन्तामणि के अनुसार यह भी ज्ञातव्य है कि मूलवचन में पुन: '(एष) स्नान विधि:' का कथन मध्याह्न समय में होने वाले (कातीय) स्नान विधि का अन्यत्र (प्रात:कालिक आदि स्नानों में) भी अतिदेश (आरोप) को समझाने के निमित्त हुआ है ।

❀ इति तर्पणोत्तरं कर्म ❀

# पूजादिप्रकारः

[मूलम्]

(१) ॐ ब्रह्म जज्ञानं प्रथमं पुरस्ताद्वि सीमतः सुरुचो वेन आवः। स बुध्न्या उपमा अस्य विष्ठाः सतश्च योनिमसतश्च विवः (यजुः १३।३) ॐ ब्रह्मणे नमः।

(२) ॐ इदं विष्णु र्वि चक्रमे त्रेधा निदधे पदम्। समूढमस्य पाᳬसुरे ।। (यजुः ५।१५) ॐ विष्णवे नमः।

(३) ॐ नमस्ते रुद्रमन्यव उतोत इषवे नमः। बाहुभ्यामुत ते नमः (यजुः १९।१) ॐ रुद्राय नमः।

(४) ॐ आ कृष्णेन रजसा वर्तमानो निवेशयन्नमृतं मर्त्यञ्च। हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन् (२ ऋ ३५ स० ७ अनु यजुः ४३।३३) ॐ सवित्रे नमः।

(५) ॐ मित्रस्य चर्षणीधृतोऽवो देवस्य सानसि। द्युम्न चित्रश्रवस्तम्।। (यजुः ११/६२) ॐ मित्राय नमः।

(६) ॐ इमम्मे वरुण श्रुधी हवमद्या च मृडय। त्वामवस्युराचके ।। (यजुः २१।१) ॐ वरुणाय नमः।

—इति ब्रह्मादीन् सम्पूज्य उत्थाय—

(७) ॐ अदृश्रमस्य केतवो विरश्मयो जनाᳬ अनु। भ्राजन्तो अग्नयो यथा।। (यजुः ८।४०)।

(८) ॐ हᳬ सः शुचिषद् वसुरन्तरक्षिसद्धोता वेदिषदतिथिर्दुरोणसत्। नृषद्वर सदृत सद्व्योम सदब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ।। (यजुः १०।२४) इत्याभ्यां सूर्यमुपस्थाय प्रदक्षिणीकृत्य ॐ आदित्याय नमः इत्यादित्यं नमस्कृत्य ॐ दिग्भ्यो नमः, ॐ दिग्देवताभ्यो नमः, ॐब्रह्मणे नमः, ॐअग्नये नमः, ॐ पृथिव्यै नमः, ॐ औषधिभ्यो नमः ॐ वाचे नमः, ॐ वाचस्पतये नमः, ॐ विष्णु-महद्भ्यो नमः, ॐ अद्भ्यो नमः, ॐ अपाम्पतये नमः, ॐ वरुणाय नमः

—इति नमस्कृत्य

(९) ॐ संवर्चसा पयसा सन्तनूभिरगन्महि मनसा सꣳ शिवेन । त्वष्टा सुदत्रो विदधातु रायोऽनुमार्ष्टु तन्वो यद् विलिष्टम् (यजुः २।२४)

—इति जपन् सजलकरद्वयेन मुखं संस्पृश्य—

(१०) ॐ देवा गातुविदो गातुं वि त्वा गातुमित । मनसस्पत इमन्देव यज्ञꣳ स्वाहा वातेधाः ।। (यजुः ८।२१)

—इति विसर्जयेत् ।

## [ संस्कृत टीका ]

ॐ ब्रह्मेति । अत्र १,२,३,४,५,६ चिह्नाङ्कितमन्त्रेषु क्रमशः ब्रह्म-विष्णु-रुद्र- सवितृ-मित्र-वरुण-पदोपादाल्लिङ्गाद् ब्रह्मणः, विष्णोः रुद्रस्य, सवितुः, मित्रस्य, वरुणस्य च पूजन (स्तुति)-मन्त्रा विज्ञेयाः । विसर्जयेत्=पूजित-देवानां विसर्जनं कुर्यादिति भावः । अत्र व्याख्येय-पदाभावात्सर्वमन्यत्स्पष्टमेव ।

## [ हिन्दी टीका ]

अन्य देव तथा भुवनवर्त्ती मनुजों को अपने अपने व्यापारों में संलग्न करते हुए, लोगों के द्वारा किये जा रहे पुण्यपाप कर्मों का साक्षी के जैसे निरीक्षण करते हुए तथा सुवर्ण निर्मित रथ से भ्रमण करते हुए सूर्य देव सूर्योदय के पूर्व वाले अन्तरिक्षलोक से (अथवा प्रायः शुभकर्मों कें अयोग्य होने के कारण कृष्ण वर्ण काली रात को साथ में लिए हुए) मेरे समीप आ रहे हैं । (अतः इनकी आराधना करूँ ।)

यहाँ पूर्व से ही ज्ञातस्य है कि ऊपर की छहों पूजाएँ केवल पुष्प समर्पण रूप हैं । यहाँ १,२,३,४,५, तथा ६ अंकों से चिह्नित क्रमिक मन्त्रों में क्रमशः ब्रह्मा, विष्णु, रुद्र, सविता, मित्र एवं वरुण पद के उपादान होने से इनके ये पूजन (स्मुति) मन्त्र हैं ।

(१) चिह्नाङ्कित मन्त्र तथा वाक्य पढ़कर ब्रह्मा की, (२) चिह्नाङ्कित मन्त्र तथा वाक्य पढ़कर विष्णु (३) चिह्नाङ्कित मन्त्र तथा वाक्य पढ़कर रुद्र की, (४) चिह्नाङ्कित मन्त्र तथा वाक्य पढ़कर सविता की, (५) चिह्नाङ्कित मन्त्र तथा वाक्य पढ़कर मित्र की और (६) चिह्नाङ्कित मन्त्र तथा वाक्य पढ़कर वरुण की पूजा करे । अनन्तर उठकर (७) तथा (८) चिह्नाङ्कित दोनो ऋचाओं से सूर्य भगवान् की स्तुति प्रार्थना कर 'ओं आदित्याय नमः' से लेकर ओं वरुणाय नमः पर्यन्त का एक एक वाक्य पढ़कर उन उन निर्दिष्ट देवताओं को नमस्कार करे ।

अनन्तर (९) चिह्नाङ्कित ऋचा पढ़ता हुआ भीगे दोनों हाथो से अपने मुंह को पोंछ कर (१०) चिह्नसाङ्कित ऋचा पढ़कर पूजित देवों का विसर्जन कर दे।

## [ मन्त्रों का हिन्दी अर्थ ]

(१) सर्वप्रथम पूर्व दिशा से प्रकट होने वाले आदित्य ब्रह्मने भू लोक के मध्य भाग से आरम्भ करके इन समस्त सुन्दर कान्ति वालें लोकों को अपने प्रकाश से व्यक्त किया है तथा वह अत्यन्त कमनीय आदित्य इस जगत् की निवास स्थान भूत अवकाश युक्त दिशाओं को विदयमान-मूर्त्त पदार्थ के स्थानों को और अमूर्त्त वायु आदि के उत्पत्ति स्थानों को भी प्रकाशित करता है।

(२) सर्वव्यापी त्रिविक्रम (वामन) अवतारधारी भगवान विष्णु ने इस चराचर जगत् को विभक्त करके (चरणों से) आक्रान्त किया है। इन्होंने पृथ्वी, आकाश और द्युलोक-इन तीनों स्थानों में अपना चरण स्थापित किया है [ अथवा उक्त तीनों स्थानो में क्रमशः वे अग्नि, वायु तथा सूर्यरूप से स्थित हैं ] इन विष्णु भगवान् के चरण में समस्त विश्व अन्तर्भूत हैं। हम इनके निमित्त स्वाहा (हविष्य दान) करते हैं।

(३) हे रुद्र, आपके क्रोध और बाण को नमस्कार है तथा आप की दोनों भुजाओं को नमस्कार है।

(४) अन्य देव तथा भुवनवर्त्ती मनुजों को अपने अपने व्यापारों में संलग्न करते हुए, लोगों के द्वारा किये जा रहे पुण्य पाप कर्मो का साक्षी के जेसे निरीक्षक करते हुए तथा सुवर्ण निर्मित रथ से भ्रमण करते हुए सूर्य देव सूर्योदय के पूर्ववर्त्ती ॠष्णवर्ण वाले अन्तरिक्षलोक से [अथवा प्रायः शुभकर्मों के अयोग्य होने के कारण कृष्णवर्ण (काली) रात को साथ में लिए हुए] मेरे समीप आ रहे हैं। (अतः इनकी आराधना करूँ)।

(५) मनुष्यों का पोषण करने वाले दीप्तिमान् मित्रदेवता का यह रक्षण कार्य सनातन, यशरूप से प्रसिद्ध, विचित्र तथा श्रवण करने के योग्य है।

(६) हे संसार-सागर के अधिपति वरुणदेव, अपनी रक्षा के लिए मैं आपको बुलाना चाहता हूँ, आप मेरे इस आवाहन को सुनिये और (यहाँ शीघ्र पधार कर) आज हमे सब प्रकार से सुखी कीजिये।

(७) प्रज्ञा की हेतुभूत एवं सम्पूर्ण पदार्थों का ज्ञान कराने वाली इन सूर्य देव की किरणें समस्त प्राणियों के भीतर विशेषरूप से अनुगत (ख्यात) देखी गयी है, जैसी देदीप्यमान अग्नि सर्वत्र देखी जाती है।

(८) हे सूर्यभगवान्, आप अहङ्कार का नाश करने वाले, (हंस), प्रकाश में गमन करने वाले (शुचिषत्), अपने में सब को निवासित करने वाले (वसु), वायुरूप से अन्तरक्षि गमन करने वाले (अन्तरिक्षसत्), देवों के बुलाने वाले (होता) अग्नि रूप से वेदी पर स्थित होने वाले (वेदिषत्), सबके पूजा की (अतिथि), यज्ञशाला में आहवनी यादि अग्नि रूप से प्राप्त होने वाले (दुरोणसत्), प्राणरूप से मनुष्यों में विचरने वाले (नृषत्), श्रेष्ठ स्थानों में गमन करने वाले (वरसत्), यज्ञ में प्राप्त होने वाले (ऋतसत्) और आकाश में विचरने वाले (व्योमसत्) हैं तथा आप जल में उत्पन्न होने वाले (व्योमसत्) हैं तथा आप जल में उत्पन्न होने वाले (अन्जा), चार प्रकाश के प्राणियों के रूप में पृथ्वी पर उत्पन्न होने वाले (गोजा), सत्य से उत्पन्न होने वाले (ऋतजा), पर्वतों में होने वाले (अद्रिजा) एवं सत्य स्वरूप और महान् हैं। मैं आप को प्रणाम करता हूँ।

(९) हम ब्रह्म तेज से, क्षीर आदि रस से, कर्म करने मे समर्थ सुदृढ अङ्गों से और शान्त मन से संयुक्त हों। सम्यक् प्रकार से दान करने वाले 'त्वष्टा' देवता हमें धन दें और हमारे शरीर में जो शक्ति आदि की न्यूनता आ गयी है, उसका मार्जन करें (अर्थात् हमारे धन और शरीर की पुष्टि करें)।

(१०) हे यज्ञवेत्ता देवताओ, आपलोग हमारे इस तर्पण रूपी यज्ञ को समाप्त जान कर अपने गन्तव्यमार्ग को पधारें। हे चित्त के प्रवर्तक परमेश्वर, मैं इस यज्ञ को आप के हाथ में अर्पण करता हूँ। आप इसे वायु देवता में स्थापित करें।

[यहाँ ज्ञातव्य है कि ऊपर (१) से (१०) तक चिह्नाङ्कित मन्त्रों के हिन्दी अर्थों में चौथे का अर्थ सायण, हलायुध एवं मन्त्रार्थदीपिका (शत्रुघ्न मिश्र) के अनुसार मेरे द्वारा किया गया है। अन्य 'नित्य कर्म प्रयोग' के अनुसार है।]

## [मूलम्]

अथ योगियाज्ञवल्क्य :-

प्रक्षाल्य तीरदेशन्तु गत्वा स्वं धर्ममाचरेत्।

गत्वा=गृहमिति शेषः। तथा,

स्रवन्त्यादि[१]ष्वथा[२]चम्य सोपानत्को ह्यसंस्पृशन्।
आगतः सोदपात्रस्तु यत्नेन शुचिरेव सः॥

---

पाठा० (१) सं स्रवा। (२) दिषु चा।

तेनोदकेन द्रव्याणि प्रोक्ष्याचम्य तथा गृहे ।
ततः कर्माणि कुर्वीत नित्यं वै यानि कानि च ॥

पात्रादिरहितं तोयमुद्धृतं सव्यपाणिना ।
न तेन प्रोक्षणं कुर्याद् वस्त्रनिष्पीडनेन च ॥

सौवर्णं राजतं ताम्रं मुख्यं पात्रं प्रकीर्त्तितम् ।
तदभावे स्मृतं पात्रं स्रवते यन्न धारितम् ॥

[ संस्कृत टीका ]

अथेति । अथ=पूजित देव विसर्जनानन्तरम् । तीर देशम्=पूजनार्थमुपयोजितं नद्यास्तट प्रदेशम् । प्रक्षाल्य=जलेन प्रोञ्छ्य । गत्वा = गृहमिति शेषः । स्वं धर्मम् = स्वकीयाश्रमधर्मम् । आचरेत् ।

तथेति । अथ=तीरदेशप्रक्षालनानन्तरम् । स्रवन्त्यादिषु=नद्यादिषु । आचम्य । सोपानत्कः=उपानद्भ्याम्-काष्ठमयीभ्यां चर्ममयीभ्यां वा पादुकाभ्यां सहितः, (अथ पादुका । पादुरुपानत्स्त्री इति पादत्राण पर्यायत्रये अमरः ( २१०।३०) । धृतोपानत्कः इति यावत् । सोदपात्रस्तु=जलपूर्ण पात्र सहितोऽपि । यत्नेन=प्रयास-पुरस्सरम् । असंस्पृशन्=अशुच्यादीनितिशेषः । एतेन प्रमादात् स्पर्शे दोषाभावः सूचितः । आगतः = गृहमागतः । सः=जलपात्रसहितः साधकः । शुचिरेव=पावन एव । तेनोदकेन=आनीतजलेन । गृहे द्रव्याणि=गृहस्थितानि पूजोपकरणपुष्पादीनि । प्रोक्ष्य=सिक्त्वा । तथा आचम्य । ततः यानि कानिचिद् धार्मिककर्माणि नित्यं वै कुर्वीत ।

सव्यपाणिना=वामहस्तेन । पात्रादिरहितम्=भूस्थितमित्यर्थः । उद्धृतम्=आनीतम् । यत्तोयम् । तेन । एतेन प्रतिबद्धे दक्षिणहस्ते वामहस्तेन पात्रादि-सहितस्य जलस्यानयने दोषाभावः सूच्यते । वस्त्रनिष्पीडनेन च= वस्त्र- निष्पीडितजलेन च । प्रोक्षणम् = पूजोपकरणादीनां सेचनम् । न कुर्यात् ।

पूजार्थं जलपात्रव्यवस्थामाह सौवर्णमित्यादिना । सौवर्णम्=सुवर्ण-निर्मितम् । राजतम्=रजत-निर्मितम् । ताम्रम् =ताम्र-निर्मितम् । पात्रम् । मुख्यम्= प्रधानम् । प्रकीर्त्तितम् = कथितम् । तदभावे=उक्तानामभावे । यत्=पात्रम् । धारितम् =

हस्तगृहीतम् । न स्रवते=न प्रच्यवते-तस्माज्जलं न निस्सरतीत्यर्थः । जल-धर्मस्य प्रस्रवस्य तदाधारपात्रेऽप्यारोपात्पात्रं स्रवते इति व्यवहारः । तत्पात्रम्=पित्तलादिपवित्रद्रव्यनिर्मितं कार्यकारि पात्रम् । स्मृतम्=मुनिभिःकथितम् । यन्न धारितमिति नारिकेलादिपात्रमुपात्तमिति कल्पतरुरिति वीरमित्रोदयः ।

## [ हिन्दी टीका ]

पूजन आदि कार्य हेतु उपयोग में लाये गए नदी के तट प्रदेश को जल से धोकर अनन्तर घर जाकर अपने आश्रम धर्म का आचरण करे ।

नदी के जल से आचमन कर खड़ाऊँ या जूता (ती) पहन कर भी जल लेकर आता हुआ रास्ते में सावधानी रखते हुए अशुचि द्रव्य का स्पर्श नहीं करता है तो वह पवित्र ही है (साथ ही उसके साथ वाला जल भी) । लाये हुए उस जल से घर में पूजोपकरण फूल आदि का प्रोक्षण तथा आचमन कर बाद में जिस किसी भी धार्मिक कृत्य का नित्य ही आचरण करे । यदि किसी पात्र में जल नहीं है अर्थात् भूमि स्थित है तो बायें हाथ से लाये गए उस जल से तथा वस्त्र के निचोडे जल से पूजोकरण पुष्प आदि का प्रोक्षण नहीं करें । (इस वचन से सूचित होता है कि दाहिने हाथ से किसी भी कारणवश कार्य न हो सकने की स्थिति में बायें हाथ से पात्र आदि के साथ जल लाने में कोई दोष नहीं अर्थात् ऐसा जल दूषित नहीं माना जाता है।)

पूजा हेतु सोना, चाँदी या ताम्बे का बना हुआ पात्र मुख्य है । इसके अभाव में पित्तल आदि पवित्र द्रव्य का भी पात्र लिया जा सकता है किन्तु वह पात्र निषिद्ध है जिससे जल चूये । यहाँ कल्पतरुकार का कहना है कि न चूने वाला ऐसा पात्र नारि-केल आदि का माना गया है ।

## [ मूलम् ]

शातातपः-

बहिर्नद्यादिष्वाचान्तः सोदकः किञ्चिदस्पृशन्[१] ।
रथ्यागतोऽपि यत्नेन शुचिरेव हि मानवः ॥

तथा,

नाधोवस्त्रैकदेशेन शुद्ध्यर्थमप आहरेत् ।
यद्वानीतन्तु सव्येन प्रोक्षयेद्दक्षिणेन तु ॥

---

पाठा० (१) कौंश्चि ।

[ संस्कृत टीका ]

बहिरिति । बहिः=गृहाद्बहिः । नद्यादिषु=नद्यादिसमीपे । आचान्तः=जलेन कृताचमनः । सोदकः=जलपूर्णपात्रःसन् । रथ्यागतोऽपि=प्रतोलीप्राप्तोऽपि किञ्चिद्=अशुचिवस्तु । अस्पृशन्=यत्नेनास्पृशन्निति सम्बन्धः । मानवः=मनुष्यः। शुचिरेव=शुद्ध एव मन्तव्यः ।

तथेति । शुद्ध्यर्थम्=शौचसम्पादनार्थम् । अधोवस्त्रैकदेशेन अपो नाहरेत्= जलपात्राभावेऽपि नाधोवस्त्रांनीतेन तोयेन प्रक्षालयेदिति भावः । सव्येन = वामहस्तेन । यदि=चेत् । आनीतम्=जलमिति शेषः । तु=तदा । तेन जलेन दक्षिणेनैव हस्तेन, तु=किन्तु कदाचिदपि न वामहस्तेनेत्यर्थः । प्रोक्षयेत्=पुष्पादीनि प्रक्षालयेत् ।

[ हिन्दी टीका ]

घर के बाहर नदी आदि के समीप में जल से आचमन कर लेने के बाद जलपूर्ण पात्र लेकर गली से गुजरता हुआ भी प्रयत्न पूर्वक किसी अशुद्ध वस्तु का स्पर्श नहीं करता है (इससे सिद्ध होता है कि प्रमादवश स्पर्श हो जाना दोषावह नहीं) तो वह मानव शुद्ध ही माना जायगा । तथा,

जलपात्र न होने की स्थिति में ही पहने हुए अधोवस्त्र के किसी भाग से शुद्धि के लिए जन नहीं लाना चाहिए । यदि कदाचित् बायें हाथ से जल लाया गया हो तो भी दाहिने ही हाथ से पुष्प आदि का उस जल से प्रक्षालन करें ।

[ मूलम् ]

पद्मपुराणे–

आचम्य विधिवत्सम्यगालिखेत् पद्ममग्रतः ।
अक्षतादिभःसपुष्पाभिः सतिलारुणचन्दनैः ॥
अर्घपाद्ये प्रयत्नेन सूर्यनामानुकीर्त्तनैः ।
नमोऽस्तु[१] विष्णुरूपाय नमस्ते ब्रह्मरूपिणे[२] ॥

---

पाठा० (१) ओ नमस्ते । (२) चारिणे ।

सहस्ररश्मये नित्यं नमस्ते सर्वतेजसे ।
नमस्ते रुद्रवपुषे[३] नमस्ते भक्तवत्सल ॥
पद्मनाभ नमस्तेऽस्तु कुण्डलाङ्गदभूषण[४] ।
नमस्ते सर्वलोकेश ! सुप्तानामपि बुध्यसे ॥
सुकृतं दुष्कृतञ्चैव सर्वं पश्यसि सर्वदा ।
सर्वदेव ! नमस्तेऽस्तु प्रसीद मम भास्कर ! ॥
दिवाकर ! नमस्तेऽस्तु प्रभाकर ! नमोऽस्तु ते ।
एवं रविं नमस्कृत्य त्रिः कृत्वा च प्रदक्षिणम्[५] ॥
द्विजं गां काञ्चनं स्पृष्ट्वा ततो विष्णुगृहं व्रजेत्[६] ।
आश्रयस्थ[७] ततः पूज्यं प्रतिमां चापि पूजयेत् ॥

अक्षतमत्र तण्डुलाः । सूर्यार्घान्तरे तथा दर्शनात् । अर्घपाद्ये दातव्ये इति शेषः । आश्रयस्थम्=जलस्थम् ।

[ संस्कृत टीका ]

आचम्येति । आचम्य । अग्रतः=स्वस्याग्रे । विधिवत्=यथाविधानम् । पद्मम्= कमलाकारम् । सम्यगालिखेत् । (तत्र पद्मे) सूर्यनामानुकीर्त्तनैः=' नमोऽस्तु विष्णु रूपाये'त्यतः 'प्रभाकर नमोऽस्तुते' पर्यन्तं वाक्यं पठन् सतिलारुणचन्दनैः= तिल-रक्तचन्दन-सहिताभिः । सपुष्पाभिः=पुष्पसहिताभिः । अक्षताद्भिः=तण्डुलमिश्रितजलैः । अक्षतपदेनात्र तण्डुला ग्राह्याः, सूर्यस्यान्यार्घे तण्डुलप्रयोगस्य शास्त्रतो व्यवहारतश्च दर्शनात् । प्रयत्नेन=सावधानेन । अर्घपाद्ये-दातव्ये इति शेषः । एवञ्च तैरर्घ्यं दत्त्वा पाद्यं दद्यादिति भावः । एवं रविं नमस्कृत्य=अनेनैव मन्त्र-वाक्येन सूर्यं प्रणम्य । त्रिः प्रदक्षिणञ्च कृत्वा। द्विजं, गां, सुवर्णञ्च स्पृष्ट्वा । ततः । विष्णुगृहम्=विष्णु-मन्दिरम् । गच्छेत् ।

---

पाठा० (३) पुरुष । (४) भूपित । (५) णा । (६) विशंत् । (७) आश्रयस्थञ्च सम्पूज्य प्रतिमास्वपि पूजयेत्।

ततः आश्रयस्थम्=जलस्थं विष्णुमिति भावः। ''अप्सु देवा मनुष्याणामि''ति शातातपवचनेन, ''आपो देवगणाः सर्वे'' इति कार्ष्णाजिनि-वचनेन च पूजाऽऽधारतया प्रथमतः जलस्य प्राशस्त्यात्। अत्राचारचिन्तामणिस्तु ''आशयस्थम्=जलाशयस्थम् विष्णुमिति शेषः। 'आप आयतनं तस्य तस्मात्तासु सदा हरिः' इति विष्णुनाऽभिधानात्। एवञ्च विष्णुपूजा नित्या, फलनिरपेक्ष्य विधिश्रवणात्। एवमिष्टदेवतापूजाऽपि नित्यैवे'' त्याह। ''आश्रयस्थम्= शालग्राम-शिलादिस्थमि''ति तु वीरमित्रोदयः। ततः विष्ण्वादीनां प्रतिमाञ्चापि पूजयेत्।

[ हिन्दी टीका ]

आचमन कर अपने आगे में यथाविधान एक अच्छा कमलचित्र बनावे। उस पर तिल-रक्तचन्दन-पुष्प तथा तण्डुल-(चावल) से मिश्रित जल से ''ओं नमोऽस्तु विष्णुरूपाय'' से लेकर ''प्रभाकर नमोऽस्तु ते'' तक मन्त्र वाक्य पढ़कर सूर्य भगवान् को अर्घ देकर पाद्य दे। अनन्तर इन्हीं मन्त्रों से प्रणाम करे। बाद, तीन बार प्रदक्षिणा कर द्विज, गो, तथा सुवर्ण का स्पर्श करे। इसके बाद विष्णु मन्दिर में जाकर जलस्थित (या जलाशय स्थित या शालग्राम शिला आदि में स्थित) विष्णु भगवान् की पूजा कर विष्णु आदि सभी देवों की प्रतिमा का भी पूजन करे।

यहाँ ऊपर से ज्ञातव्य है कि मूल के 'आश्रयस्थ' पद की ग्रन्थकार कृतव्याख्या 'जलस्थित' है तो आचारचिन्तामणि एवं वीरमित्रोदय की क्रमशः व्याख्यायें (१) 'जलाशयस्थित'। (२) 'शालग्राम शिलादि स्थित' हैं।

❁ इति पूजादिप्रकारः ❁

# देवपूजाप्रकरणम्

## [ मूलम् ]

अथ देवपूजा । तत्र विष्णुपुराणे सूर्याञ्जलिमुक्त्वा–

ततो गृहार्चनं कुर्यादभीष्टं सूर्यपूजनम् ।
जलाभिषेकं पुष्पाणां धूपादेश्च निवेदनम् ।।

आदिपदेन गन्धदीपनैवेद्यग्रहणम् ।

## [ संस्कृत टीका ]

अथेति । अथ=ब्रह्मयज्ञानन्तरम् । देव पूजेति । अत्र ''यद्यपीयं व्यासेन वैश्वदेवानन्तरमभिहितां तथाप्यन्यैस्ततः प्रागेवाभिधानात्तत्रैव कर्त्तुमुचिता । एवञ्च मध्याह्नस्नानोत्तरं देवपूजाविधानात् ''पूर्वाह्ण एव कुर्वीत देवतानाञ्च पूजनम् '' इति मनुवचनं काम्यपूजापरम् । यद्वा राजसभागमनाभ्युदयिकाद्यावश्यककार्यवतां सूर्योदयानन्तरं मध्याह्नात्प्रागपि स्नानसन्ध्यावन्दनदेवपूजादिकरणं नित्यमप्यदुष्टमेव । तथाच महाभारतम्–

सुखोषितास्तां रजनीं प्रातः सर्वे कृताह्निकाः ।
विविशुस्तां सभां दिव्यां कितवैरनुमोदिताम् ।।

इति नित्यकृत्यरत्नमाला । एवमेव, ''तदप्रत्याख्येयकर्मानुरोधेनानन्यगत्या माध्याह्निकानां नित्यानां मध्याह्नात्प्रागपि करणमदुष्टमित्येवंपरम् । अत्रापि न क्रमभङ्गः बीजाभावात् । तेन मध्याह्नसन्ध्यापि तदा कर्तव्येति नेयमि''–त्याचारचिन्तामणिरपि ।

पूजा नाम देवतोद्देश्येन द्रव्यत्यागात्मकत्वाद् याग एव । यज्धातोः देवपूजाऽर्थ कत्वात् । अत्राधिकारिणः

ब्राह्मणाः क्षत्रिया वैश्याः स्त्रियः शूद्रान्त्यजन्मनः ।
सम्पूज्य तं सुरश्रेष्ठ भक्त्या सिंहवपुर्धरम् ।।

**मुच्यन्ते चाशुभैः दुःखैः जन्म कोटि समुद्भवैः ॥**

इति नारसिंहीयादसङ्कोचेन सर्वेऽधिकारिणः ।

अत्र च देव-पूजायां सर्व-वर्णानामधिकार इति छन्दोगाह्निकमाचार-चिन्तमणिश्च । "अत्र शिव-पूजने स्वधर्मत्यागिनो ब्राह्मणेतरस्य नाधिकारः । विष्णुपूजने तु स्वधर्मपरायणानामेव सर्ववर्णानामधिकारः । शालग्रामशिलायाः स्पर्शपूर्वकपूजने स्त्रीशूद्रयोर्नाधिकारः अनुपनीतेनापि विष्णुशिवौ न स्पृश्याविति नि० कृ० रत्नमाला । "स्ववर्णधर्मपरित्यागिनश्च शिवपूजायामनधिकारः । ब्राह्मणस्य तु स्वधर्मपरित्यागिनोऽप्यधिकार" इत्याचारचिन्तामणिश्च ।

तत्रेति । तत्र = देवपूजाप्रकरणे । सूर्याञ्जलिमुक्त्वा = तौ युतावञ्जलिः पुमानित्यमररीत्या संयुत-हस्तद्वयेन सूर्याय अर्घजलदानं प्रतिपाद्य । तत इति । ततः=नदीतीरे सूर्यायाञ्जलिपूर्ण-सलिल-दानानन्तरं, गृहमागत्येति शेषः । गृहार्चनमिति । अत्र "गृहे अर्चनं गृहार्चनम् । तेन गृहगतेष्टदेवतामर्चयेदिति वाक्यार्थः । अथवा गृहे स्थितानां देवानाम्= इष्टदेवतातोऽन्यासामपि अर्चनम् । .....अत इष्टदेवता-पूजा नित्येति सिद्धम् । एवं विष्णुपूजाऽपी" ति छन्दोगाह्निकम् ।

तत्र सामान्यतो देवपूजने, जलाभिषेकम्=जलेन स्नपनम् । गन्ध-पुष्प-धूप दीप-नैवेद्यानां निवेदनञ्च । कुर्वीतेति पूर्वक्रियाऽभिसम्बन्धः । एषामेव वस्तूनां पञ्चोपचारत्वेन परिगणितत्वात् । पुष्पाद्यभावे मनसाऽपि देवाः पूज्या इत्यग्रे स्फुटीभविष्यति ।

**[ हिन्दी टीका ]**

अब 'देवपूजाप्रकरण' का प्रारम्भ किया जा रहा है ।

यहाँ ऊपर से समझना चाहिये कि व्यासने यद्यपि वैश्व देव कर्म के बाद देव पूजा का विधान किया है तथापि कात्यायनप्रभृति के द्वारा मध्याह्नस्नान के बाद और वैश्व देव कर्म के पहले किये जाने को विधान कर देने के कारण इसी समय देव पूजन होना उचित है । ऐसी स्थिति में मनु का यह कथन कि "पूर्वाह्न में ही देव पूजन कर लेना चाहिए" इसे काम्यपूजापरक समझें । किन्तु राजसथा आदि में जाना या आभ्युदयिकश्राद्ध आदि आवश्यक कार्य वालों के लिए मध्याह्न के पहले भी नित्यस्नान सध्यावन्दन देव पूजन आदि का करना निर्दोष ही होगा; क्योंकि महाभारत

में प्रसंग आता है कि ''रात भर सुख की नींद के बाद प्रातःकाल सभी व्यक्ति ने नित्यकर्म सम्पन्न कर उस दिव्य सभा में प्रवेश किया।

देवता के उद्देश्य से जलपुंष्प आदि द्रव्यों का किया गया त्याग (देव) पूजा कहलाता है जो एक 'याग' स्वरूप है। इसके अधिकारी ब्राह्मण क्षत्रिय वैश्य शूद्र तथा उनकी स्त्रियाँ भी हैं। किन्तु ब्राह्मण से इतर अपने वर्णधर्म के परित्यागी जन को शिवपूजन में अधिकार नहीं माना जाता। विष्णु पूजन में तो स्वधर्म निरत व्यक्तियों का ही अधिकार है। शालग्राम शिला का स्पर्श पूर्वक पूजन स्त्रीशूद्रों के लिए निषिद्ध है।

प्रकृत ग्रन्थ के अनुसार विष्णु पुराण में देव पूजा प्रकरण पर सूर्य के लिए अञ्जलि से अर्घदान विधान के बाद कहा गया है कि नदीतट से आकर अपने घर में स्थित इष्टदेव अथवा इष्ट देव से अन्य देवों का भी पूजन करे। (इससे सिद्ध होता है कि इष्ट देव तथा विष्णु का भी पूजन नित्य (प्रतिदनि कर्तव्य) है। सामान्यतः देवजपूजन में जल स स्नान तथा पञ्चोपचार (चन्दन पुष्प धूप दीप एवं नैवेद्य) का समर्पण करना चाहिये।

उक्त वस्तुओं के अभाव में मानसिक भी देवपूजन हो सकता है, यह बात आगे स्फुट होगी।

## [ मूलम् ]

यमः—

देवमाल्यापनयनं देवागारसमूहनम्।
स्नपनं सर्वदेवानां गोप्रदानसमं स्मृतम्॥

## [ हिन्दी टीका ]

देवमाल्येति। देवमाल्यापनयनम्=देवनिर्माल्यापसारणम्। माल्यपदमत्र निर्माल्यपरं बोध्यम्। देवागार समूहनम् = देवालय मार्जनम्। ''समूहनम्=समीक्ष्य मन्दं मृदु श्लक्ष्णं चेति (सूक्ष्मया) संमार्जन्या जन्तुवधपरिहारेणे'' ति छन्दोगाह्निकम्। सर्व-देवानाम्=देवालयंस्थित-सकल-सुराणाम्। स्नपनम्=जलेन स्नापनम्। गोप्रदानसमम्=गोप्रदानजन्यफलसमफलकम्। स्मृतम्=स्मृतिभिर्बोधितम्।

## [ हिन्दी टीका ]

देवता के समीप से निर्माल्य हटाना, देवालय का झाड़ना बुहारना तथा देवालय के देवों को जल से स्नान कराना गोदान के समान फल देनेवाला होता है।

[ मूलम् ]

ब्रह्मपुराणे-

देवानां प्रतिमा यत्र घृताभ्यङ्गक्षमा भवेत् ।
पलानि तस्यै देयानि श्रद्धया[1] पञ्चविंशतिः ॥
अष्टोत्तरं पलशतं स्नाने[2] देयञ्च[3] सर्वदा ।
द्वे सहस्रे पलानान्तु महास्नाने च[4] संख्यया ॥
दातव्यं येन सर्वासु दिक्षु निर्याति[5] तद् घृतम् ।

प्रतिमेत्युपलक्षणम् । तेन लिङ्गेऽपीयमेवाभ्यङ्गादिव्यवस्था । यद्यपि घृतं प्रकृतं तथापि दुग्धादि-स्नानेऽपीयमेव व्यवस्था । एतच्च भविष्यत्पुराणोक्तम् ।

[ संस्कृत टीका ]

देवानामिति । देवानाम् = देवतानाम् । घृताभ्यङ्गक्षमा=घृतेन मर्दनयोग्या । प्रतिमा= प्रस्तरसुवर्णादिनिर्मिता प्रतिकृति : (प्रतिमा प्र्रतियातना प्रतिच्छाया । प्रतिकृतिरित्यमरः) । गैहिकप्रतिमामानसम्बन्धे तु-

अङ्गुष्ठपर्वादारभ्य वितस्तिं यावदेव तु ।
गृहेषु प्रतिमा धार्या नाधिका शस्यते बुधैः ॥

इत्याचारचिन्तामणिधृतं मत्स्यपुराणवचनमपि ध्येयम् ।

यत्र = देवालये । भवेत् । तस्यै = प्रतिमास्थदेवतायै । श्रद्धया = श्रद्धापूर्वकम् । पञ्चविंशतिः पलानि = पञ्चविंशतिसंख्या-कपलपरिमितानीत्यस्याग्रिमघृतमित्येनेन वचनविपरिणामेनान्वयः । तथा च एतावन्ति घृतानि देयानीति भावः । अत्र ''इदं क्रोडीकृताभिप्रायेणे'' ति निर्णयसिन्धुः (पृ० सं० २४५) । मानबोधकमत्र पलञ्च कर्षचतुष्टयम् । गुञ्जाः पञ्चाद्यमाषकाः । ते षोडशाक्षः कर्षोऽस्त्री पलं कर्ष चतुष्टयमित्यमरः । ''पलं चतुः सुवर्णपरिमितम् । पलं सुवर्णा श्चत्वार इत्यभिधानात् । सुवर्णश्चाशीति

पाठा० (१) संख्यायाः । (२) स्नात्वा । (३) देयन्तु । (४) तु । (५) निर्यातितं ।

गुञ्जापरिमितः। 'पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश' इत्यभिधानादिति- वीरमित्रोदयश्च।

तद्देवतायाः स्नाने कारयितव्ये, सर्वदा = सदा। अष्टोत्तरं पलशतम् = अष्टोत्तरशतपलपरिमितं घृतमित्यग्रेणानन्वयः। देयम्।

एवमेव, महास्नाने = बृहत्स्नाने। संख्यया पलानां द्वे सहस्रे = सहस्रद्वयपल- परिमितम्। घृतं दातव्यम्। अत्र "घृत-दधि-दुग्धादिभिः स्नपनमति प्रशस्तम्। सर्वत्र स्नाने अष्टोत्तरशतपलानि, महास्नाने तु पलसहस्रद्वयम्। पञ्चविंशतिपलमितघृताभ्यङ्गोऽत्यन्तपुण्यदः। घृताभ्यङ्गस्नानानन्तरं यवगोधूमचूर्णैर्गन्धयुक्तकषायैर्वोद्वर्तनं कृत्वा सुखोष्णजलेन क्षालनङ्कर्तव्यम्। दुग्धादिस्नानानन्तरमपि जलेन क्षालनङ्कर्तव्यमि"ति छन्दोगाह्निकम्। परमत्र स्नाने तद्घृतादिकं तथा देयं येन प्रकारेण। सर्वासु दिक्षु = प्रतिमायाः चतुर्षु अष्टसु वा दिक्षु। निर्याति = निर्गमनशीलं स्यात्। प्रतिमेत्युपलक्षणमिति। अत्र प्रतिमापदम्, उपलक्षणम्=अन्यस्यपि बोधकम्। तेन शिवलिङ्गस्यापिग्रहणम्। तथा च प्रतिमावल्लिङ्गेऽपि, इयमेव = अत्रोक्तैव। अभ्यङ्गादिवस्था = घृतमर्दन-द्रव्य संख्यादि व्यवस्था बोध्या। उपलक्षणपदार्थश्चात्रस्वबोधकत्वे सति स्वेतरबोधकत्वमिति।

यद्यपीति। यद्यपि 'दातव्यं येन सर्वासु दिक्षु निर्याति तद्घृतम्' इत्युक्त- प्रकृतवचने घृतस्यैवोपादानमस्ति तथापि इदानीमुक्तया उपलक्षण-प्रणाल्या घृतपदेन दुग्ध-दधि-मध्वादीनां ग्रहणम्। तेन दुग्धादिस्नानेऽपि, इयमेव = पूर्वोक्तैव। व्यवस्था आस्थेया। एतच्च = एतद्व्यवस्थाबोधनञ्च। भविष्यत्पुराणोक्तम् = भविष्यत्पुराणप्रतिपादितं प्रत्येतव्यम्।

## [ हिन्दी टीका ]

जिस देवालय में देवताओं की प्रतिमा (मूर्त्ति) या शिवलिङ्ग घृत से मालिश करने योग्य हो तो वहाँ उस देवता के निमित्त इस मालिश हेतु श्रद्धा पूर्वक १०० भरी (२५ पल परिमित) घृत दें। यदि घृत-दूध-दही-मधु आदि से स्नान कराना हो तो चार सौ बत्तीस भरी घृत आदि से स्नान करावें। महास्नान के लिए आठ हजार भरी ये प्रत्येक पदार्थ आवश्यक होंगे। परन्तु ध्यान रखना यह है कि स्नानीय पदार्थ वह घृत आदि इस तरह चढ़ायें जिससे प्रतिमा या लिङ्ग के सभी तरफ गिरता रहे।

इसी ग्रन्थकार के अपर ग्रन्थ छन्दोगाह्निक के अनुसार यह भी ज्ञातव्य है कि घृत से मालिश या स्नान के बाद जौ या गेहूँ के चूर्ण या सुगन्धित पवित्र अन्य चूर्ण से अवटन लगाकर साधारण गरम जल से धो दें। दूध आदि से स्नान के बाद भी जल से धो देना चाहिए।

[ मूलम् ]

ब्रह्माङ्गलग्नं विप्रेभ्यो वैष्णवञ्च प्रदीयते।
रुद्राङ्गलग्नमग्नौ च दहेत्सर्वञ्च तत्क्षणात्॥
शिष्टेभ्योप्यऽथ देवेभ्यो यत्तद्[1] दीनेषु निक्षिपेत्।
विप्रेभ्यस्त्वत्र तद्देयं ब्रह्मणे यन्निवेदितम्॥
वैष्णवं सात्वतेभ्यश्चभस्माङ्गेभ्यश्च शाम्भवम्।
सौरं मगेभ्यः, शाक्येभ्यस्तापिने[2] यन्निवेदितम्॥
स्त्रीभ्यश्च देयं मातृभ्यो यत्तु[3] किञ्चिन्निवेदितम्।
भूतप्रेतपिशाचेभ्यो यत्तद् दीनेषु निःक्षिपेत्॥

'ब्रह्माङ्गलग्नमि'त्यादिना स्नानघृतादिप्रतिपत्तिः। 'विप्रेभ्यस्त्वथे' त्यादिना दत्तनैवेद्यादिप्रतिपत्तिः। सात्वतो व्रात्याद् वैश्यादित्यधिकृत्य—

पञ्चमः सात्वतो नाम विष्णोरायतनानि[4] च।
पूजयत्याज्ञया राज्ञो यदि स्यात्संयतेन्द्रियः॥

इति ब्रह्मपुराणे एव दर्शितः। तापिने = बुद्धाय। एतत्तु तिथिकृत्यादौ यत्र बुद्धपूजा विहिता, तत्परमिदम्। मातृभ्य इति देवीमात्रोपलक्षणम्।

[ संस्कृत टीका ]

ब्रह्माङ्गेति। ब्रह्माङ्गलग्नम् = ब्रह्मणो देवस्य अङ्गेषु सम्पृक्तम्। वैष्णवञ्च=तथा भगवतो विष्णोरङ्गेषु सम्पृक्तञ्च स्नानघृतादिकम्। विप्रेभ्यः = ब्राह्मणेभ्यः। प्रदीयते = दातव्यम्। रुद्राङ्गलग्नम् = शिवाङ्गसङ्क्रान्तञ्च। सर्वम् = स्नान

---

पाठा० (१) यत्तु। (२) यत्किञ्चित् विनिवेदितम्। (३) तायिने। (४) न्यपि।

घृतादि । तत्क्षणात् = शीघ्रमेव । अग्नौ । दहेत् = प्रक्षिपेत् । शिष्टेभ्यः =उक्तादन्येभ्यो देवेभ्यः । यत् = घृतादिकं प्रदत्तम् । तत्तु । दीनेषु = निर्धनेषु । निक्षिपेत् = दद्यात् । अत्र "ब्रह्मणो विष्णोश्च स्नानघृतादि ब्राह्मणेभ्यो दातव्यम् । शिवस्याग्नौ दग्धव्यम् । देवानां दीनेभ्यो दातव्यमि"ति छन्दोगाह्निकमपि ।

एवमेव, ब्रह्मणे । यन्निवेदितम् = अन्नासम्पृक्तं केवलं भक्त्या समर्पितं नैवेद्यादि । तत् विप्रेभ्यो देयम् । वैष्णवम् = विष्णुनैवेद्यादि । सात्वतेभ्यः = विष्णोरायतने पूजा(धिकां)रिभ्यः । (विशेषस्त्वत्राधुनैवाग्रे वक्ष्यते) । शाम्भवम् = शङ्करनैवेद्यादि । भस्माङ्गेभ्यः = शिवोपासकेभ्यो भस्मभूषितेभ्यो यतिभ्यो दद्यात् । सौरम् = सूरस्य-सूर्यस्येदं, नैवेद्यादि । मगेभ्यः = शाकद्वीपिब्राह्मणेभ्यः । "कूष्माण्डं महिषीक्षीरं बिल्वपत्रमगद्विजाः" इति श्राद्धप्रकरणीय वचनव्याख्यायां मगद्विजाः = शाकद्वीपिब्राह्मणा" इति कृत्यसार समुच्चयः । अथ "शक्ताः=समर्था वयमित्यावेदयन्तः केचन (क्षत्रियाः) शका अभवन् । ..... शकानामेषां निवास : प्रान्त विशेष एव शाकद्वीपः । शाकजातीयानां ये ब्राह्मणा विद्यावृत्तयस्ते मगा आख्याताः" इति समीक्षाचक्रवर्त्ति-मधुसूदन (ओ)झा-प्रणीतः भारतसीमाप्रसङ्गीयः इन्द्रविजयश्च । तापिने = बुद्धाय-तिथिकृत्यादौ तिथिविशेषे विहितपूजनाय सुगतायेति यावत् । यन्निवेदितम्=नैवेद्यादिरूपेण यत्समर्पितम् । तत् शाक्येभ्यः बौद्धभिक्षुकाय । अतएव "मगाः शकद्वीपिनः । तापी = बुद्धः । शाक्यो बौद्धभिक्षुरि" ति नि० कृ० र० मा० टिप्पण्यपि । मातृभ्यः = दुर्गाऽऽदि देवीभ्यः । यत्किञ्चिन्नैवेद्यादि निवेदितं तत्, स्त्रीभ्यः = महिलाभ्यः । भूतप्रेतपिशाचेभ्यो यन्निवेदितं तत् । दीनेषु=विभवविहीनेषु । निःक्षिपेत् = दद्यात् । अतएव "ततः सूर्यनैवेद्यं मगेभ्यः, शिवनैवेद्यं तपस्विभ्यो, दुर्गायाः स्त्रीभ्यो, विष्णोः सात्वतेभ्यः प्रतिपादयेदि" ति छन्दोगाह्निकम् । एवमेव नित्यकृत्यरत्नमालाऽपि । विष्णवे दत्तं सात्त्वतेभ्यो ब्राह्मणेभ्यो वा दद्यादित्याचारचिन्तामणौ विशेषः । परमत्रैव विष्णोर्नैवेद्यप्रतिपत्तिप्रकरणे वीरमित्रोदस्तु—"सूर्याय निवेदितं मगाय दातव्यम् । देव्यै निवेदितं कुमार्यै देयम् । शिवाय निवेदितं तल्लिङ्गधारिणे । विष्णुनिवेदितं सात्वताय ब्राह्मणाय दत्त्वा स्वयं भुञ्जीत । नच स्वयं ग्रहणे दत्तापहारापत्तिरिति

वाच्यम्। वचनेन प्रतिपत्तिविशेष विधाने दोषाभावात्। सात्वतासान्निध्ये तु–

**नैवेद्यप्रतिपत्त्यर्थं सात्वतश्चेन्न लभ्यते।**

**ग्रासमात्रं समुद्धृत्य जलेऽग्नौ वा विनिःक्षिपेत्॥**

इत्यनुकल्पो द्रष्टव्यः। इदञ्च प्रतिमादिपूजायाम्। स्थावरपूजायान्तु सात्वतेभ्य एव देयम्। तथा शिष्टाचारात्। स्वयं तदुपभोगस्य शिष्टाचार-विरोधाच्चे'' ति प्राह।

स्नानघृतादीति। अत्र आदिपदाद्दुग्धदधिमध्वादीनां संग्रहः। नैवेद्यादीत्यत्रत्यादिपदाद्वस्त्रभूषणादिपरिग्रहः। प्रतिपत्तिः बोधो ग्रहणं वा। सात्वत इति।

**वैश्यात्तु जायते व्रात्यात्सुधन्वाचार्य एव च।**

**कारूषश्च विजन्मा च मैत्रः सात्वत एव च॥**

(वैश्यात्पुनः व्रात्यात्सवर्णायां सुधन्वाचार्यकारूष-विजन्म-मैत्र-सात्वताख्याः जायन्ते। एकस्य चैतान्यपि नामानी'' ति मन्वर्थमुक्तावली-टीका) इति मनु-(१०/२३) स्मृत्यनुसारं ब्रह्मपुराणे-व्रात्यात् = अतिक्रान्तसावित्रीकाद् वैश्याज्जायमान इत्यधिकृत्य = प्रतिपाद्य–पञ्चमः = ब्राह्मणक्षत्रियवैश्यशूद्रेतिवर्णचतुष्टयादन्यः सङ्करजातीयः पञ्चमो वर्णः। संयतेन्द्रियः =जितेन्द्रियः सन्। राज्ञः = नरेशस्य। आज्ञया=आदेशेन। विष्णोरायतनानि च = विष्णोर्मूर्त्तिभवनानि च। पूजयति = अर्चति परिष्करोति च। स एव सात्वत इत्युच्यते इति ब्रह्मपुराणीयवचनार्थः। अत्र बाणलिङ्गनैवेद्य ग्राह्याग्राह्यसम्बन्धे नि० कृ० र० माला यथा–''बाणलिङ्ग–नैवेद्यविषये ग्रह्याग्राह्यत्वे सप्रमाणे पूजापङ्कजभास्करे विस्तरेण दर्शिते। तथा च तत्र पद्मपुराणीयं शिववाक्यम्–

**अनर्हं मम नैवेद्यं पत्रं पुष्पं फलं जलम्।**

**शालग्रामशिलालग्नं सर्वं याति पवित्रताम्॥**

इति शूलपाण्युपाध्याया आचारविवेके प्राहुः। स्मृतिदीपिकायां वामदेवोपाध्यायास्तु बाणलिङ्गनैवेद्यस्य भक्ष्यत्वमाहुः–

**ग्राह्याग्राह्यविचारोऽत्र शिवलिङ्गे न विद्यते।**

इति । तत्रैव इत्यादि यथोट्टङ्कितम् बाणलिङ्गनैवेद्यादिकमुपक्रम्य शिवनारदसंवादेऽभिधानात्तथा च तन्नैवेद्यादिकं ग्राह्यमिति तदर्थः। पार्थिवशिवलिङ्गे तु स (विचारः) विद्यत एवेति तद्वचनार्थस्तेनात्र चण्डाधिकारः प्रतीयते । ततश्च—

यत्र चण्डाधिकारोऽस्ति तद्भोक्तव्यं न मानवैः ।
चण्डाधिकारो नो यत्र भोक्तव्यं तच्च भक्तितः ॥

इति दाक्षिणात्यनिबन्धधृतवचनमेव निर्णायकम् । तेनात्र भक्तित इत्युपादाना-द्भक्त्युद्रेके तद्भक्षणीयमिति प्रतीयते । किन्त्वेतदन्यनिबन्धृभिरनुक्त-त्वान्मैथिलैर्नाद्रियते ।

निर्माल्यं नोपभोक्तव्यं रुद्रस्य तपनस्य च ।
उपभुज्य च तन्मोहान्नरके पच्यते ध्रुवम् ॥

इति गौडनिबन्धधृतभविष्यपुराणाच्च । अत्र विष्णोश्चरणोदकं कृतापसव्यो दक्षिणामुखः "ॐ पितृभ्यो नमः" इति केचिदर्पयन्ति । तत "ॐ ब्रह्मणे नमः" इति ब्रह्मणे दत्त्वा स्वयं गृह्णन्ति । अत्र तेषां पूर्वाचार एव प्रमाणम् । स्वग्राह्यत्वं तूक्तपूर्वमि"त्याह । अत्र "अत्र जीवत्पितृकः सूर्यगणपत्यादीनां चरणोदकं शिरसि धृत्वा विष्णोश्चरणोदकं .........पीत्वा शिरसि किञ्चित्क्षिपेत् । नैवेद्यञ्च भुञ्जीत । अन्येषामपि सूर्यशिवातिरिक्तस्वेष्टदेवानां पादोदकनैवेद्ये गृह्णीयादित्यपि सैव ।

[ टिप्पणी ]

अन्यस्मृति-पुराणावलोकने—

अग्निष्टोमसहस्त्रैश्च वाजपेयशतैस्तथा ।
तुल्यं फलं भवेद्देवि विष्णोर्नैवेद्यभक्षणात् ॥
पादोदकञ्च निर्माल्यं नैवेद्यञ्च विशेषतः ।
महाप्रसाद इत्युक्त्वा ग्राह्यं विष्णोः प्रयत्नतः ॥

इति स्कान्दवचनात्,

मनसाऽपि महादेव्यै नैवेद्यं दातुमिच्छति ।
यो नरो भक्तियुक्तः सन् दीर्घायुः स सुखी भवेत्॥
महामायां कदा देवीमर्चयिष्यामि शक्तितः ।
नानाविधैस्तु नैवेद्यैरिति चिन्ताकुलस्तु यः ॥
स सर्वकामान् सम्प्राप्य मम लोके महीयते ।

इति कालिकापुराणस्य ग्राह्यत्वपरकवचनात्, शिवाय प्रदत्तनैवेद्य-विषये–

रोगं हरति निर्माल्यं शोकन्तु चरणोदकम् ।
अशेषं पातकं हन्ति शम्भोर्नैवेद्यभक्षणम् ॥

इति शाक्तानन्दतरङ्गिणीवचनात् ;

नैवेद्येन भवेत्स्वर्गं नैवेद्येनामृतं भवेत् ।
धर्मार्थकाममोक्षाश्च नै द्येषु प्रतिष्ठितम् ॥
सर्वयज्ञमयं नित्यं नैवेद्यं धर्मतुष्टिदम् ।
ज्ञानदं मानदं पुण्यं सर्वभोग्यमयं तथा ॥

इति कालिका-पुराणात् ;

ब्रह्मणो नैवेद्यविषये इतर विप्रकर्तृकभक्ष्यत्वसम्बन्धे मूल एव प्रदर्शितवचनाच्च सामान्यतो ब्रह्मविष्णुमहेशानां देवीनाञ्च नेवेद्यं भक्षणीय मेव प्रतीयते तथापि अग्राह्यं शिवनैवेद्यमित्याद्याह्निकतत्त्वधृत निषेधवचनात्,

यो यद्देवार्चनरतः स तन्नैवेद्यभक्षकः ।
केवलं सौरशैवे तु वैष्णवो नैव भक्षयेत् ॥

इति कालिकापुराणवचनात्, (अत्र वचने वैष्णवपदमन्यदेवोपासकपरं बोध्यम्)

पवित्रं विष्णुनैवेद्यं सुरसिद्धर्षिभिः स्मृतम् ।
अन्यदेवस्य नैवेद्यं भुक्त्वा चान्द्रायणं चरेत् ॥

इति बह्वृचगृह्यपरिशिष्ट-वचनात्–(अत्र वचने स्वदत्तमिति विशेषणीयम्)

समानं त्वन्यनैवेद्यं भक्षयेदन्यदैवतः ।

(एतच्चान्योत्सृष्टपरं ज्ञेयम्)।

दत्त्वा नैवेद्यवस्त्रादि नाददीत कथञ्चन ।
त्यक्तव्यं शिवमुद्दिश्य तदादाने न तत्फलम् ॥

इति नन्दिकेश्वरपुराण-वचनाच्च,

विशेषतः सूर्यशिवसंम्बन्धिनः स्वदत्तनैवेद्यस्योपभोगनिषेधः सिध्यति परं समेषां विधिनिषेधवचनानामेकवाक्यत्वानुसारं सामान्यव्यवहारानुसारञ्च शिवद्वादशज्योतिर्लिङ्गसमर्पितान्यस्य शिवनैवेद्यस्य बहुभिराधुनिकैरपि शिष्टैराचर्यते प्रतिषेधः । अतएव प्रायः मैथिलपूजापद्धतावेकदैव गौरीशङ्करयोरावाहन-पूजनादि प्रतिपाद्यते । अतएव च शारदीय पूजनाद्यवसरे शिवस्यार्धनारीश्वराकारेण निर्मिता प्रतिमानाऽवलोक्यते । एवमेव प्रतीहारषष्ठीव्रतषाण्मामासिकसूर्यव्रतादौ सूर्यनैवेद्यं सादरं भुञ्जते लोकाः । तथापि कतिपयविद्वांसोऽपि-

लिङ्गोपरि च यद्दत्तं तदेवाग्राह्यमीश्वर ।
सुपवित्रं भवेत्तत्र विष्णोर्नैवेद्यमिश्रितम् ॥

इति ब्रह्मवैवर्त्तीय (श्रीकृष्णजन्मखण्डे ३७ तमेऽध्याये स्थितं) शिवं प्रत्युक्तं पार्वतीवचनञ्चारुनुध्य लिङ्गोपरि प्रक्षिप्तातिरिक्तं सर्वविधं नैवेद्यं गृह्णन्तोऽदृश्यन्ते । एवमेव लिङ्गार्चनतन्त्रे १३।१४ पटले शिवां प्रति शिवचनम् ॥ यो दद्यात्परमेशानि ! मन्मुखोपरि पार्वति । अग्राह्यं तत्तु निर्माल्यं साक्षाद्ब्रह्ममयं ततः । इति । इतोऽधिकं शब्दकल्पद्रुमे नैवेद्यशब्द-प्रकरणमवलोकनीयम् । तदपि यथा

श्रीदेव्युवाच –

दुर्लभंतत्र निर्माल्यं ब्रह्मादीनां कृपानिधे ।
तत्कथं परमेशान निर्माल्यं तव दूषितम् ॥

ईश्वर उवाच–

मा भैर्माभैर्महादेवि ज्ञानसारं शृणु प्रिये ।
एतज्ज्ञानं महादेवि सारात्सारं परात्परम् ॥

पञ्चभूतात्मकं देवि मुखं मे परिकीर्त्तितम् ।
मध्यस्थानं स्थितं य(त)त्तु तन्मुखं परमेश्वरि ॥

श्यामलं तत्तु ईशानं सदा ऊर्ध्वं शुचिस्मिते ।
कालाग्निरूपिणं तत्तु सर्वशक्तिमयं सदा ॥

तेजोमयं महेशानि मुखमूर्ध्वं वरानने ।
क्षीरोदमन्थने देवि उत्थितं गरलं विषम् ॥

उत्थितं गरलं यत्तु ब्रह्माण्डनाशकारकम् ।
तदेव गरलं देवि हस्ते कृत्वा तु तद्विषम् ॥

कृष्णाञ्जननिभं दिव्यं गरलं जलवत्तदा ।
मम हस्ते महेशानि आविरासीत् शुचिस्मिते ॥

ततः करतलीकृत्य तद्विषं परमेश्वरि ।
निपीय तद्विषं सूक्ष्मं तीक्ष्णं ब्रह्माण्डनाशकम् ॥

ततःश्याममुखे देवि न पीत्वा तद्विषं प्रिये ।
तद्विषं कण्ठदेशे तु स्थितं हि सर्वदा मम ॥

ततः प्रभृति देवेशि मुखं ज्वालायते सदा ।
कण्ठे तु कलुषं भूत्वा सदा तिष्ठति कामिनि ॥

ततः प्रभृति देवेशि नीलकण्ठत्वमाप्नुयाम् ।
ईशानं मन्मुखं देवि परं ब्रह्म वरानने ॥

प्रत्यङ्गिरामयं देवि मन्मुखं कमलानने ।
साक्षाज्ज्योतिर्मयी देवी सदा मे मुखसंस्थिता ॥

पत्रं वा यदि व्रा पुष्पं जलं वा वरवर्णिनि ।
अन्यं हि परमेशानि उपचारं मनोहरम् ॥

यो दद्यात्परमेशानि मन्मुखोपरि पार्वति ।
अग्राह्यं तत्तु निर्माल्यं साक्षाद् ब्रह्ममयं ततः ॥

एतत्तु परमेशानि निर्माल्यं यस्तु धारयेत्[१] ।
स भ्रष्टो जायते देवि निष्कृतिर्नास्ति तत्र वै ॥

अग्राह्यं मम निर्माल्यमतएव वरानने ।
यद्दत्तं मन्मुखे देवि पुष्पं वा पत्रमुत्तमम् ॥

तन्निर्माल्यं महेशानि गृह्णीयात् शिरसा सदा ।
स ब्रह्मतेजसा तस्य समतां याति सुन्दरि ॥

न दद्याद् यदि देवेशि उपचारं शुचिस्मिते ।
लिङ्गोपरि वरारोहे यश्च तस्य शुचिस्मिते ॥

निगदामि शृणु प्रौढे वचनं मम कामिनि ।
स एव नारकीभूत्वा नरकं सर्वदाप्नुयात् ॥

अशेषनरकं भुक्त्वा अशेषयोनिमाव्रजेत् ।
अशेषस्थावरं देवि जङ्गमञ्च तथा प्रिये ॥

भुक्त्वा तु सर्वपापान् स अशेषकृमितां व्रजेत् ।
शृणु देवि प्रवक्ष्यामि उच्छिष्टं मम पार्वति ॥

उपचारं स्थापयित्वा पूतं पात्रान्तरे प्रिये ।
कृत्वा तु मन्त्रं पूतं हि उपचारं निवेदयेत् ॥

वामदेवादि देवेशि मुखेषु वरवर्णिनि ।
भक्षणं मम देवेशि-ब्रह्माण्ड सृष्टिकारकम् ॥

---

पा० (१) धारयेत् = भक्षयेदित्यर्थः । अतएव – प्रसङ्गानुसारमनेकार्थस्य धातोरनुकूलार्थस्वीकारात् 'पीत्वा पादोदकं देवि नैवेद्यं स्वयमुद्धरेदि'ति विष्णुयामलवचनमुपक्रम्य उद्धरेत् = भुञ्जीत । हरणमत्र स्वीकार एव । तच्च भक्षणेनैव '' इति नि० कृ० र० मालापि ।

एतद्धि परमेशानि ब्रह्मादीनां सुदुर्लभम् ।
अशुचि र्वा शुचिर्वाऽपि उच्छिष्टं भक्षयेद् यदि ॥

स एव परमाराध्यः साक्षाद् ब्रह्म शुचि-स्मिते ।
उच्छिष्टभक्षणे कामी स एव श्रीसदाशिवः ॥

निर्माल्यं दृढभक्तित्वाद् गृह्णीयाद्यस्तु पार्वति ।
प्रथमं विष्णवे दत्त्वा विष्णुमन्त्रेण सुन्दरि ॥

निर्माल्यं मम देवेशि विष्णोर्ग्राह्यं वरानने ।
देवासुरमनुष्याश्च गन्धर्वाः किन्नरादयः ॥

ते सर्वे परमेशानि ! बराकाः क्षुद्रबुद्धयः ।
निर्माल्येषु च देवेशि अधिकारी कथं भवेत् ॥

एवमेव प्रतीहारषष्ठीव्रते, मार्गशुक्लादितो वैशाखशुक्लपर्यन्तं प्रतिवर्षं विधीयमाने षाण्मासिकसूर्यव्रते तथैवान्यत्रापि मुख्यतः सूर्योपासनायां सोल्लासमश्नन्ति लोका लोकबान्धवाय भगवते समर्पित शष्कुल्यपूपादीनि नैवेद्यानि । प्रतिमाऽऽदिकृतभेदाश्रयणेऽपि मूलं मृग्यमिति संक्षेपः ।

[ टिप्पणी हिन्दी ]

संस्कृत. टिप्पणी में दिखाये गए स्कन्दपुराण, कालिकापुराण, शाक्तानन्दतरङ्गिणी, पुनः कालिकापुराण तथा मूल में ही कहे गए ब्रह्मपुराण के वचनानुसार ब्रह्मा विष्णु महेश एवं देवियों का नैवेद्य भक्षणीय सिद्ध होता है, तथापि संस्कृत टीका में उल्लिखित तथा आह्निकतत्त्व में उद्धृत 'अग्राह्यं शिवनैवेद्यम्' इत्यादि वचन कालिकापुराण वह्वचगृह्यपरि शिष्ट तथा नन्दिकेश्वर (पुराण) के वचनानुसार विशेषतः शिव एवं सूर्य को समर्पित नैवेद्य आदि के उपभोग का निषेध सिद्ध होता है, फिर भी दिखाये गए सभ विधि विषेधवचनों की एकवाक्यता तथा लोकव्यवहार के आधार से देखा जाता है कि शिव के (बारह ज्योतिर्लिङ्ग को समर्पित से अन्य) नैवेद्य का उपभोग आधुनिक बहुत से शिष्टजन भी उचित नहीं मानते । इसी हेतु प्राय : मिथिला की पूजा पद्धतियों में गौरी शङ्कराविहागच्छतमिह तिष्ठतम्'' वाक्य से आवाहन तथा इसी देव के चतुर्थ्यन्त पद से पूजनादि का उल्लेख किया गया है । इसीतरह शारदीय नवरात्र (दुर्गापूजन) आदि के

अवसरों पर कितने ही देवालयों में अर्धनारीश्वर के आकार में गौरीशंकर की बनी प्रतिमा देखी जाती है ।

एवमेव प्रतीहार षष्ठीव्रत (छठ त्यौहार ), अग्रहरण के शुक्ल पक्ष से वैशाखशुक्लपक्ष तक प्रति वर्ष उपासनीय सूर्यव्रत तथा अन्यत्र भी सूर्य नैवेद्य का उपभोग लोग बड़े ही उल्लांस के साथ करते हैं और अभिभावकगण अपने बालवर्गों में भी सस्नेह वितरण करते हैं ।

यदि सूर्य प्रतिमा तथा इससे अन्यविध सूर्य की उपासना में भेद करे तो भी ऐसे स्थलों के लिए मूलवचन अन्वेषणीण हैं ।

शिवनैवेद्य के सम्बन्ध में पुनः ज्ञातव्य है कि कितने विद्वज्जन भी ब्रह्मवैवर्त्त में शिव क प्रति पार्वतीजी द्वारा कथित वचन (-शिवलिङ्गके ऊपर चढाया गया नैवेद्य आदि ग्रहण (भक्षण) योग्य नहीं है) आदि के अनुसार अलग से समर्पित शिवनैवेद्य का ग्रहण करते हुए देखे गए हैं । उक्त सम्बन्ध में लिङ्गार्चनतन्त्र (१३।१४ पटल) में पार्वती के प्रति शंकर का भी कथन है कि मेरे विषज्वालामय मुंह के ऊपर चढाये गये निर्माल्य (जल-पुष्प-पत्र-नैवेद्य आदि पूजोपचार) ईशाननाम के मस्तकमध्यवर्त्ती ऊर्ध्वमुख का भक्षण न करके शिर के ऊपर श्रद्धाभक्ति से लगाता या रखता है वह ब्रह्मतेजस्वी बन जाता है । इससे अधिक के लिए शब्दकल्पद्रुम के आधार से संस्कृत टीका में लिखित नैवेद्य प्रकरण अवलोकनीय है । [टिप्पणी समाप्त]

## [ हिन्दी टीका ]

ब्रह्मा तथा विष्णु की मूर्तियों (अङ्गों) में संलग्न स्नानीय घृत, दूध, दही आदि ब्राह्मण को दे दें । शङ्करमूर्त्ति में संलग्न उक्त स्नानीय द्रव्य आग में जला दें । इन त्रिदेव से अन्य देवों को दिये गए उक्त द्रव्य गरीबों में बाँट दें ।

इसी तरह ब्रह्माजी के लिए अलग से (शरीर में न लगाए गए) समर्पित नैवेद्य आदि ब्राह्मणों में, विष्णुका नैवेद्य आदि सात्त्वतों (अनुपतीतवैश्य से अपनी जाति की स्त्री में उत्पन्न तथा राजा की आज्ञा से विष्णु गृह में पूजारी सात्त्वत कहलाता है) में, शिवजी का शैव संन्यासियों में, सूर्य का शाकद्वीपी ब्रह्माणों में बुद्धदेव का बौद्धभिक्षुजनों में, दुर्गा काली प्रभृति देवियों का स्त्रियों में तथा भूत प्रेत पिशाचों को समर्पित उक्त नैवेद्य आदि गरीबों में बाँट दें ।

यहाँ ऊपर से ज्ञातव्य है कि इसी ग्रन्थकार का अपर ग्रन्थ छन्दोगाह्निक के द्वारा उक्त वचन प्रसंग की गई संक्षिप्त व्याख्या का सार ऐसा ही है । इसी का अनुसरण नित्यकृत्यरत्नमाला ने भी किया है ।

यहाँ आचारचिन्तामणि का विशेषतः कहना है विष्णु नैवेद्य सात्वत या ब्राह्मणों को दे दें। किन्तु वीरमित्रोदय का कहना है कि विष्णुनैवेद्य सात्वत या ब्राह्मण को देकर स्वयं भी खायें। यदि कोई यहाँ शंका करे कि स्वसमर्पित नैवेद्य का स्वयं उपभोग करने पर स्वप्रदत्त वस्तु के अपहरण का दोष लग जायेगा ? इसका उत्तर होगा कि वचन द्वारा ऐसा बोधित होने पर दोष का कोई प्रश्न नहीं। सात्वत की अनुपस्थिति में अनुकल्प होगा कि एक ग्रास प्रमाण नैवेद्य को जल या अग्नि में फेक दें। साथ ही यह भी ज्ञातव्य है कि उक्त प्रतिमा आदि की पूजा से ही सम्बन्धित है। स्थावर (पीपल) वृक्ष आदि) की पूजा में सात्वतों को ही दें, ऐसा ही शिष्टाचार है और स्वयं का उपभोग शिष्टाचार विरुद्ध है। यहीं नित्यकृत्यरत्नमाला का कहना है कि बाणलिङ्ग (ज्योतिर्लिङ्ग के अतिरिक्त स्थापित या अस्थापित शिवलिङ्ग) के ग्रहणाग्रहण सम्बन्धी विचार 'पूजापङ्कजभास्कर' नामक ग्रन्थ में विस्तार से दिखाया गया है। वहाँ के पद्मपुराणीय वचन–मेरा (शिव का) नैवेद्य पत्र पुष्प तथा जल शालग्राम शिला से लग्न होने पर पवित्र तथा उपयोगक्षम होता है–को उद्धृत कर शूलपाणि उपाध्याय ने बाणलिङ्गनैवेद्य अग्राह्य (अभक्ष्य) बतलाया है, यहीं स्मृतिदीपिका में वामदेव उपाध्याय ने वचन उद्धृत कर उसे ग्राह्य दर्शाया है।

बाणलिङ्ग के नैवेद्य आदि की शुरुआत कर शिवनारद सम्बन्ध में कहे अनुसार ये नैवेद्य आदि ग्राह्य हैं, यह उस वचन का अर्थ है। उस वचन के इस अर्थ से संकेत मिलता है कि पार्थिव शिवलिङ्ग के नैवेद्य स्थल में यह विचार उपस्थित होगा ही। फलतः इस नैवेद में चण्ड (उग्र, या क्रोधी स्वभाववाले गणविशेष) का अधिकार है। इस सम्बन्ध में दाक्षिणात्य निबन्ध में उद्धृत वचन ही निर्णायक होगा। जिस का अर्थ है–''जिस (नैवेद्य आदि) में चण्डाधिकार होता है उसे मानव न खाये किन्तु जहाँ चण्डाधिकार न हो उसे .भक्तिपूर्वक खाना चाहिए।'' इस वचन में 'भक्ति' (भक्तिपूर्वक) पद के पढे जाने के कारण सिद्ध होता है कि भक्ति की आधिक्य स्थिति में उसे खाना चाहिए। किन्तु यह विषय अन्यनिबन्धकारों द्वारा न कहे जाने के कारण मैथिल निबन्धकार मान्यता नहीं देते हैं। जैसा कि गौड निबन्ध में उद्धृत भविष्य पुराण का भी कथन है कि शिव और सूर्य के नैवेद्य का उपभोग नहीं करना चाहिए। करने पर निश्चय ही नरकयातना भुगतनी होती है।

पुनः उसी रत्नमाला का लेख है कि सूर्य-गणपति आदि (सूर्यादिपञ्चदेवता) देवों का चरणोदक शिरपर छिडककर. विष्णु का चरणोदक ''अकालमृत्यु-हरणम्'' इत्यादि मन्त्र से पीकर कुछ जल शिर पर छिडकें और ''प्राप्तिमात्रेण भोक्तव्यं विष्णोर्नैवेदयमुत्तमम्'' इस विष्णु पुराण के वचनानुसार उनके नैवेद्य का भक्षण करें।

हाँ, सूर्य और शिव के अतिरिक्त अपने इष्ट देवों का चरणोदक तथा नैवेद्य का ग्रहण करें।''

(ऊपर से ज्ञातव्य है कि उक्त लेख सन्दर्भ में शिव नैवेद्य के ग्राह्याग्राह्य प्रसंग पर म० म० शूलपाणि उपाध्याय तथा म० म० वामदेव उपाध्याय का विवेचन दिखाने पर भी ग्राह्यपक्ष में मैथिलनिबन्धकारों का ही अनादर कहना उतना उपयुक्त नहीं जँचता)।

## [ मूलम् ]

पूजाऽऽधारमाह शातातपः—

भूमावप्सु तथाऽग्नौ च दिवि सूर्ये च देवताः।

तथा,

अप्सु देवा मनुष्याणां दिवि देवा मनीषिणाम्।
काष्ठलोष्टेषु मूर्खाणां मुक्तस्यात्मनि देवताः॥

### [ संस्कृत टीका ]

पूजेति। देवताः = देवाः। भूमौ = पृथिव्याम्। अप्सु = जले। अग्नौ = वह्नौ। दिवि = आकाशे च। तिष्ठन्तीति शेषः। एषु स्थानेषु देवाः पूज्या इति तात्पर्यार्थः। अस्योत्तरार्धं यथा—नित्यमन्ने हिरण्ये च गोषु च ब्राह्मणेषु च।

अत्र ''अत्र भूमौ आकाशे च भावेन देवतामारोप्य गन्धादिना पूजा कर्तव्या। अग्नौ होमरूपा, सूर्यमण्डले ध्यानेनेति बोध्यम्। अन्नादिना तु न देवतान्तरपूजायामाधारत्वम्। आचारविरोधात्। किन्तु पूज्यत्वार्थमेव देवताऽऽधारत्वबोधनम्। .........तस्माद् भूम्यादीनां देवतान्तराधारत्वमन्नादीनां पूज्यत्वमेवेति स्थितमि''ति छन्दोगाह्निकम्।

अप्स्विति। मनुष्याणाम् = साधारणजनानाम्। देवाः अप्सु=जले। सन्तीत्यग्रेऽपि शेषः। अत्र'' एतेन पात्रस्थितेष्वप्सु पूजां विदधतेबहवोऽपि।.. ...जले (तदाधारे) शिवपूजानिषिद्धेति तदागमविदः। अतएव पञ्चदेवानां पूजनं सहाप्सु विदधते बहवोंऽपि।

ॐ भूर्भुवः स्वर्भगवन्तः सूर्यादिपञ्चदेवता इहागच्छत इत्यावाह्य इह तिष्ठतेति स्थापयित्वाऽक्षतेन, पाद्यादिभिः। अत्र मूलं मृग्यमिति नि. र. मा.। मनीषिणाम् = मतिमताम्। देवाः। दिवि = आकाशे। मूर्खाणाम् = बुद्धिहीनानाम्। काष्ठलोष्टेषु = दारुषु लैष्टेषु च। (लोष्टानि लैष्ठवः पुंसीत्यमरः)। युक्तस्यात्मनिदेवताः = योगिनां बाह्योपचाराभावेऽन्तर्यजनमेव कर्तव्यमिति तुरीय पादार्थः। अत्र "युक्तस्यात्मनिदेवताः'–इति योगिनो बाह्योपचार निरासेना (राभ्ञावाद्) न्तर्यजन–कर्तव्यता–परम्। अयञ्च सामान्येनाधारविधिः शिवपूजायामप्यविरुद्धः। अतएव–

आकाशं लिङ्गमित्याहुः पृथिवी तस्य पीठिका।
आलयः सर्वभूतानां लयनाल्लिङ्गमुच्यते॥

इति लिङ्गत्वेनाकाशस्तुतिः। गृहस्थस्यजले शिवपूजा निषिद्धेति तदागमविदः। लिङ्गपूजाऽधिकफलेति वक्ष्य(कथ्य)ते। प्रतिमायान्तु सर्वदेवतापूजा प्रशस्ता।

ध्यानाद्यनभिज्ञस्त्रीबालादीनां तु सैव प्रशस्ता। ऊर्ध्वदृष्टिरधोदृष्टिस्तिर्यग्दृष्टिर्व्यङ्गा मानोन्मानहीना च प्रतिमा निषिद्धा। अप्रतिष्ठिता तु प्रतिमा न क्वापि निषिद्धेति सा पूज्या। ......अयन्तु विशेषः–प्रतिष्ठितायाः पूजालोपे प्रत्यवाय इति छन्दोगाह्निकम्।

[ हिन्दी टीका ]

पूजा के लिए आधार के संबन्ध में स्मृतिकार शातातपका कहना है कि भूमि, जल, अग्नि तथा सूर्य में देवता रहते हैं। अर्थात् इन स्थानों में देव पूजन हो। इसका तात्पर्यार्थ छन्दोगाह्निक के अनुसार यह है कि भूमि तथा आकाश में भाव से ही आरोपित कर देवता की चन्दन आदि से पूजा की जाय। अग्नि में होम रूप तथा सूर्य मण्डल में ध्यान से ही पूजा होगी।

इस वचन के उत्तरार्ध का अर्थ ऊपर से ज्ञातव्य है कि अन्न, सोना तथा ब्राह्मणों में नित्य ही देवता रहते हैं।

यहाँ पूर्वार्धवचन से यदि अन्य देवों की पूजा के लिए भूमि आदि को आधार माना गया है तो उत्तरार्ध से अन्न आदि में पूज्यता (सम्मान) ही दिखाया गया है नकि इनमें

किसी देव का पूजनाधार माना जा सकता है। क्योंकि आचार तथा शास्त्र से सिद्ध ऐसा ही उचित व्यवहार है।

पुनः मूल के स्मृतिवचन का अर्थ है कि साधारण मनुष्यों का जल में, बुद्धिमानों का आकाश में तथा मूर्खों का काठ मिट्टी एवं ढेलों में देवता रहता है किन्तु योगीलोग बाहरी उपचार (उपकरण) के अभाव में अन्तर्यजन (आत्मचिन्तन या मानसिक पूजन) करेंगे।

उक्त जल प्रसंग में ऊपर से नि. र. मा. के अनुसार ज्ञातव्य है कि उक्त स्मृतिवचन को देखते हुए बहुत-से लोग पात्र में भी जल रखकर उसके ऊपर पूजा करते हैं। शैवशास्त्र के जानकरलोग जल में शिवपूजा निषिद्ध मानते हैं। इसी हेतु पञ्चदेवों (जिनमें एक शिव भी है) का सह पूजन बहुत से लोग जल के ऊपर ॐ भूर्भुवः स्व र्भगवन्तः सूर्यादिपञ्चदेवता इहागच्छत इह तिष्ठत इत्यादि क्रम से करते हैं किन्तु यहाँ मूलवचन अन्वेषणीय है ।

यहीं छन्दोगाह्निक का कहना है कि यह सामान्य रूप से स्मृति प्रतिपादित आधार विधान शिवपूजा के लिए भी अनुकूल होगा। इसीलिए लिङ्गरूप में आकाश की प्रशंसा की गई है। यथा–विद्वान् लोग आकाश को लिङ्ग कहते हैं और पृथिवी इस की पीठिका (वेदिका) हे। यह सभी प्राणियों का आधार स्थल है और इन सभी प्राणियों का यहीं लय हो जाने के कारण यह लिङ्ग कहा जाता है। शैवशास्त्रवेत्ता लोग गृहस्थ के लिए जल में शिव पूजा निषिद्ध बताते है। 'लिङ्ग पूजा अधिक फल देने वाली हैं' यह आगे कहा जायगा। प्रतिमा में सभी देवों का पूजन प्रशस्त माना जाता है। ध्यान आदि के अनभिज्ञ स्त्री-बालक आदि के लिए तो प्रतिमापूजन ही श्रेष्ठ हैं। ऊपर, नीचे, तथा टेढ़े में झाँ कती हुई, विकलाङ्ग, एवं विना शास्त्रोचित नाप वाली प्रतिमा निषिद्ध होती है। जिसकी स्थापना न की गई हो वह कहीं भी निषिद्ध नहीं मानी जाती, अतएव वह पूजनीय है। हाँ, स्थापित प्रतिमा की पूजा न होने पर पाप लगता है।

## [ मूलम् ]

व्योम सूर्यपूजायां, लिङ्गं शिवपूजायां, प्रतिमा सर्वदेवानामिति स्थानान्तरोक्तम्।

## [ संस्कृत टीका ]

व्योमेति। सूर्यपूजायाम् = सूर्याराधने। व्योम = आकाशमाधारः। शिव-पूजायाम्। लिङ्गम् = शिवलिङ्गमाधारः। सर्वदेवानाम् = सूर्यशिवेतरदेवानाम्,

सामान्यतः सकलदेवानां वा । अत्रापि पूजायामिति सम्बन्धः । प्रतिमा= मूर्त्तिराधारः । स्थानान्तरोक्तम् = शातातपस्मृतीतरत्रोक्तम् ।

[ हिन्दी टीका ]

शातातपस्मृति से अन्य ग्रन्थ में सूर्य की पूजा में आकाश, शिव की पूजा में शिवलिङ्ग, इन दोनों देवों से अन्य देव अथवा सकल देवों की पूजा में पूजा का आधार स्थान प्रतिमा (मूर्त्ति) कही गई है ।

[ मूलम् ]

देवीपुराणे–

शुचि[1]वस्त्रधरः प्राज्ञो मौनी ध्यानपरायणः ।
गतकामभयद्वन्द्वो रागमात्सर्यवर्जितः ॥
आत्मानं पूजयित्वा तु[2] स्रग्गन्ध[3]सितवाससा ।
सुमुहूर्त्ते[4] यजेद् देवान् स्वकीयासनसंस्थितान् ॥
आहूय चार्घपाद्यादि हेमपात्रेण दापयेत् ।
रक्त-बिल्वाक्षतैः पुष्पैर्दधि-दूर्वाकुशैस्तिलैः ॥
सामान्यः सर्वदेवानामर्घोऽयं परिकीर्त्तितः ।
अभावाद्दधि[5]-दूर्वादेर्मानसं वा प्रकल्पयेत् ॥

सुमुहूर्त इति विहितपूर्वाह्णादिकालपरम् । रक्तम् = कुंकुममिति कल्पतरुकारः । अक्षता नाम तण्डुलाः ।

[ संस्कृत टीका ]

शुचीति । शुचिवस्त्रधरः = पवित्राधोवस्त्रधारी । प्राज्ञः = बुद्धिमान् । मौनी=वाक्संयतः । ध्यानपरायणः=ध्यानतत्परः । गतकामभयद्वन्द्वः=गतः त्यक्तः, कामः = वस्त्वभिलाषा, भयम् = भीतिः, द्वन्द्वः = शैत्यमुष्णत्वञ्च–

---

पाठा० (१) शुचि : सुवस्त्रधृक् । (२) च । (३) सुगन्ध (४) मुहूर्त्तेच (५) वेद ।

एतदसहिष्णुत्वमित्यर्थः, येन सः । राग- मात्सर्यवर्जितः = रागः-प्रीतिः, तल्लक्षणं यथा,

सुखमप्यधिकं चित्ते सुखत्वेनैव रज्यते।
यतस्तु प्रणयोत्कर्षात् स राग इति कीर्त्यते ॥

इत्युज्ज्वलनीलमणिः । मात्सर्यम् = परशुभद्वेषः, ताभ्यां वर्जितः रहितः, साधको जनः । स्रग्गन्धसितवाससा = स्रजा-माल्येन, गन्धेन = घृष्ट-चन्दनेन, सितवाससा=शुभ्रोत्तरीयवस्त्रेंण च। आत्मानम् = स्वम्, शरीरमित्यर्थः । पूजयित्वा = भूषयित्वा । अतएव "आत्मानमितिचन्दनादि सितवस्त्रञ्च परिधायेत्यर्थ इत्याचारचिन्तामणिरपि । "देवो भूत्वा यजेद्देवानितिस्मरणात् गन्धादिनाऽऽत्मानमभ्यर्च्य" इति तु नित्यकृत्यरत्नमाला । सुमुहूर्त्ते = विहितपूर्वाह्णादिकाले । स्वकीयासनसंस्थितान् = "स्वकीयमासनम्—यस्य देवस्य यद्वाहनमि"त्याचारचिन्तामणिः । तत्संस्थितान् = तदासीनान् । देवान् । आहूय = आवाह्य । यजेत = पूजयेत् । (तत्र प्रथमम्) हेमपात्रेण = सुवर्णनिर्मितपात्रेण । अर्घपाद्यादि = अर्घम् = दशोपचारषोडशोपचाराष्टादशोपचार-षट्त्रिंशोपचार पूजने एकः उपचारः । अतएव "पूजाविधावर्घ" (३।३।२७) इत्यमरोऽपि । पाद्यम् = तथैवापर उपचारः । पादप्रक्षालनार्थमुदकमित्यर्थः । पादा घर्भ्याञ्च (पा० सू० ५।४।२५) इति यत् । अतएव पाद्यं पादाय वारिणि (२ । ७ । ३३) इत्यमरः । आदिपदादाचमनीयस्नानीयपुनराचमनीयादीनां संग्रहः । अत्र यद्यपि 'आहूय चार्घपाद्यादी'ति मूलवचनेन;

अर्घपाद्याचमनीयमधुपर्काचमनानि च ।
गन्धादिपञ्चकञ्चेति उपचारा दशोदिताः ।

इति दशोपचारबोधकवचनेन,

आसनं स्वागतं चार्घपाद्ये चाचमनीयकम् ।

इति षोडशोपचारबोधकांशवचनादिना अर्घस्य पाद्यापेक्षया पूर्वमाचरणीयत्वं सिध्यति, तथापि

पाद्यार्घाचमनीयञ्च स्नानीय-मधुपर्ककौ ।

इति षट्त्रिंशोपचारबोधकवचनांशेन

आद्ययाऽऽवाहयेद्देवमृचा तु पुरुषोत्तमम् ।
द्वितीययाऽऽसनं दद्यात्पाद्यं चैव तृतीयया ॥
चतुर्थ्याऽर्घ्यं प्रदातव्यं पञ्चम्याचमनीयकम् ।

इति पुरुषसूक्तस्य सन्निवेशेन षोडशोपचारपूजने नरसिंहपुराणवचनादिना साऽपि (पञ्चोपचारिका पूजाऽपि) पाद्यादिपूर्विकैवेति श्रीदत्तादय'' इति नित्यकृत्यरत्नमलानिबन्धलेख्रेन च सिद्धस्यार्घापेक्षया पाद्य प्राथम्यस्यानुसारं मैथिलसम्प्रदायानुसारञ्च पाद्यं दत्त्वाऽर्घं दद्यादिति क्रमोऽवमन्तव्य: । एवञ्च 'अग्निहोत्रं जुहोति यवागूं पचती' त्यत्रेवात्रापि पाठक्रममनादृत्यार्थ-क्रमानुसारं पाद्यार्घाद्यर्थो मन्तव्य: ।

अर्घद्रव्यमाह रक्तेति । रक्तम् =कुम्कुम मिति कल्पतरुकार: । रक्तचन्दनमिति तु नित्यकृत्यरत्नमालाकार: । बिल्वम् = बिल्वतरूद्भूतपत्रं फलं वा । अक्षता: = तण्डुला: । पुष्पम् = प्रसूनम् । तैः । दधिदूर्वाकुशैः । तिलैश्च । जलसहितैरिति शेष: । अतएव ''इदन्तु सति सम्भवे । असति तु जलमेव नियतम् । आगमे तु गन्ध-पुष्पाक्षत-यवकुशाम-तिल-सर्षप-दूर्वा-अर्घद्रव्याणीत्याचार- चिन्तामणि: । सर्वदेवानाम् । अयं सम्मान्य: अर्घ: परिकीर्त्तित: = कथित: । दधिदूर्वादेरर्घसामग्र्या अभावे तु, मानसं वा प्रकल्पयेत् = मनसैव सामग्रीं प्रकल्प्यार्घं दद्यादिति भाव: ।

अत्र सुमुहूर्त्ते= पुण्यकाले पूर्वाह्णादौ । आह्वाने सतीत्यर्थः। अर्घपाद्यादीत्यादि-शब्द: आचमनीयस्नानादिसर्व्वोपचारपर: । अत्र च यथायोग्यं पात्रसम्बन्ध: । हेमेति विहितपात्रप्रकृतिमात्रोपलक्षणम् । दापयेदिति स्वार्थे णिच् । रक्तपदं रक्तचन्दनादि विहित गन्धोपलक्षकम् । रक्तं-कुङ्कुममित्येके । सर्वदेवानामिति लिङ्गमविवक्षितं, देवीनामपि प्रक्रान्तत्वादि'' ति छन्दोगाह्निकम् ।

अक्षता नाम तण्डुला इति । अत्र ''अनुलेपनानन्तरं विष्णवेऽक्षतस्थाने यवतिलानेव प्रयच्छन्ति-

न बिल्वैरचयेत्सूर्यं न तुलस्या गणाधिपम् ।
नाक्षतैः पूजयेद् विष्णुं न शिवं शङ्खवारिणा ॥

इति गौडीयस्मृतेः । किन्त्वत्र "अक्षतास्तु यवाः प्रोक्ताः" इति छन्दोगपरिशिष्टोक्तेरक्षतपदं केवलाक्षतपरम् । ततोऽत्र तिलमेलनेन–'एते यवतिलाः' इत्येव वाक्यं कार्यम् । अतएव कोशेऽपि "दाराः पुंभूम्निचाक्षताः" इति यवपरमेवाक्षतपदं बोध्यम् । अतएव चैकवचनान्तमिदमं क्षतमिति तण्डुलानन्येभ्यः प्रयच्छन्ति । तत्र मानन्तु द्विजपूजने गन्धाक्षतदानस्यान्यत्र विधानादत्रापि गन्धेन सह तद्दानमाजानिकाचारसिद्धमनुमन्यन्ते निबन्धारः" इति, ....."नाक्षतैः पूजयेद् विष्णुमि" ति यदि समूलं तदाऽर्घ्यातिरिक्तपरमिति शूलपाण्युपाध्याया" इति च नि. कृ. र. मा. । एतेन श्राद्धप्रकरणे मासिकश्राद्धप्रयोगादौ पितृभक्तितरङ्गिण्याम् अक्षतञ्चारिष्टमस्त्विवति तण्डुलान् प्रक्षिपेदिति पद्धतिरपि साधु सङ्गच्छते ।

[ हिन्दी टीका ]

पवित्र अधोवस्त्रधारी, वाणीसंयत, ध्यानपरायण, वस्तु पाने की इच्छा, भय एवं शीत ताप के प्रभाव से रहित अनुराग या आसक्ति से रहित, होकर बुद्धिमान् साधकजन चन्दन, माला, सफेद उत्तरीयवस्त्र धारण कर शास्त्रविहित पूर्वाह्ण आदि काल में जिस देव का जो वाहन शास्त्रसम्मत हो उस वाहन पर संस्थित अपने इष्टदेवों का आवाहन कर पाद्य (पैर धोने की भावना से दिया जाने वाला जल) अर्घ (कुंकुम या रक्तचन्दन, बिल्वपत्र या बिल्वफल, अखण्डित चावल, फूल, दही, दूध, कुश तथा तिल सहित जल आदि आचमनीय, स्नानीय, पुनरचिमनीय आदि) सोने के या विहत अन्य पात्र से चढ़ाये । आगमग्रन्थ के अनुसार ऊपर से ज्ञातव्य है कि चन्दन, फूल-अक्षत-जौ-कुशाका अग्रभाग-तिल-सफेद सरसो, दूर्वा तथा जल है । यहीं नरसिंहपुराण के अनुसार जल, दूध, कुश का अग्रभाग, दही, अक्षत, तिल, जौ तथा सफेद सरसो यह अष्टाङ्ग अर्घ कहा गया है ।

यह सामग्री सम्भवना की स्थिति में समझी जाय । उपलब्ध न होने की स्थिति में जल मात्र से अर्घ का काम चलाया जा सकता है अथवा दही, दूध आदि सामग्री की अभाव स्थिति में मन से ही कल्पना करके अर्ध दे देना चाहिए ।

उक्त अर्घ वचन में पढ़े गये अक्षत पद का अर्थ जौ न होकर चावल है यह मूल (व्याख्या) ग्रन्थ से ही स्पष्ट है । अतएव नित्यकृत्यरत्न माला के अनुसार आगे ज्ञातव्य

है कि ''विष्णु भगवान को चन्दन दान के बाद अक्षत के स्थान पर जव मिश्रित तिल ही चढ़ाते हैं क्योंकि गौड़ निबन्ध में उद्धृत वचनानुसार 'बिल्व–फल या पत्र से सूर्य, तुलसी से गणेश, अक्षत से विष्णु तथा शंखजल से शिव की पूजा नहीं करनी चाहिए।'' किन्तु यहाँ (नाक्षतैः पूजयेद् विष्णुम् में) अक्षत पद का अर्थ केवल जौ ही है क्योंकि ''अक्षतास्तु यवाः प्रोक्ताः'' इस छन्दोगपरिशिष्टवचन से अक्षतपद का अर्थ जौ कहा गया है। फलतः विष्णु पूजन में लोग 'एते यवतिलाः' इस वाक्य के द्वारा तिलमिलाकर जौ प्रदान करते हैं। इसी हेतु दाराः (लाजाः) पुं भूम्नि चाक्षताः'' दारा या लाजा तथा अक्षत शब्द पुंल्लिंग तथा बहुवचनों में ही होते हैं–इस अमर कोश में भी पठित अक्षत पद केवल जौ का ही बोधक है। साथ ही इसी हेतु एकवचनान्त इदमक्षतम् इस वाक्य के द्वारा अन्य देवों को तण्डुल-चावल-प्रदान किये जाते हैं।

यहाँ निबन्धकार म. म. शूलपाणि उपाध्याय का कहना है कि ''नाक्षतैः पूजयेद् विष्णुम्'' यह वचन यदि प्रामाणिक हो तो उक्त अर्घस्थल से अन्यत्र के लिए समझना चाहिए। अर्थात् विष्णु के लिए समर्पणीय अर्थ में तण्डुल का उपयोग किया जायगा ही।

उक्त अक्षतपदार्थ के निर्वचन में ऊपर से पितृभक्तितरङ्गिणी का लेख भी प्रमाण रूप से कहा जा सकता हैं जिसमें मासिकश्राद्ध आदि स्थलों पर अन्नपात्र के ऊपर ''ओं अक्षतञ्चारिष्टमस्त्विवति तण्डुलान्प्रक्षिपेत्'' इस पद्धति ग्रन्थ के अनुसार 'ओं अक्षतञ्चारिष्टमस्तु' इस वाक्य से तण्डुलों का प्रक्षेप (फेंका जाना) कहा गया है।

## [ मूलम् ]

**सूर्य-विष्णु-शिव-दुर्गाणां सम्मान्यतः पञ्चोपचाराः।**

### [ संस्कृत टीका ]

सूर्येति। पञ्चोपचारा इति। अत्र ''अत्र (पूजायां) पञ्चोपचारा, दशोपचारा, षोडशोपचारा, (अष्टादशोपचारा), षट्त्रिंशोपचारेति बहवो भेदाः सम्भवन्तोऽपीह प्रथमैव नित्यपूजायां समादृता पूर्वैः। तथा च हारीतः–

**सपर्या विविधा प्रोक्ता तासामेकां समाश्रयेत्।**
**गन्धादिका निवेद्यान्ता पूजा पञ्चोपचारिका॥**

इति। साऽपि पाद्यादिपूर्विकैवेति श्रीदत्तादयः। नित्यपूजायां पञ्चोपचारेष्वपि

यावदेव लभ्यं तावतैव सा निर्वाह्येति च । ......गन्धादिकेति स्पष्टयति कालिकापुराणम्–

**गन्धपुष्पे तथा धूपो दीपो नैवेद्यमेव च ।**

इति । गन्धादिपदैरेवोपचारगणनादेषगन्ध इत्येवमभिहितं पूर्वैरपि । अत्रेदमनुलेपनमित्यपि बहवः पठन्ती'' ति नित्यकृत्यरत्नमाला । एवमेव ''काम्यपूजायामेते कल्पा यथाविभवं, तत्रापि प्रथमो नियतः । नित्यायान्तु सोऽपि नियतः'' इति, 'सपर्येति हारीतवचने ''एका = पंचोपचारा'' इति चाचारचिन्तामणिरपि ।

पूजायां कालसहकृतदिक्सम्बन्धे–प्रातः प्राङ्मुखः, सायं पश्चिमाभिमुखः, रात्रावुदङ्मुख इति छन्दोगाह्निकम् । अत्रैव,

**रात्रावुदङ्मुखः कुर्याद्देवकार्यं सदैव हि ।**
**शिवार्चनं सदाऽप्येवं शुचिः कुर्यादुदङ्मुखः ॥**

इति गोभिल वचनेन शिवपूजायां नियमेनोदङ्मुखत्वे सिद्धे तत्सहभूताया अन्यदेवतापूजाया अपि तथैव कर्त्तुमुचितत्वम् । तदसम्भवे यथास्थलं प्राङ्मुखेनैशान्यभिमुखेन वा पूजा कार्या ।

**यत्र दिङ्नियमो नास्ति जप-होमादि-कर्मसु ।**
**तिस्रस्तत्र दिशो ग्राह्या ऐन्द्री सौम्याऽपराजिता ॥**

इति छन्दोगपरिशिष्टे कातीयवचनात् ।.....स्थिरप्रतिमायां सम्मुखस्तिष्ठन्नेव कुर्यात् । ''अर्चायामथ सम्मुख'' इति वचनादि'' ति नि० कृ० र० मा० । शिवार्चनं दिवसे रात्रौ चोदङ्मुख इति कृत्यसार-समुच्चयः ।

**[ हिन्दी टीका ]**

सूर्य-विष्णु-शिव तथा दुर्गाजी का सामान्यतः एक समान पञ्चोपचार पूजा होती है, यह मूल पङ्क्ति का अर्थ हुआ ।

यहाँ ऊपर से ज्ञातव्य है कि यद्यपि देवपूजन में पञ्चोपचार, दशोपचार, षोडशोपचार (अष्टादशोपचार)', षट् त्रिंशोपचार के भेद (इनका विशेष विवरण आचार

चिन्तामणि में देखें) से बहुत-से प्रकार हैं क्योंकि काम्य पूजा में विभवानुसार सभी कल्प सम्भव हैं किन्तु नित्य पूजा में तो प्राचीन में प्रथम पञ्चोपचार (पाँच पूजोपकरण) को ही समादर के साथ नियत कर दिया है। जैसा कि स्मृतिकार हारीत का कहना है कि "पञ्चोपचार आदि के भेद से पूजा विविध प्रकार की कही गई है किन्तु उनमें चन्दन-फूल-धूप-दीप तथा नैवेद्य से पञ्चोपचार वाली ही (नित्य) पूजा करनी चाहिए।" यहाँ श्रीदत्तोपाध्याय आदि निबन्धकारों का विवेचन है कि यह पञ्चोपचार वाली पूजा भी पाद्य-अर्घ-आचमय-स्नानीय और पुनराचमनीय पूर्वक ही हो तथा नित्य पूजा में उक्त पञ्चोपचार में भी जितना ही सामान उपलबध हो सके उसी से पूजा का निर्वाह कर लेना चाहिए।

पञ्चोपचार में चन्दन के लिए गन्ध पद से कहे जाने के कारण 'एष गन्धः' ऐसा ही वाक्य प्रयोग पूजा काल में करने को कहा है किन्तु बहुत से लोग 'इदमनुलेपनम्' इस तरह भी बोलते हैं।

पूर्व मुंह होकर प्रातः काल (दिन) का, पश्चिम मुंह होकर शाम का और उत्तर मुंह होकर रात का पूजन करें। इस प्रसंग पर गोभिल का कहना है कि "रात में उत्तर मुंह होकर सदा ही देव पूजन करना चाहिए किन्तु शिव पूजन तो दिन और रात में भी उत्तर मुंह होकर ही करें।" अब इससे सिद्ध होता है कि नियमतः उत्तर मुंह होकर शिवपूजा होने की स्थिति में शंकर जी के साथ होनेवाली अन्यदेवपूजा भी उसी तरह होगी। यदि ऐसा सम्भव न हो तो उस स्थल के अनुसार पूर्व दिशा या ईशान कोण की ओर मुंह कर के पूजा करनी चाहिए क्योंकि छन्दोगपरिशिष्ट का कहना है कि जहाँ जप होम आदि कर्मों में दिशा का नियम नहीं हुआ हो वहाँ पूरब, उत्तर और इसका बिचला ईशान कोण ये तीन दिशाएँ समझनी चाहिएँ। स्थिर प्रतिमा स्थल में दिशा कुछ भी हो सम्मुख हो पूजा करें। क्योंकि ऐसा ही वचन उपलब्ध होता है।

[मूलम्]

चन्दनागुरु-कर्पूर-कुङ्कुमान्यनुलेपने।

[संस्कृत टीका]

चन्दनेति। अनुलेपने=सुगन्धिततरलद्रव्यस्य देवाय समर्पणविधौ। चन्दनाद्यन्यतमस्य समुदितस्य वा पङ्कं विहितं बोध्यम्। तच्च गन्ध पदमनुलेपन-पदं वाऽभिलप्यैव देयम्। कुङ्कुमानीत्यत्र विहितानीति शेषः। यथाचात्र वचनमपि नरसिंह पुराणे-

**कुङ्कुमागुरुश्रीखण्डकर्पूरेणाच्युताकृतिम् ।**

**आलिप्य भक्त्या राजेन्द्र कल्पकोटिं वसेद् दिवि ।**

आपेक्षिक उत्कर्षो यथा पद्मपुराणे-

**गन्धेभ्यश्चन्दनं पुण्यं चन्दनादगुरुर्वरः ।**

**कृष्णागुरुस्ततःश्रेष्ठः कुङ्कुमन्तु ततो वरम् ॥ इति**

इतः पूर्वमाचरणीया उपचाराः यथा-पाद्यम् । अर्घम्। आचमनीयम्=आचमनार्थं शुद्धोदकम् । स्नानीयानि – घृत-तैल-दधि-क्षीरेक्षुरस-मधु-जल-प्रभृति-स्नानद्रव्याणि यथाविहितानि । तत्र जलमावश्यकम् । पुनराचमनीय्-पुनः शुद्धजलैः क्षालनम् । अनुलेपनान्तरं विष्णवेऽ क्षतस्थाने यवतिलाः, अन्यदेवाय तण्डुलाः देयाः ।

[ हिन्दी टीका ]

अनुलेपन (देवता को सुगन्धित तरल द्रव्य का चढाना) में श्रीखण्डचन्दन, अगर, कर्पूर तथा कुंकम के मध्य किसी एक का या मिलित सभी का घिसा पंक विहित है । इसके लिए 'एष गन्ध' अथवा 'इदमनुलेपनम्' वाक्य का प्रयाग होगा ।

ऊपर से ज्ञातव्य है कि श्रीदत्त आदि निबन्धकारों के विवेचानुसार अनुलेपन के पूर्व पाद्य, अर्घ, आचमनीय-आचमन हेतु शुद्धजल का दान, स्नानीय-घृत-तेल-दही-दूध, ईख का रस, शहद, तथा जल आदि यथाविहित स्नान द्रव्य का समर्पण जिसमें पीछे जल तो आवश्यक होगा ही, तथा पुनराचमनीय-पुनः शुद्ध जल से मूर्त्ति का घोना या पखालना किया जायेगा । इस अनुलेपन के बाद विष्णु को अक्षत के स्थान में यवमिश्रित त्तिल़ तो अन्यदेवों को सफेद चावल समर्पित किये जायेंगे ।

[ मूलम् ]

पुष्पाणि गिरि-वन-स्ववाटिका-सम्भवानि सुगन्धीनि स्वयं विकसितानि केशकीटरहितानि अपर्युषितानि स्वयमपतितानि अखण्डानि आर्द्राणि च प्रोक्षितानि ।

[ संस्कृत टीका ]

पुष्पाणीति । पुष्पाणि=पञ्चोपचारसामग्र्या द्वितीये वस्तुनि तावत्, पुष्पाणि=कुसुमानि । पुष्पं नाम पुष्यति=विकसति यत्=तरुलतानां प्रसवः ।

गिरिवनस्ववाटिकासम्भवानि=पर्वतारण्य-स्वरोपित-स्ववाटिकोत्पन्नानि । "स्वामिना, वाटिका-पालेन वा निजेच्छया दत्तानि अन्यवाटिकासम्भवान्यपी" ति नि० कृ० र० मा० । सुगन्धीनि=सुरभीणि । स्वयं विकसितानि= स्वयं विकासमापन्नानि । केशकीट-रहितानि=कचकृमिशून्यानि । अपर्युषितानि = पूर्वदिने आहृतान्युत्तरदिने पर्युषितानि भवन्तीति तद्भिन्नानि,

**जलं पर्युषितं त्याज्यं पत्राणि कुसुमानि च ।**

इति पारिजातवचनात् । स्वयमपतितानि=हस्तत्रोटितानि । अखण्डानि= अखण्डितानि निश्छिद्राणि वा । आर्द्राणि=क्लिन्नानि । प्रोक्षितानि= जलैः सिक्तानि । अत्र विशेषो यथा छन्दोग परिशिष्टे-

**उत्तानेन प्रोक्षणं स्यादभ्युक्षणमतोऽन्यथा ।**

**पर्युक्षणञ्च परितस्तिर्यक् चावोक्षणं भवेत् ॥ इति ।**

कुत्रचित्त्वेवमप्युपलभ्यते वचनमिदम्-

**उत्तानेनैव हस्तेन प्रोक्षणं परिकीर्त्तितम् ।**

**न्यञ्चताऽभ्युक्षणं प्रोक्तं तिरश्चावोक्षणं स्मृतम् ॥ इति**

अत्र मूललेखे ग्राह्याणीति शेषः । एतेनैतदन्यान्यग्राह्याणीति निष्पन्नम् । यथा चात्र वचनमपि-

**पुष्पैररण्यसम्भूतैः पत्रैर्वा गिरिसम्भवैः ।**

**अपर्युषितनिश्छिद्रैः प्रोक्षितैर्जन्तुवर्जितैः ॥**

**आत्मारामोद्भवैर्वाऽपि पुष्पैः सम्पूजयेद् हरिम् । इति**

अत्र आत्मनः=स्वस्य। आरामः=पुष्पैःसम्पूजयेद् हरिम् । इति अत्र आत्मनः=स्वस्य । आरामः=पुष्पवाटिका। वचनेषु पठितं हरि-विष्णवादि पदं देवमात्रोपलक्षकं बोध्यम् । अन्यदेवोद्देश्येनापि पूजनपुष्पदानादिविधानात् । पुष्पदान-माहात्म्यं यथा नरसिंहपुराणे-

**दश दत्त्वा सुवर्णानि यत्फलं लभते नरः ।**

**तत्फलं लभते मर्त्यो विष्णोः कुसुमदानतः ॥ इति**

अत्र" विहितपुष्पमात्र (दान) फलकमेतदिति वीरमित्रोदयः। मूलक्रमेणात्र कश्चन विशेषोऽवधेयः। पुष्पाणीत्यत्र यथा विष्णुधर्मोत्तरे-

**देवोपरिधृतं यच्च वामहस्तेन यद्धृतम्।**

**अधोवस्त्रधृतं यच्च जलान्तः क्षालितञ्च यत्॥**

**देवतास्तन्न गृह्णन्ति पुष्पं निर्माल्यतां गतम्।**

अधोवस्त्रम्=परिधानवस्त्रम्। यदिति पुष्पमिति शेषः। स्ववाटिकेति। नारदीयं राक्षसीशपथमधिकृत्याचारचिन्तामणिधृत-

**पारक्यारामजातैस्तु कुसुमैरर्चयेत्सुरान्।**

**तेन पापेन लिप्येऽहं यद्येतदनृतं भवेत्॥**

इति वचनेन निन्दाश्रुतेरन्यवाटिकाभवानि निषिद्धानि सिध्यन्ति। परमेतन्निषेधः काम्यपूजायां विज्ञेयः। अतएव "अत्र च नित्य-पूजार्थं चौर्यमपि (अनिषिद्धम्) अदोषाय। 'देवार्थं कुसुमस्तेयमस्तेयं मनुरब्रवीदि" त्यभिधानादिति छन्दोगाह्निकमपि। **विकसितानि-**

**न दोषः कलिकाभङ्गे पद्मचम्पकयोरपि।**

इति स्मृतिवचनात् कमलचम्पकयोः कलिकात्रोटने न दोषः। **अपर्युषितानि-** अत्र "तुलस्यां बिल्वपत्रे जलपुष्पेषु च पर्युषितत्वदोषो नास्तीति प्रवादः। शैवागमे पर्युषितेष्वपि मालाकारगृहोषितेषु दोषाभाव उक्तः" इति छन्दोगाह्निकम्। एवमेव द्वैतपरिशिष्ट-नित्यकृत्यरत्नमालादयः **अपतितानीति**-स्मृतिः,

**भूमिस्पृष्टं न गृह्णीयात् सेफालीं बकुलं विना।**

सेफाली=शृङ्गारहार इति। बकुलम्=मोलसरीति प्रसिद्धम्। तथा च सेफाली बकुलञ्च भूमिस्थितमपि ग्राह्यम्। अन्यत्पुष्पं न भूमिस्थं ग्राह्यमितत्यर्थ" इति कृत्यसारसमुच्चयः। "याचितं निष्फलं स्मृतम्" इति पठन्ति। "क्रयक्रीतन्तु निष्फलमिति प्रवादः, महाजनैरनादृतत्वादि"ति छन्दोगाह्निकम्। अत्र वीरमित्रोदयधृत-विष्णुपुराणे-

**धर्मार्जितधनक्रीतैर्यः कुर्यात् केशवार्चनम्।**

**उद्धरिष्यत्यसन्देहं दश पूर्वान् दशापरान्॥**

अथवा स्मृत्यर्थसारे-

**शूद्रानीतैः क्रयक्रीतैः कर्म कुर्वन् पतत्यधः ।**

**अत्र क्रय क्रीतैः= अन्यायोपार्जितधनक्रीतैः इति । अत्र सच्छूद्रेणास्वार्थमानीतमपि पुष्पं ग्राह्यमित्युक्तं पूजापङ्कजभास्करे इति तु नित्यकृत्यरत्नमाला ।**

**[ हिन्दी टीका ]**

पञ्चोपचार पूजा सामग्री की द्वितीय वस्तु फूल पहाड़,जंगल तथा अपने रोपे गए वृक्ष अथवा अपने बगीचे के हों, (अथवा दूसरे बगीचे के मालिक या माली के द्वारा अपनी इच्छा से दियें गए हों), सुगन्धित, स्वयं विकसित, केश तथा कीड़ों से रहित, अखण्डित (जैसे गैंदा आदि फूल को बीच से तोड़कर अधिकांश अवयव =अंश (अंग) अलग न कर दिये गए हों), सरस तथा उत्तान हाथ के द्वारा सिञ्चित (प्रोक्षित) हों ।

हाँ, इस प्रोक्षण आदि के सम्बन्ध में छन्दोग परिशिष्ट वचनानुसार ऊपर से ज्ञातस्य है कि ''उत्तान हाथ के द्वारा किसी वस्तु के जल से सीचने को 'प्रोक्षण', उल्टे हाथ से सीचने को 'अभ्युक्षण', चारो तरफ से सीचने को पर्युक्षण और टेढ़े हाथ से सीचने को 'अवोक्षण' कहते हैं ।''

यहाँ मूल क्रम के अनुसार ऊपर से कुछ समझने योग्य बातें यों हैं–

**फूल**–देवता के ऊपर चढ़ाया गया, बायें हाथ से रखा गया, पहने हुए अधोवस्त्र में रखा गया तथा जल के अन्दर धोया गया फूल निर्माल्य हो जाता है । अतः इसे चढ़ाना वर्जित है किन्तु वीरमित्रोदय में उद्धृत नरसिंह पुराण के वचनानुसार ज्ञातव्य है कि ''गुणशाली पात्र को दशगुना सुवर्ण देने से जो फल मिलता है, वह (फल) मानव देवता को शास्त्रविहित पुष्प समर्पण से ही प्राप्त कर लेता है ।''

नारदपुराण में वर्णित राक्षसी के द्वारा की गई शपथ के प्रसङ्ग पर आचार चिन्तामणि में उद्धृत वचन के अनुसार दूसरे के बगीचे से लाये गए फूलों के द्वारा किया गया देव पूजन पापप्रद कहे जाने के कारण दूसरे के बगीचे के फूल देव पूजन के लिए निषिद्ध सिद्ध हो जाते हैं । फिर भी यह निषेध काम्य पूजा (सत्यनारायण पूजा आदि) में ही समझना चाहिए क्योंकि नित्य पूजा के लिये मनु ने चोरी से भी फूल लाना निर्दोष बतलाया है ।

**विकसित**–यद्यपि फूल फूला हुआ होना चाहिए किन्तु कमल और चम्पक की कली भी चढ़ाई जा सकती है ।

**अपर्युषित**–इस प्रसंग पर छन्दोगाह्निक आदि का विवेचन है कि ''तुलसीपात्र, बिल्वपत्र तथा जलपुष्पों में बासी का होना दोषा वह नहीं है'' यह निर्मूल कथन है। किन्तु शैवागम में माली के घर का बासी फूल भी ग्राह्य माना गया है।

**अपतित**–(भूमि पर गिरे न हों)-कृत्यसारसमुच्चय में उद्धृत वचनसमुच्चय के अनुसार शृङ्गारहार तथा मोलसरी फूल भूमि पतित भी लिये जा सकते हैं।

छन्दोगाह्निक के अनुसार ज्ञातव्य है कि कितने लोग ''याचितं निष्फलं स्मृतम्'' (याचना से प्राप्त फूल निष्फल होता है) या ''क्रय क्रीतन्तु निष्फलम्'' (खरीदा गया फूल निष्फल होता है) ऐसे वचन पढ़ते हैं, किन्तु महा (शिष्ट) जनों द्वारा अनादृत (आदर प्राप्त न) होने के कारण उक्त कथन निर्मूल (अप्रमाणिक) है।

वीरमित्रोदय में उद्धृत विष्णु पुराण वचन एवं स्मृत्यर्थसार में उद्धृत स्मृति वचन तथा इस की व्याख्या के अनुसार ज्ञातव्य है कि अधर्मोपार्जित या अन्यायोपार्जित धन के द्वारा खरीदे गए फूलों से पूजा करना वर्जनीय है। यहीं नित्य कृत्यरत्नमााला के अनुसार शूद्र के द्वारा अस्वार्थ लाये गए फूल ग्राह्य हैं।

### [ मूलम् ]

### पत्राण्यपीदृशानि, निर्गन्धीन्यपीति विशेषः।

### [ संस्कृत टीका ]

पत्राण्यपीति। पत्राण्यपि=तुलसीपत्र–बिल्वपत्रप्रभृतीन्यपि। ईदृशानि= पुष्पसदृशानि ग्राह्याणीतिं शेषः। (किन्तु) निर्गन्धीन्यपीति गन्धरहितान्यपि ग्राह्याणीत्यत्र विशेषो बोध्यः। अतएवात्र ''पत्रेषु विधिनिषेधौ पुष्पवदूह्यौ। तत्र बिल्वपत्रं दूर्वा च सर्वेषां विहितमन्यद् विस्तरभयान्नात्र लिखितम्।.....अत्र केचित्सूर्यगणपत्योर्बिल्वपत्रं दुर्गायाश्च दूर्वां नेच्छन्ति किन्तु दूर्वाङ्कुरं देव्यै देयमित्युक्तं कालिकापुराणादौ। तथा च पत्रार्पणे इदं दूर्वादलमिदं बिल्वपत्रमिदममुकपुष्पपत्रमित्येवमर्पणप्रकारः। .....स्वैर्मन्त्रैरर्चयेन्नित्यं पत्रैःपुष्पैस्तथाऽम्बुभिः इति। तथा च प्रत्युपचारं मन्त्रान्वयस्य युक्तत्वेऽपि साम्प्रतिकाः पुष्पमात्रे मन्त्रमनुगमयन्ति।....अत्र ''त्रिर्देवेभ्यो द्विर्मनुष्येभ्यः सकृत्पितृभ्यः''. इति गोभिलगृह्यसूत्राणि ''त्रिष्कृतमर्थं देवा मन्यन्ते'' इति शतपथश्रुतेर्योजयन्तः पुष्पमात्रं त्रिरर्पयन्तीति नि० कृ० र० मालाऽपि।

पुष्पञ्चाधोमुखं नेष्टं तुलसीपत्रवर्जितम्।
तस्मादधोमुखं देयं बिल्वपत्रञ्च शङ्करे ॥
पुष्पमूर्ध्वमुखं योज्यं पत्रं योज्यमधोमुखम्।
फलन्तु सम्मुखं योज्यं यथोत्पन्नं तथाऽर्पयेत् ॥ इति ।

[ हिन्दी टीका ]

फूल के जैसे ही तुलसीपत्र, बिल्वपत्र आदि के ग्रहण करने का विधान है किन्तु गन्धरहित भी पत्र ग्राह्य हैं, यही फूलों की अपेक्षा पत्र में विशेषता है। यह मूल पङ्क्ति का अर्थ हुआ।

इसी तरह ऊपर से नित्यकृत्यरत्नमाला के लेखानुसार ज्ञातव्य है कि पत्रों का विधि-निषेध पुष्प के विधि-निषेध के जैसे समझना चाहिए। बिल्पपत्र तथा दूर्वादल सभी देवों के लिए विहित है। अन्य बात विस्तारभय से यहाँ नहीं लिखी गई है। यहाँ कितने लोग सूर्य और गणेश जी को विल्वपत्र तथा दूर्वादल चढ़ाना वर्जनीय मानते हैं किन्तु दुर्गा आदि देवियों को दूर्वादल चढ़ाने का विधान कालिकापुराण आदि में किया गया है। पत्र-पुष्पादि सर्मपण के समय "इदं दूर्वादलम्", "इदं बिल्वपत्रम्", "इदं कमलकुसुमम्", "इदं पाटला (प्रभृति) पुष्पम्" इत्यादि वाक्य का प्रयोग करना चाहिए। यद्यपि सभी उपचारों (पूजन सामग्री) के समर्पण समय में मन्त्र का प्रयोग होना उचित है किन्तु आजकल के लोग पुष्पमात्र में मन्त्र प्रयोग करते हैं। इसी तरह गोभिल वचन एवं शतपथश्रुति के समन्वय करके पुष्पमात्र को तीन बार चढ़ाते है।

लिङ्गार्चनचन्द्रिका में उद्धृत वराहपुराण के वचनानुसार देवता के ऊपर चढ़ाये जाने वाले फूलों का मुंह ऊपर होना चाहिए। इसी तरह पत्र में तुलसीपत्र का भी मुंह ऊपर ही हो किन्तु बिल्वपत्र शङ्कर जी को चढ़ाते समय अधोमुख रहना चाहिए। फल सम्मुख (आगे) में रखे जायँ तथा जिस क्रम से उत्पन्न हुआ है उसी क्रम से अर्पण करना चाहिए। (जैसे-आम, जामुन तथा कटहल आदि में उत्पत्ति क्रम से पहले आम, तब कटहल जामुन, तब अर्पित करें अथवा उन वस्तुओं का आदिम भाग प्रारम्भ में तथा अन्तिम भाग अन्त में रखे जायँ)।

[ मूलम् ]

धूपे गुग्गुलः सघृतः केवलो वा कृष्णागुरुर्वा।

[ संस्कृत टीका ]

धूप इति । धूपे=पञ्चोपचारस्य तृतीये वस्तुनि, धूपार्थमिति यावत् । धूपो नाम गन्धद्रव्यविशेषोत्थधूमस्तद्वर्त्तिश्च । धूपयति=स्वगन्धेन प्रीणयित्वा दीव्यतीति (धूप + अच्) इति व्युत्पत्तेः । सघृतः केवलो वा=घृतसहितः घृतरहितो वा । गुग्गुलः (प्रशस्तः) । वा=अथवा । कृष्णागुरुः प्रशस्यते । स्थापने विशेषः कालिकापुराणे-

**न भूमौ वितरेद् धूपं नासने न घटे तथा ।**
**यथा तथाऽऽधारगतं कृत्वा तद्विनिवेदयेत् ॥ इति ।**

अत्र प्रसङ्गे नित्यकृत्य-रत्नमाला तु-"धूपदीपयोश्चाधः कश्चित्तृणादिराधारो देयः । भूमौ तद्धारणस्य सहान्यैः शङ्खचन्दनादिभिर्निषेध-स्मरणादि" त्याह ।

[ हिन्दी टीका ]

धूप के (धूम) निमित्त घृत के साथ या इसके विना भी गुग्गुल प्रशस्त है । इसके अभाव में काला अगर (कृष्णागुरु) विहित है ।

यहाँ ऊपर से ज्ञातव्य है कि धूप-दीप पात्र के नीचे तृण या अक्षत आदि आधार कर देना चाहिए । इसी तरह शंख, चन्दन आदि पूजोपकरण भूमि पर न रखकर किसी पवित्र आधार पर रखना चाहिए ।

[ मूलम् ]

**दीपे घृतं तैलं वा ।**

[ संस्कृत टीका ]

दीप इति । दीपे=पञ्चोपचारस्य चतुर्थे वस्तुनि दीपे, दीपपात्रे इति यावत् । (ज्वलनार्थम्) घृतं तैलं वा. दातव्यमिति शेषः । एवमेव "दीपाः सघृताः, तदभावे सतैला" इत्याचारचिन्तामणिरपि ।

**घृतेन दीपो दातव्यस्तिलतैलेन वा पुनः ।**

इति विष्णु पुराण वचनेनान्यतैलापेक्षयातिलतैलमुत्तमं बोध्यम् । अतएव "दीपे घृतं तिलतैलं वा इत्यप्याचारचिन्तामणिरेव । छन्दोगाह्निकं तु "दीपे सर्वत्र घृतं विहितम् । शिववर्जं तैलमपि ।....घृततैलातिरिक्तं विष्णोर्निषिद्धमि"ति विशेषः ।

दीपो नाम-वर्त्तिस्थ-ज्वलदग्नि-शिखा । तत्पर्यायः प्रदीपः । दीपदान-फलमाह मनुः-

वारिदस्तृप्तिमाप्नोति सुखमक्षय्यमन्नदः ।

तिलप्रदः प्रजामिष्टां दीपदश्चक्षुरुत्तमम् ॥ इति

वह्निपुराणन्तु-

दीपेन लोकान् जयति दीपस्तेजोमयः स्मृतः ।

चतुर्वर्गप्रदो दीपस्तस्माद्दीपैर्यजेत् श्रिये ॥ इति ।

[ हिन्दी टीका ]

देवता के निमित्त दीप जलाने में घृत या तिलतेल या निकृष्ट रूपमें तेल का प्रयोग करें । ऊपर से ज्ञातव्य है कि दीपदान का फल उत्तम (नीरोग) नेत्र प्राप्ति मनु ने कहा है तो वह्निपुराण का कथन है कि दीपदान से चतुर्वग (धर्म अर्थ काम तथा मोक्ष) की प्राप्ति होती है ।

[ मूलम् ]

नैवेद्ये भक्ष्य-भोज्य-कन्द-मूल-फलान्न-पानकादीनि ।

फलं पक्वमक्वथितं कृम्यविद्धम् ।

[ संस्कृत टीका ]

नैवेद्य इति । नैवेद्ये=देवाय निवेदनीयद्रव्ये । तद्यथा

निवेदनीयं यद्द्रव्यं प्रशस्तं प्रयतं तथा ।

तद् भक्ष्यार्हं पञ्चविधं नैवेद्यमिति कथ्यते ॥

भक्ष्यं भोज्यञ्च लेह्यञ्च पेयं चूष्यञ्च पञ्चमम् ।

सर्वत्र चैतन्नैवेद्यमाराध्यास्यै निवेदयेत् ॥

इति तन्त्रसारः । भक्ष्यम्=भक्ष्येण मिश्रीकरणम् ( २।१।३५ ) इति पाणिनीयसूत्रार्थे "खरं विशदमभ्यवहार्थं भक्ष्यम् । खरम्=कठिनम् । विशदम्=विविक्तावयवम्, खाद्यं भक्ष्यमित्यर्थः" इति तत्त्वबोधिनीरीत्या "कठिन द्रव्यं खाद्यम् । पृथुकादि भक्ष्यं विवक्षितमिति बालमनोरमारीत्या च पृथुकादि । भोज्यम्=पायसादि । यथाच 'भक्ष्यं भोज्यञ्च विविधमि'ति मनोः ( ३।२२७ )

व्याख्यायां "भक्ष्यम्=खरविशदभम्यवहरणीयं मोदकादि। भोज्यम्=पायसादी"ति मन्वर्थमुक्तावल्यपि। कन्दः=शस्यमूलमिति मेदिनी। तद्यथा-कसेरुः, शर्करकन्दादिः। मूलम्=आर्द्रकादि। फलम्=आम्रादि। यथा च याज्ञवल्क्यस्मृतेराचाराध्याये द्रव्यशुद्धिप्रकरणे-"सौवर्णराजताब्जान्" इति (१८२) श्लोकस्य शाकमूलफलव्याख्यायां मिताक्षराऽपि। अन्नम्= हविष्यं सिद्धान्नं केवलमानान्नं वा। यथा च "उक्तद्रव्यालाभे केवलमामान्नं हविष्यं निवेदनीयं त्रिर्धौतम्। 'त्रिर्देवेभ्यो द्विर्मनुष्येभ्यः सकृत् पितृभ्य' इति प्रक्षालनमुपक्रम्य गोभिलसूत्रादि"ति नित्यकृत्यरत्नमालाऽपि। पानकादीनि=स्वादूनि सुगन्धीनि पेयानि। आदिपदात्पूर्वश्लोकोक्त-लेह्यचूष्यादीनि ग्राह्याणि। फलमिति। नैवेद्यार्थमुक्त वस्तुषु फलं तावत्, पक्वम् = परिणतम् प्राप्तपरिणाममिति यावत्। अक्कथितम्=सुतप्तजलपाकरहितम् अजीर्णं वा। कृम्यविद्धम्= कीटानुवेधादिरहितञ्चापेक्ष्यते।

पक्वान्नमसिद्धान्नम्। वैश्वदेवार्थम्= वैश्वदेवात् पूर्वं पूजापक्षे वैश्वदेवनिमित्तम्। अग्रम्=प्रथम (मुख्य) भागम्। उद्धृत्य=निष्काश्य दातव्यम्-नैवेद्यमिति शेषः। अत्राचारचिन्तामणिस्तु "सिद्धान्नन्तु वैश्वदेवानन्तरं पूजापक्षे देयम्। 'पाकादग्रमुद्धृत्य जुहुयादि' ति वाक्येन पाकाग्रस्य वैश्वदेवहोमे विनियोग-विधानादि" त्याह। नैवेद्यादिस्थापने विशेषो यथा कलिकापुराणे-

नैवेद्यं पुरतो वामे दक्षिणे, न तु पृष्ठतः।
दीपं दक्षिणतो दद्यात्पुरतो वा न वामतः॥
वामतस्तु तथा धूपमग्रे वा, न तु दक्षिणे।
निवेदयेत् पुरोभागे गन्धं पुष्पञ्च भूषणम्॥
मण्डले चेत्पूर्वभागे वामदक्षिणपूर्ववत्॥ इति

वामदक्षिणे अत्र देवतायाः न तु पूजकस्येति नि० कृ० र० मा०।

[हिन्दी टीका]

पञ्चोपचार के पाँचवें उपचार नैवेद्य (देवों के लिए निवेदनीय द्रव्य) के निमित्त भक्ष्य (जिसका अवयव-अंश, भाग कड़ा हो, अलग-अलग किये जा सकते हों तथा जो भक्षणीय हो वह भक्ष्य कहलाता है। यथा चिउड़ा, मन को भाने वाला लड्डू

आदि); भोज्य (भक्ष्य से भिन्न यथा खीर, हलुआ, आदि); कन्द (अधिकतर तलाओं की जड़ में मिट्टी के तले होने वाला बड़े आकार का यथा कसेरु-केसौर, शकरकन्द आदि); फल (पेड़ पौधों के ऊपरी भाग में फलने वाला-यथा आम, कटहल, केला आदि ); मूल (छोटे पौधों के नीचे मिट्टी के तले होने वाला यथा अदरख आदि ) अन्न-सिद्धान्न या कच्चा हविष्यान्न ; तथा स्वादिष्ट एवं सुगन्धित पेय पदार्थ विहित हैं। यहाँ के आदि पद से चाटने तथा चूसने योग्य पवित्र पदार्थ आदि विवक्षित हैं।

हाँ, ऊपर कहे गए पदार्थों में फल पका हो ; किन्तु उवाला गया या सड़ा तथा कीड़ों के छेदवाला न हो।

वैश्वदेव के पहले देव पूजन पक्ष में सिद्धान्न का नैवेद्य देना हो तो वैश्वदेव के निमित्त पाकपात्र से प्रथमतः अग्रभाग निकाल कर रख लेना चाहिए। क्योंकि पाक के प्रथम भाग से सर्वप्रथम वैश्वदेव होम करने का विधान कर दिया गया है।

यहाँ आचारचिन्तामणि का कहना है कि वैश्वदेव होम के वाद देव पूजन पक्ष में सिद्धान्न का नैवेद्य होना चाहिए। यहीं नित्यकृत्यरत्नमाला का कहना है कि नैवेद्य के लए कहे गए द्रव्य की अलाभ स्थिति में केवल कच्चा हविष्य अन्न भी तीन बार धोकर दिया जाना चाहिए। क्योंकि गोभिलगृह्य सूत्र का विधान है कि देवों के लिए तीन बार, मनुष्यों के लिए दो बार तथा पितरों के लिए एक बार पानी धुला हुआ कच्चा अन्न आदि होवे। कालिकापुराण के अनुसार नैवेद्य आदि के रखने में विशेष यह समझना चाहिए कि नैवेद्य आगे, बायें या दाहिने भाग में न कि पीछे में भी, दीप दाहिने भाग या आगे में न कि बायें तरफ भी, किन्तु धूप बायें भाग या आगे में न कि दाहिने भाग में भी और चन्दन पुष्प एवं भूषण आगे में रखें। मण्डल के भीतर यदि पूजा करनी हो तो पूर्वभाग में तथा वाम दक्षिण का नियम पूर्ववत् समझें।

यहाँ यह भी ज्ञातव्य है कि यह वाम एवं दक्षिण का नियम देवता के अनुसार होगा न कि पूजक (पुजारी) के अनुसार भी।

**[ मूलम् ]**

प्रतिदेवं स्नानादिविशेषाः पञ्चोपचारविशेषाश्च जपस्तुतिप्रदक्षिणा-प्रणाम-विसर्जन-विशेषाश्च विस्तरतया न लिखिताः।

**[ संस्कृत टीका ]**

प्रतीति। अत्र व्याख्येयपदाभावान्न किञ्चिदपि व्याख्यातम्।

[ हिन्दी टीका ]

प्रत्येक देवता के लिए भिन्न-भिन्न स्नान, भिन्न-भिन्न पञ्चोपचार तथा भिन्न-भिन्न जपस्तुति प्रणाम विसर्जन यहाँ ग्रन्थ विस्तार के भय से नहीं लिखे गये हैं।

[ मूलम् ]

इदानीं निषेधाः। तत्र नरसिंहपुराणे शान्तनुं प्रति नारदवाक्यम्-

**अतः प्रभृति[१] निर्माल्यं मा लङ्घय महीपते।**

**नरसिंहस्य देवस्य अन्येषाञ्च दिवौकसाम्॥**

[ संस्कृत टीका ]

इदानीमिति। इदानीं निषेधाः=विधीन् प्रदर्श्याधुना प्रतिषेधाः वक्ष्यन्ते इति शेषः। शान्तनुं प्रति = शान्तनुं प्रति नरसिंहनिर्माल्यलङ्घनाद्भग्नदिव्य-रथारोहणशक्तिं शान्तनुं प्रतीत्यर्थः।

अत इति। महीपते ! = हे राजन् शान्तनो ! अतः प्रभृति=अतः परम्=अद्यारभ्येति यावत्। नरसिंहस्य देवस्य। अन्येषाम्। दिवौकसाम=देवानाम्। निर्माल्यम्= कस्मैचिदपि देवाय समर्पितं वस्तु, विसर्जनोत्तरं देवार्पितं प्रक्षिप्तं पुष्पादि वा। नैवेद्य निर्माल्ययोः परिभाषा यथा, गरुड पुराणे-

**अर्वाक् विसर्जनाद्द्रव्यं नैवेद्यं सर्वमुच्यते।**

**विसर्जिते जगन्नाथे निर्माल्यं भवति क्षणात्॥ इति**

मा लङ्घय=नोल्लङ्घय।

[ हिन्दी टीका ]

इस देव पूजा प्रकरण में विधिपक्ष कहे जाने के बाद अब निषेधपक्ष कहे जायेंगे।

नरसिंह भगवान् के निर्माल्य के लाँघने के कारण दिव्यरथ पर चढ़ने की भग्न शक्ति वाले राजा शान्तनु के प्रति नरसिंह पुराण में नारद का कहना है कि हे राजन् ! अब से नरसिंह भगवान् तथा इनसे अन्य देवों के निर्माल्य (किसी भी देवता को चढ़ाया गया विसर्जन के बाद का फूल आदि) को मत लाँघो।

---

पाठा० (१) परं तु।

[ मूलम् ]

भविष्यपुराणे–

यथा न लङ्घयेत् कश्चित्स्नपनं भास्करस्य च[1] ।
तथा[2] कार्यं प्रयत्नेन लङ्घितं ह्यशुभावहम् ॥
तामिस्रं नरकं कर्त्ता लङ्घयेद्[3] यः स रौरवम् ॥

[ संस्कृत टीका ]

यथेति । कश्चिच्च=कोऽपि जनः । यथा=येन प्रकारेण । भास्करस्य स्नपनम्="अत्र स्नपनपदं निर्माल्यमात्रोपक्षणम् । एवं भास्करपदं सर्व देवानामि"ति नि० कृ० र० मा० । न लङ्घयेत् । प्रयत्नेन = प्रयासपुरस्सरम् । तथा=तद्वत् । कार्यम्=करणीयम् । हि = यतः । लङ्घितम्=लङ्घनम् । भावे क्तः । अशुभावहम्=अकल्याणकरं भवति । एवञ्चालङ्घनीये स्थाने निर्माल्यं प्रक्षेप्तव्यमिति भावः । लङ्घयेद्यः सः=निर्माल्यलङ्घयिता लङ्घको वा । (तथा) कर्त्ता="लङ्घनानुकूलवर्त्मक्षेपादेः । तामिस्रं रौरवमित्युभयत्रापि 'याती'-ति शेषः" इति छन्दोगाह्निकम् । "कर्त्ता=प्रक्षेपस्य स्नानस्य वे"ति तु आचारचिन्तामणिः । "कर्ता=क्षेप्ता । अतएव स्वपूजितनिर्माल्यं स्वयं न क्षिपन्ति शिष्टाः । तेन जलादौ विहितगर्त्ते वा स्वयं क्षेपेऽपि न दोषः" इति नित्यकृत्यरत्नमाला । तामिस्रं रौरवम्=एतन्नामकं नरक-विशेष-स्थान-द्वयं याती- ति शेषः ।

[हिन्दी टीका]

कोई भी मनुष्य किसी भी देव का निर्माल्य जिस तरह न लांघ सके वैसा प्रयास रखना चाहिए । क्योंकि यह लांघना अकल्याणकर होता है । निर्माल्य लांघे जाने की स्थिति में निर्माल्य लांघने वाला तथा लांघे जाने वाले रास्ते पर निर्माल्य फेकने वाला (आचारचिन्तामणि के अनुसार निर्माल्य बनने वाला फूल अक्षत आदि चढ़ाने वाला भी) व्यक्ति तामिस्र तथा रौरव नाम के नरक (पापियों के कठोर यातना स्थान) की यातना भुगतता है ।

---

पाठ. (१) तु । (२) तद्वत् (३) लङ्घेद्यःसतु ।

यहाँ ऊपर से समझना चाहिए कि इसी कारण शिष्ट जन अपने पूजित निर्माल्य को स्वयं नहीं फेंकते हैं। इससे सिद्ध होता है कि अघट के जल आदि तथा इसके निमित्त बने किसी गड्ढे में स्वयं भी फेंकने पर कोई दोष नहीं।

[मूलम्]

देवीपुराणे-

**वस्वङ्गुलिविहीनन्तु न पात्रं कारयेत् क्वचित्।**

न क्वचिदिति स्नानादौ निषेधः।

[संस्कृत टीका]

वस्विति। क्व चित्=स्नानादौ। वस्वङ्गुलिविहीनम् = द्वादशाङ्गुलि-प्रमाण-रहितम्। पात्रम्=जलपात्रम्। न कारयेत्=न विरचयेत्। उत्तमादि-विवेके इतः प्राक्तनं श्लोकात्मकं वचनं यथा-

**षट्त्रिंशदङ्गुलं पात्रमुत्तमं परिकीर्त्तितम्।**
**मध्यमं तत् त्रिभागोनं कनिष्ठं द्वादशाङ्गुलम्॥**

अन्ते च,

**यथाशोभं यथालाभं तथा पात्राणि कारयेत्॥ इति**

[हिन्दी टीका]

देवस्नान आदि में बारह अंगुलियों से छोटा जलपात्र नहीं होना चाहिए।

इससे पूर्व तथा पीछे के वचनों का अर्थ है कि ३६ अंगुलियों का जलपात्र उत्तम, २४ अंगुलियों का मध्यम तथा बारह अंगुलियों का कनिष्ठ माना जाता है। अन्ततः मनोरम पात्र जैसा भी मिल जाय।

[मूलम्]

बौधायनः-

**परिहितमधिरूढमप्रक्षालितं प्रावरणं मललुलितं मनुष्यसंगतं तद्देवतायै न संयुज्यात्।**

[संस्कृत टीका]

परिहितमिति। परिहितम् = मध्ये मध्ये खण्डितं पुराणमिति यावत्। अधिरूढम् = कस्मैचिदपि देवाय कदाचिदपि समर्पितम्। अप्रक्षालितम्=

अधौतम् । मललुलितम् = मलाकीर्णम् । मनुष्यसंगतम्=परिधानशयनादिभिर्मनुष्य सम्पृक्तम् । प्रावरणम्=वस्त्रम् यत् तद् । देवातायै । न संयुज्यात्=न दद्यात् । अतएव "वस्त्रं मृदु विकोशं नवं दृढं स्वच्छं परिधानशयनादिभिर्मनुष्या सम्पृक्तं दातव्यम् । सूर्यस्य रक्तवस्त्रं प्रियमन्येऽपि रक्तोपहा (चा) रा" इति छन्दोगाह्निकम् ।

[हिन्दी टीका]

बीच-बीच में फटा हुआ अर्थात् पुराना, किसी भी देवता को किसी भी समय चढ़ाया गया, विना धोया हुआ, अधिक मैला, तथा पहनने या विछौने आदि के रूप से मनुष्य के अंगो के सम्पर्क (उपभोग) में आया हुआ वस्त्र देवता को नहीं चढ़ाया जाय ।

इसी हेतु छन्दोगाह्निक में भी कहा गया है कि कोमल, आवरणरहित, नया, मजबूत, स्वच्छ, पहनने या विछौने आदि के व्यवहार में मनुष्याङ्गसंगत न हुआ हो, ऐसा वस्त्र देवता को समर्पित करना चाहिए । हाँ, सूर्य भगवान् को लाल वस्त्र तथा अन्य उपचार या उपहार लाल रंग का प्रिय होता है ।

## [ मूलम् ]

लघुतारीत:-

स्नानं कृत्वा तु ये केचित्पुष्पं गृह्णन्ति[1] वै द्विजाः ।
देवतास्तन्न गृह्णन्ति भस्मीभवति दारुवत् ॥

[ संस्कृत टीका ]

स्नानमिति । ये केचिद् द्विजाः स्नानं कृत्वा तु पुष्पं वै, गृह्णन्ति=चिन्वन्ति । तत्पुष्पं देवताः, न गृह्णन्ति=नाङ्गीकुर्वते । अपितु तत् दारुवद् भस्मीभवति=काष्ठं यथाऽग्निसंयोगेन भस्मीभूत्वा निष्प्रयोजनं भवति तथैवैतादृशं पुष्पं देवसान्निध्यमासाद्यापि निरर्थकं भवतीति भावः ।

अत्र "परमिदन्त्वहः स्नानं-विषयं स्नानानन्तरं दक्षेण पुष्पाहरण-विधानादिति द्वैतपरिशिष्टे । अष्टाविंशतितत्त्वे तु द्वितीयस्नानाभिप्रायमिति रत्नाकर" इति सटिप्पण-कृत्यसार-समुच्चयः । एतद् व्यक्तं मत्स्यसूक्ते-

---

पाठ. (१) चिन्वन्ति ।

**स्नात्वा मध्याह्नसमये न छिन्द्यात्कुसुमं नरः ।**
**तत्पुष्पस्यार्चने देवि रौरवे परिपच्यते ॥ इति ।**

किञ्च स्वार्थपुष्पचयन एव निषेधः । स्नानं कृत्वेत्यत्र क्त्वा बलेन समान-कर्तृकत्वलांभात्तदित्यस्य तेभ्य इत्यर्थः । यत्पदापेक्षत्वात् । छान्दसो विभक्ति-लुक् । देवनाथ ठक्कुरस्याप्येतदेवाभिमतमिति नि० कृ० र० मा० ।

[ हिन्दी टीका ]

जो कोई ब्राह्मण, क्षत्रिय या वैश्य स्नान के बाद फूल चुनता है उसे देवगण अङ्गीकार नहीं करते हैं । अतः ये फूल जलकर राख बने हुए काठ के जैसे निरर्थक हो जाते हैं ।

ऊपर से ज्ञातव्य है कि सटिप्पण कृत्यसारसमुच्चय के अनुसार द्वैतपरिशिष्ट का कहना है कि उक्त विषय मध्याह्नस्नानपरक है, क्योंकि दक्षने (प्रथम) स्नान के फूल तोड़ने का विधान किया है । इसी तरह अष्टाविंशतितत्त्व नामक ग्रन्थ में भी रत्नाकर का मत अभिव्यक्त किया गया है उक्त विषय द्वितीय स्नान के अभिप्राय से ही कहा गया है ।

इसी हेतु मत्स्य सूक्त कां वचन भी है कि मध्याह्नस्नान के बाद किसी को भी फूल नहीं तोड़ना चाहिए । ऐसे फूलों से पूजा करने पर उस व्यक्ति को रौरव नरक की यातनाएँ भुगतनी पड़ती हैं । यहीं न्यायपञ्चानन देवनाथ ठक्कुर के अभिमतानुसार नि० कृ० र० मा० का कहना है कि यह निषेध स्वार्थ के लिए किये गए पुष्पचयन प्रसंग का ही है । अर्थात् ऐसे फूलों को देवगण नहीं स्वीकारते । युक्ति संस्कृत टीका से ज्ञात करें ।

[ मूलम् ]

देवीपुराणे-

**शिवे विवर्जयेत्कुन्दमुन्मत्तञ्च हरेस्तथा ।**
**देवीनामर्कमन्दारौ सूर्यस्य तगरं तथा ॥**

दुर्गायामर्कमन्दारयोर्विहितत्वाद्देवीपदं तदितर परम् । सूर्यस्यात्र तगर-प्रतिषेधात् "कुब्जकस्तगरश्चे" ति भविष्यत्पुराणीयो विधिः केवलविहिताभावे। एवमन्यत्रापि केवलविहिताभावे विहितनिषिद्धोपादानम् ।

[ संस्कृत टीका ]

शिव इति । शिवे=शिवपूजायाम् । कुन्दम्=माघ्यं श्वेतपुष्पविशेषः । (माघ्यं कुन्दमित्यमरः)। "वर्षव्यापिशिवपूजायां कुन्दपुष्पं माघे विहितम् । बिल्वपत्रमतिप्रियमि" ति नि० कृ० र० मा० । हरेः=विष्णोः पूजायाम् । उन्मत्तम्=धत्तूरम् (उन्मत्तः कितवो धूर्तः धत्तूरः कनकाह्वयः इत्यमरः) । देवीनाम्= भगवतीनाम् (पूजायाम्) । अर्कम्=वसुकम् (अर्काह्वः वसुकास्फोट इत्यमरः) । मन्दारम्=अर्कपर्णम् (मन्दारश्चार्कपर्ण इत्यमरः) । पारिभद्रं वा (पारिभद्रे निम्बतरुर्मन्दारः पारिजातक इत्यमरः) । सूर्यस्य (पूजायां) तगरञ्च । विवर्जयेत् =सन्त्यजेत् । अत्र प्रकृतवचनमुपक्रम्य "इति शातातपीयो निषेधः वनतगरी विषयः । सामान्यत एव तगरं विहित निषिद्धमिति केचिदित्याचार-चिन्तामणिः।

दुर्गायामिति । दुर्गापूजायां पुष्पाणि यथा देवीपुराणे–

ब्रह्मोवाच–

शृणु शक्र प्रवक्ष्यामि पुष्पाध्यायं समासतः ।
बकुलैश्चैव मन्दारैः कुन्दपुष्पै स्तिरीटकैः ॥
करवीरार्कपुष्पैश्च शांशपैश्चापराजितैः । इति ।

दुर्गापूजायामपि धत्तूरपुष्पं निषिद्धमेव । यथा तत्रैव-'धत्तूरातिरिक्तैश्च बन्धूकागस्तिसम्भवैः' इति । मातृभ्यः पुष्पदानफलं तत्रैव

तपःशीलगुणोपेते पात्रे वेदस्य पारगे ।
दश दत्त्वा सुवर्णानि यत्फलं कुसुमेषु तत् ॥
मातॄणाञ्च सकृद्दत्त्वा लभते नृपसत्तम ॥ इति ।

तदितपरम्=दुर्गा-देवीतर-काली-प्रभृतिदेवी-परम् । कुब्जकस्तगरश्चेति भविष्य-त्पुराणीयो विधिः='कुआ' इति 'कूजा' इति वा ख्यातः, तगरश्चेति विधानम् केवलविहिताभावे विहितपुष्पाणामप्राप्तावेव बोध्यः । एवमन्यस्थलेऽपि । केवलविहिताभावे । विहितानिषिद्धोपादानम्=विहितस्य सतो निषिद्धस्य ग्रहणं वेदितव्यम् । अतएवात्र "अत्र चादौ विहितम् । तदलाभे विहितनिषिद्धम्,

तदलाभेऽविहितानिषिद्धमुपादेयम् । निषिद्धन्तु सर्वथा नोपादेयमिति शास्त्रार्थ''
इत्याचारचिन्तामणिः ।

[हिन्दी टीका]

शिवजी को कुन्द, विष्णु को धत्तूर, भगवतियों को आक (अर्कपर्ण) तथा मन्दार (बकायन फरहद का फूल) और सूर्य को वनतगड़ी का फूल सर्वथा वर्जित है । किन्तु देवीपुराण के अन्य वचनानुसार दुर्गाजी की पूजा में आक तथा मन्दार का फूल चढ़ाना विहित होने के कारण दुर्गा जी से अन्य भगवतियों के लिए ये दोनों फूल निषिद्ध समझना चाहिए । हाँ, ऊपर से ज्ञातव्य है कि व्रतरूप से भर वर्ष यदि शिव पूजन करना हो तो माघ मास में कुन्द फूल चढ़ाना वर्जनीय नहीं है । हाँ, शिवजी के लिए बिल्व पत्र अत्यन्त प्रिय है ।

यद्यपि यहाँ सूर्य के लिए वनतगडी का फूल निषिद्ध माना गया है और भविष्य पुराण में कुआ या कुजा तथा बन तगडी का फूल विहित कहा गया है तथापि इसका अर्थ यह है कि विहित फूल न मिलने की स्थिति में ही ये दोनों फूल चढ़ाये जा सकते हैं, अन्यथा नहीं । इसी तरह अन्यस्थल में भी समझना चाहिए कि सर्वप्रथम विहित, इसके अलाभ में निषिद्ध होने पर भी जो विहित हो, इसके भी अभाव में जो न विहित हो और नाहीं निषिद्ध ही हो वह वस्तु ग्राह्य है किन्तु जो निषिद्ध है वह तो किसी भी तरह ग्राह्य नहीं हो यह शास्त्रसिद्धान्त है ।

[मूलम्]

भविष्यपुराणे-

कृष्णलोन्मत्तकं काञ्ची तथा च गिरिकर्णिका ।
न कण्टकारिकापुष्पं तथाऽन्यद् गन्धवर्जितम् ॥
न चाम्रातकजैः पुष्पैरर्चनीयो दिवाकरः ॥

कृष्णला=करञ्जनीति प्रसिद्धा । काञ्ची=वराही । गिरिकर्णिका=अपराजिता। कण्टकारिका विहिता विष्णुपूजायाम् ।

[संस्कृत टीका]

कृष्णेति । कृष्णला=गुञ्जापुष्पम् (''काकचिञ्ची गुञ्जे तु कृष्णले'' त्यमरः) । करञ्जनीति प्रसिद्धा । इदानीं करजनीति प्रसिद्धा । उन्मत्तकम्=

धुत्तूरम् । काञ्ची=वाराही । गिरिकर्णिका =अपाजिता । कण्टकारिका=निदिग्धिका (निदिग्धिका स्पृशी व्याघ्री बृहती कण्टकारिका इत्यमरः)। रेगनी इति भाषा । तथाऽन्यद्=एतदितरत् । गन्धवर्जितम्=सुगन्धिरहितम् पुष्पं सूर्यस्य पूजायां वर्जितम् । केतकीपत्रपुष्पञ्च सद्यस्तुष्टिकरं रवेः इति वचनस्येतः पूर्ववर्त्तित्वात् । च=पुनः । आम्रातकजैः पुष्पैः= कपीतनजैः कुसुमैः ('द्वौ पीतनकपीतनौ । आम्रातके' इत्यमरः)। अमड़ा इति भाषा । दिवाकरः=सूर्यः । नार्चनीयः=न पूजनीयः । परं विष्णुपूजायां कण्टकारिका विहिता बोध्या ।

[हिन्दी टीका]

करजनी, धत्तूर, वराही, अपराजिता, रेगनी, तथा अमड़ा के फूल, सुगन्ध रहित फूलों से सूर्य की पूजा नहीं करनी चाहिए । किन्तु विष्णु की पूजा में रेगनी (कण्टकारिका) का फूल विहित है ।

[मूलम्]

वामनपुराणे-

**सुरभीणि तथाऽन्यानि वर्जयित्वा तु केतकीम् ।**

''केतक्यशोकचम्पकैरि''ति नरसिंहपुराणीयो विधिः काम्यपूजायां नरसिंह-मूर्त्तौ वा ।

[संस्कृत टीका]

सुरभीति । केतकीम्=खर्जुरम् (खर्जुरः केतकी तालीत्यमरः) । तु=निश्चयेन। वर्जयित्वा=विहाय । अन्यानि=इतराणि । सुरभीणि=सुगन्धीनि पुष्पाणि पूजायां विहितानीति विशेषः ।

ननु केतक्यादिना नरसिंहपुराणप्रतिपादितस्य विधेः का गतिरित्यत आह केतक्ये इत्यादि । केतकी । अशोकः=वञ्जुलः (वञ्जुलोऽशोके इत्यमरः)। तैरिति, नरसिंहपुराणीयः=नरसिंहपुराणप्रतिपादितः । विधिः=विधानम् । काम्य-पूजायाम्=कामनाविशेषोद्देश्यकपूजायाम् । वा=अथवा । नरसिंहमूर्तौ= नरसिंहप्रतिमापूजने बोध्यः ।

[ हिन्दी टीका ]

केतकी फूल को छोड़कर अन्य सुगन्धित फूल पूजा में विहित है। नरसिंह पुराण के अनुसार केतकी, अशोक तथा चम्पा के फूलों के मध्य केतकी फूल चढ़ाने का जो विधान है वह किसी फूल के उद्देश्य से की जाने वाली पूजा में या नरसिंह भगवान की प्रतिमा पर चढ़ाने के लिए समझना चाहिए।

[ मूलम् ]

शिवपूजायां भविष्यपुराणे-

**केतकी चातिमुक्तश्च कुन्दो यूथी मदन्तिका।**
**शिरीषसर्जबन्धूक- कुसुमानि विवर्जयेत्॥**
**अङ्कोलपत्रकुसुमं करञ्जेन्द्रतरूद्भवम्।**
**बिभीतकानि धन्वानि कुसुमानि विवर्जयेत्॥**
**निर्गन्धीन्युग्रगंन्धीनि कुसुमानि विवर्जयेत्।**
**गन्धहीनमपि ग्राह्यं पवित्रं यत्कुशादिकम्॥**

अतिमुक्तो=माधवीलता। मदन्तिका=यूथ्यनुकारिपुष्पम्। इन्द्रतरुः=सिन्दुवारः।

[ संस्कृत टीका ]

केतकीति। केतकी=खर्जुरः। अतिमुक्तः=माधवीलता (अतिमुक्तः पुण्ड्रकः स्याद्वासन्ती माधवीलतेत्यमरः)। कुन्दः=माघ्यः। माघ्यं कुन्द मित्य- मरः)। मदन्तिका=यूथ्यनुकारिपुष्पम्। एतानि पुष्पाणि। 'अथच' शिरीषः=कपीतनः (शिरीषस्तु कपीतनः इत्यमरः)। सर्जः=सालः (साले तु सर्ज इत्यमरः)। बन्धूकः= बन्धुकः=बन्धूजीवकः (बन्धुको बन्धुजीवकः इत्यमरः) अथवा पीतसारकः (अथ पीतसारके। सर्जकासन- बन्धूकपुष्पप्रियकजीवका .इत्यमरः)। एतेषां कुसुमानि=सुमनानि। विवर्जयेत्=परित्यजेत्। अङ्कोलः=अङ्कोठवृक्ष इति जटाधरः 'आँको' इति यस्यप्रसिद्धिरित्यमरटीकायां स्वामी। अस्य पत्रसहितं कुसुमं पत्रं कुसुमं वा। करञ्जः=करञ्जकः (करञ्जश्च करञ्जके इत्यमरः)। इन्द्रतरुः=सिन्दुवारः (सिन्दुवारेन्द्रसुरसावित्यमरः)। एतत्तरूद्भवम्=एतद्वृक्षोत्पन्नं पुष्पम्।

विभीतकः=कलिद्रुमः । धन्वः=धन्वयासः । अस्य च पुष्पाणि विर्जयेत् । निर्गन्धीनि=सर्वथा गन्धरहितानि । उग्रगन्धीनि = उत्कटगन्धवन्ति कुसुमानि विवर्जयेत् । गन्धहीनमपि=गन्धरहितमपि । पवित्रम्=पूतम् । यत् कुशादिकम्=कुशकासादिकं, तद् ग्राह्यम्=शिवपूजार्थं ग्रहणयोग्यम् । देयानीत्यभिप्रेत्य पठन्ति-'निषिद्धान्यपि मालया' इती''ति छन्दोगाह्निकम् । विष्णुधर्मोत्तरे तु-

**पुष्पाभावेऽपि देयानि पत्राणि च जनार्दने ।**
**पत्राभावे जलं दद्यात् तेन पुण्यमवाप्यते ॥ इति ।**

देवतानामति प्रियाणि पुष्पाणि पत्राणि वा-शङ्करस्य बिल्वपत्रं, विष्णोस्तुलसी, गणेशस्य दूर्वाङ्कुरः, अम्बाया नानाविधपुष्पाणि, सूर्यस्य रक्तं करवीरमिति वाजसनेयाह्निकम् । ज्ञानमालोद्धृत-निम्न-वचनानुसारं यवापुष्पमपि निषिद्धम् तद्यथा-

**यवाकुन्दशिरीषैश्च यूथिकामालतीभवैः ।**
**केतकीभवपुष्पैश्च नैवार्च्यः शङ्करः सदा ॥ इति**

**[ हिन्दी टीका ]**

शिवजी की पूजा में केतकी माध्वीलता, कुन्द, जूही तथा जूही के अनुकारी मदन्ति का फूल निषिद्ध है । सिरीस, सखुआ, विजयसार का फूल तथा दुपहरिया मधुरी फूल एवं ओडहूल का फूल भी वर्जित है । आँको, करौंजा या करौना तथा सिन्दुवार, बहेड़ा तथा यवास का भी वर्जनीय है । इसी तरह गन्ध से रहित तथा उत्कट गन्धवाले फूल भी त्याज्य है किन्तु गन्ध से हीन भी पवित्र कुश कास आदि तो ग्राह्य हैं ।

छन्दोगाह्निक के अनुसार निषिद्ध फूलों की माला बना कर दी जा सकती । विष्णुधर्मोत्तर में तो कहा गया है कि वाजसनेयि माध्यन्दिनाह्निक के अनुसार शङ्कर को विल्बपत्र, विष्णु को तुलसी पत्र, गणेश को दूर्वाङ्कुर (नई दूभ), देवियों को नाना प्रकार के फूल, सूर्य को लाल करवीर अति प्रिय है ।

**[ मूलम् ]**

तथा,

**न सल्लकीजं नाक्षोटं न शुक्लागुरुसम्भवम् ।**
**दद्यादर्काय धर्मात्मा धूपमाराधनोद्यतः ॥**

[ संस्कृत टीका ]

तथेति । आराधनोद्यतः=पूजनोद्यतः । धर्मात्मा=धार्मिको जनः । अर्काय= सूर्याय । सल्लकीजम्=महेरणाजातम् ('महेरणा कुन्दुरुकी सल्लकी ह्लादिनीति चे' त्यमरः) । अक्षोटम्=गिरिज-पीलू-प्रभवम् । (पीलौ गुडफलः संस्री तस्मिँस्तु गिरिसम्भवे । अक्षोटकन्दरालौ द्वौ इत्यमरः) । एतज्जातमिति तात्पर्यम् । शुक्लागुरुसम्भवम्=श्वेतराजार्हसम्भवम् । (वेशिकाऽगुरु राजार्ह इत्यमरः) । धूपम्=धूपधूमः=सुगन्धितधूममिति भावः । न दद्यात् ।

[ हिन्दी टीका ]

पूजा करने को उद्यत धार्मिकजन सलाई, पहाड़ी अखरोट या विजयसार तथा उजले अगर का धूप सूर्य भगवान् को न दे ।

[ मूलम् ]

तथा, सूर्यदीपाधिकारे—

**ताँश्च दत्त्वा न हिंसेत[1] नच तैलविवर्जितान् ।**
**कुर्वीत[2] दीपहर्त्ता च मूषकोऽन्धश्च जायते ॥**

[ संस्कृत टीका ]

ताँश्चेति । तान्=सूर्याय कस्मैचिदपि देवाय वा दीपान् । दत्त्वा । समर्प्य । न हिंसेत=न निर्वापयेत् । नच=न वा । तैलविवर्जितान् कुर्वीत । दीपहर्त्ता=दीप-चौरः । मूषकः=आखुः । च=अथवा । अन्धः=दृक्शक्तिरहितोऽन्यजीवो भवेदग्रिमजन्मनि । एतेन स दीपो न निर्वापणीयः स्नेहशून्यो वा न कार्यः, नापि हर्तव्यः । "दीपहर्त्ता भवेदन्धः काणो निर्वापकस्तथा" इति स्मृतेश्च ।

[ हिन्दी टीका ]

सूर्य या किसी भी देव को दीप देकर उसे न बुझाये न केवल बत्ती (वार्त्तिका) जला कर दीप दिखाये और नाहीं चुरायें । क्योंकि बुझाने वाला या केवल बत्ती जला कर दीपदान करने वाला अगले जन्म में चूहा या काना तथा दीपहर्त्ता अन्ध होता है ।

[ मूलम् ]

विष्णुः—

**न नक्तं गृहीतेनोदकेन देवकार्यं कुर्यात् । चन्दन-कुङ्कुमागुरु-कर्पूर-मृगमद-जातीफल-वर्जमनुलेपनं न दद्यात् । न वासो**

पाठ. (१) त्तु । (२) न तैलपरिवर्जनात् ।

नीलं रक्तम्[१] । न मणिसुवर्णयोः प्रतिरूपमलङ्करणम् । नोग्रगन्धपुष्पम्[२] । नागन्धि, न कण्टकिजं, कण्टकिजमपि शुक्लं सुगन्धि यत्तद्दद्यात् । न रक्तं दद्यात् । रक्तमपि कुङ्कुमं जलजञ्च दद्यात् । न धूपार्थं जीवजातम् । न घृततैलं[३] विना किञ्चन दीपार्थे । नाभक्ष्यं नैवेद्यार्थे,[४] भक्ष्येष्वप्यजा-महिषीक्षीरे, पञ्चनखमत्स्यवराहमांसानि च ।

प्रयतः सन् शुचिर्भूत्वा सर्वमेव निवेदयेत् ।
तन्मनाः सुमना भूत्वा रागं क्रोधं विवर्जयेत् ॥

'कुङ्कुमं जलजञ्चे'ति विहित-रक्तपुष्पोपलक्षणम् । तेन ऋष्यन्तरोक्तान्यपि शमीकुशपलाशाशोक-करवीर-पाटल-पारिभद्र-पुष्पाणि देयानि ।

## [ संस्कृत टीका ]

न नक्तमिति । नक्तम्=रात्रौ गृहीतेन=आनीतेन । उदकेन=जलेन । देवकार्यम्=मन्दिरपरिष्करणपूजनादिकं देवसम्बन्धि-कार्यम् । न कुर्यात् । अनुलेपनम्=घृष्ट सरस गन्धद्रव्यम् । चन्दन कुङ्कुमागुरु कर्पूर मृगमद जाती-फल वर्जम्=गन्धसार-लोहित-चन्दन-राजार्ह-घनसार-कस्तूरी-जाती-फलानि वर्जयित्वा न दद्यात् । अर्थात् इमान्येव गन्धद्रव्याणि अनुलेपनरूपेण अर्पणीयानि। वासः=वस्त्रम्। नीलम्=नीलवर्णम् । रक्तम् =लोहितवर्णं वा न दद्यादित्यर्थः । मणि-सुवर्णयोः प्रतिरूपम्=सदृशम्-कृत्रिममणिसुवर्णादिनिर्मितमिति यावत् । अलङ्करणम्=भूषणम् न दद्यात् । उग्रः=उत्कटः-घ्राणग्लानिकरो गन्धो यस्य तत् पुष्पं न दद्यात् । नागन्धि=गन्धेन सर्वथा रहितञ्च न दद्यात् । न कण्टकिजम्=कण्टकशालिवृक्षोद्भवं पुष्पं न दद्यात् । कण्टकिजमपि शुक्लम्=श्वेतम् । सुगन्धि=शोभनो गन्धो यस्येति विग्रहे । गन्धस्येदुत्पूति-सुसुरभिभ्यः (५।४।१३५) इतीत्वम् । यत्तत्=पुष्पं दद्यात् । रक्तम्=लोहित वर्णं पुष्पं न दद्यात् । रक्तमपि=लोहितवर्णमपि कुङ्मम्=काश्मीरम् । (काश्मीरं कुङ्कुमेऽपि स्यादिति मेदिनी) । 'केसर' इति ख्यातम् । जलजञ्च=रक्तोत्पलञ्च

पाठा० (१) वासो न नीलरक्तम् । (२) गन्धिकुसुमम् । (३) घृतं तिलतैलं वा किञ्चन । (४) न भक्ष्ये ।

देयम्। 'कुङ्कुमं जलजञ्चे' त्यनेन न केवलमेतयोरेव ग्रहणमपितु उपलक्षण-विधया मूलोक्तानि ऋष्यन्तरकथित-शमी-कुश-पलाशा-दिपुष्पाण्यपि ग्राह्याणि।

धूपार्थम्=धूपनिमित्तम्। जीवजातम्=जीवात्-मृगादितः, जातम्-उत्पन्नं कस्तूरीप्रभृति, न दद्यात्। अतएव "कस्तूरिकादिधूपो न देय इत्यर्थ" इत्याचारचिन्तामणिरपि। दीपार्थे=दीपनिमित्तम्। घृततैलं विना=घृतं तिलतैलं विना। किञ्चन-मेदो वसाऽऽदिकं न दद्यात्। यथाच विष्णुरेव-

**घृतेन दीपो दातव्यः तिलतैलेन वा पुनः।**
**वसामेदोद्भवं दीपं प्रयत्नेन विवर्जयेत्॥ इति**

नैवेद्यार्थे=नैवेद्यनिमित्तम्। अभक्ष्यम्=पर्युषितोच्छिष्टान्नादिपलाण्डु प्रभृति न (दद्यात्)। भक्ष्येष्वपि=भक्षणीयपदार्थेष्वपि। अजामहिषीक्षीरम् = अजाया महिष्या वा दुग्धम्। पञ्चनखमत्स्यवराहमांसानि च=गोधाऽऽदि पञ्चनखानां, पाठीनादिमत्स्य विशेषाणाम्, आरण्यकसूकराणाञ्च मांसानि। न दद्यादिति पूर्व-क्रियाऽभिसम्बन्धः। इदानीन्तन-प्रकाशित-मूलमात्रे विष्णु-स्मृति-पुस्तके तु "न भक्ष्ये अप्यजामहिषीक्षीरे" इत्येव पाठोऽपि दृश्यते। अत्र छन्दोगाह्निकं यथा, "गव्यं दधि पयो घृतं विधाय वराह पुराणम्-

**माहिषं चाविकं चाजमयज्ञियमुदाहृतम्॥ इति**

अत्रैवाचार-चिन्तामणिस्तु-'दद्यादिति शेषः। मेषी-महिषी-छागीनां दुग्ध-दधि-घृतान्यदेयानि। तदुक्तं वराहपुराणे-

**ये मयैवोपयोज्या हि गव्यं दधि पयो घृतम्।**
**माहिषं चाविकं छागमयज्ञियमुदाहृतम्॥**

अयज्ञियम्=अवैष्णवम्। माहिषम्, आविकं छागमिति दुग्ध-दधि-घृत विशेषणम्। पञ्चनखेष्वपि शशमांसं देयम्।

**मार्गं मांसं तथा छागं शाशं समनुयुज्यते।**
**एतानि मे प्रियाणि स्युः प्रयोज्यानि वसुन्धरे॥**

इति वराहपुराणादि" त्याह। अत्र "अस्य (विष्णोः) नैवेद्ये मांसमपि प्रशस्तं, तत्र तित्तिरि-मांसमति प्रशस्तमि"ति तु देवपूजाकृत्यप्रकरणे नित्यकृत्यरत्नमाला टिप्पणी।

अत्रैव "नैवेद्ये भक्ष्यभोज्य-कन्द-मूल-फलान्न-पानकादीनि सर्वत्र दातव्यानि। मांसं शिवेतरेषु विहितमि''ति छन्दोगाह्निकम्। परमत्र पूजा-प्रकाशे शिवनैवेद्यविधि-प्रकरणे वीरमित्रोदय (पृ० सं० २१९) स्तु-स्कान्दं वचन मुद्धृतवान्–

**परिपक्वं सुसम्मृष्टमाज्यसिक्तं सुसंस्कृतम्।**
**शिवाय मांसं दत्त्वा च शृणु यत्फलमाप्नुयात्।**
**अशेषफलदानेन यत्फलं परिकीर्त्तितम्।**
**तत्फलं प्राप्नुयान्नित्यं सर्वमांसनिवेदने ॥ इति**

मांसस्य हविष्यत्वप्रसङ्ग आह्निकप्रकाशे जपनियमप्रकरणे (पृ० सं० ३२७) पुनरपि वीरमित्रोदयविचारो यथा–

**मुन्यन्नानि पयः सोमो मांसं यच्चानुपस्कृतम्।**
**अक्षारलवणं चैव प्रकृत्या हविरुच्यते ॥**

इति मनु (३।२५७) वाक्येन मांसस्य हविष्यत्वमुक्तं तत् श्राद्धप्रकरणपाठात् श्राद्धपरम्। अतएव 'हविष्याणि च मांसानी'ति रामायणेऽप्युक्तम्। सामान्यतो हविष्यत्वेऽपि व्रते मधुमांसवर्जनात् व्रते तत्त्याग इत्यपि वदन्ति। अनुपस्कृतम्=अशटितमिति श्राद्धकल्पतरुः"। इति

"मुनेः=वानप्रस्थस्यान्नानि नीवारादीनि। पयः=क्षीरम्। सोमलता रसः। अनुपस्कृतम्=अविकृतं, पूति गन्धादिरहितम्। मांसम्। अक्षारलवणम्=अकृत्रिम-लवणं सैन्धवादि। एतत्स्वभावतो हविर्मन्वादिभिरभिधीयत'' उत्युक्तमनोः कुल्लूकभट्टी टीका।

प्रयत इति। अथवा, शुचिर्भूत्वा=स्नानादिना बाह्यशुद्धिं विधाय। राग-क्रोधविवर्जितः=अनुरागकोपादिविरहितः। (अतएव) प्रयतः सन्=अन्तरात्मनाऽपि पूतः सन्। (पवित्रः प्रयतः पूत इत्यमरः)। (अथच) तन्मनाः=देवतागतचित्तः। सुमना भूत्वा=प्रसन्नचित्तः धीरो भूत्वा। 'देवो भूत्वा यजेद्देवानि' ति स्मरणात् स्वस्मिन्नाराधानीयदेवत्वमारोप्य वा। (सुमनाः पुष्पमालत्योः स्त्रियां, ना धीरदेवयोरिति कोशः)। सर्वमेव=पूर्वोक्ताजादि क्षीरं पञ्चनखादिमांसानि च। निवेदयेत्=नैवेद्यरूपेण समर्पयेत्।

एतेषां पूर्वोक्तपूजोपचाराणां दक्षिण हस्ते नैव देयत्वसम्बन्धे आचारचिन्तामणि र्यथा-"देवपूजा तु दक्षिणहस्तेनैव

कर्मोपदिश्यते यत्र कर्त्तुरङ्गन्नचोच्यते।

दक्षिणस्तत्र विज्ञेयः कर्मणां पारगः करः ॥

इति छन्दोगपरिशिष्टात्। तत्रापि-'देवतीर्थेन मार्जनार्चन-बलिकर्म-भोजनानि दैवेने'ति हारीत-वचनात्.। एवञ्च दक्षिण-कर-देवतीर्थेन देवार्चने स्मृतिसिद्धेऽञ्जलि-पूजने यदि शिष्टाचारोऽपि, तथापि स न प्रमाणं, 'श्रुति-स्मृतिविहितो धर्मस्तदलाभे शिष्टाचारो, वसिष्ठवचनादि'' ति। एवमेव, "तस्माद्दक्षिणकरा- ग्रात्मकदेवतीर्थेनार्चनम्। आचारात्स्मृतेर्बलीयस्त्वात्। तदाह वसिष्ठः 'श्रुतिस्मृति विहितो धर्मस्तदभावे शिष्टाचारः प्रमाणमि'ति। नचाचारोऽप्येष (हस्ताभ्यां पुष्पदानाचारः) सर्वसिद्ध इत्यलमनेने'' ति छन्दोगाह्निके विशेषोऽपि।

[ हिन्दी टीका ]

रात में लायें गए जल से देवसम्बन्धी कार्य (मन्दिर धोना, पूजन आदि) नहीं करना चाहिए। अनुलेपन (घिसा हुआ सरस सुगन्ध द्रव्य) में श्रीखण्ड चन्दन, केसर, अगर, कर्पूर, कस्तूरी तथा जायफल ही दें। नीला या लाल वस्त्र न दें और नाहीं कृत्रिम मणि या सुवर्ण का भूषण ही दें। उत्कट (घ्राणेन्द्रिय को ग्लानि पैदा करनेवाली) गन्ध वाला या गन्धविहीन या काँटेदार वृक्ष से उत्पन्न फूल नहीं दें। किन्तु काँटेदार वृक्ष का उजला तथा सुगन्धित फूल हो तो दें। इसी तरह लाल फूल न दें। लाल फूलों में भी कुंकुम (केसर), कमल, शैनी, कुश, पलास, अशोक, करवीर, गुलाब (पाटला) का फूल तथा बकायन फरहद का फूल देना चाहिए। धूप के लिए जीव (मृग आदि) से उत्पन्न कस्तूरी आदि का व्यवहार न करें। दीप (जलाने) के लिए घृत या तिल का तेल दें (न कि मेद-चर्बी, मज्जा-शरीर में एकत्रित स्नेह विशेष भी दें)। नैवेद्य में अभक्ष्य बासी, जूठ अन्न आदि, लहसुन, प्याज, गाजर आदि न देकर भक्ष्य पदार्थ ही दें। भक्ष्यों में भी बकरी एवं भैंस का दूध, पाँच नहवाले पाँच गोह आदि, पाठीन (पढ़िना) आदि मछली एवं जंगली सूकर का (भक्ष्य) मांस भी न दें।

नैवेद्य प्रसंग पर यहाँ ऊपर से आचारचिन्तामणि का कहना है कि वराह पुराण के अनुसार विष्णु के नैवेद्य में गाय का ही दही, दूध और घृत का प्रयोग किया जाय नकि भेड़ी, बकरी और भैंस के दूध दही एवं घृत दिये जायँ। किन्तु भक्ष्य पाँच पाँच नख

(नाखून) वालों में खरगोस-खरहा (शश) का मांस दिया जा सकता है। क्योंकि वराह पुराण में पृथिवी के प्रति भगवान् विष्णु का कथन है कि मृग, छाग तथा शश के मांस मुझे प्रिय होने के कारण मेरे लिए दिये जा सकते हैं।

यहीं नित्यकृत्यरत्न माला की टिप्पणी का कहना है कि विष्णु के नैवेद्य में मांस भी प्रशस्त (श्रेष्ठ-उत्कृष्ट) है। उसमें भी तित्तिरि (तीतर पक्षी) का मांस अति प्रशस्त है। यहीं छन्दोगाह्निक का लेख है कि नैवेद्य में भक्ष्य-भोज्य-कन्द-मूल-फल-हविष्य अन्न और पेय पदार्थ आदि सर्वत्र दिये जायँ (इसकी व्याख्या इसी प्रकरण में पहले हो चुकी है) परन्तु शिवजी से अन्य देवों के लिए मांस भी विहित है।

परन्तु यहीं पूजाप्रकाश के शिव नैवेद्यविधि प्रकरण में वीरमित्रोदय (पृ० सं० २१९) ने स्कन्दपुराण का वचन उद्धृत किया है जिसके अनुसार सुसम्मृष्ट (झाड़ा-बटोरा गया-साफ सुथरा किया गया), सुसंस्कृत (अच्छी तरह संस्कार किया गया-उचित उपकरण डाला गया), आज्यसिक्त (घृत से अच्छी तरह सीचा गया) तथा परिपक्व (अच्छी तरह प्रकाया गया) मांस शिवजी को नैवेद्य रूप से अर्पित करने पर अशेष फल के दान से मिलने वाला फल (पुण्य) मिलता है।

मांस को हविष्य (हवन करने योग्य पदार्थ या वे भोज्य पदार्थ जो व्रत आदि में खाये जा सके) होने के प्रसंग पर आह्निकप्रकाश में जप नियम के सम्बन्ध में पुनः वीर मित्रोदय का विवेचन है कि "मनुस्मृति (३।२५७) के वचनानुसार यद्यपि मांस को हविष्य कहा गया है किन्तु यह वचन श्राद्धप्रकरण में पठित होने के कारण श्राद्धपरक है। इसी हेतु रामायण में भी कहा गया है कि 'मांस हविष्य है'। सामान्यतः हविष्य होने पर भी व्रत में मधु-मांस का वर्जन होने के कारण व्रत में मांस का वर्जन (त्याग) कर देना चाहिए। मनुवचन में मांस के विशेषण रूप से कहे गए 'अनुपस्कृत' शब्द का अर्थ 'श्राद्धपल्लव' ने अशटित-'सड़ा हुआ न हों' किया है।

उक्त मनुवचन की कुल्लूकभट्टी-मन्वर्थमुक्तावली टीका के अनुसार 'विकार तथा दुर्गन्ध आदि से रहित' अर्थ किया गया है।

[ मूलम् ]

एते च निषेधा विष्णुपूजामुपक्रम्य विष्णूक्ता इति तत्रैव निबन्धकर्तृभिर्लिखिताः।

अत्राहुः-देवकार्यमिति सामान्यवचनात्सर्वविषयत्वम्। नच देवपदं विष्णुपरं, सङ्कोचापत्तेः। प्रकरणादेव विष्णुप्राप्तौ वैयर्थ्यापत्तेश्च। तस्मात्पूर्वाध्यायेनैव विष्णुपूजाकथनन्तु 'न नक्तमि' त्यध्यायानन्तरं सामान्यविषयमिति।

[ संस्कृत टीका ]

एत इति । एते च निषेधाः=“न नक्तं गृहीतेने” त्यादिना पुरोदीरिता निषेधाः । विष्णुपूजामुपक्रम्य=विष्णुपूजनमुद्दिश्यीकृत्य-प्रकरणीकृत्येति यावत् । विष्णूक्ताः=विष्णुस्मृतौ कथिताः । इति=इति हेतुं मत्वा । तत्रैव=विष्णुपूजाप्रकरणे एव । निबन्धकर्तृभिर्लिखिताः । अर्थात् पूर्वोक्ता निषेधा विष्णुपूजायामेव, नत्वन्यदेवपूजायामपीति निबन्धकर्तृणामाशयः । एतत्खण्डनमुद्रयाऽऽह- 'अत्राहुरि'ति । आहुः परे इति शेषः । देवकार्यमिति सामान्यवचनात्='न नक्तंगृहीतेनोदकेन देववर्यं कुर्यादि' ति सामान्यतः कथितवचनात् । सर्वविषयत्वम्=पूर्वोक्तनिषेधानां सर्वदेवविषयकत्वम् । नच देवपदं विष्णुपरम् प्रकृतनिषेधप्रकरणे देवपदेन विष्णोरेव ग्रहणमस्त्विति वाच्यम् । सङ्कोचापत्तेः= वाच्यार्थतो न्यूनार्थबोधकत्वापत्तेः । तथाहि क्रीडा, विजिगीषा, व्यवहार, द्युति, स्तुति, मोद, मद, स्वप्न, कान्ति, गतिषु वर्तमानाद्दिवधातोरचि 'देव' इत रूपं जायते । तदर्थस्तु दीव्यति=दिव्यद्युत्या द्योतते इति देवः । यथाचात्रामरोऽपि 'अमरा निर्जरा देवा' इति । यथाचात्र सिद्धान्तकौमुदी-“साऽस्य देवता” (पा० सू० ४।२।२४) सूत्रस्य व्याख्यां 'त्यज्यमानद्रव्ये उद्देश्यविशेषो देवता, मन्त्रस्तुत्या च' इति । अस्याः बालमनोरमा टीका यथा-“ननु देवतापदस्य लोकप्रसिद्धजातिविशेषवाचकत्वे पितरो देवता अस्य पित्र्यमित्याद्यनुपपन्नमित्यत आह-त्यज्यमानद्रव्य इति । 'हविश्शेषमृत्विग्भ्यो ददाति,' 'विप्राय गां ददाती'त्यादौ ऋत्विग्विप्रादेर्देवतात्व-व्यावृत्तये विशेषग्रहणम् । त्यज्यमानहविस्साध्योऽस्मदाद्यप्रत्यक्षः यस्तृप्त्याद्युपकारस्तदाश्रयो देवतेति यावत् । मन्त्रस्तुत्या चेति । 'अग्निमीडे पुरोहितमि' त्यादि मन्त्रेषु यज्ञपुरोहितत्वादि- गुणविशिष्टत्वेन या प्रतिपाद्यते साऽपि देवतेत्यर्थः।” इति । तस्या एव लघु- शब्देन्दुशेखरश्च यथा “मन्त्रस्तुस्त्या चेति । अत्रार्थे देवता शब्दस्य रूढिः । दिवेरैश्वर्यकर्मणो देवता। तेन' पितरो देवते'ति सिद्धमिति 'देवात्तल्' सूत्रे भाष्यादि” ति । एवञ्च सङ्कोचापत्तिः स्पष्टैव । प्रकरणादेव=पूर्वाध्यायेन विष्णुप्रसङ्गादेव । विष्णुप्राप्तौ=विष्णु पूजनप्रसङ्गप्राप्तौ । वैयर्थ्यापत्तेश्च=“देवकार्यं कुर्यादि” इति वचनस्य निष्प्रयोजनत्वपाताच्च । तस्मात्=एतादृश दोष सत्वात् । पूर्वाध्यायेनैव=विष्णुस्मृतेः पञ्चषष्टितमेनैवाध्यायेन । विष्णुपूजा-कथनन्तु=

विष्णुपूजनप्रतिपादनन्तु । 'न रक्तमि' त्यध्यायानन्तरम्=अस्या एव स्मृतेः षट्षष्टि-तमाध्यायादनन्तरम् । सामान्यविषयम्=सामान्यतो देवमात्रमुद्दिश्य प्रतिपादनमित्येव मन्तव्यम् । एतेन पूर्वाध्यायतो विष्णुपूजाप्रसङ्गः, उत्तराध्यायतश्च सामान्यतो देवपूजा-प्रसङ्गोऽवधेयः असावेव ग्रन्थ-ग्रन्थ-कारयोराशयश्च ।

[ हिन्दी टीका ]

"न नक्तं गृहीतेन" इत्यादि रूप से विष्णु पूजा के उपक्रम से ऊपर कहे गए निषेध विष्णुपूजा में ही मानने चाहिए (न कि अन्य देवपूजा में भी) ऐसा प्राचीन निबन्धकारों ने अपने अपने निबन्धग्रन्थों में लिखा है, किन्तु यह उचित नहीं क्योंकि 'न नक्तं गृही तेनोदकेन देवकायण्कुर्यात्" ऐसा सामान्य वचन होने के कारण देव पूजन मात्र में ही लागू होंगे । यदि कोई शंका करे कि देव पद का अर्थ यहाँ विष्णु मान लेंगे तो यह भी ठीक नहीं, क्योकि देवपद का अर्थ दिव्य द्युति से द्योतित होने वाला सामान्यतः देव होता है । यहीं 'साऽस्य देवता" (पा० सू० ४।२।२८) सूत्र की सिद्धान्तकौमुदी तथा उसकी टीका बालमनोरमा एवं लघुशब्देन्दुशेखर के अनुसार हविष्य के प्रदान से होने वाले किन्तु हमलोगों के प्रत्यक्ष से बहिर्भत तृप्ति आदि के आश्रय तथा मन्त्रों से स्तुति किये जाने वाले को देवता कहते हैं । इस तरह पितर लोग भी देवता कहलाते हैं । अब निष्कर्ष में देवपद का अर्थ केवल विष्णु ही करने पर देवपद स्वाभाविक अर्थ (वाच्यार्थ) की अपेक्षा न्यून अंर्थ का बोधक हो जायगा । अर्थत् देवमात्र का बोधक देव पद का अर्थ सङ्कुचित हो जायगा । दूसरी बात, (निबन्धकगण) आपके मन में प्रकरण से विष्णुपूजा का ज्ञान हो ही जायगा तो फिर देवपद का कहना निरर्थक हो जायगा । अतः इन दोषों को देखते हुए विष्णु स्मृति में पूर्व अध्याय (६५ वें अध्याय) से विष्णु पूजा कही गई है और "न नक्तं गृहीतेनोदकेन देवकार्यं कुर्यात्" इत्यादि से प्रारम्भ हुआ दूसरा अध्याय (६६ वाँ अध्याय) सामान्यतः देव पूजा के विषय का है ।

यही मत ग्रन्थकार सम्मत है । अतः यहाँ 'अत्राहुः' से इनका अपना ही मत ज्ञातव्य है ।

[ मूलम् ]

कालिकापुराणे-

शिवं भास्करमग्निञ्च केशवं कौशिकीमपि ।
चेतसा[1] नार्चयन् याति देवलोकादधोगतिम् ॥

कौशिकी=दुर्गा ।

पाठा० (१) मनसाऽनर्चयन् ।

[ संस्कृत टीका ]

शिवमिति । शिवम्=शङ्करम् । भास्करम्=सूर्यम् । अग्निम् = एतन्नाम्नैव प्रसिद्धं देवम् । केशवम्=विष्णुम् । कौशिकीमपि = दुर्गामपि । चेतसा=मनसा । नार्चयन्= न पूजयन् जनः । देवलोकात्=पूर्वादृष्टवशात्प्राप्तादपि स्वर्गलोकात् । अधोगतिम्=नरकलोकम् । याति=प्राप्नोति । "क्षीणे पुण्ये मर्त्यलोकं विशन्ती"ति भगवद्गीतावचनानुसारं पुण्यक्षयानन्तरं प्राप्तव्येऽपि मर्त्यलोके विहायैने नरकलोकमेवावाप्नोतीति भावः ।

अत्र "अत्रापिर्भिन्नक्रमः । तेन पुष्पाद्यभावे मनसाऽप्येते पूज्या इत्यर्थः । एवं 'शिवं भास्करमग्निञ्चे'ति (का० पु०) वचने क्रमोऽपि न विवक्षितः ।

अपूज्य प्रथमं सूर्यमपरान् यः प्रपूजयेत् ।
न तद् भूतकृतं पाद्यं सम्प्रतीच्छन्ति देवताः ॥ इति

ब्रह्मपुराणादि" ति नित्यकृत्यरत्नमाला । अतएव "मनसाऽप्यनर्चयन्नित्यन्वयः । तेन पुष्पाद्यभावे मनसाऽप्येते पूज्या" इत्याचारचिन्तामणिरपि । "अत्र च सूर्याग्नि-दुर्गा-शिव-विष्णुत्वेन देवतात्वं, तथैव शिष्टाचारादि" त्यपि स एव ।

परमत्र-छन्दोह्निकस्तु-"मनसाऽनर्चयन्=भक्तिमकुर्वन् इत्यर्थः । तस्मादासु देवतासु मनागप्यनादरो न कर्तव्य इति वाक्यार्थः । नतु पुष्पाद्यभावे मनसाऽप्यर्चनीयेति । अध्याहारापत्तेः ।.........प्रथमं सूर्यपूजा सर्वदेवशेषे चेष्ट-देवतापूजेति शिष्टाचार-विरोधाच्च । मत्स्यपुराणे-

आरोग्यं भास्करादिच्छेद्धनमिच्छेद् हुताशनात् ।
ज्ञानन्तु शङ्करादिच्छेन्मोक्षमिच्छेज्जनार्दनात् ॥

एषु फलेष्वेषां शीघ्रदातृत्वम्, नतु फलान्तर-दातृत्वव्यावृत्तिस्तत्तद्वाक्य-विरोधात् । वराहपुराणे-

विष्णुरुद्रान्तरं ब्रूयाद् यः श्रीगौर्यन्तरं तथा ।
तन्नास्तिकानां मर्त्यानां[१] काव्यं शास्त्रविगर्हितम् ॥

तद्=वचनम् । काव्यम्=कृतिः'' इति ।

प्रकृत वराहपुराणवंचनमुपक्रम्य ''पूजादिकालेऽभेदश्चिन्त्य इति तात्पर्य-मित्याचारचिन्तामणिः ।

पूजाऽऽरम्भे सर्वप्रथमं सम्पूज्येषु पञ्चदेवेषु वाचस्यतौ समुद्धृतस्य

**आदित्यं गणनाथञ्च देवीं रुद्रञ्च केशवम् ।**
**पञ्चदैवतमित्युक्तं सर्वकर्मसु पूजयेत् ॥**

इति वचनस्यानुसारं सूर्यगणेशदुर्गाशिवविष्णवो भवन्ति । एवञ्च उक्त-देवानां सूर्य-गणपत्यग्नि-दुर्गा-शिव-विष्णवादिपदवाच्यत्वेनैव देवतात्वं, शिष्टाचारादिति शूलपाणि-वाचस्पतिमिश्रादयः'' इति तु नि० कृ० र० मा० टि० । मूलोक्तकालिकापुराणानुसारं तु सूर्याग्निदुर्गा शिवविष्णवो वा भवन्तु । परं रात्रौ सूर्यस्यान्यदेशे- स्थितत्वाद् मूलोक्तवचनैतद्वचनयोरेकवाक्यतायां सूर्यस्थाने गणपतिं सन्निवेश्य गणपत्यादिपञ्चदेवतापदेन गणपत्यग्निदुर्गा-शिव -विष्णवो बोद्धव्याः ।

**[ हिन्दी टीका ]**

जो मानव भगवान् शङ्कर -सूर्य-अग्नि-विष्णु तथा दुर्गा जी की हृदय से (मनोयोगपूर्वक) पूजा नहीं करता, वह विशेष अदृष्ट वश देवलोक प्राप्त करके भी पुण्यक्षय होने के बाद मर्त्यलोक में न आकर सीधे नरकलोक प्राप्त करता है ।यह मूल वचनार्थ हुआ ।

मूल में कहे गए उक्त वचन के लेख प्रसंग पर आचारचिन्तामणि तथा यहाँ इसके अनुगामी नित्यकृत्यरत्नमाला की व्याख्या है कि 'मनसाऽनर्चयन्' इन देनों पदों के बीच में भिन्न क्रम से 'अपि' का सम्बन्ध करने से 'मनसाऽप्यनर्चयन्' ऐसा अन्वय सिद्ध होता है । अतः अब अर्थ होगा कि पूजोपकरण-पुष्प आदि के अभाव में इन देवों की मानसिक भी पूजा कर लेनी चाहिए । यहाँ सूर्य-अग्नि-दुर्गा-शिव एवं विष्णु को एक ही बार में पञ्चदेवता के रूपमे पूजन करें । यहीं छन्दोगाह्निक का कतिपय युक्ति से कहना है कि 'मनसाऽनर्चयन्' का अर्थ है भक्ति न करता हुआ । इसका तात्पर्य हुआ कि इन देवाताओं में तनिक भी 'अनादर का भाव न करे' (न कि मानसिक पूजन वाला तात्पर्यार्थ भी लेना है ।

---

पाठा० ( १ ) मूर्खाणाम् ।

हाँ, मत्स्य पुराण में जो कहा गया है कि ''सूर्य से आरोग्य, अग्नि से धन, शंकर से ज्ञान और विष्णु से मोक्षे (प्राप्ति) की इच्छा करें।'' इसका तात्पर्य है कि ये देव उक्त फलों के शीघ्र देने वाले हैं, न कि यह भी कल्पना कर लें कि इनसे दूसरा-फल नहीं मिल सकता है क्योंकि अन्य वचनानुसार ये अन्य फलों के दाता भी हैं।

हाँ, वराहपुराण में कहा गया है कि 'विष्णु एवं रुद्र, और लक्ष्मी तथा पार्वती में जो अन्तर (भेद) बताता है वह नास्तिक मानव मूर्ख है और उसका ऐसा कहना शास्त्र गर्हित है'।

हाँ अलग से यह भी ज्ञातव्यं है कि पूजा प्रारम्भ के समय सर्वप्रथम पूजनीय पञ्च देवता, वाचस्पति में समुद्धृत वचनानुसार, सूर्य-गणेश-दुर्गा-शिव तथा विष्णु हैं। नित्यकृत्यरत्नमाला टिप्पणी में कथित म० म० शूलपाणि उपाध्याय एवं वाचस्पति मिश्र आदि के मतानुसार इन पञ्चदेवों के नाम का उपादान होना चाहिए। अथवा मूल में कहे गए कालिकापुराण के वचनानुसार सूर्य-अग्नि-दुर्गा-शिव-तथा विष्णु हो सकते हैं। किन्तु रात में सूर्य देव को अन्य स्थान में स्थित होने के कारण तथा उक्त दोनों वचनों की एकवाक्यता करने से सूर्य के स्थान पर गणपति का सन्निवेश कर गणपत्यादि पञ्चदेवता में गणपति-अग्नि-दुर्गा-शिव तथा विष्णु हैं।

[मूलम्]

भविष्यपुराणे-

**सदा यजन्ति यज्ञेन सदा दानं ददन्ति च।**
**सदा च वायुभक्षास्ते नित्यं येऽर्चन्ति भास्करम्॥**

[संस्कृत टीका]

सदेति। ये जनाः। नित्यम् = प्रत्यहम्। भास्करम्=सूर्यम्। अर्चन्ति=पूजयन्ति। ते। यज्ञेन=अश्वमेधादियज्ञेन। सदा=प्रतिदिनम्। यजन्ति=देवान् प्रीणयन्ति-तोषयन्ती ति यावत्। ''सदा च दानं ददन्ति। व्याकरणानुसारं 'ददती' ति वक्तव्ये ददन्तीति प्रयोगस्त्वार्षः। सदा च ते वायुभक्षाः=वायुमेव ये भक्षयन्ति ते वायुभक्षाः। 'सावधारणं हि सर्वं वाक्यमब्भक्षो वायुभक्ष इतिवदि'' ति महाभाष्योक्तन्यायात्। यज्ञस्य दानस्य निराहरव्रतस्य च फलभाजो भवन्तीति भावः। एवमेव पुनः छन्दोगाह्निकोद्धृत-भविष्यपुराणे-

**यः सूर्यं पूजयेन्नित्यं प्रणमेद्वाऽपि भक्तितः ।**
**तस्य भोगञ्च मोक्षञ्च ब्रध्नस्तुष्टः प्रयच्छति ॥ इति**

[ हिन्दी टीका ]

जो धार्मिक जन प्रतिदिन सूर्य भगवान् की पूजा करता है वह सदैव यज्ञ करने, दान करने तथा निराहार व्रत से होने वाले फल के भागी होते हैं यह मूल वचन का अर्थ हुआ । इसी तरह भविष्य पुराण के ही अन्य वचनानुसार जो व्यक्ति सूर्य की पूजा करता है या भक्ति से प्रणम करता है उसके लिए सूर्यभगवान् सन्तुष्ट होकर भोग और मोक्ष प्रदान करते हैं ।

[ मूलम् ]

नरसिंहपुराणे-

**यस्तु पूजयते नित्यं नरसिंहं सुरेश्वरम् ।**
**स स्वर्गमोक्षभागी स्यान्नात्र कार्या विचारणा ॥**

[ संस्कृत टीका ]

यस्त्विति । यश्च धार्मिको जनः । नित्यम्=प्रत्यहम् । सुरेश्वरम् = देवश्रेष्ठम् । नरसिंहम्=अधोभागेन नराकारे सत्यपि ऊर्ध्व भागेन सिंह-शरीर-धारिणमेतन्नामानं देवविशेषम् । (भक्तप्रह्लादस्य परिपालनाय तत्पितुर्हिरण्य-कशिपोरुरःस्थलविदारणेन निहननाय दारुस्तम्भादाविर्बभूवेति पौराणिकी कथा) पूजयते=अर्चयति । अत्रात्मनेपदमार्षम् । सः । स्वर्गमोक्षभागी स्यात्= देवलोकस्य मुक्तेश्च भागी भवेत् । अत्र=एतत्फलश्रुतौ । विचारणा=विचि-कित्सा विचारो वा । न कार्या ।

[ हिन्दी टीका ]

जो धार्मिक जन प्रतिदिन देवश्रेष्ठ नरसिंह (जिनका निचला भाग मनुष्य तथा ऊपरी भाग सिंह का ऊपरी हिस्सा है जिन्होंने अपने भक्त प्रह्लाद के पालन तथा इनके पिता हिरण्य कशिपु के छाती फाड़कर मारने के लिए काठके खम्भ से अपना आविर्भाव किया) भगवान् की पूजा करता है वह स्वर्ग और मोक्ष का भागी होता है । इसमें सन्देह या विचार करने की आवश्यकता नहीं ।

[ मूलम् ]

भविष्यपुराणे-

नहि लिङ्गात्परं किञ्चित्पुण्यमभ्यधिकं क्वचित्।
इति विज्ञाय यत्नेन पूजनीयः सदा शिवः ॥

[ संस्कृत टीका ]

नहीति । लिङ्गात्=शिवलिङ्गपूजनात् । पञ्चम्यर्थोऽत्र जन्यत्वम् । तेन शिवलिङ्गपूजनजन्यमित्यर्थः । परम्=उत्कृष्टम् । अभ्यधिकम्=अभितः= सर्वतोऽधिकम्-अत्यधिकमिति यावत् । किञ्चिदपि पुण्यम् । क्वचित्=अन्य-देवपूजने । नहि । जायते इति शेषः । इति । विज्ञाय=विशेषेण ज्ञात्वा । यत्नेन= प्रयासपुरस्सरम् । सदा=प्रत्यहम् । शिवः=शङ्करः । पूजनीयः । पुण्याधि-कलाभमवबुध्याशुतोषः प्रतिदिनमाराधनीय इति भावः ।

छन्दोगांह्निकोद्धृतानि कतिचिद् वचनान्यत्र यथा-

भविष्यपुराणे-

यस्तु पूजयते लिङ्गं नित्यं त्रिभुवनेश्वरम्।
स स्वर्ग-राज्य-मोक्षाणां क्षिप्रं भवति भाजनम् ॥

लिङ्गपुराणे-

अनेक जन्मसाहस्रं भ्राम्यमाणस्तु योनिषु।
कः समाप्नोति वै मुक्तिं लिङ्गार्चनमृते नरः ॥

स्कन्दपुराणे गौरीं प्रति शिववाक्यम्-

सर्वेन्द्रियप्रसक्तोऽपि युक्तो वा सर्वपातकैः।
स प्रयाति शिवं देवि लिङ्गं योऽर्चयतीह मे ॥ इति

तथा-

अर्चायामर्चयेद्यो मां पूर्णं वर्षशतं नरः।
एकञ्च दिवसं लिङ्गमर्चयेच्छुभवेदिकम्।
इहैव धनवान्-श्रीमान् अन्ते रुद्रोभिजायते ॥

शुभवेदिकम्=शोभनवेदिकायुक्तम् ।. . .पार्थिवं सर्वसिद्धदमित्यागमः।. . . बाणलिङ्गञ्च कपिलमतिनिषिद्धम् । पक्वजम्बूफलाकारं प्रशस्तमि''ति। शुभवेदिकायुक्तम्=शोभनपिण्डिकायुक्तमित्यर्थः ।

[ हिन्दी टीका ]

शिवलिङ्ग के पूजन से होने वाला उत्कृष्ट अत्यधिक कोई भी पुण्य अन्य देव के पूजन से नहीं होता (अर्थात् शिवपूजन से ही होता है) यह बात अच्छी तरह समझकर प्रतिदिन प्रयत्नपूर्वक शिवलिङ्ग की पूजा करनी चाहिए । यह मूल वचन का अर्थ हुआ ।

छन्दोगाह्निक में उद्धृत कुछ वचन-यथा भविष्य पुराण के अनुसार-''जो व्यक्ति त्रिभुवनेश्वर (शिव) के लिङ्ग की पूजा नित्य करता है वह स्वर्ग-इस लोक के राज्य सुख तथा मोक्ष का भाजन शीघ्र ही बन जाता है'' । इसी तरह लिङ्गपुराण के अनुसार-अनेक योनियों में अनेक हजारों जन्मतक चक्कर काटता हुआ कौन सा मनुष्य लिङ्ग पूजन के विना मुक्ति पाता है । यहीं स्कन्दपुराण में गौरी के प्रति शिव का वाक्य है-सभी इन्द्रियों से विषया सक्त अथवा सभी पापों से युक्त भी मनुष्य इस लोक में शिवलिङ्ग के पूजन से शिव को प्राप्त करता है । तथा प्रतिमा में पूरे वर्षभर के पूजन का फल एक दिन के शिव-लिङ्गपूजन फल के समान है, इसमें कोई सन्देह नहीं । पार्थिव शिवलिङ्ग के सम्बन्धं में भविष्य पुराण का कहना है कि ''जो शोभन वेदिका (पिण्डिका) से युक्त पार्थिव शिवलिङ्ग का पूजन करता है वह इसी लोक में धन सम्पत्तिमान् तथा गौरव या अलौकिक शक्ति प्राप्त करता है । आगम ग्रन्थ का तो कहना है कि पार्थिव शिवलिङ्ग सर्वसिद्धि को देने वाला है ।

यहाँ छन्दोगाह्निक के विवेचनानुसार बाणलिङ्ग कपिल (भूरा, बादामी) रंग का अतिनिषिद्ध किन्तु पके जामुन फल के आकार का होना प्रशस्त ज्ञातव्य है ।

[ मूलम् ]

तथा,

दुर्गार्चनरतो नित्यं महापताक-सम्भवैः ।
दोषैर्न लिप्यते वीर पद्मपत्रमिवाम्भसा ॥

[ संस्कृत टीका ]

तथेति । हे वीर, प्रत्यहम्=प्रतिदिनम् । दुर्गाऽर्चनरतः=दुर्गनामक राक्षस-विध्वंसिकाया भगवत्या दुर्गायाः अर्चने निरतो जनः । महापातकसम्भवैः=ब्रह्म-हत्यादि महापापोद्भवैः । दोषैः=अशुभफलैः । अम्भसा=जलेन । पद्मपत्रमिव=

कमलदलमिव। न लिप्यते=सम्बद्ध्यते। दुर्गापूजन पुण्यैः पापान्यपसार्यन्त इति भावः।

दुर्गार्चन-प्रसंगे छन्दोगाह्निकोद्धृत-भविष्यपुराणेऽपि यथा-

अग्निहोत्रादिकंर्माणि वेदयज्ञाः सदक्षिणाः।
चण्डिकाऽर्चाऽर्चनस्यैते लक्षांशेनापि नो समाः॥

तथा,

यः सदा पूजयेद्दुर्गां प्रणमेद्वाऽपि भक्तितः।
स योगी स मुनिर्धीमान् तस्य मुक्तिः करे स्थिता॥

शूलेऽपि दुर्गार्चनं प्रशस्तम्।

[ हिन्दी टीका ]

प्रतिदिन भगवती दुर्गाजी के पूजन में निरत मानव पानी से कमल पत्र के केसे ब्रह्म हत्या आदि महापाप के अशुभ फलों (दुःखों) से लिप्त नहीं होता है।

इसी तरह छन्दोगाह्निक में उद्धृत भविष्य पुराणा का भी कहना है कि दक्षिणासहित अग्निहोत्र आदि वेदयज्ञ दुर्गा प्रतिमा (अर्चा) पूजन के लाखवें हिस्से (लक्षांश) के भी समान नहीं होते। तथा, जो व्यक्ति सदा दुर्गाजी का पूजन या उन्हें भक्तिपूर्वक प्रणाम करता है, वह योगी, मुनि, तथा बुद्धिमान है और उसके हाथ में मुक्ति रहती है अर्थात् उसे अनायास मुक्ति मिल जातीं है।

उस ग्रन्थ के विवेचनानुसार शूल के ऊपर दुर्गापूजन होना विहित है।

[ मूलम् ]

अत्र च क्रमानभिधानेऽपि सूर्यपूजा-प्राथम्यम्, आचारात्। सूर्याध्र्यप्राथम्यन्तु विष्णुपुराणपद्मपुराणयोर्व्यक्तमेव। नरसिंहपुराणे ब्रह्मयज्ञानन्तरमुक्तम्-

ततोऽर्घं भानवे दद्यात् तिलपुष्पजलान्वितम्।
उत्थाप्य मूर्धपर्यन्तं ह ँ सःशुचिषद् ऋचा॥
जलदेवं नमस्कृत्य ततो गृहगतः पुमान्।
विधिना पुरुषसूक्तस्य तत्र विष्णुं समर्चयेत्।
वैश्वदेवं ततः कुर्याद् बलिकर्म यथाविधि॥

[ संस्कृत टीका ]

अत्रेति । अत्र=शिव सूर्याग्नि केशव कौशिकी नरसिंह देवानां पूजने । क्रमानभिधानेऽपि=पूर्वापरीभावस्याकथनेऽपि । आचारात्=शिष्टाचारात्-शिष्टानां व्यवहारादिति यावत् । सूर्यपूजाप्राथम्यम्=प्रथमतः सूर्यस्यैव पूजा भवति । सूर्यार्घप्राथम्यन्तु = प्रथमतः सूर्याय प्रदीयमानमर्घ्यन्तु विष्णुपुराण-पद्मपुराणयोर्व्यक्तमेव । तत्र तर्पणोत्तरं, विष्णुपुराणे-'आचम्य च ततो दद्यात्सूर्याय सलिलाञ्जलिम्' इत्यादि । एतच्चैतद् ग्रन्थेऽपि पूर्वं दर्शितमेव । एवमेव पद्मपुराणतोऽपि ज्ञेयम् ।

ततोऽर्घमिति । तिलपुष्पजलान्वितम्=तिलपुष्प-जल-विशिष्टम् । अर्घम्=हस्त- प्रक्षालनार्थमर्पणीयं विशिष्टमुदकम् । मूर्धपर्यन्तम्=मस्तकं यावत् । उत्थाप्य=आनीय । हꣳसः शुचिषदित्यनया ऋचा । भानवे=सूर्याय । दद्यात् । सम्पूर्ण मन्त्रस्तु पूजादि प्रकार प्रकरणे पृ०......द्रष्टव्यः । ततः=तदनन्तरम् । जलदेवम्=जलाधिष्ठातृ देवं वरुणम् । नमस्कृत्य = प्रणम्य† गृहगतः=गेहमागतः । पुमान्=धार्मिको जनः । पुरुषसूक्तस्य सहस्रशीर्षेत्यादि षोडशर्चस्य । विधिना=प्रत्येकया ऋचा षोडशोप चार विधिना, उदात्ताद्युच्चारणविधिना वा । विष्णुम्=हरिम् । समर्चयेत्=सम्यक् पूजयेत् ।

अत्र छन्दोगाह्निकं यथा- "अत इष्टदेवतापूजा नित्येति सिद्धम् । एवं विष्णु पूजाऽपि ।.......विष्णुपुराणे-

**भौमान्मनोरथान् स्वर्गं स्वर्गिवन्द्यं तथा पदम् ।**

**प्राप्नोत्याराधिते विष्णौ निर्वाणमपि चोत्तमम् ॥**

भौमान्=ऐहिकान् धनपुत्रादीन् । स्वर्गिवन्द्यं पदमिन्द्रत्वरूपम् । तथा-

**किंकरा दण्डपाशो वा न यमो नैव यातनाः ।**

**समर्थास्तस्य यस्यात्मा केशवालम्बनः सदा ॥ इति**

सामान्यतस्तु प्रयोगो लिख्यते-

---

† नमस्कारमधिकृत्य टिप्पणी संस्कृतटीकासमाप्तौ .....पृष्ठे द्रष्टव्या ।

शुचिनीचासने सुखोपविष्टः शुचिः शुचिवस्त्रद्वयधरो मौनी ध्यानपरः काम-रागभयद्वन्द्वमात्सर्यत्वराक्रोधरहितस्तन्मनाः सुमनाः (शुचौ) सुलिप्तेऽनिष्ट गन्धशब्दवर्जितं गृहं दक्षिणपार्श्वे पुष्पकरण्डकं वामे जलपात्रमितरच्च पूजोपकरणं यथासन्निवेशमासाद्य जलपूर्णमर्घपात्रमग्रतो धृत्वा तज्जलेन पूजास्थानं द्रव्याणि च प्रोक्ष्य गन्धादिनाऽऽत्मानमभ्यर्च्य सम्बोधनान्तेन देवतानाम्ना आगच्छेति देवतामावाह्य स्थापयित्वाऽऽसनपाद्यार्घाचमनीयादि दत्त्वा स्नापयित्वा यथालाभं वस्त्रालङ्कारादीनि यज्ञोपवीतादीनि गन्ध-पुष्प-धूप-दीप-नैवेद्यादीनि च दद्यात्। जप्त्वा च प्रदक्षिणीकृत्य प्रणम्य स्तुत्वा ध्यात्वा भगवन् भगवति वा क्षमस्व स्वस्थानं गच्छेति विसर्जये दि'' ति चाह।

पञ्चदेवता-विष्णु-पूजनानन्तरमन्यदेवपूजनपूर्वकमन्ते शिवपूजनं विदधति शिष्टाः। पार्थिवशिवलिङ्गपूजातः पूर्वं-

**त्वं कीर्त्तिमुखसंज्ञोऽसि भव मद्द्वारगः सदा।**
**त्वदर्चां ये न कुर्वन्ति नैव ते मत्प्रियङ्कराः॥**

इति पद्मपुराणे पुरुषं प्रति शिववाक्यानुसारं निबन्धाधृतमपि कीर्त्तिमुखपूजनं बहुभिः समाचर्यते। शिवपूजान्ते च ब्रह्मणःपूजनं जायते। यथा चाऽत्र नित्यकृत्यरत्नमालाऽपि ''ततो ब्रह्माणं ध्यात्वा सर्वविधपूजोपकरणद्रव्यैः ॐ ब्रह्मणे नमः इति भूमौ पूजयेत्। यद्यपि पद्मपुराणे-

**न तु ते ब्राह्मणाः पूजां करिष्यन्ति कदाचन।**

इति सावित्र्याः शापेन ब्रह्मणोऽपूज्यत्वं लभ्यते। तथापि-

**अद्य प्रभृति यः पूजां मन्त्रयुक्तां करिष्यति।**
**भविष्यति च तद्वंश्यो दरिद्रो दुःखसंयुतः॥**

इति स्कन्दपुराणैकवाक्यताऽनुरोधात्समन्त्रकपूजाविषयं तत्।'' इति

''विष्णुधर्मोत्तरीयं वचनं दाक्षिणात्यनिबन्धे -

**गृहे लिङ्गद्वयं नार्च्यं शालग्रामद्वयं तथा।**
**द्वे चक्रे द्वारकायास्तु नार्च्यं सूर्यद्वयं तथा॥**

शक्तित्रयं तथा नार्च्यं गणेशत्रयमेव च ।
द्वे शङ्खेनार्चयेच्चैव भग्नाञ्च प्रतिमां तथा ॥ इति

किन्त्वेतद् युगपदेकपात्रे एको नार्चयेदिति मैथिलनिबन्धारः'' इति चाह ।

वैश्वदेवमिति । ततः=देवपूजनानन्तरम् । वैश्वदेवं बलिकर्म च अनुपदमेवाग्रे वक्ष्यमाणम् । यथाविधि=शास्त्रविधानानुसारम् । कुर्यात् ।

[ टिप्पणी ( नमस्कार विषय ) ]

प्रणम्येति । अष्टाङ्गादिप्रणाममाह हलायुधीये यथा

अष्टाङ्ग उत्तमः प्रोक्तः पञ्चाङ्गो मध्यमः स्मृतः ।
दोर्भ्यां पद्भ्याञ्च जानुभ्यामुरसा शिरसा तथा ॥
मनसा वचसा दृष्ट्या प्रणामोऽष्टांग ईरितः ।
पद्भ्यां कराभ्यां शिरसा पञ्चाङ्ग प्रणतिः स्मृता ॥ इति

परमयमाचारो महिलानां कृते वर्जितोऽस्ति, किन्त्वस्याः तृतीयविधः प्रणामः करद्वयशिरःसंयोगरूप एव । प्रणामो नाम-भक्तिश्रद्धाऽतिशययुक्तो नमस्कारः स च स्वापकर्षबोधकव्यापारविशेषः । प्रकर्षेण नमनमिति तु शाब्दिकोऽर्थः ।

यद्यपि ''नत्वा सरस्वतीं देवीम्'', ''मुनित्रयं नमस्कृत्य'' इति लघुसिद्धान्तकौमुदी-सिद्धान्तकौमुद्योर्मङ्गलपद्यानुसारं नमस्कारप्रणामयोर्नास्ति भेदस्तथाप्याधुनिके समये दृश्यते विभिन्नव्यवहार इत्यन्यो विषयः । प्रणाममाहात्म्यं यथा नारसिंहे-

नमस्कारः स्मृतो यज्ञः सर्वयज्ञेषु चोत्तमः ।
नमस्कारेण चैकेन नरः पूतो हरिं व्रजेत् ॥ इति

[ टिप्पणी हिन्दी ]

उत्तम, मध्यम तथा अधम के रूप में ( १ ) अष्टाङ्ग, ( २ ) पञ्चाङ्ग, ( ३ ) तथा सामान्य के भेद से प्रणाम तीन प्रकार के होते हैं । जिनमें प्रथम मन, वाणी तथा दृष्टि के योगपूर्वक दोनों ( २ ) हाथो दोनो पैरों ( २ ), दोनो घुटनों, छाती ( १ ) तथा मस्तक ( १ ) से होने वाला प्रणाम अष्टाङ्ग प्रणाम कहलाता है ।

दूसरा दोनों पैर, दोनों हाथ तथा मस्तक से होनेवाला प्रणाम पञ्चाङ्ग प्रणाम कहलाता है। तीसरा-सामान्य प्रणाम दोनों हाथों से अपने मस्तक संयोग रूप है। उक्त तीनों में प्रथम एवं द्वितीय प्रणाम महिलाओं के लिए वर्जित है।

अतिशय भक्तिश्रद्धायुक्त नमस्कार ही प्रणाम होता है। यह अपने में नीचापन का बोधक है। इस समय यह प्रणाम या नमस्कार देश एवं काल के भेद से विभिन्न प्रकार का देखा जाता है, यह तो अन्य विषय है, रहे। इति।

## [ हिन्दी टीका ]

यद्यपि शिव-सूर्य-अग्नि-विष्णु-दुर्गा तथा नरसिंह की पूजाओं में पहले बाद का कोई क्रम नहीं कहा गया है तथापि शिष्ट जनों के व्यवहारानुसार प्रथमतः सूर्य (अन्त में शिवजी; पार्थिव शिवलिङ्गपूजन पक्ष में बहुत से व्यक्तियों के आचारानुसार कीर्त्तिमुख पूजा के बाद शिवजी तथा सर्वान्त में ब्रह्माजी) की पूजा होती है। सूर्य के लिए प्रथमतः अर्घ देना विष्णुपुराण तथा पद्मपुराण में स्पष्ट है। जैसा कि विष्णुपुराण का वचन पहले भी उद्धृत किया गया है किं तर्पण के बाद आचमन कर सूर्य नारायण को जल का अञ्जलि दे। इसी तरह पद्मपुराण से भी समझें। नरसिंहपुराण में भी कहा गया है कि तिल-फूल सहित जल का अर्घ अपने मस्तक तक लाकर ''ह ० सः शुचिषद्'' (सम्पूर्ण मन्त्र पूजादि प्रकार प्रकरण में देखें) इत्यादि वैदिक मन्त्र (अथवा ''ॐ नमो विस्वस्ते'' इत्यादि विष्णुपुराण के वचनात्मक मन्त्र) से अर्घ दें। इसके बाद जल के देवता वरुण को प्रणाम कर अपने घर आकर पुरुषसूक्त की सोलहो ऋचाओं से षोडशोपचार या उदात्तादि क्रम से पूरे पुरुषसूक्त के द्वारा विष्णु भगवान् की पूर्ण भक्तिभाव से पूजा करे।

यहाँ अलग से छन्दोगाह्निक का कहना है कि ''इस तरह विष्णु पूजा भी नित्य सिद्ध हुई। साथ ही विष्णु पूजन करने वाले को इस लोक में धन-पुत्र आदि, स्वर्ग लोक में इन्द्र का पद और अन्त में उत्तम श्रेणी की मुक्ति मिल जाती है। तथा, विष्णु में मन लगाए हुए व्यक्ति के लिए यम किंकर यम का दण्डपाश, या स्वयं यम एवं यमयातनाएँ विफल रहती हैं।

सामान्य रूप से 'देव पूजा प्रयोग' लिखा जा रहा है-

पवित्र आसन पर पवित्रता के साथ सुखपूर्वक बैठ कर पवित्र दो वस्त्र धारण कर मौनी, ध्यान परायण, काम-राग-भय-द्वन्द्व (दो परस्पर विरुद्ध वस्तुओं या भावों का जोड़ा-जैसा शोक-मोह, शीत-उष्ण आदि), मात्सर्य (ईर्ष्या, डाह, जलन), त्वरा (शीघ्रता, जल्दवाजी), क्रोध से रहित, सुप्रसन्न एवं देवगतचित्त हो अच्छी तरह सफाई

किये गए, अनिष्ट गन्ध एवं शब्द से वर्जित पवित्र घर में अपने से दक्षिण भाग में पुष्प करण्डक (पुष्पभाजन-फूलडाली), बायें भाग में जलपात्र तथा अन्य पूजासामग्री सन्नि वेश के उचित स्थान में रखकर साथ ही जलपूर्ण अर्घपात्र (पञ्चपात्र) आगे में रखकर उसके जल से पूजा स्थान तथा पूजा द्रव्य का प्रोक्षण (उत्तान हाथ से सींचना) कर चन्दन आदि से अपने क़ो भूषित कर 'आगच्छ' पद जोड़कर सम्बोधनान्त देवनाम से देवता का आवाहन कर उन्हें आसन-पाद्य-अर्घ-आचमनीय आदि देकर स्नान कराकर प्राप्ति अनुसार वस्त्र अलङ्कार आदि, यज्ञोपवीत आदि, गन्ध-पुष्प-धूप-दीप -नैवेद्य-आदि भी दें। जप के ब़ाद प्रदक्षिण, प्रणाम, स्तुति एवं ध्यान कर 'भगवन् वा भागवति क्षमस्व स्वस्थानं गच्छ कहकर विसर्जन कर दे।''

पञ्चदेवता एवं विष्णु पूजन के बाद अन्य देव पूजन के अनन्तर अन्त में शिवजी की पूजा शिष्ट जन करते हैं। किन्तु पार्थिव शिवलिङ्ग पूजा पक्ष में निबन्धों में उद्धृत पद्म पुराण के वचनानुसार कीर्त्तिमुख की पूजा बहुत से लोग करते हैं। शिव पूजन के बाद सर्वान्त में ब्रह्मा की पूजा होती है। यहाँ नित्यकृत्यरत्नमाला का कहना है कि ''इसके बाद ब्रह्मा का ध्यान कर सभी प्रकार के पूजोपकरण द्रव्यों से 'ॐ ब्रह्मणे नमः' कहकर भूमि में एकबारगी ही पूजन कर दें। यद्यपि 'कभी भी ब्राह्मणलोग आपकी पूजा नहीं करेंगे' इस तरह पद्मपुराण प्रतिपादित सावित्रीशापवचनानुसार ब्रह्माजी की अपूजनीयता सिद्ध होती है तथापि 'आज से लेकर जो कोई भी ब्रह्मा की मन्त्रयुक्त पूजा करेगा, उसके वंशज दुःखी एवं दरिद्र होंगे' इस स्कन्दपुराण के वचन के साथ एकवांक्यता करने पर उक्त सावित्रीशापवचन समन्त्रक पूजा प्रसंगी समझना चाहिए। इसी तरह दाक्षिणात्य निबन्ध में उद्धृत विष्णुधर्मोन्तरीय वचनानुसार यद्यपि किसी घर में दो शिवलिङ्ग, दो शालग्राम, द्वारका के दो चक्रों, दो सूर्यप्रतिमाओं, तीन शक्ति प्रतिमाओं, तीन गणेश प्रमिमाओं, दो शंख या भग्न प्रतिमा की पूजा नहीं करनी चाहिए, किन्तु इस वचन के तात्पर्य वर्णन में मैथिल निबन्धकारों का विवेचन है कि किसी एक व्यक्ति को एक पात्र में एक समय उस तरह (वचन प्रतिपादित प्रतिमाओं की) पूजा नहीं करनी चाहिए।

अब मूल में कहे गए नरसिंह पुराण के अन्तिम पद्यार्धका अर्थ है कि देव पूजन के बाद शास्त्रविधि के अनुसार वैश्वदेव तथा बालिकर्म करना चाहिए।

❀ इति देवपूजाप्रकरणम् ❀

# वैश्वदेवबलिप्रकरणम्

[मूलम्]

अथ वैश्वदेवबलिकर्मणी। तत्र वाजसनेयिगृह्यम्–

[अथातः पञ्चमहायज्ञाः ॥१॥ ][1] वैश्वदेवादन्नात्पर्युक्ष्य[2] स्वाहाकारैर्जुहुयाद् ब्रह्मणे प्रजापतये गृह्याभ्यः कश्यपायानुमतये इति ॥२॥

वैश्वदेवादित्यन्न[3]व्यपदेशः। विश्वेदेवताकबलिसम्बन्धात्। यद्यपि देवतान्तरमपि वक्ष्यति तथाप्येकदेशेनव्यवहारः। अतएव होमेऽप्यस्मिन् वैश्वदेवपदम्। गौतमादिकल्पे होमेऽपि विश्वेदेवसम्बन्धात्। अन्नाद् गृहीत्वेति शेषः। पर्युक्ष्य–अग्निमितिशेषो, विष्ण्वादि–संवादात्। एवं पर्युक्षणस्य स्वाहाकारस्य च होमसामान्यधर्मतयोक्तस्यापि पुनरुपादानम् "एष एव विधिर्यत्र क्वचिद्धोमः" इत्यन्तग्रन्थकथितेतरसामान्यधर्मनिषेधार्थम्। 'ब्रह्मण' इत्यादिना प्रत्येकं होमदेवतानिर्देशः। 'अनुमतये इति' इतिकारो होमसमाप्त्यर्थः।

[संस्कृत टीका]

अथे ति। अथ=देवपूजाप्रकरणानन्तरम्। वैश्वदेवेति। "विश्वदेवः पु०। विश्वे दीव्यतीति दिव्‌धातोरच्। गणदेवताविशेषः इत्यमरटीका" इति शब्द-कल्पद्रुमः। [अमरश्च यथा–"आदित्यविश्ववसवस्तुषिता भास्वरानिलाः। महाराजिकसाध्याश्च रुद्राश्च गणदेवताः" (१।१।१०) इति गणदेवताया नव नामानि।] "वैश्वदेवः=विश्वदेवस्यायम्। (विश्वदेव + अण्) विश्वदेव-सम्बन्धी होमादिः। यथा गरुडपुराणम्–'वैश्वदेवं प्रवक्ष्यामि होमलक्षणमुत्तमम्" इतीति च शब्दकल्पद्रुमः। विश्वदेव एव वैश्वदेवः। स्वार्थे अण्। बन्धुभिरकृत विवादस्यैव विश्वदेव लोकप्राप्तिः। यथा मनौः ४। १८३ 'यामयोऽप्सरसां लोके वैश्वदेवस्य बान्धवाः' इति। विश्वस्य देवता-स्वरूपे यथा हरिवंशे (१८८। १६१) श्रुतं मे विश्वदेवानां यद्‌रहस्यं महर्षिणामि"

पाठ० (१) प्रथमसूत्रस्यास्य मूलेऽनुल्लेखेऽपि सुबोधार्थमत्र स्थापितं मया। (२) 'उद्धृत्य' इत्यधिकः क्वचित्पाठः। (३) त्यत्र।

त्यपि च स एव। बलीति। बलिः पु०। बल्यते=दीयते इति बल दाने+ सर्वधातुभ्य इन् (उणादि ४।११७) इति इन्। देवपितृनिमित्तमुत्सृष्ट उत्सृज्यमानो वा भक्ष्यपदार्थो बलिपदार्थः। कर्मणी इति, अग्रे वक्ष्येते इति शेषः। एवञ्च वैश्वदेव बलि सम्बन्धिनी कर्मणी वक्ष्येते अत्र मया ग्रन्थकर्त्रेति भावार्थः।

तत्र=वैश्वदेवबलिकर्मप्रसङ्गे । वाजसनेयिगृह्यम्=पारस्करगृह्यम् । (द्वितीयकाण्डे नवम कण्डिका- २।९।१-१०)।

यद्यपि प्रकरणेऽस्मिन् 'अथातः पञ्चमहायज्ञाः' इत्यारभ्य "यक्ष्मैतत्ते इती" ति पर्यन्तं दशसूत्रात्मकस्यैकस्यैव प्रथमगृह्यवचनस्य सौविध्यार्थं खण्डद्वये विभज्यमानस्याधोग्रन्थकृद्व्याख्या तदधश्च मदीया व्याख्या भविता, तथाऽप्यत्र समग्रमिदं वचनमनुसृत्योल्लिखितं हरिहरभाष्यं यथा—"अथ समावर्तनानन्तरं कृतविवाहस्य पञ्चमहायज्ञेष्वधिकारः। अतो हेतोः पञ्चसंख्याका महायज्ञा महायज्ञशब्दवाच्याः कर्मविशेषाः पञ्चमहायज्ञा व्याख्यास्यन्त इति। तत्र पञ्चसु ब्रह्मणे स्वाहेत्येवमादिको होमात्मकः पूर्वो देवयज्ञः। ततो 'मणिके त्रीनि' त्येवमादि बलिरूपो भूतयज्ञः। ततः 'पितृभ्यः स्वधा नम' इति बलिदानं पितृयज्ञः। हन्तकारातिथिपूजादिको मनुष्ययज्ञः। पञ्चमो ब्रह्मयज्ञः। एते पञ्च महायज्ञा अहरहः कर्तव्याः स्नातकेन। कथमित्यपेक्षायामाह—वैश्वदेवादन्नात्पर्युक्ष्य स्वाहाकारैर्जुहुयात्।" विश्वे देवा देवता अस्येति वैश्वदेवमन्नं तस्मात्। के ते ? देवभूतपितृमनुष्यादयः।

स्मृतिषु तेभ्यश्च अदत्त्वां भोजन निषेधात्तेभ्यो दत्त्वा गृहपतेः शेषभुजित्वविधानात्। तस्माद् यदन्नमहरहः शालाग्नौ लौकिकेऽग्नौ वा यथाऽधिकारं पच्यते तद् वैश्वदेवमन्नं, तस्मादुद्धृत्य पात्रान्तरे कृत्वा, पर्युक्ष्य=आवसथ्यस्य पर्युक्षणं कृत्वा, स्वाहाकारैः सह वक्ष्यमाणैः जुहुयादि''ति।

वैश्वदेवादित्यन्नेति। मूले कथितेन वैश्वदेवादिति पदेन विश्व देवबल्यर्थं साधितस्य पक्वान्नस्य, व्यपदेशः=विशिष्टः अपदेशः व्यपदेशः। मुख्यव्यवहार इति यावत्। यद्यपि विश्वेदेवदेवादिनिमित्तकस्य पाकसम्पन्नस्यान्नस्य बल्यन्तरे भक्षणेऽपि च विनियोगस्तथापि प्राधान्यादयं वैश्वदेवपदेन मुख्यव्यवहारो

भवतीति भावः। विश्वदेवताकबलिसम्बन्धात्= विश्वेदेवदेवतार्थमुत्सृज्य-मानान्नस्य तत्र पाक-सम्पन्नेऽन्ने विद्यमानत्वात्। यद्यपि, देवतान्तरमपि वक्ष्यति=अन्यासामपि पर्यन्यादिदेवतानामस्मिन्नन्ने बलिसम्बन्धं कथयिष्यति, तथापि एकदेशेन व्यवहारः=अस्मिन् प्रकरणे निर्देक्ष्यमाणानां देवानां पाकसम्पन्नेऽन्ने सम्बन्धेऽपि देवैकदेशीभूतविश्वे देवस्यापि सम्बन्धाद् वैश्वदेवपदेन व्यवहारः। यथा चातुर्मास्येषु वैश्वदेवपर्वणि सत्यग्न्यादीनां देवतात्वे एकदेशे विश्वेदेवसम्बन्धाद् वैश्वदेवव्यवहारः। यथा वा राजकुमारेषु तत्सहचरेषु गच्छत्सु राजकुमारा गच्छन्तीति वद् मल्लग्रामवद्वाऽत्र व्यवहारः। अतएव=एकदेशेन मुख्यव्यवहारादेव। होमेऽप्यस्मिन्=इदानीं वक्ष्यमाणे प्रकृतहवनेऽपि। वैश्वदेवो होम इति लोकशास्त्रप्रसिद्धो व्यवहारः। होमो नाम विधिबोधिते आधारे विधिबोधितस्य देवतायै त्यज्यमानस्य हविषः प्रक्षेपः।

ननु पारस्करगृह्यानुसारं बलिकर्मणि विश्वेदेवस्य सम्बन्धेऽपि, उच्यमाने होमकर्मण्यसम्बन्धात्कथं वैंश्वदेवो होम इति व्यवहार इति शङ्कां मनसि निधायाह—गौतमादिकल्प इति। गौतमादिकल्पे होमे=गौतमादिना प्रतिपादिते होमे अर्थात्-"अग्नावग्निर्धन्वन्तरिर्विश्वे देवाः प्रजापतिःस्विष्टकृदिति होम" इति गौतमवचनेन, आदिपदात्- "वैश्वदेवं प्रवक्ष्यामि होमलक्षणमुत्तमम्" इति (२१९) गरुडपुराणदिवचनेन च प्रतिपादिते होमकर्मणि। विश्वेदेव-सम्बन्धात्=विश्वेदेवदेवानां होमोद्देश्यसम्प्रदनीभूतदेवतात्वेन सम्बन्धात्। एवञ्चैकत्र स्वीकृतोऽर्थोऽपरत्रापि सम्बध्यते इति न्यायात् प्रकृतेऽपि 'वैश्वदेवो होम' इति व्यवहारे न कश्चनापि विरोधः। होमेऽपीत्यत्र अपि पदाद् बलिविशेषः, गौतमादीत्यत्रादिपदाद् मन्वादिर्ज्ञातव्यः। तथाच-

**विश्वेभ्यश्चैव देवेभ्यो बलिमाकाश उत्क्षिपेत्।**

इति मनु (३।९०)-वचनाद् बलिविषयेऽपि विश्वेदेवसम्बन्धो बोद्धव्यः। 'अन्नादि' त्यनन्तरं गृहीत्वेति शेषः। अन्नादित्यत्र ल्यब्लोपे पञ्चमी। अन्नं पात्रान्तरे कृत्वेत्यर्थः। पर्युक्ष्य=उत्तानहस्तेन वारिधारयाऽऽवेष्ट्य। अग्निमितिशेषः। विष्ण्वादिसंवादात्=अथाग्निं परिसमूह्य पर्युक्ष्य पाकादग्रमुद्धृत्य जुहुयादिति विष्णुस्मृति-दर्शनात्।

पर्युक्षणस्येति । यद्यपि, ''यद्यपि, 'पर्युक्ष्य जुहुयादि' ति प्रकृत-गृह्यवचनेन 'जुहोतिचोदना स्वाहाकारप्रदाना'' इत्यापस्तम्बवचनेन च पर्युक्षण स्वाहाकारौ होमसामान्यधर्मत एव प्राप्तौ तथाप्येतयोः पुनरुपादानं, एष एव=परिसमूहनादिपर्युक्षणपर्यन्तो विधिरेव, न मन्त्राः, क्वचित्=यत्रक्वचन लौकिके स्मार्ते वाऽग्नौ होमस्तत्र वेदितव्यः इत्यर्थक-एष एव विधिर्यत्र क्वचिद्धोमः'' (पा० गृ० सू० १ । १) इत्यन्त ग्रन्थकथितादितरस्य सामान्यधर्मस्य निषेध सूचनार्थं बोध्यम् । अर्थादत्र पर्युक्षणोपदेशः कुशकण्डिके-तिकर्तव्यतानिरासार्थः । जुहोतिषु स्वाहाकारोपदेशश्च बल्यादिभ्यो निवृत्यर्थः, संप्लव व्युदासार्थो वा । बलिदानन्तु नमस्कारेण, तत्र नमस्कारस्य दर्शितत्वात् । एवमेव हरिहर भाष्यमपि । अत्र ''स्वाहाकारै रिति निपाताद् वर्णसङ्घादपिकारप्रत्ययः, ''उच्चैस्तरां वा वषट्कारः''·इति (पा० सू० १।२।३५) स्मृतेरि''ति नित्यकृ० र० मा० ।

इतिकार इति । इतिकारः=इतिपदम् । होमसमाप्त्यर्थः=होमसमाप्ति-ज्ञापनार्थः।

[ हिन्दी टीका ]

विश्व में जो देदीप्य (देव) हैं उनका नाम विश्वेदेव है । ये गणदेवता हैं जेसा कि अमरकोश तथा उसकी टीका में स्पष्ट है ।

विश्वेदेव सम्बन्धी पाक होम आदि को वैश्वदेव कहते हैं, जैसा कि गरुडपुराण में भी कहा गया है-''अब उत्तम होम वैश्वदेव का वर्णन करूँगा'' ।

दानार्थक बल् धातु से औणादिक' इन्' प्रत्यय करने पर बलि शब्द बनता है जिसका अर्थ है देव या पितर के निमित्त उत्सर्ग किया गया या उत्सर्ग किया जानेवाला भक्ष्य पदार्थ ।

'वैश्वदेव और बलिसम्बन्धी कर्म अब कहे जायेंगे' यह अर्थ 'वैश्वदेव बलिकर्मणी' इस पूरे शीर्षक पद का हुआ ।

इस प्रकरण के वाजसनेयि (पारस्कर) गृह्य जिसका (प्रथम सूत्र ''अथातः पञ्चमहायज्ञाः'' है) का हरिहरभाष्यानुसार अर्थ है कि समावर्तन के बाद विवाह कर लेने पर पञ्चमहायज्ञों के अनुष्ठान का अधिकार होता है । इन यज्ञों का संक्षिप्त परिचय यह है कि ''ब्रह्मणे स्वाहा'' इत्यादि पाँच मन्त्रों से होनेवाला होम' देवयज्ञ' है । बाद ''मणिके त्रीन्'' इत्यादि रूप से कहा गया बलिरूप 'भूतयज्ञ' है । अनन्तर ''पितृभ्यः स्वधा नमः'' इस मन्त्र से होनेवाला बलिदान 'पितृयज्ञ' है । विधि विशेष से

होनेवाला अतिथिपूजन 'मनुष्य यज्ञ' है और पाँचवाँ 'ब्रह्मयज्ञ' है । ये पांचों महायज्ञ प्रतिदिन स्नातक को करने चाहिएँ ।

'ये किस तरह किये जायँ' इस प्रश्न के उत्तर में मूल (में निर्दिष्ट) गृह्यवचन है-वैश्वदेवादन्नात्पर्युक्ष्य आदि । यहाँ विश्वेदेवा देवता अस्य इस व्युत्पत्तिबल से मूल वचन निर्दिष्ट 'वैश्वदेव' पद का अर्थ विश्वेदेवसम्बन्धी-(पक्व अन्न) होता है जिसका मुख्य कारण यह है कि विश्वदेव के उद्देश्य से दिया जाने वाला बलिरूप अन्न का सम्वन्ध पाकसम्पन्न इस अन्न में है । विश्वेदेव पद से प्रकृत में देव, भूत, पितर एवं मनुष्य आदि को समझना चाहिए ।

यद्यपि इस पाकसम्पन्न अन्न में पर्जन्य आदि अन्य देवों के उद्देश्यों से दिये जाने वाले अन्न का भी सम्बन्ध है अथापि उन सभी देवों में एकदेश विश्वेदेव का भी सम्बन्ध होने के कारण वैश्वदेव के नाम से ही इस अन्न का मुख्य व्यवहार होता (आया) है । जैसे चातुर्मास्य याग के वैश्वदेव पर्व में अग्नि आदि देवताओं के होने पर भी एकदेश में विश्वेदेव का सम्बन्ध होने से वैश्वदेव पद से व्यवहार होता है । अथवा राजकुमारों तथा उनके सहचरों को एक साथ चलने पर "राजकुमार जा रहे हैं" व्यवहार होता है । अथवा किसी गाँव में एक दो को ही प्रसिद्ध पहलवान होने पर भी 'यह पहलवानों का गाँव है" ऐसा व्यवहार होता है ।

एकदेश से व्यवहार होने के कारण ही यहाँ कहा जाने वाला होम भी 'वैश्वदेव होम' कहलाता है । "अग्नावग्निर्धन्वन्तरि विश्वेदेवाः" इस गौतमधर्मसूत्र तथा, वैश्वदेवं प्रवक्ष्यामि होमलक्षणमुत्तमम् इस गरुडपुराण वचनानुसार गौतम आदि प्रतिपादित होम में एवं, "विश्वेभ्यश्चैव देवेभ्यो बलिमाकाश उत्क्षिपेत्" इस मनुवचन के अनुसार बलिकर्म में भी विश्वेदेव का सम्बन्ध होने से "एक जगह स्वीकार किया गया सिद्धान्त अन्यत्र भी लागू किया जाता है" इस न्याय के अनुसार वैश्वदेव होम एवं वैश्व होम एवं वैश्वदेव बलि का होना यहाँ भी असङ्गत नहीं ।

मूल वचन में कथित 'अन्नात्' पद के बाद तथा विष्णुस्मृति वचनानुसार 'पर्युक्ष्य' पद के पहले 'अग्निम्' पद जोड़ देना चाहिए । साथ ही 'अन्नात्' पद में ल्यब्लोप में पञ्चमी होने के कारण 'मुख्य पात्र से दूसरे पात्र में अन्न परोस कर ऐसा अर्थ कर, लेना चाहिए ।

यद्यपि 'पर्युक्षण' (उल्टे हाथ जलधारा से अग्नि का वेष्टन करना) तथा 'स्वाहा' शब्द का उच्चारण करना होम के सामान्य धर्म होने के नाते ही प्राप्त थे तो फिर इन दोनों का कथन क्यों हुआ ? इस प्रश्न के उत्तर में प्रथम पर्युक्षण कथन का अभिप्राय यह है कि "एष एव विधिर्यत्र क्वचिद्धोमः" (पा० गृ० सू० १।१) एतत्पर्यन्त ग्रन्थद्वारा

कथित धर्म से अन्य कुशकण्डिका रूप इतिकर्तव्यता की यहाँ निवृत्ति हो । इसी तरह हवन में स्वाहाकार के उपदेश का अभिप्राय है कि इस होम में बलिदान या संस्रव (वह घृत जो प्रोक्षणीपात्र में होम करते समय छोड़ा जाता है) की क्रिया नहीं हो । क्योंकि बलिदान तो 'नमः' शब्द जोड़कर ही यथाविधि किया जाता है ।

मूल वचन में 'ब्रह्मणे' इत्यादि से प्रत्येक होम देवता का निर्देश किया गया है । 'अनुमतये इति' का इति शब्द होमसमाप्ति का सूचक है ।

## [ मूलम् ]

**भूतगृह्येभ्यो मणिके त्रीन्, पर्जन्याद्भ्यः पृथिव्यै ॥३॥ धात्रे विधात्रे च द्वार्ययोः ॥ ४ ॥ प्रतिदिशं वायवे दिशाञ्च ॥ ५ ॥ मध्ये त्रीन् ब्रह्मणेऽन्तरिक्षाय सूर्याय ॥ ६ ॥ विश्वेभ्यो देवेभ्यो विश्वेभ्यश्च भूतेभ्यस्तेषामुत्तरतः ॥७॥ उषसे भूतानाञ्च पतये परम्[१] ॥८॥ पितृभ्यः स्वधा नम इति दक्षिणतः ॥९॥ पात्रं निर्णिज्योत्तरापरस्यां दिशि निनयेद् यक्ष्मैतत्त इति ॥१०॥**

त्रीन् बलीनिति शेषः । भूतगृह्यविवरणे पर्जन्याद्भ्यः पृथिव्यै इति । तेन तत्पदेनैव बलिदानमिति सिध्यति । द्वार्ययोः=द्वारदक्षिणवामप्रदेशयोः । प्रतिदिशम्=गृहस्य पूर्वदक्षिणपश्चिमोत्तरासु दिक्षु । दिशाम्=आसामेव । चकारात्प्रतिदिशमितिं सम्बध्यते । मध्ये-गृहस्यैव[२] । ब्रह्मण इत्यादित्रयम् = त्रीनित्यत्र देवाताऽभिप्रायकम्[३] । तेषाम्=ब्रह्मादिबलीनाम् । उत्तरतः=उत्तरस्यां दिशि । परम्[४]=अन्तिमम् । तेन विश्वेदेवादिबलय उत्तरस्यां दिशि उत्तरोत्तरं दातव्या इति सिद्ध्यति[४] । उत्तरापरा=वायवी दिक् ।

## [ संस्कृत टीका ]

भूतगृह्य इति । इदानीं वैश्वदेवहोमानन्तरं वैश्वदेवबलिकर्मप्रकरण मारभते भूतगृह्य इत्यादिना । भूतगृह्येभ्यः=भूभ्यः भूतानि च गृह्याणि च तानि भूत-

पा० ( १ ) परम् । ( २ ) स्य । ( ३ ) धायकम् । ( ४ ) सिद्ध्यति ।

गृह्याणि । तेभ्यो भूतगृह्येभ्यों होमानन्तरं बलिं दद्यादिति शेषः । भूतगृह्येभ्य इत्यस्यैव विवरणं 'पर्यन्याद्भ्यः पृथिव्यै' इति । तेन=एतद्विवरणस्य सत्वेन। तत्पदेनैव=पर्यन्यादिपदेनैव, पर्यन्याय नमः इत्यादि रूपेण प्रत्येकम् बलिदान-मिति सिद्ध्यति । अत्र नमः पदेन त्यागस्तु छन्दोगपरिशिष्टवाक्यात् । यथा-"अमुष्मै नम इत्येवं बलिदानं विधीयते" ।। इति ।

मणिके=मणिक (संस्कृतोदकुम्भ) समीपे । अत्र सामीप्यलक्षणा सप्तमीयम् । "उदपात्रसन्निधावि' त्यापस्तम्बस्मृतेः । मणिकः=अलञ्जरः उदपात्रमिति यावत् । (अलञ्जरः स्यान्मणिक इत्यमरः) । त्रीनिति पदानन्तरं बलीन् दद्यादिति योज्यम्,

**देवेभ्यश्च हुतादन्नाच्छेषाद् भूतबलिं हरेत् ।**

इति याज्ञवल्क्यवचनात्,

**देव-भूत-पितृ-ब्रह्म-मनुष्याणामनुक्रमात् ।**
**महासत्राणि जानीयात्त एव हि महामखाः ॥**

इति छन्दोगपरिशिष्टवाक्येऽनुक्रमादित्यनेन होम-रूप-देवयज्ञानन्तरं बलि-रूप भूतयज्ञाभिधानाच्च । (मूले) द्वार्ययोः द्वारदक्षिणवामप्रदेशयोः । द्वारस्य दक्षिणपार्श्वे धात्रे वामपार्श्वे च विधात्रे बलिदानं कर्तव्यमिति भावः । प्रतिदिशम् = गृहस्य पूर्वदक्षिणपश्चिमोत्तरासु दिक्षु वायवे बलिचतुष्टयं दद्यादित्यर्थः । चकारादिति । दिशाञ्चेति चकारात्प्रतिदिशमिति सम्बध्यते । इदञ्च प्राच्यादितो देयम्-

**वायवे प्रतिदिग्भ्यश्च दिग्भ्यः प्राच्यादितः क्रमात् ।**

इति मार्कण्डेयपुराणादित्याचारचिन्तामणिरिति नित्यकृत्यार्णवः । तेन प्राच्यादिचतुर्दिक्षु प्राच्यादिदिग्भ्यः तल्लिङ्गोक्तपुरस्सरमेकैकं बलिं दद्यादित्यर्थः । चतुर्थ्यऽर्थे बहुलं छन्दसि (पा० सू० २/३।६२) इति चतुर्थ्यर्थेऽत्र षष्ठी । ब्रह्मण इत्यादित्रयमिति । ब्रह्मणेऽन्तरिक्षाय सूर्यायेति पदत्रयम् । त्रीनित्यत्र=त्रीन् बलीन् दद्यादिति प्रसङ्गे देवताऽभिप्रायकम्=देवतावाचकं बोध्यम्। अर्थाद्

ब्रह्मादिदेवत्रयोद्देश्येन त्रीन् बलीन् पूर्वपूर्वक्रमेण दद्यादित्यर्थः। प्रतिदिशं दत्तानां बलीनामन्तराले त्रीन् बलीन् दद्यादिति तु हरिहरभाष्यनित्य कृत्यरत्नमालाटिप्पणी च । ब्रह्मणं इत्यादौ त्रीनिति पदं ब्रह्मादिबलित्रयाणां क्रमैक्यनिर्देशार्थमिति नित्यकृत्यार्णवः। तेषाम्=ब्रह्मादिबलीनाम् ब्रह्मादित्रयोद्देश्येन प्रदत्तबलीनामिति यावत् । उत्तरतः=उत्तरस्यां दिशि, विश्वेभ्यो देवेभ्यः, तदुत्तरञ्च विश्वेभ्यो भूतेभ्यो बलिदानम् । परम्=अन्तिमम्। तेन विश्वेदेवादि-बलयः ब्रह्मादिबलीनामुत्तरस्यां दिशि उत्तरोत्तरं दातव्या इति सिद्ध्यति ।

## [ टिप्पणी ]

अत्र नित्यकृत्यरत्नमाला टिप्पणी ( पृ० सं० ७१ ) यथा–

"तेषाम् = ब्रह्मादिबलीनाम् । उत्तरतः = उत्तरदेशे । विश्वेभ्यो देवेभ्यो नमः। विश्वेभ्यो भूतेभ्यो नम इति द्वौ बली प्राक्संस्थौ । परं तयोरप्युत्तरतः उषसे नमः, भूतानां पतये नमः इति प्राक्संस्थं बलिद्वयं दद्यात् । एवमेव कर्क-हरिहर-वासुदेव वाचस्पतिमिश्र-केशवमिश्रादयः । ठक्कुरदेवनाथ-श्रीदत्त-रुद्रधर-गणेश्वरोपाध्यायादिभिर्बलिचतुष्टयमुत्तरोत्तरक्रमेण लिखितम्। यद्यप्याचारस्यापि द्वैविध्यं दृश्यते तथापि गृह्यसूत्रानुसार्याद्य एव पक्षः श्रेयानिति प्रतिभाती''ति ।

परन्तु यन्नित्यकृत्यार्णव-ग्रन्थाधारेण मुख्यतः रत्नमालाया निर्माणं सञ्जातमस्ति, तदाधारेण किंञ्चिदत्र विवेचनीयं समुपस्थितं भवति । यथाच तत्र "तत एषामुत्तरतो विश्वेभ्यो देवेभ्यो विश्वेभ्यो भूतेभ्य इति बलिद्वयं प्राक्संस्थम्। ततोऽनयोरुत्तरतः प्राक्संस्थमुषसे भूतानां पतये च बलिद्वयमि''ति कर्क्क-हरि-हर-वासुदेवादयः। यद्युत्तरचतुष्कस्य ब्रह्मादित्रिकोत्तरत्वं विवक्ष्येत तदा सूर्यायेत्यनन्तरमेवोत्तरत इति विधीयेत, न तु भूतेभ्य इत्यनन्तरमतो विह्यो ब्रह्मादित्र्युत्तरन्द्वयोस्तदुत्तरञ्च शेषयोस्तेषामितिचादौ ब्रह्मादिपरम्। ततस्तयोरिति विपरिणतं सद्विश्वेदेवादिद्वयपरमन्यथाऽनन्वयात्। ननु

**ब्रह्मणे चान्तरिक्षाय सूर्याय च यथाक्रमम् ।**
**विश्वेभ्यश्चैव देवेभ्यो विश्वभूतेभ्य एव च ॥**
**उषसे भूतपतये दद्याच्चोत्तरतस्ततः ॥**

इति मार्कण्डेयपुराणाच्चतुर्णामविशेषेण ब्रह्मादिबलित्रिकोत्तरत्वमिति न उक्तव्याख्यानेनापि उत्तरत्वाक्षतेः। अनासक्तेश्चाप्रतीकार्यत्वादिति कर्क्काद्याशयः। श्रीदत्ताह्निकादौ चतुष्टयमुत्तरोत्तरम्, विभक्तिविपरिणामापेक्षया व्यवहितान्वयस्यैव लाघवाश्रयणादित्युक्तमि" ति,......"तस्माद् ब्रह्मादिबलित्रयं प्राक्संस्थत्वेन पूर्वपूर्वक्रमेण दीयत इत्यविवादम्। ततस्तेषामुत्तरस्यां विश्वेदेवादिबलयो देया इति निबन्धृभिरुक्ते ब्रह्मादिबलीनां यथाक्रममुत्तरस्यां विश्वेदेवादिबलिदाने सिद्धे ब्रह्मबल्युत्तरे विश्वेदेवबलिरन्तरिक्षबल्युत्तरे विश्वभूतबलिः सूर्यबल्युत्तरे उषसो बलिरिति सिध्यति। भूतपतिबलिरप्यन्तिम उत्तरस्यामेव, तत्रापि क्रमानुरोधेन प्रथमस्य विश्वेदेवबलेरेवोत्तरे स देय इत्याचारद्वैतविवेकः। आचारादर्शेऽप्येतदनुसारी सिद्धान्तः पन्था" इति च।

तथा च "ब्रह्मणे चान्तरिक्षाय" इत्यादि पूर्वोक्तपुराणवाक्यैकवाक्यतायां प्रकृतगृह्यवचनेन पौराणिकवचने सामान्यत एवोत्तरत्वविधानेन च उत्तरपक्षे पौराणिकवचने उत्तरत इत्यस्याप्यावृत्त्यकरणेन गृह्यवचने तेषामिति पदस्य चावृत्त्यकरणेन "अथ तद्विन्यासो वृद्धि पिण्डानिवोत्तरोत्तरांश्चतुरो बलीन्निदध्यात् -पृथिव्यै वायवे विश्वेभ्यो देवेभ्यः प्रजापतय" इति छन्दोगपरिशिष्टीयवैश्वदेवबलिसम्बन्धिवचनादुद्दिष्टदेवानां भेदेऽपि वैश्वदेवप्रसङ्गिबलीनामुत्तरोत्तरत एव विधानेन च श्रीदत्त(आचारादर्श)-सम्मत उत्तरपक्ष (उत्तरोत्तरस्थापनपक्ष) एव स्पष्टं श्रेयान् प्रतिभातीति सुधियो निभालयन्तु। सहैव नित्यकृत्यार्णवोल्लिखितपञ्चमहायज्ञमण्डलानुसारमत्रापि मण्डमुल्लिख्यते ॥ इति ॥

## [ हिन्दी टिप्पणी ]

यहाँ नित्यकृत्यरत्नमाला की टिप्पणी का कहना है कि "ब्रह्म आदि की तीन बलियों के उत्तर देशमें पूर्व से ही स्थित दो बलियाँ विश्वेभ्योदेवभ्योनमः तथा विश्वेभ्यो भूतेभ्यो नमः इनदो मन्त्रों से दें। बाद इन दोनों बलियों के उत्तर देश में उषसे नमः तथा भूतानां पतयेनमः इन दो मन्त्रों से दो बलियाँ दें। ऐसा ही कर्क-हरिहर-वासुदेव-वाचस्पति मिश्र केशव मिश्र आदि का कहना है। किन्तु ठक्कुर देवनाथ-श्रीदत्त-रुद्रधर-गणेश्वरोपाध्याय आदि का मत है कि उक्त चारो बलि उत्तरोत्तरक्रम से हो। यद्यपि लोक में आचार भी दोनों प्रकार है तथापि गृह्यानुसारी होने

के कारण आदिम (दो बलियों के बाद दो बलियाँ देना) पक्ष ही श्रेष्ठ है, ऐसा प्रतीत होता है।''

परन्तु जिस नित्यकृत्यार्णव ग्रन्थ के मुख्य आधार से नित्यकृत्यरत्नमाला का सर्जन हुआ है उस आधार से कुछ विवेचन करना आवश्यक हो जाता है। यथा वहीं के लेख से–''ब्रह्मादिबलियों के उत्तर में विश्वेभ्यो देवेभ्यो नमः, विश्वेभ्यो भूतेभ्यो नमः इन दो मन्त्रों से दो बलियाँ देकर पुनः इसके उत्तर में उससे नमः तता भूतानां पतये नमः इन दो मन्त्रों से पहले से स्थापित दो बलियाँ दें यह मत कर्क हरिहर वासुदेव आदि का है।

उनका यहाँ तर्क है कि यदि ब्रह्मादि तीन बलियों के उत्तर में ही लगातार चारो बलियाँ विवक्षित हों तो गृह्यवचन में 'सूर्याय' इसके बाद ही 'उत्तरतः' पद कहा जाता न कि 'भूतेभ्य' इसके बाद, किन्तु कहा गया है इसी के बाद। अतः समझा जाता है कि ब्रह्मादि तीन बलियों के बाद उत्तर में दो बलियाँ हों, इनके उत्तर में शेष दो बलियाँ हों और 'तेषाम्' यह पद प्रथम तो ब्रह्मादि बोधक है। बाद बहुवचन में पठित 'तेषाम्' पद को द्विवचनान्त में विपरिणाम कर ज्ञातव्य 'तयोः' पद विश्वेदेव आदि सम्बन्धी दो बलियों का बोधक होगा। अन्यथा अन्वय संभव नहीं हो सकेगा।

यदि यहाँ शङ्का हो कि यथाक्रम ब्रह्मा, अन्तरिक्ष, तथा सूर्य को बलि देने पर इनके उत्तर में विश्वेदेव,विश्वभूत, उषस् तथा भूतपति को बलि दें इस पद्मपुराण वचन के अनुसार सामान्यतः चारों बलियों का विहित उत्तरत्व यहाँ सुघटित नहीं हो पाता तो इसका समाधान होगा कि ब्रह्मा आदि (के) बलित्रय के उत्तर देश में चारो बलियाँ होना उक्त व्याख्यान से विरुद्ध नहीं होता अपि तु विहित उत्तरत्व स्थिर ही रहता है, अतः पुराणवचन से कोई विरोध नहीं।

परतु 'तेषाम्' पद से ब्रह्मा आदि त्रिक के ग्रहण से अनासत्ति (दूरान्वय) तो अप्रतीकार्य है। अर्थात् यह दोष तो मानना ही होगा।

श्री दत्त आदि के निर्दिष्टमत में उत्तरोत्तर चारों बलियाँ होंगी इस पक्षका तर्क है कि 'तेषाम्' पद के स्थानपर 'तयोः' पद बना कर अन्वय करने की अपेक्षा गृह्यवचन स्थित ब्रह्मणे' अन्तरिक्षाय सूर्याय'. इस (पद समूह) से सम्बन्ध करने में ही बाध्य है )

पूर्व प्रतिपादित युक्ति से ब्रह्मा आदि का पूर्वस्थापित बलित्रय पूर्वपूर्व क्रम से दिया जाय यह तो निर्विवाद है। अनन्तर ब्रह्मादिबलियों के उत्तर में विश्वेदेवादि बलियाँ दें ऐसा निबन्धकारों के कहने के बाद ब्रह्मादिबलियों के यथा क्रम उत्तर देश में विश्वेदेव आदि को बलि देना सिद्ध होता है। अन्तिम भूतपतिबलि भी उत्तर में ही हो किन्तु

क्रम के अनुरोध से प्रथम विश्वेदेव बलि के उत्तर में देना चाहिए । यह आचारद्वैतविवेक का निर्णय है । आचारादर्श में भी इसकी सिद्धान्तमार्ग है ।

उक्त लेखदर्शन से स्फुट प्रतिभासित होता कि "ब्रह्मणे चान्तरिक्षाय" इत्यादि पूर्वकथित मार्कण्डेय पुराणवचन के साथ एकवाक्यता करने पर गृह्यवचन एवं मार्कण्डेय पुराण वचन में अविशेष रूप से उत्तर दिशा में चारों बलियों के देने के विधान, पौराणिक वचन तथा गृह्यवचन में उत्तरतः पद की आवृत्ति की अपेक्षा न होने, वैश्वदेवबलिदान सम्बन्ध में छन्दोगपरिशिष्टीय वचनानुसार पृथिवी, वायु, विश्वेदेव और प्रजापति देवों के लिए 'उत्तरोत्तरतः' शब्द से ही चारों बलियों का विधान होने से श्रीदत्त सम्मत उत्तरोत्तरपक्ष (उत्तरोत्तरबलिस्थान पक्ष) ही श्रेष्ठ है, यह विद्वान् लोग ही विचार करें ।

साथ ही श्रीदत्तमतानुसारं नित्यकृत्यार्णव में उल्लिखित पञ्चमहायज्ञ मण्डल (नक्शा) के अनुसार ही इस ग्रन्थ में भी मण्डल (पञ्चमहायज्ञ प्रकार) लिखा (दिखाया) गया है । इति ।

**[ संस्कृत टीका ]**

मूले दक्षिणत इति । ब्रह्मादिबलेर्दक्षिणस्यां दिशि पितृकर्मत्वाद्दक्षिणामुखः प्राचीनावीती 'ॐ पितृभ्यःस्वधा नमः' इति मन्त्रेणैको बलिर्देयः । ततो ब्रह्मबलेर्दक्षिणतः पित्रितिकर्तव्यतया पितृभ्य एकं बलिमित्याचारचिन्तामणिरि''ति नित्यकृत्यार्णवः। एवमेव हरिहरोऽपि । पात्रम् = अन्नपात्रम् । निर्णिज्य = वारिणा प्रक्षाल्य। तज्जलं तेषामेव ब्रह्मादिबलीनाम् उत्तरापरस्याम् = वायव्यां दिशि । उत्तरस्या अपरस्याश्चं अन्तरालमिति विग्रहे दिङ्नामान्यन्तराले (पा० सू० २/२/३६) इति समासविधानात् । निनयेत् = दद्यात् । एवञ्चान्नपात्रप्रक्षालनजलमव- शिष्टान्नसहितं ब्रह्मबलेर्वायव्यां दिशि यक्ष्मणे दद्यादिति भावः ।

**अन्नावशेषमिश्रं वै तोयं दद्याद्यथाविधि ।**

इति मार्कण्डेयपुराणात् । मन्त्रश्चात्र-"यक्ष्मैतत्ते निर्णेजनं नम" इति ।

**[ हिन्दी टीका ]**

अब वैश्वदेव होम प्रकरण के बाद वैश्वदेव बलि प्रकरण का आरम्भ किया जाता है । मूल में 'त्रीन्' इस पद के बाद बलीन् (दद्यात्) पद जोड देना चाहिए । 'भूतगृह्येभ्यः' इस की व्याख्या-"पर्यन्याद्भ्यः पृथिव्यै" है । अर्थात् पर्यन्य आदि तीन

पदों से तीन बलिदान होंगे और छन्दोगपरिशिष्ट वचनानुसार तत्तत् पदों (मन्त्रों) के आगे 'नमः' पद जोड़ा जायगा। आदि में ॐ पद तो स्वाभाविकतया ही लगेगा। अब मन्त्र का आकार होगा-'ॐ पर्जन्याय नमः' आदि। अब सारांश में सिद्ध हुआ कि संस्कृत जलकुम्भ (मणिक) के समीप ॐ पर्यन्याय नमः, ॐअद्भ्यो नमः, ॐ पृथिव्यै नमः, इन तीन मन्त्रों से अन्न का तीन बलि दें।

मुख्यद्वार के दाहिने भाग में 'ॐ धात्रे नमः' मन्त्र से धाता और बायें भाग में 'ओं विधात्रे नमः' मन्त्र से विधाता को एक एक बलि दें। पूर्वादिदिक्क्रम से घर या बनाये गए चक्र के पूर्व 'दक्षिण-पश्चिम और उत्तर दिशाओं में' ॐ वायवे नमः' मन्त्र से चार बलि दें। इसी तरह प्रत्येक दिशामें उस उस दिशा के नाम से भी चार बलि दें। घर के भीतर उक्त प्रदत्त बलियों के बीच में पूर्व पूर्वक्रम से ॐ ब्रह्मणे नमः, 'अन्तरिक्षाय नमः,' सूर्याय नमः इन मन्त्रों से तीन बलियाँ दें। इन ब्रह्म आदि के तीनों बलियों की उत्तर दिशा में उत्तरोत्तर क्रम से अर्थात्- ब्रह्मबलि के उत्तर में विश्वेदेव बलि, अन्तरिक्षवाले के उत्तर में विश्वभूतबलि, सूर्यबलि के उत्तर में उषस् तथा प्रथम विश्वेदेवबलि के ही उत्तर में अन्तिम भूतपतिबलि क्रमशः ॐ विश्वेभ्यो देवेभ्यो नमः, ॐ विश्वेभ्यो भूतेभ्यो नमः, ॐ उषसे नमः, तथा ॐ भूतानां पतये नमः इन चार मन्त्रों से दें। पूर्व प्रदत्त ब्रह्मबलि की दक्षिण दिशा में अपसव्य एवं दक्षिण मुंह हो 'ॐ पितृभ्यः स्वधा नमः' इसमन्त्र से एक बलि दें। अन्त में अन्नपात्र को धोकर उस अन्नमिश्रित जलको ब्रह्मादिबलियों के वायव्यकोण में' ॐ यक्ष्मैतत्ते निर्णेजनं नमः' इस मन्त्र से उत्सर्ग कर दें। (यही पितृयज्ञ है)

[मूलम्]

अत्र वदन्ति केचित्। अयं विधिः साग्नेरेव।

अग्न्यादिगौतमेनोक्तो होमः शाकल एव सः।
अनाहिताग्नेरप्येष युज्यते बलिभिः सह॥

इति वाक्येन निरग्नेः प्रकारान्तराभिधानात्।

[संस्कृत टीका]

अत्रेति। अत्र=पूर्वोक्तवैश्वदेवहोमबलिविषये। केचित् पूर्वपक्षिणः। वदन्ति=कथयन्ति। अयं विधिः=पूर्वोक्त-पर्जन्यादिबलिसहित-वैश्वदेवहोमादि-विधिः। साग्नेरेव = सप्रयत्नं सुरक्षिते वैवाहिकाग्नौ यथाशास्त्रमग्निसम्पाद्यं कर्म कुर्वतो गृहस्थस्यैव (कृते) अस्तीत्यध्याहारः।

यथाचोक्तं मनुनाऽपि (३/६७)–

**वैवाहिकेऽग्नौ कुर्वीत गृह्यं कर्म यथाविधि।**

**पञ्चयज्ञविधानञ्च पक्तिञ्चान्वाहिकीं गृही। इति।**

"विवाहे भवो वैवाहिकः। अध्यात्मादित्वाट्ठञ्। तस्मिन्नग्नौ, गृह्योक्तं कर्म=सायं प्रात र्होमाष्टकादि, यथाशास्त्रमग्निसम्पाद्यञ्च पञ्चमहायज्ञान्तर्गत-वैश्वदेवाद्यनुष्ठानं, प्रतिदिनसम्पाद्यञ्च पाकं गृहस्थः कुर्यादि"ति मन्वर्थ-मुक्तावली।

अग्न्यादिरिति। अनाहिताग्नेः कर्तव्यमाह–कात्यायनः अग्न्यादिरिति। अनाहिताग्नेः =श्रौतस्मार्ताग्निरंहितस्य। यः खलु अग्न्यादिर्होमः ="अग्नावग्नि-र्धन्वन्तरिर्विश्वेदेवाः प्रजापतिः स्विष्टकृदिति होमाः" इत्येवं गौतमेनोक्तः। स तदुक्तैरेव बलिभिः दिग्देवताभ्यश्च यथास्वं द्वारि मरुद्भ्यो गृहदेवताभ्यः गृहं प्रविश्य ब्रह्मणे मध्येऽद्भ्यः उदकुम्भे, आकाशायेत्यन्तरिक्षे, नक्तञ्चरेभ्यश्च सायम्" इत्येवंलक्षणैः सहित इत्येकः कल्पः।

"उक्त गौतमवचने अग्नावित्युक्ते गौतमकल्पेन लौकिकाग्नावेवेति छन्दोगाह्निके श्रीदत्तोपाध्यांया" इति गोभिलगृह्यसूत्रटिप्पण्यां म. म. मुकुन्दशर्माणः। एतेनाग्नाविति विशिष्योपादानादत्र कल्पे "लौकिके वैदिके वाऽपी" त्यादिना शातातपोक्तजलक्षित्यादि व्यावृत्तिः।

यश्च शाकलहोमः–अर्थात् काष्ठशकल (खण्ड) साध्यो ज्योतिष्टोमे होमः शाकल इत्युच्यते 'देवकृतस्यैनसः' इत्याद्यष्टाहुत्यात्मकः स सामवेद-पठितः। सचाऽग्निपुराणादद्युंक्तबलिभिः सहित इत्यन्यः कल्पः।

तथा चाग्निपुराण–योगियाज्ञवल्क्यौ–

**अन्नं व्याहृतिभिर्हुत्वा तथा मन्त्रैश्च शाकलैः।**

**भूतेभ्यश्च बलिं दत्त्वा ततोऽश्नीयादनग्निमान्॥ इति।**

भूतेभ्यश्चेति चकारादादौ देवबलिरन्ते च पित्र्यबलिरित्याचक्षते।

शाकलकल्पश्च समन्त्रकः काशीखण्डे स्पष्टः। तत्राष्टौ मन्त्राः यथा–(१) देवकृतस्यैनसोऽवयजनमसि स्वाहा। (२) पितृकृतस्यैनसोऽवयजनमसि स्वाहा।

(३) मनुष्यकृतस्यैनसोऽवयजनमसि स्वाहा । (४) अस्मत्कृतस्यैनसोऽवयजनमसि स्वाहा (५) यद्दिवा च नक्तं चैनश्चकृम तस्यावयजनमसि स्वाहा । (६) यत्स्वपन्तश्च जाग्रतश्चैनश्चकृम तस्यावयजनमसि स्वाहा । (8) एनस एनसोऽवयजनमसि स्वाहा ।

उक्तानयोः (गौतमशाकलकल्पयोः) पद्धतिर्नित्यकृत्यार्णवादौ द्रष्टव्या । एवञ्च "अग्न्यादिर्गौतमेनोक्तः" इत्यादि छन्दोगपरिशिष्टवचनेन, "अन्नं व्याहृतिभिर्हुत्वे" त्याद्यग्निपुराण-योगियाज्ञवल्क्य-वचनेन,

**अनग्निकस्तु यो विप्रो ह्यन्नं व्याहृतिभिः स्वयम् ।**

**हुत्वा शाकलहोमैश्च शिष्टाद् भूतबलिं हरेत् ॥**

इति वसिष्ठवचनेन च निरग्नेः वाजसनेयिनः कृतेऽनुपदोक्तान्यप्रकारकवैश्वदेवविधेर्निर्देशात् पारस्करगृह्यनिर्दिष्टश्वैदेवप्रयोगस्तु साग्नेरेव वाजसनेयिनः सिध्यतीतिं भावार्थः ।

**[ हिन्दी टीका ]**

यहाँ किन्हीं (पूर्वपक्षी) का कहना है कि अभी कहा गया (पारस्करगृह्य सूत्रोक्त) बलि वैश्वदेव विधि साग्निक गृहस्थों के लिए ही है ।

[विशेषः –साग्निक गृहस्थ वह कहलाता है जो विवाह के समय स्थापित अग्नि से शास्त्रानुसार अग्निसम्पादनीय कर्म करता है । उक्त प्रसंग में मनु का कहना है कि विवाह के समय स्थापित अग्नि में सायंप्रातः होम अष्टक आदि, गृह्योक्त कर्म, शास्त्रानुसार अग्निसम्पाद्य पञ्चमहाज्ञयों के अन्तर्गत वैश्वदेव आदि का अनुष्ठान तथा प्रतिदिन होने वाला पाक करे ।]

क्योंकि अनाहिताग्नि (अनाहिताग्नि=निरग्निक गृहस्थ वह कहलाता है जो प्रतिदिन नवीन अग्नि की स्थापना कर शास्त्रसम्मत अग्निसम्पाद्य कर्म करता है) के सम्बन्ध में कात्यायन का कहना है कि "अग्नावग्निः" इत्यादि वचन के द्वारा बलियों सहित जो होम गौतम ने कहा है अथवा अग्निपुराण एवं योगियाज्ञकल्क्य-प्रतिपादित तथा सामवेद (ज्योतिष्टोम प्रकरण) में कहा गया बलियों सहित शाकल (काठ के खण्डों से सम्पादनीय) होम जो "देवकृतस्यैनसोऽवयजनमसि स्वाहा" आदि आठ मन्त्रों के द्वारा आठ आहुतियों से सम्पन्न होता है वह होना चाहिए ।

फलितार्थ में "अग्न्यादिर्गौतमेनोक्त:" इस कात्यायनवचन "अन्नं व्याहृतिभिर्हुत्वा" इस अग्निपुराण तथा योगियाज्ञवल्क्यवचन, और "अनग्निकस्तु यो विप्र:" इस वसिष्ठवचन के अनुसार निरग्नि वाजसनेयी के लिए अभी कहे गए गौतमकल्प या शाकलकल्प ही बलिवैश्वविधि शास्त्रसम्मत है । किन्तु इससे सिद्ध होता है कि पारस्करगृह्यसूत्रद्वारा निरपेक्षभाव से कहे गए बलिवैश्वदेव विधि तो साग्निवाजसनेयी गृहस्थ के लिए ही है ।

[मूलम्]

नच छन्दोगपरिशिष्टे श्रवणाच्छन्दोगविषयं प्रकारान्तरम् । 'सर्वशाखाप्रत्ययमेकं कर्मे'ति न्यायेनास्य सर्वगोचरत्वात् ।

[ संस्कृत टीका ]

नचेति । पूर्वपक्षी स्वपक्षरक्षणाय आशङ्क्यमानदोषनिरासार्थमाशङ्कते नचेत्यादिना । प्रकारान्तरम् = गौतमकल्पेन शाकलकल्पेन च कथितावन्य-प्रकारकबलिवैश्वदेवविधी । छन्दोगपरिशिष्टे = कात्यायन-प्रणीते सामवेदिनां कृते छन्दोगपरिशिष्टनामके ग्रन्थे । श्रवणात् = कथनात् । छन्दोगविषयम् = निरग्निसामवेदिनां कृते एव तत् । अतएव "नच छन्दोगपरिशिष्टे श्रवणान्निरग्नि-छन्दोगपरमिति नित्यकृत्यार्णवोद्धृताचारचिन्तामणावाशङ्काऽऽकार: । एतेन न तु निरग्निवाजसनेयिनां कृतेऽपीति ध्वन्यत इति चेन्न । सर्वशाखा प्रत्ययमेकं कर्म=यजुर्वेद सामवेदा दीनां सर्वशाखाभिर्विधीयमानमेकं कर्म भवतीतिरीत्या प्रकृते प्रत्ययपदस्य प्रतीयते = विधीयते इति कर्मणि अचि व्युत्पत्ति:, "अणुदित्सवर्णस्य चाप्रत्यय" इति (१/१/६९) सूत्रस्थप्रत्ययशब्दवत् । अस्य = प्रकारान्तरप्रतिपादकगौतमादिवचनस्य । सर्वगोचरत्वात् = निरग्निछन्दोग-निरग्निवाजसनेयि (सर्व) विषयत्वात् । एवञ्च छन्दोगपरिशिष्टीयं वचनं तदेकवाक्यतापन्नमग्निपुराणादिवचनञ्च निरग्निछन्दोगस्येव निरग्निवाज-सनेयिनोऽपि कृते मन्तव्यम् । साग्निवाजसनेयिनां कृते स्वगृह्योक्तमस्त्येवेति भावार्थ: ।

[ हिन्दी टीका ]

यहाँ पूर्वपक्षी अपने पक्ष में स्थिरता लाने हेतु दूषणोद्धारार्थ शङ्का करता है कि गौतमकल्प या शाकलकल्पवाली बलि वैश्वदेवविधि निरग्नि सामवेदियों के लिए ही

है क्योंकि उक्त विषय कात्यायन प्रणीत छन्दोगपरिशिष्ट नाम के ग्रन्थ में कहा गया है। अतः निरग्नि वाजसनेयी के लिए कैसे हो सकता है ? इसका उत्तर यह होगा कि "सामवेदीय शाखावाले या यजुर्वेदीय शाखावाले हों सभी के लिए विधान किया जानेवाला एक कर्म होता है।" इस नियमानुसार छन्दोगपरिशिष्टपरिदर्शित विधान निरग्निछन्दोगों के जैसे निरग्नि वाजसनेयियों के लिए भी लागू होगा। साग्नि वाजसनेयियों के लिए तो स्वगृह्योक्त विधान है ही।

[ मूलम् ]

**किञ्च, यदीदं छन्दोगविषयं तदा निरग्निवाजसनेयिनां वैश्वदेव-प्रापकाभावात्।**

[ संस्कृत टीका ]

किञ्च यदीति। ननु 'सर्वशाखे'ति सामान्यनियममधिकृत्यैव कथं तत्तच्छाखिभिः सह निरग्निवाजसनेयिनां कृतेऽपि छन्दोगपरिशिष्टग्रन्थोऽनुकूलत्वेन मन्तव्य इत्यत आह किञ्चेति। यदि। इदम् = "अग्न्यादिर्गौतमेनोक्त" इति वचनम्। छन्दोगविषयम् = निरग्निसामवेदिनां कृत एव स्यात्। तदा। वैश्वदेवप्रापकाभावात् = वैश्वदेवविधिबोधकवचनानुपलम्भाद् वैश्वदेवप्राप्तिरेव न स्यात्। पारस्करगृह्योक्तवचनस्य साग्नियजुर्वेदि वैश्वदेव विधिज्ञापनेन चारितार्थ्यात्। अतो निरग्निसामवेदियजुर्वेदिनोरुभयोरपिवैश्वदेवविधायकं गौतमादिवचनं मन्तव्यम्।

[ हिन्दी टीका ]

'सर्वशाखाप्रत्ययम्' इत्यादि सामान्यनियम के आधार पर ही छन्दोगपरिशिष्ट ग्रन्थ को तत्तत् शाखियों के साथ निराग्नि वाजसनेयियों के लिए भी कैसे अनुकूल मान लिया जाय, इस अरुचि पर कहा गया है—किञ्च।

और भी, यदि छन्दोगपरिशिष्ट का "अग्न्यादिर्गौतमेनोक्तः" यह वचन निरग्नि सामवेदियों के लिए ही नियत मान लिया जाय तो निरग्नि यजुर्वेदियों के लिए अन्य वचन उपलब्ध न होने के कारण वैश्वदेव की प्राप्ति ही नहीं हो सकेगी, क्योंकि पारस्करगृह्योक्त वचन तो साग्निक यजुर्वेदियों के लिए बोधन कर चरितार्थ हो जाता है। अतः गौतमादिवचनों को निराग्नि छन्दोगों के जैसे निराग्नि वाजसनेयियों के लिए भी वैश्वदेव विधायक मानना होगा।

पा० (१) वन्तु कु। (२) तन्तुं। तञ्च।

[ मूलम् ]

किञ्च, 'मणिके त्रीनि' ति श्रवणान्निरग्नेश्च मणिकाभावात् साग्निविषयतेति । तदयुक्तम् ।

[ संस्कृत टीका ]

किञ्च मणिके इति । ननु पारस्करगृह्यवचनस्यैव तेनैव च साग्नि-निरग्निवाजसनेयिनां वैश्वदेवविधिप्राप्तिसम्भवे किमर्थमन्यशाखीय-छन्दोगपरिशिष्टवचनं निरग्निवाजसनेयिभ्योऽ (भिर) ङ्गीकरणीय मित्यरुचेराह किञ्चेति ।

निरग्नि-साग्निनोरुभयोरेव वाजसनेयिनोः कृते पारस्कर-गृह्यवचनस्याङ्गी-करे न काऽपि क्षतिः , किन्तूक्तवचनान्तर्गत 'मणिके त्रीनि' तिश्रवणान्निरग्निवाजसनेयिना च मणिकस्य प्रतिष्ठापनाभावादगत्या साग्नियजुर्वेदिनः कृत एव गृह्यवचनं मन्तव्यम्, न तु दुराग्रहमुद्रया कपोल-कल्पनया वा तथेत्युच्यते । एवञ्च सग्निवाजसनेयिनः स्वगृह्योक्त एव बलिवैश्वदेवप्रयोगो भवेन्निरग्नेस्तु गौतमकल्पेन शाकलकल्पेन वा प्रयोग इति तेषां पूर्वपक्षिणां मते निष्कर्षः । परमेतन्मतन्न युक्तिसहम् ।

[ हिन्दी टीका ]

पारस्करगृह्यवचन को जीवित रहने पर उसी से साग्नि एवं निरग्नि दोनों प्रकार के वाजसनेयियों को वैश्वदेव प्रयोग प्राप्त हो ही जाता है तो क्यों सामवेदशाखीय छन्दोगपरिशिष्ट वचन निरग्निवाजसनेयियों के लिए माना जाय, इस अरुचि पर कहा गया है—किञ्च ।

और भी, वाजसनेयी मात्र के लिए उक्त गृह्यवचन के अङ्गीकार में कोई क्षति नहीं किन्तु उस वचन के अन्दर 'मणिके त्रीन्' वचन आता है, जिसका अर्थ है संस्कृत जल पूर्ण घड़े के पास तीन बलियाँ दें । परन्तु यह संस्कृत घट तो निरग्निवाजसनेयियों को होता नहीं । अतः अगत्या साग्निक यजुर्वेदियों के लिए ही गृह्योक्त वचन मानना होगा ।

अब निष्कर्ष में सिद्ध यह हुआ कि साग्निक वाजसनेयी के लिए स्वगृह्योक्त ही बलिवैश्वदेव हो, और निरग्निक वाजसनेयी के लिए गौतमकल्प या शाकलकल्प का

ही बलि वैश्वदेव प्रयोग हो । परन्तु यह 'केचित्' कहकर प्रतिपादित पूर्वपक्षिमत युक्तिसंगत नहीं । क्यों कि,

[ मूलम् ]

वैश्वदेवं[1] प्रकुर्वीत स्वशाखा-विहितं[2] नरः ।

इति व्यासवाक्यात् पारशाखिकवैश्वदेवानुष्ठानायोगात् ।

[ संस्कृत टीका ]

वैग्वैश्वगमिति । पूर्वपक्षिमतनिरासार्थमाह–वैश्वदेवमिति । नरः = वैश्वदेव-कर्त्ता । स्वशाखाविहितम् = स्वशाखायां कथितम् । वैश्वदेवम् । प्रकुर्वीत =कुर्यात्, इति व्यासोक्त-विशेषवचनात् । स्वशाखोक्तं विहाय परशाखोक्त-वैश्वदेवानुष्ठानस्यानौचित्येन स्वगृह्योक्तस्यैव तस्यादर्त्तुमुचितत्वादिति भावः ।

[ हिन्दी टीका ]

''वैश्वदेवकर्त्ता अपनी शाखा में कथित वैश्वदेव का अनुष्ठान करे'' इस व्यासवचन के विशेष निर्देशानुसार स्वशाखाविहित वैश्वदेव को छोड़ कर अन्यशाखोक्त वैश्वदेव का अनुष्ठान अनुचित ही होगा । अतः स्व-शाखोक्त-(गृह्योक्त) वैश्वदेव का ही आदर करना उचित होगा । निष्कर्ष में सिद्ध यह हुआ कि चाहे निपराग्निक हो या साग्निक, सभी यजुर्वेदियों के लिए (पारस्कर) स्वगृह्योक्त बलिवैश्वदेव का ही अनुष्ठान होगा । फलतः पूर्व प्रतिपादित ''केचित्'' वाला पूर्वपक्षिमत युक्तिविहीन है ।

[ मूलम् ]

किञ्च, यद्यपि सर्वशाखाप्रत्ययमेकं कर्म तथापि स्वशाखाविहितं कर्म विहाय नान्य शाखीयानुष्ठानम् । यत्तु कर्म स्वशाखायान्न विहितं स्वशाखाविहिता-विरुद्धं तत् पारशाखिकमप्यनुष्ठेयम् । तदुक्तं छन्दोगपरिशिष्टे–

स्वशाखाऽऽश्रयमुत्सृज्य परशाखाश्रयञ्च[3] यः ।
कर्त्तुमिच्छति दुर्मेधा मोघं तत्तस्य यत्कृतम्[4] ॥
यन्नाम्नातं स्वशाखायां पारक्यमविरोधि यत् ।
विद्वद्भिस्तदनुष्ठेयमग्निहोत्रादिकर्मवत् ॥ इति

पा० (१) वन्तु कु । (२) तन्तु । तञ्च । (३) श्रयन्तु । (४) चेष्टितम् ।

[ संस्कृत टीका ]

किञ्च यद्यपीति । समस्तयजुर्वेदिनां कृते स्वगृह्योक्तवैश्वदेवस्यानुष्ठेयत्ववादिनो ग्रन्थकारस्य मते ''वैश्वदेवं प्रकुर्वीते''ति व्यासवचनस्य कृतसाक्ष्येऽपि, केचिन्मतेऽपि ''सर्वशाखे''ति न्यायस्य सत्त्वेन 'नैकस्तत्रानुयोक्तव्यस्तादृगर्थविचारणे' इति न्यायेन विनिगमनाविरहेणा चोभयत्र साम्यमेवेत्यरुचेराह-किञ्च ।

भवतु नाम उभयविधयुक्त्या साम्प्रतं न कोऽपि निर्णयस्तथापि ''स्वशाखे'' त्यग्रिमछन्दोगपरिशिष्टस्य सामान्यवचनेन स्वशाखाविहितं कर्म विहाय नान्यशाखीयानुष्ठानम् । यत्तु कर्म स्वशाखायां न विहितं स्वशाखाविहिताविरुद्धञ्च तत् पारशाखिकमप्यनुष्ठेयमिति सिध्यति ।

परिशिष्टवचने स्वशाखेति । यः । दुर्मेधाः=शास्त्रज्ञानविपरीतज्ञानवान् । स्वशाखाऽऽश्रयमुत्सृज्य=स्वशाखाविहितं कर्म परित्यज्य । परशाखऽऽश्रयञ्च परशाखाविहितञ्च कर्म । कर्त्तुमिच्छति = अनुतिष्ठति । तस्य । यत्कृतम् = यत्सम्पादितं कर्म । तत्। मोघम् = व्यर्थं भवति । स्वशाखायां यत्कर्म न । आम्नातम् = कथितम् । पारक्यम् = परकीयशाखायामुल्लिखितम् । अविरोधि -अविरुद्धञ्च । यत् । तत्-कर्म । विद्वद्भिः =अनुष्ठातृभिः । अनुष्ठेयम् = आचरणीयम् । अग्निहोत्रादिकर्मवत् । हवनविशेषादिकर्माचरणवत् । अत्र ''अग्निहोत्रं यजुर्वेदशाखाविहितं छन्दोगादिभिरनुष्ठीयते । यथा वा मात्रादितर्पणं कात्यायनानुक्तं गोभिलोक्तं माध्यन्दिनैः क्रियते इति स्मृतिपरिभाषायां विशेष'' इति नित्यकृत्यार्णवः ।

[ हिन्दी टीका ]

समस्त यजुर्वेदी को स्वगृह्योक्त वैश्वदेव का ही अनुष्ठान करना चाहिए ऐसा कहने वाले ग्रन्थकार के मत में ''वैश्वदेवं प्रकुर्वीत'' यह व्यासवचन प्रमाण है तो ''केचित्'' मत में ''सर्वशाखाप्रत्ययम्'' आदि न्याय है । फलतः प्रबल प्रमाण के अभाव में उभय पक्ष समान ही हो गया - इस अरुचि पर कहा गया है—किञ्च यद्यपि इत्यादि ।

उक्त रीति से ठोस निर्णय की गुञ्जाइस न होने पर भी अग्रिम छन्दोगपरिशिष्ट के वचनानुसार सिद्धान्त सिद्ध होता है कि 'स्वशाखा विहित कर्म को छोड़ कर पर-शाखा विहित कर्म का अनुष्ठान नहीं करना चाहिए। साथ ही जो कर्म अपनी शाखा में नहीं कहा गया हो तथा अपनी शाखा में कहे गए कर्म से विरुद्ध न हो तो वह दूसरा शाखा वासलों के लिये भी अनुष्ठान करने योग्य है।

छन्दोग परिशिष्ट वचन का अर्थ है कि "शास्त्रज्ञान विपरीत ज्ञानी जो जन स्वशाखाविहित कर्म को छोड़कर परशाखीय कर्म का अनुष्ठान करता है उकसा किया हुआ वह कर्म निष्फल हो जाता है। जो कर्म अपनी शाखा में नहीं कहा गया हो तथा अपनी शाखा में कहे गए कर्म से विरुद्ध न हो तो विद्वान् लोग (अनुष्ठानकर्त्ता) हवन आदि कर्म के जैसे उस कर्म का भी अनुष्ठान कर लें।" अर्थात् यजुर्वेदशाखा में कथित अग्निहोत्र का छन्दोग आदि अनुष्ठान करते हैं तो कात्यायन के द्वारा अनुक्त भी किन्तु गोभिल प्रोक्त माता आदि का तर्पण माध्यन्दिन यजुर्वेदी लोग करते हैं।

### [ मूलम् ]

शाखोक्तोऽयं विशेषः। गृह्योक्तोऽयमिति चेन्न। स्वशाखाऽऽश्रयमिति स्वशाखाऽनुगतमात्रस्य विवक्षितत्वात्।

**बह्वल्पं वा स्वगृह्योक्तं यस्य यत्कर्म[1] कीर्त्तितम्।**
**तस्य तावति शास्त्रार्थे कृते सर्वं कृतं[2] भवेत् "॥**

इति गृह्यपरिशिष्टे, तत्रापि विशेष-विधानाच्च। तस्मान्निरग्निवाजसनेयिनामपि स्वगृह्योक्त एव कल्प इति।

### [ संस्कृत टीका ]

शाखोक्त इति। अयं विशेषः = इदानीं सिद्धान्तरूपेण प्रतिपादितो विशेषः। शाखोक्तः = शाखा-विषयमधिकृत्य कथितः। अयम् = अनुष्ठेयबलिवैश्वदेवस्तु। गृह्योक्तः = पारस्करगृह्य (ग्रन्थ) प्रतिपादितः। फलतः शाखाविषयकविशेषेण गृह्यविषयकविशेषे कथं कोऽपि निर्णयः कर्त्तुं शक्यते इति चेन्न। स्वशाखांऽऽश्रयशब्देन शाखाऽनुगतमात्रस्य विवक्षितत्वात् = तत्तच्छाखा-सम्बद्ध-सकल (ग्रन्थ) प्रतिपाद्यमात्रस्य विवक्षणात्।

---

पा० (१) यस्य कर्म प्रकीर्त्तितम्। (२) सर्वः कृतः।

बह्वल्पमिति । यस्य=यच्छाखीयानुष्ठातुः । बहु अल्पं वा अधिकं न्यूनं वा । स्वगृह्योक्तम्=स्वकीय गृह्यकथितम् । यत्कर्म । कीर्त्तितम्=करणाय निश्चितम्। तस्य-जनस्य । तावति शास्त्रार्थे कृते=तत्तच्छाखाऽनुगतशास्त्रबोध्यार्थे बुद्धे सति । सर्वम्=सम्पादितं सकलं कर्म । कृतम्=परिपूर्णं भवेदित्यर्थकगृह्य-परिशिष्टवचने । तत्रापि=गृह्योक्त-शाखोक्तयोर्विषयेऽपि । विशेष-विधानात्=विशेषतः कथनाच्च । तस्मात्=तथा विवक्षणाद् विशेषतो विधानाच्च । निरग्निवाजसनेयिनामपि= निरग्नियजुर्वेदिगृहस्थानामपि । अपिपदात्साग्निनाञ्चेति बोध्यम् । स्वगृह्योक्त एव=इदानीमुक्त-पारस्करगृह्य-प्रतिपादित एव । कल्पः= बलिवैश्वदेव विधिः । इति शब्दोऽत्र स्वप्रदर्शित-सिद्धान्त-प्रतिपादनार्थो बोध्यः।

## [ हिन्दी टीका ]

छन्दोग परिशिष्ट वचन के आधार पर अभी कहा गया विशेष तो शाखा प्रसंगी है । प्रकृत में प्रश्न है-निरग्नि वाजसनेयी के लिए स्वगृह्योक्त बलिवैश्वदेव हो या न हीं? फलतः इस प्रसंग पर वह विशेष कैसे लागू हो सकता है-यह प्रसंग उठाकर ग्रन्थकार ने समासाधन किया है कि उक्त वचन में पठित ''स्वशाखाऽऽश्रय'' शब्द तत्तत् शाखासम्बद्ध सकल (ग्रन्थके) प्रतिपादय कर्म रूप अर्थ का बोधक है । अतः अब शाखा और गृह्यवाली बात ले कर कोई झगड़ा नहीं । क्योंकि ''जिस अनुष्ठाता के लिए अपने गृह्य में बहुत या कम कर्म करने कों निश्चित किया गया हो, उसका वह किया गया कर्म शाखाऽनुगत सकल शास्त्र से प्रतिपादित रूप में समझने पर ही सफल होता है'' इस गृह्य परिशिष्ट के विशेष कथनानुसार भी निरग्नि या साग्निक सभी वाजसनेयी के लिए स्वपारस्कर गृह्य से कथित ही बलिवैश्वदेव होगा, यह सिद्धान्त हुआ ।

## [ मूलम् ]

**मणिकस्य उदपात्रस्य च लौकिकत्वादनग्निनाऽप्युपादानमस्तु ।**

## संस्कृत टीका

मणिकस्येति । ''मणिके त्रीनि'' त्यादिना यदुक्तं पूर्वपक्षिणा तत्समा-धानमाह-मणिकस्येति । मणिकस्य=एकदैव सर्वदाऽर्थं साग्निना स्थापितस्य

संस्कृतोदकुम्भस्य । उदपात्रस्य = उदकपूर्णकुम्भस्य च । लौकिकत्वात् = लोकनिष्पाद्यत्वात् । अनिग्निनापि = निरग्निवाजसनेयिनाऽपि । उपासनमस्तु = ग्रहणं भवतु । उभयो र्णवैकल्पिकत्वेनान्यतर कलशेन निरग्निवाजसनेयिनाऽपि स्वगृह्योक्तवैश्वदेवाचरणे न काऽपि क्षतिरिति मन्तव्यम् । मणिकस्यापि लौकिकत्वात्तद्ग्रहणस्यापि सम्भवात् ।

[हिन्दी टीका]

''मणिके त्रीन्'' इसवचन के आधार पर पूर्वपक्षी ने जो समाधान किया था, उसके खण्डन में ग्रन्थकार का कहना है कि मणिक साग्निकके द्वारा एक ही बार सदैव के लिए स्थापित होने वाला जलपूर्ण संस्कृत कलश तथा उदपात्र (निरग्नि के द्वारा प्रतिदिन स्थापित होने वाला जलपूर्ण कलश) दोनों ही लौकिक (लोककृत) है । अतः इनमें से किसी से भी स्वगृह्य के अनुसार निरग्नि वाजसनेयी को वैश्वदेव का अनुष्ठान करने में कोई क्षति नहीं । वास्तव में देखा जाय तो 'मणिक' लौकिक वस्तु है । अतः इस का भी ग्रहण होना अनुचित नहीं कहा जा सकता है ।

## [ मूलम् ]

अनग्निपक्षे वा उदकुम्भ एवाऽस्तु । ''अद्भ्य उदकुम्भे'' इति गौतमाभिधानात् ।

[ संस्कृत टीका ]

अनग्नीति । मणिकस्योदपात्रस्य च वैकल्पिकत्वे प्रमाणाभावान्निरग्नेः मणिकासम्भवाच्च कथं पूर्वोक्त समाधानं समीचीनं स्यादित्यत आह–अनग्नीति । वा=अथवा । अनग्निपक्षे=निरग्निवाजसनेयिनः कृते । उदकुम्भ एव= जलपूर्णकलशमणिकः स्थानीयोऽस्तु । बलिवैश्वदेव प्रकरणस्थ ''अद्भ्यः उदकुम्भे'' इति गौतमवचनेन जलपूर्ण कलशस्य विधानात् ।

[ हिन्दी टीका ]

मणिक तथा जलपूर्ण कलश में विकल्प मानने में कोई प्रबल प्रमाण नहीं एवं निरग्निवाजसनेयी के द्वारा मणिक का स्थापन सम्भव नहीं, अतः दूसरा समाधान किया जाता है कि अथवा अद्भ्यः उदकुम्भे (जलपूर्ण कलश के समीप जल से बलि हरण करे) इस गौतम वचन के अनुसार निरग्निक वाजसनेयी के लिए जलपूर्ण कलश ही

माना जाय । फलतः वह निरग्नि जलपूर्ण कलश के ही समीप स्वगृह्योक्त बलिवैश्वदेव करे यह भावार्थ हुआ ।

[मूलम्]

उदपात्रमात्रोपलक्षकं वा मणिकापदम् । उदपात्रसन्निधावित्यापस्तम्ब-वचनात् ।

[ संस्कृत टीका ]

उदपात्रेति । भवतु नाम गौतमवचनेनोदकुम्भस्यापि विधानात् । नैतावताऽपि निरनग्नेः स्वगृह्योक्त वैश्वदेवविधिः सम्भवति । गृह्यवाक्ये "मणिके त्रीनि" ति श्रवणात्, मणिकस्य च निरग्नेः सम्भवादित्यरुचेराह-उदपात्रेति। मणिकपदम्=गृह्योक्तं मणिक पदम् । उदपात्रमात्रोपलक्षणम् = जलपूर्णकल-शमात्रबोधकम् नतु संस्कृतोदकुम्भपरमेवेति भावः । "उदपात्रसन्निधौ नवमेने" त्यापस्तम्बवचनैकवाक्यत्वात् । उक्तगौतमवाक्यैकवाक्यत्वाच्च ।

नन्वेवमपि पूर्वपक्षिणा उपात्तस्य अग्न्यादि गौतमेनेत्यादि-छन्दोगपरिशिष्ट-वचनस्य अग्निपुराण-योगिय़ाज्ञवल्क्यवसिष्ठवचनस्य च कथमत्र सिद्धान्त-पक्षे समन्वय इति चेन्न । छन्दोग-परिशिष्ट-वचनस्य छन्दोग-मात्राविषयकत्व बोधनात् । तत्संवादादग्नि पुराणादिवचनस्यापि तत्परत्वाच्च । एवमेव वीर-मित्रोदयोऽपि ।

[ हिन्दी टीका ]

उक्त गौतम वचनानुसार उदकुम्भ (जलपूर्ण कलश) का विधान होने पर भी निरग्निक को स्व गृह्योक्त वैश्व देव विधि कैसे संभव हो सकेगा ? क्योंकि गृह्यवचन में "मणिके त्रीन्" कहा गया है और निरग्निक को मणिक होता नहीं-इस अरुचि पर कहा गया है-'उदपात्र' आदि ।

उक्त 'मणिक' पद उदकपूर्ण कुम्भमात्र का बोधक है नकि केवल उदकपूर्ण संस्कृत कुम्भ का ही । जैसा कि आपस्तम्ब का भी वचन है-"नौवाँ बलि हरण जल पूर्ण कुम्भ के सन्निधि में हो" । फलतः इस आपस्तम्ब तथा पूर्वोक्त गौतमवचन के साथ एकवाक्यता करने पर 'मणिक' पद का अर्थ सामान्यतः जलपूर्ण कलस ही होगा । अब ऐसा सामान्य कलस निरग्नि एवं साग्निक दोनों वाजसनेयियों को होगा । अतः स्वगृह्योक्त बलिवैश्वदेवविधि भी दोनों को समान रूप से ही सम्पन्न होगा ।

इतना होने पर भी पूर्वपक्षी द्वारा प्रदर्शित 'अग्न्यादिर्गौतमेनोक्तः' इत्यादि छन्दोगपरिशिष्ट वचन एवं वसिष्ठ वचन का समन्वय इस सिद्धान्त में कैसे होगा ? इस प्रश्न का उत्तर होगा कि छन्दोग परिशिष्ट का वचन केवल छन्दोगों (सामवेदियों) के लिए है और इस वचन के साथ एकवाक्यता होने पर अग्नि पुराण आदि का वचन भी केवल छन्दोगों के कर्म का बोधक माना जायगा । ऐसा ही मन्तव्य वीरमित्रोदय का भी है ।

[ मूलम् ]

**नच प्रापकाभावः, सामान्यविधेरेव प्रापकत्वात् ।**

[ संस्कृत टीका ]

नचेति । ननु गौतमापस्तम्बयोर्वचनबलाद् मणिकपदस्योदपात्रमात्रोपलक्षकत्वाभावपक्षे मणिकपदस्य रूढ्यर्थ (जलपूर्ण कलस) मात्रबोधनपक्षे वा, अथवा

**वैवाहिकेऽग्नौ कुर्वीत गृह्यं कर्म यथाविधि ।**
**पञ्चयज्ञविधानञ्च पक्तिञ्चान्वाहिकीं गृही ॥**

इति मनु ( ३।६७ ) वचनस्य सत्वे निरग्निवाजसनेयिनां स्वगृह्योक्ते वैश्वदेवकर्मणि कथं प्रवृत्तिः ? प्रापक (प्राप्तिकारक)-वचनाभावादिति मनसि शङ्कां निधायाह-प्रापकाभाव इति । प्रापकाभाव इत्यनन्तरम्-इति वाच्यमिति शेषः । समाधत्ते सामान्येति । सामांन्यविधेरेव= ''ततः पञ्च महायज्ञान् कुर्यादहरहर्द्विजः'' इत्याद्यनुपदोच्यमानसंवर्तादिवचनस्यैव । प्रापकत्वात्=प्राप्तिकारकत्वात् । अतएव ''नच वैश्वदेवपदस्य निरग्निवाजसनेये प्राप्त्यभावः। सामान्यविधिनैव प्राप्तत्वादि'' त्याचारचिन्तामणिरपि । अतएव चैतत्संवर्तवचनमुपक्रम्य ''तस्मान्निरग्निवाजसनेयिनामपि स्वगृह्यानुसारेणैव वैश्वदेवकर्म कार्यम् । पर्जन्यादिबलयस्तूदपात्रं प्रतिष्ठाप्य तत्सन्निधौ देया इति परमार्थ'' इत्याचारचिन्तामणिः । आचारादर्शाचारविवेकावप्येवमाहतुः । आचारद्वैतविवेकोऽप्येवमेवाहे'' ति नित्यकृत्यार्णवः ।

[ हिन्दी टीका ]

इतना शंकासमाधान होने पर भी गौतम आपस्तम्ब के वचनों के आधार से भी मणिक पद को जलपूर्ण कलश मात्र के उपलक्षक न मानने का पक्ष अथवा मणिक पद

का रूढ्यर्थ-जलपूर्ण कलस को अवश्य स्वीकर्तव्य पक्ष हो अथवा मनुवचन (३/६७) के अनुसार वैवाहिक (आवसथ्य) अग्नि में वैश्वदेव होम करने का विधान निर्देशित किया गया है। फलतः प्रकृत में निरग्निवाजसनेयी के पास वह अग्नि तो रहता नहीं, फिर इन्हें स्वगृह्योक्त वैश्वदेव होमादि के अनुष्ठान में प्रवृत्ति कैसे हो सकेगी ? ऐसी पृष्ठभूमि में सिद्धान्त पक्षपर आक्षेप किया जाता है कि बेचारे निरग्नि वाजसनेयियों के लिए स्व गृह्योक्त वैश्वदेवानुष्ठान की प्राप्ति नहीं होगी क्योंकि वैश्व-देव के प्रापक (प्राप्तिकारक) कोई वचन तो है नहीं। इसके उत्तर में सिद्धान्त पक्ष का कहना है कि अभी-अभी आगे कहे जानेवाले संवर्त आदि के वचनानुसार निरग्नि वाजसनेयियों को भी निर्विघ्न वैश्व देवानुष्ठान हो जायगा। (इस वचन की पूरी व्याख्या वहीं देखे)। इस प्रसंग पर नित्यकृत्यार्णव निबन्ध के अनुसार आचार-चिन्तामणि, आचार विवेक तथा आचार द्वैतविवेक निबन्धों का भी ऐसा ही कहना है।

[ मूलम् ]

तथाचोद्वाहानन्तरं संवर्ततः-

ततः पञ्चमहायज्ञान् कुर्यादहरहर्द्विजः।
न हापयेत तान् प्राज्ञः श्रूयन्ते हि श्रुतावपि ॥

[ संस्कृत टीका ]

तथाचेति। तथाच=निरग्निसाग्निवाजसनेयिनः कृते स्वगृह्योक्त-वैश्व-देवकर्मणो निर्णये सति। उद्वाहानन्तरम्=विवाहानन्तरम्। ततः=विवाहानन्तरम्। प्राज्ञः द्विजः=विज्ञः कर्मानुष्ठाता। अहरहः=प्रतिदिनम्। प्रकृतान् पञ्चमहायज्ञान् कुर्यात्। कदाचिदपि न, हापयेत=त्यजेत्। स्वार्थेऽत्र णिच्। छान्दसश्चात्मनेपदम्। हि=यतः। श्रुतावपि=वेदेऽपि। अपिपदात् स्मृत्यादिसंग्रहः। श्रूयन्ते-ते पञ्चमहायज्ञा इति शेषः।

[ हिन्दी टीका ]

विवाह प्रकरण के बाद संवर्त का कथन है कि विज्ञ कर्मानुष्ठाता को प्रतिदिन पञ्च महायज्ञ का अनुष्ठान करना चाहिए। कभी भी न छोड़े। क्योंकि श्रुति-स्मृति आदि सभी प्रमाण ग्रन्थों में यह कहा गया है।

# पञ्चमहायज्ञाः

## [ मूलम् ]

शतपथश्रुतिः—

**पञ्चैव महायज्ञाः । तान्येव महासत्राणि । भूतयज्ञः, मनुष्ययज्ञः, पितृयज्ञः, देवयज्ञः, ब्रह्मयज्ञ इति ॥ १ ॥**

**अहरहर्भूतेभ्यो बलिं हरेत् । तथैतं भूतयज्ञं समाप्नोति । अहरहर्दद्यादोदपात्रात्। तथैनं मनुष्ययज्ञं समाप्नोति । अहरहः स्वाहा कुर्यादोदपात्रात् । तथैनं पितृयज्ञं समाप्नोति । अहरहः स्वाहा कुर्यादाकाष्ठात् । तथैनं देवयज्ञं समाप्नोति ॥ २ ॥**

**अथ ब्रह्मयज्ञः । स्वाध्यायो वै ब्रह्मयज्ञः । तस्य वा एतस्य ब्रह्मयज्ञस्य वागेव जुहूः । मन उपभृत् । चक्षुर्ध्रुवा । मेधा स्रुवः । सत्यमवभृथः । सत्यो लोक उदयनम् । यावन्तं ह वा इमां पृथिवीं वित्तेन पूर्णां ददत् लोकं जयति । त्रिस्तावन्तं जयति-भूयांसं वा चाक्षय्यम् । य एवं विद्वानहरहः स्वाध्यायमधीते । तस्मात्स्वाध्यायोऽध्येतव्यः ॥ ३ ॥**

## [संस्कृत टीका]

पञ्चैवेति । श्रुतेरस्याः शाङ्करभाष्यं यथा-

"अथ सत्रप्रसङ्गाद् यावज्जीमनुष्ठेयान् पञ्चमहायज्ञान् महासत्रत्वेन निरूपयितुं प्रस्तौति-पञ्चैव महायज्ञा इति । भूतयज्ञादयो वक्ष्यमाणाः पञ्चैव महायज्ञाः सर्वदा सर्वैरनुष्ठेयत्वात् । न केवलं तेषां महायज्ञत्वमात्रम्, अपितु महासत्रत्वमेवेति विशिनष्टि-तान्येवेति । महान्ति=निश्चलानि, सत्राणि महासत्राणि, यावज्जीवमनुष्ठेयत्वादृत्विगनपेक्षत्वाच्च । तान्येवेति विधेयापेक्षया नपुंसक-निर्देशः । अथ तान् यज्ञाननुदिशति भूतयज्ञ इति। भूतानां तृप्तिकरो यज्ञः भूतयज्ञः । एवं मनुष्यय ज्ञादावपि । ब्रह्मणो=वेदस्याध्ययनं ब्रह्मयज्ञः । तस्य च देवर्षिपितृगणतृप्तिकरत्वात् यज्ञत्वम् ॥ १ ॥

भूतयज्ञस्य स्वरूपमाह-अहरहर्भूतेभ्यः इति । "इदं भूतेभ्यः" इति सङ्कल्प्य प्रत्यहं यत् भूतेभ्यः बलिहरणम् तथा तेनैव बलिहरणेन, एतम्=उक्तं,

'भूतयज्ञं' सम्यक् पुरुषः 'प्राप्नोति'। भूतानिउद्दिश्य बलिहरणमेव भूतयज्ञ इत्यर्थः। एवमुत्तरत्रापि योज्यम्। अथ मनुष्ययज्ञस्य स्वरूपमाह- अहरहर्दद्यादिति। मनुष्यानुद्दिश्य, 'आ उदपात्रात्'-उदकपूरितं पात्रम् उदपात्रम्। उदकपात्रावधि यदोदनादिकं दद्यात् स मनुष्ययज्ञ इत्यर्थः। पितृयज्ञस्य स्वरूपमाह-अहरहः स्वधा कुर्यादिति। पितॄनुद्दिश्य प्रत्यहं स्वधाकारेणान्नादिकमुदपात्र-पर्यन्तं दद्यादिति यत्स पितृयज्ञ इत्यर्थः। देवयज्ञं लक्षयति-अहरहः स्वाहा कुर्यादिति। प्रत्यहं स्वाहाकारेण देवानुद्दिश्य यत्काष्ठपर्यन्तं हविर्दद्यात्, तेनैतं देवयज्ञमाप्नोति ॥ २ ॥

इत्थं प्रत्यहमनुष्ठेयान् चतुरो महायज्ञान् संग्रहेण प्रतिपाद्य तदुत्तरं बहुवक्तव्यत्वात् ब्रह्मयज्ञं प्रपञ्चयितुं प्रस्तौति-अथ ब्रह्मयज्ञ इति। इतः परं ब्रह्मयज्ञोऽधिक्रियते इत्यर्थः। तस्य स्वरूपमाह-स्वाध्यायो वै ब्रह्मयज्ञ इति। स्वशाखाऽध्ययनं ब्रह्मयज्ञ इत्यर्थः। यज्ञसाम्यं सम्पादयति-तस्य वा एतस्येति। तस्य स्वशाखाध्ययनात्मकस्यैव एतस्य ब्रह्मयज्ञस्य वागिन्द्रियमेव जुहूः। तस्या वाचोऽधिष्ठानरूपं यन्मनः सा उपभृत्। मनसा संस्मृतमर्थं हि वाचा व्याहरति। यद्दर्शनसाधनं चक्षुरिन्द्रियं तदेव कृत्स्नयज्ञनिर्वर्तकहविर्धारणार्था ध्रुवा। चक्षुषा दृष्टमर्थं हि मनसा स्मरति। अत्र उपजीव्यत्वात्तस्य ध्रुवारूपत्वम्। मेधा स्रुवः। मेधा=धारणासामर्थ्यं सैव स्रुवः। यत्सत्यं-सत्यवदनं स एव तस्य यज्ञस्यावभृथः। स्वाध्यायेन प्राप्तव्यः फलभूतो यः स्वर्गलोकः तदुदयनं-तस्य यज्ञस्य समापनं न तु प्रधानफलम्.। इत्थं यज्ञात्मना निरूपयित्वा तस्य प्रधानफलमाह- यावन्तमिति। वित्तेन-धनेन, पूर्णाम्-कृत्स्नां पृथिवीं ब्राह्मणेभ्यः प्रयच्छन्, यावन्तं-यत्परिमाणं लोकं जयति, ब्रह्मयज्ञयाजी तु त्रिस्तावन्तं=त्रिवृत्परिमाणं लोकं जयति। ततोऽपि भूयांसमधिकतरम् अक्षय्यम् क्षेतुमशक्यं-क्षयरहितं लोकं प्राप्नोति। एवं विद्वानिति वागादेर्जुह्वादिसम्पत्तिपुरस्सरं वेदाध्ययनस्य यज्ञरूपतां जानन्नित्यर्थः। इत्थं प्रेक्षावत्प्रवृत्तिप्रयोजनकं फलं प्रतिपाद्य तद्धेतुभूत मध्ययनं विधत्ते- तस्मात्स्वाध्याय इति। यस्मादेवं ब्रह्मयज्ञस्वाध्यायस्यैतावत् फलम् तस्मात्स्वाध्यायः अध्ययनेन गुरुमुखादवगन्तव्यः।

अध्ययनसंस्कार-संस्कृतो हि तावत्फलं साधयितुं शक्नोति, न तु प्रकारान्तरादागत इति विधेरभिप्रायः ।

## [ हिन्दी टीका ]

मूल शतपथश्रुति के संस्कृत व्याख्या रूप से उल्लिखित शाङ्कर भाष्टा का सांराश है कि वक्ष्यमाण पञ्चमहायज्ञ 'यज्ञमात्र ही नहीं अपितु महान्=निश्चल सत्र भी है [अर्थात्-सत्रमाच्छादने यज्ञे सदादाने वनेऽपि च (३।३।१८१) इस अमरकोश के अनुसार ये सदावर्तरूप भी है] जिससे संसार के समस्त प्राणियों के कल्याण निमित्त दैनिक दान होने के कारण परम कल्याणकारी है । वस्तुतः देखा जाय तो इज्यते=हविर्दीयतेऽत्र, इज्यन्ते देवतापित्रादयो यत्र वा यज्+नङ् इस वैकल्पिक व्युत्पत्ति के अनुसार 'जिस कर्म में विहित आधार के माध्यम से देवपितर आदि के निमित्त हविष्य का प्रदान किया जाय वह यज्ञ कहलाता है, जो प्रतिदिन कुछ ही समय में भी किया जा सकता है । यथा; अभी-अभी कहे गये प्रकृत पञ्च (महा) यज्ञ आदि हैं । किन्तु नियतसमयावधिक यज्ञविशेष सत्र शब्द से सम्बोधित किया जाता है । कात्यायनश्रौत सूत्र, श्रीमद्भागवत, शब्दकल्पद्रुम, संस्कृत शब्दार्थ कौस्तुभ आदि के अनुसार तीन दिन में सम्पन्न होंने वाला ज्योतिष्टोमयज्ञ (का काल) जो १२ दिनों के भीतर १२ सौ गोदक्षिणा एवं १६ ऋत्विजों के द्वारा पूरा होता है, दर्शपौर्णमासयज्ञ (का काल) जो एक माह में सम्पन्न होता है, सोमयज्ञ (का काल) जो १३ से १००० एक हजार वर्ष पर्यन्त निरन्तर चलनेंवाले यज्ञ सत्र कहलाते है । इसी हेतु चन्द्रालोककार पीयूषवर्ष जयदेव ने भी अपने वंश परिचय में कहा है- 'महादेवः सत्रप्रमुखमखविद्यैक-चतुरः, आदि क्योंकि ये जीवन पर्यन्त अनुष्ठेय होने के साथ ही इनमें ऋत्विजों की अपेक्षा नहीं होती ।

[साधारणतया प्रत्येक यज्ञ में चार ऋत्विज् हुआ करते हैं । यथा (१) होता, (२) उद्गाता, (३) अध्वर्यु, (४) तथा ब्रह्मा । किन्तु बड़े यज्ञ में इनकी संख्या १६ होती हैं । उक्त चारों का संक्षिप्त परिचय है-

(१) होता - (हु + तृच्) हवन करने वाला, ऋत्विक् या यज्ञकर्त्ता ।

(२) उद्गाता- (उद् + गै + तृच्) यज्ञ में सामगान करने वाला ऋत्विक् ।

(३) अध्वर्यु- (अध्वर+ क्यच् + डु) यज्ञ कराने वाला ऋत्विक् - यजुर्वेद का ज्ञाता पुरोहित ।

(४) ब्रह्मा-ब्रह्मविद्या जानने वाला कृताकृतवेक्षक ऋत्विक् ।

इसी तरह ऋत्विज् (क्) पद की (ऋतौ यजते इति ऋतु + यज् + क्विन्) व्युत्पत्ति के अनुसार अर्थ है यज्ञ करने वाला।

यज्ञ की अपेक्षा इन्हें सत्र मानने की युक्ति है कि विवाह के बाद जीवन पर्यन्त (लम्बी अवधि तक अनुष्ठेय यज्ञ या सत्र पद के विशेषण रूप से पठित 'महा' पद का तात्पर्य यह है कि अन्य यज्ञ या सत्र के जैसे इनमें ऋत्विजों की अपेक्षा नहीं होती, ना हीं ये कभी भी त्याज्य हैं। अपितु नित्य कर्म होने के कारण निश्चित हैं अर्थात् अवश्य अनुष्ठेय हैं।

प्रतीत होता है कि इसी 'सत्र' शब्द के आधार से शिक्षालय या कार्यालयों में समय विशेष या पूरे १ वर्ष को सत्र शब्द से सम्बोधित किया जाता है।]

ये (१) भूतयज्ञ, (२) मनुष्ययज्ञ, (३) पितृयज्ञ, (४) देवयज्ञ, (५) और ब्रह्मयज्ञ के भेद से पाँच प्रकार के हैं।

भूतों का तृप्तिकर होने के कारण 'भूतयज्ञ' नामकरण हुआ। इसी तरह मनुष्य यज्ञ आदि भी ज्ञातव्य है। ब्रह्म अर्थात् वेद का अध्ययन रूप 'ब्रह्मयज्ञ' कहलाता है। देव, ऋषि एवं पितृगण के तृप्तिकारी होने के कारण यह (अध्ययन) यज्ञ कहलाता है। ॥ १ ॥

अब भूतयज्ञ का स्वरूप कहा जाता है–

(१) "इदं भूतेभ्यः" ऐसा सङ्कल्प कर भूतों के उद्देश्य से प्रतिदिन किया गया बलि हरण 'भूतयज्ञ' कहलाता है।

(२) प्रतिदिन मनुष्यों को उद्देश्य कर जलपूर्ण पात्र तथा अन्न आदि देना 'मनुष्य यज्ञ' है।

(३) पितरों को उद्देश्य कर प्रतिदिन स्वधा शब्द के साथ अन्न आदि सहित जलपूर्ण पात्र देना 'पितृयज्ञ' है।

(४) देवों को उद्देश्य कर प्रतिदिन स्वाहा शब्द के साथ अन्ततः काष्ठ (लकड़ी) से भी हवन करना 'देवयज्ञ' है

इस तरह प्रतिदिन अनुष्ठेय चार महायज्ञ कह कर विशेष रूप से ब्रह्मयज्ञ प्रतिपादन के निमित्त कहा गया है अथ ब्रह्यज्ञः।

(५) अपने वेद की शाखा का अध्ययन 'ब्रह्म यज्ञ' है।

यज्ञ की समता दिखाने हेतु कहा गया है "तस्य वा एतस्य" आदि। यथा, स्ववैदिक शाखा के अध्ययन रूप इस ब्रह्मयज्ञ का वाणीरूप इन्द्रिय ही 'जुहू' (लकड़ी का बना एक अर्धचन्द्राकार यज्ञपात्र) है–उस वाणी के अधिष्ठान रूप मन ही उपभृत्

(बरगद की लकड़ी का बंना एक यज्ञपात्र विशेष) है क्योंकि मन से संस्मृत अर्थ का वाणी द्वारा प्रकाशन होता है। दर्शन साधन चक्षुरिन्द्रिय ही 'ध्रुवा' (सम्पूर्ण यज्ञ में पूर्त्ति करने वाले घृत का यज्ञिय बृहत्पात्र) है क्योंकि चक्षुसे दृष्ट अर्थ का मन के द्वारा स्मरण होता है। यहाँ चक्षुरिन्द्रिय ही सारे यज्ञ का सञ्चालक (उपजीवक) होने के कारण ध्रुवा रूप से कहा गया है'। धारण-सामर्थ्य रूप मेधा ही (धी र्धारणावती मेघा-अमरकोश)स्रुव (लकड़ी की बनी हुई एक प्रकार की छोटी करछी जिससे घी की आहुति दी जाती ) है। सत्यवचन (सच बोलना)ही उस यज्ञ का अवभृथ (यज्ञान्त स्नान) है। वेदाध्ययन से प्राप्तव्य फलभूत स्वर्गलोक ही उस यज्ञ का समापन (उदयन) है किन्तु यह प्रधान फल नहीं। प्रधान फल तो यह है कि ब्राह्मणों का धन से पूर्ण पृथ्वी का दान कर जितने बड़े लोक को पाता है, इससे तिगुने लोक को ब्रह्मयज्ञयाजी जन पाता है। इतना ही नहीं, (अपितु ) इससे भी बहुबृहत् अविनाशी (अक्षय्य) लोक को पाता है।

वाणी आदि रूप जुहू आदि के द्वारा सम्पादनीय वेदाध्ययन रूप यज्ञ को जानता हुआ विद्वान प्रतिदिन वेदाध्ययन करता है। जिस कारण ब्रह्मयज्ञ रूप स्वाध्याय [स्वाध्यायः स्याज्जपः (२।७।४७) इस अमरकोश के अनुसार वेदाध्ययन-] का इतना फल है, इसलिए गुरुमुख से अध्ययन-वेद एवं तदर्थ ज्ञान-करना चाहिए। फलतः अध्ययन संस्कार से संस्कृत स्वाध्याय-वेदाध्ययन-इतने बड़े फल की सिद्धि कर सकता है, अन्य प्रकार का नहीं।

(इस प्रंसग पर इससे अधिक के लिए पूर्व में वर्णित ब्रह्मयज्ञ प्रकरण का अवलोकन करें)।

[ मूलम् ]

मनुः-

पञ्च सूना गृहस्थस्य चुल्ली पेषण्युपस्कर:[१] ।
कण्डनी चोदकुम्भश्च बध्यते यास्तु वाहयन् ॥ १ ॥
तासां क्रमेण सर्वासां निष्कृत्त्यर्थं महात्मभिः ।
पञ्च क्लृप्ता महायज्ञाः प्रत्यहं गृहमेधिनाम् ॥ २ ॥

पा० (१) उपस्कराः। (२) महर्षिभिः।

अध्यापनं ब्रह्मयज्ञः, पितृयज्ञस्तु तर्पणम् ।
होमो दैवो, बलिर्भौतो, नृयज्ञोऽतिथि पूजनम् ॥ ३ ॥†

सूना=प्राणिवध-स्थानम् । उपस्करः=सम्मार्जनी । गृहोपस्करं भाण्डकुण्डादीत्यपरे[1] । बध्यते-हस्ती त्यर्थे, आर्षत्वात् । अथवा बध्यते=हिंसाजन्यदुरितेन संबध्यते । हन्यते वेत्यर्थः । वाहयन्=प्रवर्तयन् । तासामित्यादिना एतत्पापक्षयार्थं पञ्च महायज्ञा इत्युक्तम्[2]। एतच्चार्थवादमात्रं श्रुतावहरहः श्रुतेर्जीवदधिकारावगमात् । अत्रापि प्रत्यहमिति श्रवणाच्च ।

[संस्कृत टीका]

पञ्चेति । अत्र "कीटादीनां ध्मापनेन चुह्ली । पेषणेन पतितप्राणिबधादिना पेषणी । क्षेपणादिना मार्जनी । अवहननेन कण्डनी । सकीटजलहरणेनोदककुम्भश्च । एते पञ्च गृहस्थस्य सूनाः=सूना सदृशाः । वधजन्य-दोष-हेतुत्वात् । अत एतान् वाहयन्=व्यापारयन्, सूनादोषैः संबध्यते इत्यर्थः" इत्याचार-चिन्तामणिः ।

मनुवचनानामेषां मन्वर्थ-मुक्तावली यथा-

पञ्चेति । पशुवधस्थानं सूना । सूना इव सूना हिंसा-स्थान-गुण-योगाच्चुल्ल्यादयः पञ्च गृहस्थस्य हिंसाबीजानि हिंसास्थानानि । चुल्ली=उद्वाहिनी, पेषणी= दृषदुपलात्मिका, उपस्करो=गृहोपकरण-कुण्ड-संमार्जन्यादिः, कण्डनी=उलूखल मुसले, उदकुम्भो=जलाधारकलशः । ताः स्वकार्ये योजयन्पापेन सम्बध्यते ॥१॥

तासामिति । तासाम्=चुल्ल्यादिस्थानानाम् । यथाक्रमं, निष्कृत्त्यर्थम्=उत्पन्नपापनाशार्थं, गृहस्थानां पञ्च महायज्ञाः प्रतिदिनं मन्वादिभिरनुष्ठेयतया स्मृताः । एवञ्च निष्कृत्यर्थमित्यभिधानाद्धिंसास्थानत्वेन च कीर्त्तनात्, 'सूनादोषैर्न लिप्यते' (३।७१) इति वक्ष्यमाणत्वात्पञ्चसूनानां पापहेतुकत्वं, पञ्चयज्ञानाञ्च तत्पापनाशकत्वमवगम्यते । प्रत्यहमित्यभिधानात्प्रेतिदिनं तत्पापक्षयस्यापेक्षितत्वात्सन्ध्यावन्दनादिवन्नित्य त्वमपि न विरुध्यते ॥ २ ॥

पाठा० (१) इत्यन्ये (२) इत्युक्तेः । † ३ / ६८-७०

अध्यापनमिति। अध्यापनशब्देनाध्ययनमपि गृह्यते। 'जपोऽहुत' (३।७८) इति वक्ष्यमाणत्वात्। अतोऽध्यापनमध्ययनञ्च ब्रह्मयज्ञः। अन्नाद्येनोदकेन वा (३।८२) इति तर्पणं वक्ष्यति स पितृयज्ञः। अग्नौ होमः वक्ष्यमाणो देवयज्ञः। भूतबलिर्भूतयज्ञः। अतिथिपूजनं मनुष्ययज्ञः। अध्यापनादिषु यज्ञशब्दो महच्छब्दश्च स्तुत्यर्थं गौणः ॥ ३ ॥" इति।

सूनेति। अत्र "अथ सूना व्याख्यास्यामः। जङ्गमस्थावरादीन् प्राणिनः सूदयन्ति (प्राणैर्वियोजयन्ति) इति सूनास्ताः पञ्चविधा भवन्ति, इत्यादि हारीतस्मृति-ग्रन्थोऽपि द्रष्टव्यो वर्तते परं विस्तृतिभयान्नेहोल्लिख्यते।

अथवेति। यस्य क्वाऽपि गतिर्नास्ति तस्य वाराणसी गतिरिति रीत्यां आर्षत्वादिति समाधान-गतिकगतिरेवेत्यत आह-हिंसाजन्येति। अस्याप्यर्थस्य लाक्षणिकत्वान्मुख्यार्थमाह 'हन्यतेवे' ति।

## [ हिन्दी टीका ]

प्रत्येक गृहस्थ के यहाँ (१) चूल्हा, (२) चक्की, (३) झाड़ू (किसी के मत से घर का उपकरण, भाँडा वर्तन, दण्डा आदि भी), (४) ओखली मूसल, (५) और जल का घड़ा ये पाँच प्राणि-हिंसा के स्थान हैं। इनका उपयोग करने से अनजान में इच्छा न रहते हुए भी कुछ जीवों की हिंसा हो जाया करती है। जिस कारण हिंसा जन्य पाप से सम्बद्ध हो जाता है या स्वयं भी मारा जाता है ॥ १ ॥ अतः इस हिंसा दोष को दूर करने के लिए गृहस्थों को प्रतिदिन अनुष्ठान निमित्त ऋषि मुनियों ने पाँच महायज्ञों को विधान किया है

यहाँ ग्रन्थ कहना है कि यहाँ द्वितीय श्लोकात्मक वचन अर्थवाद वचन है क्योंकि अनुपद पूर्वोक्त शतपथ श्रुति में "अहरहः" पद सुने जाने से यावज्जीवन अनुष्ठान करना अवगत होता है। इस मनुवचन में भी "प्रत्यहः" पद उसी आशय से पढ़ा गया है। यहीं मन्वर्थमुक्तावली के अनुसार भी "प्रत्यहः" पद के अभिधान से उस दैनिक पाप का क्षय अपेक्षित होने से सन्ध्यावन्दन आदि के जैसे इसे नित्यविधि मानने में भी कोई विरोध नहीं ॥ २ ॥ इन यज्ञोंके नाम ये हैं (१) ब्रह्मयज्ञ (२) देवयज्ञ, (३) भूतयज्ञ, (४) पितृयज्ञ, (५) और मनुष्ययज्ञ। मनु (३।७४) के अनुसार-

(१) शास्त्र का अध्ययन तथा अध्यापन ब्रह्मयज्ञ है।

(२) देवताओं के निमित्त अग्नि में हवन करना देवयज्ञ है।

(३) अन्न आदि या अन्ततः जल से भी किया जाने वाला पितृ-तर्पण पितृ यज्ञ है।

(४) भूतों के निमित्त बलिहरण भूतयज्ञ है।

(५) अतिथि पूजन ही मनुष्य यज्ञ है।

अध्यापन आदि में यज्ञशब्द और महत् शब्द स्तुति (प्रशंसा) के लिए प्रयुक्त हुआ है। अतः इनका प्रयोग गौण है। ॥ ३ ॥

सूना शब्दार्थ की विस्तृत व्याख्या निमित्त ''अथ सूनां व्याख्यास्यामः। जङ्गम-स्थावरादीन् प्राणिनः सूदयन्ति''.इत्यादि हारीत ग्रन्थ भी अलग से देखा जा सकता है। फिर भी श्री अर्जुन चौवेजी द्वारा हिन्दी अनूदित धर्मशास्त्र का इतिहास (पी० वी० काणे) के अनुसार इसका हिन्दी अनुवाद सर्वसाधारण के बोध निमित्त यहाँ दिया जा रहा है। यथा-''हारीतधर्मसूत्र ने बड़े ही मनोरम ढंग से एक उक्ति कही है-'अब हम सूनाओं (घात के स्थलों) की व्याख्या करेंगे। ये सूना इसीलिए कही जाती हैं कि चल एवं अचल प्राणियों की हत्या करती है। प्रथम सूना वह है जो अचानक जल में प्रवेश, जल में डुबकी लेने, जल में हिलोरे लेने, विभिन्न दिशाओं में थपेड़े देने वस्त्र से विना छाने हुए जल ग्रहण करने, एवं गाड़ियों के चलाने आदि की क्रियाओं से उत्पन्न होती है। दूसरी वह है जो अन्धकार में इधर उधर चलने, मार्ग को छोड़कर चलने, शीघ्रता से हिल जाने या कीड़े मकोड़े पर चढ़ जाने आदिसे उत्पन्न होती है। तीसरी वह है जो पीटने या काटने (कुल्हाड़ी से वृक्ष काटने आदि), चूर्ण करने, चीरने (लकड़ी आदि) आदि से उत्पन्न होती है। चौथी वह जो अनाज काटने, रगड़ने, या पीसने से उत्पन्न होती है। और पाँचवीं वह है जो घर्षण (लकड़ी से) करने, गर्म करने (जल आदि), भूनने, छौंकने , या पकाने से उत्पन्न होती है। ये पाँचों सूना जो हमें नरक में ले जाती हैं: लोगों द्वारा प्रतिदिन सम्पादित होती हैं। ब्रह्मचारी प्रथम तीन सूनाओं से छुटकारा पाता है अग्निपूजा, गुरुसेवा, एवं वेदाध्ययन से। गृहस्थलोग एवं वानप्रस्थ लोग इन पाँचो सूनाओं से छुटकारा पाँच यज्ञ करके पात हैं। यति लोग प्रथम दो सूनाओं से छुटकारा पवित्र ज्ञान एवं मनोयोग से प्राप्त करते हैं। किन्तु विना पकाए गए बीजों को दाँतो तले दबाने से जो सूना 'च।ग्सूना होती हगकिसी भी साधन से दूर नहीं होती।''

उद्देश्यबोधन सहित पञ्चयज्ञ का स्वरूप नित्यकर्मप्रयोग (गीता प्रेस गोरखपुर से प्रकाशित) के अनुसार अलग से ही ज्ञातव्य है कि ''ब्रह्मयज्ञ ही ऋषि यज्ञ और स्वाध्याययज्ञ भी कहलाता है। ब्रह्मयज्ञ के पालन से द्विज ऋषि ऋण से मुक्त होकर

ज्ञान प्राप्त करता है और इस प्रकार वह सहज ही परमात्मा प्राप्ति का अधिकारी हो जाता है ।। १ ।। देवाताओं के निमित्त अग्नि में हवन करना देवयज्ञ कहलाता है । सृष्टि के आदि से ही देवतालोग मनुष्यों को सुख पहुँचाने के लिए उनकी आवश्यकताओं को पूर्ण करने निमित्त पशु-पक्षी, तृण, वृक्ष, औषध आदि के सहित सब की पुष्टि कर रहे हैं तथा अन्न जल पुष्प फल धातु आदि मनुष्योपयोगी समस्त वस्तुएँ मनुष्यों को दे रहे हैं । जो मनुष्य उन सब वस्तुओं को, उन देवताओं का ऋण चुकाये विना उनका न्यायोचित स्वत्व उन्हें अर्पण किये बिना स्वयं अपने काम में लाता है वह कृतघ्न है । गीता ( ३।१२ ) में उसे चोर कहा गया है । देवयज्ञ से द्विजाति गण देवताओं का ऋण चुकाते हैं । समस्त देवताओं को परमात्मा ही सवरूप समझकर उनके निमित्त हवन करना चाहिए । इससे कल्याण की प्राप्ति होती है । ।। २ ।। धाता विधाता आदि भूताधिष्ठातृ देवाताओं के निमित्त अन्न अर्पण करना तथा कृमि, कीट, पतङ्ग, पशुपक्षी आदि के निमित्त भोज्य पदार्थ का अर्पण करना भूतयज्ञ कहलाता है। भूतयज्ञ के द्वारा सम्पूर्ण भूतों में व्यापक परमेश्वर का पूजन होता है । अतः इससे द्विजों (अनुष्ठाता) को शीघ्र ही परम पद की प्राप्ति हो जाती है । ।। ३ ।। परलोक गत पितरों की तृप्ति के लिए 'स्वधा' शब्द के उच्चारण पूर्वक अन्न जल समर्पण करना पितृयज्ञ है । इससे पितर प्रसन्न होकर अपने कल्याणमय आशीर्वाद से यजमान को अनुगृहीत करते हैं । ।। ४ ।। द्वार पर आये हुए अतिथि को अन्नादि से तृप्त करना और सनकादि दिव्य मनुष्यों के निमित्त अन्न समर्पण करना मनुष्ययज्ञ है । इससे अतिथिरूपी नारायण देव की आराधना होती है, जो मानव मात्र के लिए कल्याणकारी है ।। ५ ।।

[ मूलम् ]

अथवा अर्थवादात् सूना-जनित-पापक्षयोऽपि । एवञ्च ''स्वर्गापवर्गयोः सिद्धिं पाकयज्ञैः प्रचक्षते'' इति व्यासादपि फलान्तरमिति प्रत्येकमपि फलमस्ति ।

तथा च हारीतः-

यद्देवेभ्यो जुहोति देवलोकं तेन जयति । यत्पितृभ्यो ददाति पितृलोकं तेन पित्र्यलोकं जयति । यत्स्वाध्यायमधीते ऋषिलोकं तेन । यद् भूतेभ्यो बलिं हरति तेन भूतलोकं[२] जयतीति ।

मनुः[३]-

धन्यं यशस्यमायुष्यं स्वर्ग्यञ्चातिथिपूजनम् ।

पाठा० ( १ ) इमानि त्रीण्येवजयति' पदानि कुत्रचिन्न । ( २ ) भूतलोकं तेन । ( ३ ) मनुरपि ।

## [ संस्कृत टीका ]

अथवेति । अर्थवादात्=प्रशंसापरकात् 'तासां क्रमेण सर्वासामि' ति-पूर्वोक्तवचनात् । सूनाजनितपापक्षयोऽपि फलं बोध्यम् । अपिपदादेतदन्य-फल-मप्यस्तीति सूच्यते । एवञ्च=अन्य फलस्य सत्त्वादेव । "पाकयज्ञैः=देव-भूत-पितृ-मनुष्य यज्ञैः, उपलक्ष्णांद् ब्रह्मयज्ञेन च । स्वर्गाप वर्गयोः=स्वर्लोकस्य मुक्तेश्च । सिद्धिम्=लाभम् । प्रचक्षते=कथयन्ति, मुनय इति शेषः" इति व्यासादपि=व्यास स्मृतिवचनादपि,फलान्तरमिति=स्वर्गमुक्ति प्राप्तिरूपमन्यत्फल मस्तीति हेतोः । प्रत्येकमपि=उक्तत्रितयमन्यच्चापि पञ्चमहायज्ञस्य फलमस्तीति विज्ञेयम् । तथाच=अनेकविधफलस्य सत्वाच्च । यद्देवेति । यद्दवेभ्यो, जुहोति=हविर्ददाति । तेन । देवलोकम्=स्वर्लोकम् । जयति=प्राप्तुमधिकारी भवति । यत्=यस्माद्धेतोः । पितृभ्यो ददाति=पितृतर्पणं करोति पितृलोकम्= "विधूर्ध्व-भागे पितरो वसन्ती"ति ज्योतिश्शास्त्रानुसारं चन्द्रोर्ध्वदेशम् । जयति । यत् स्वाध्यायम्=वेदमन्यशास्त्रं वा । अधीते = अध्यापयति अधीते वा । तेन, ऋषिलोकम्=सप्तर्षिलोकं, जयति, यद् भूतेभ्यो बलिम् । हरति= समुत्सृजति । तेन भूतलोकम्=("भूत-संसार (पु०)=मर्त्यलोक" "भूतस्थान (न०) जीवधारियों का वास-स्थान; प्रेतों के रहने का स्थान" इति संस्कृत-शब्दार्थकौस्तुभानुसारं ) मर्त्यलोकमन्तरिक्षलोकञ्च । जयति । नाधः पततीति भावः ।

धन्यमिति । "धनाय हितं धनस्य हितं वा धन्यम् । एवं यशस्यादयोऽपि । अतिथिभोजन-फल-कथनमिदमि"ति मन्वर्थमुक्तावली ।

## [ हिन्दी टीका ]

अथवा प्रशंसापरक "तांता क्रमेण" इत्यादि वचनों के बल सूना (प्राणिवध स्थान) जनित पापक्षय भी फल समझना चाहिए । साथ ही "मुनि लोग पाकयज्ञों अथात् देव-भूत-पितृ-मनुष्य एवं ब्रह्म यज्ञों से स्वर्ग एवं मुक्ति की प्राप्ति होना कहते हैं" इस व्यासवचन के अनुसार पापक्षयं से अन्य स्वर्ग एवं मुक्ति की प्राप्ति होना फल भी मानना चाहिए । उक्त तीनों से अन्य (जो अभी नीचे दिखाये जा रहे हैं) भी पञ्चमहायज्ञ का एकएक फल है । जैसा कि हारीत का कहना हे कि देवयज्ञ से देवलोक, पितृयज्ञ से पितृलोक (जो चन्द्रमा के ऊपरी भाग में माना जाता है ), ब्रह्मयज्ञ

से ऋषि (सप्तर्षि) लोक, तथा भूतयज्ञ से, भूतलोक (मर्त्यलोक या अन्तरिक्षलोक) पाने का अधिकारी होता है। (सारांश में कभी भी नरकलोक का भागी नहीं होता)।

मनुवचनानुसार अतिथि को भोजन कराना धन, यश, दीर्घ आयु तथा स्वर्ग प्राप्ति का संरक्षक होता हुआ उपार्जक भी होता है।

## [ मूलम् ]

पितृयज्ञप्रकारान्तरं छन्दोगपरिशिष्टे-

**श्राद्धं वा पितृयज्ञः स्यात् पितृभ्यो[१] बलिरेव वा।**

### [ संस्कृत टीका ]

श्राद्धमिति। इतः पूर्वतनं वचनं यथा-

**देव-भूत-पितृ-ब्रह्म-मनुष्याणामनुक्रमात्।**
**अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम्॥**
**होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम्॥ इति।**

"श्राद्धम्=नित्यश्राद्धम्। एतेन त्रयाणां पितृयज्ञत्वादसम्भवे एकेनापि कृतेन पितृयज्ञनिष्पत्तेः पितृयज्ञाकरण-प्रसक्तः प्रत्यवायः परिहृतो भवति। तथाच मनुः-

**यदेव तर्पयत्यद्भिः पितॄन् स्नात्वा द्विजोत्तमः।**
**तेनैव सर्वमाप्नोति पितृयज्ञक्रियाफलम्॥**

समुच्चयेन त्रयाणामनुष्ठानं च सम्भवे बोध्यमिति परिशिष्टप्रकाशः। कल्पतरावपि तर्पण-श्राद्ध-पितृबलीनां पितृयज्ञत्वं यथासम्भवमधिकारि-भेदेन व्यवस्थितं न पुनस्तुल्यो विकल्प इत्युक्तम्।

अत्र 'अनुक्रमादि' त्यमिधानात्प्रथमं देवयज्ञः, ततः भूतयज्ञः, ततः पित्र्यबलिरूपः श्राद्धरूपश्च पितृयज्ञः, ततो मनुष्ययज्ञ इति क्रमः। ब्रह्मयज्ञ-कालस्तु-'स चार्वाक् तर्पणात्कार्यः' इत्यादिना प्रागेवाभिहित" इति वीर-मित्रोदयः।

---

पा० (१) पित्र्यो बलिरथापि वा।

"वस्तुतस्तु यद्यपि देव-भूत-पितृ-ब्रह्म-मनुष्याणा 'मनुक्रमा' दित्यादेः क्रमपर-'कर्मप्रदीप'-वचनान्नित्यश्राद्धानन्तर्यमेव मनुष्ययज्ञस्य प्रतीयते, श्रीदत्ताह्निक -रत्नाकर-स्मृतिसार-प्रदीपादिबहुनिबन्ध-लिखनमपि तथैवे''ति नित्यकृत्यार्णवः।

[ हिन्दी टीका ]

पितृयज्ञ का दूसरा प्रकार छन्दोगपरिशिष्ट में यों कहा गया है यथा-मूल लेख के पूर्व वचनानुसार पितृतर्पण, प्रकृतवचनानुसार पितृनिमित्तक नित्यश्राद्ध अथवा पितर के निमित्त दी जाने वाली बलि ही पितृयज्ञ है ।

यहाँ वीरमित्रोदय का कहना है कि उक्त तीनों ही पितृयज्ञ होने पर भी सभी का सम्पादन असम्भव होने की स्थिति में एक के सम्पादन से भी पितृयज्ञ निष्पन्न हो जाता है । अतः पितृयज्ञ न करने से होंने वाला पाप दूर हो जाता है । जैसा कि मनुने भी कहा है-पाञ्चयज्ञिक श्राद्ध असम्भव होने पर स्नान के बाद द्विजश्रेष्ठ पितरों को जो तर्पण करता है उसी से पितृयज्ञ कर्म (नित्यश्राद्ध) का समग्र फल पाता है । यहाँ 'परिशिष्ट प्रकाश' का कहना है कि संभंव की स्थिति में समष्टि रूप से तीनों का अनुष्ठान अभिप्रेत है । कल्पतरु का कहना है कि यथासंभव अधिकारी के भेद से तर्पण-श्राद्ध तथा पितृबलि पितृयज्ञ रूप से माना गया है न कि सबके लिए समान रूप से यहाँ विकल्प विवक्षित है ।

मूल वचन में 'अनुक्रमात्' पढ़ने से सर्वप्रथम देवयज्ञ, तब भूतयज्ञ, अनन्तर पितृबलिरूप या श्राद्धरूप पितृयज्ञ, इसके बाद मनुष्यज्ञ हो, यह क्रम होगा । ब्रह्मयज्ञ का समय 'स चार्वाक् तपर्णात्कार्यः' (यह ब्रह्मयज्ञ तर्पण के पहले करना चाहिए) आदि वचनों से तर्पण से पहले का कह दिया गया है ।

यहीं नित्यकृत्यार्णवं का भी कहना है कि क्रमबोधक कर्मप्रदीप (छन्दोग परिशिष्ट) के वचनानुसार नित्यश्राद्ध के बाद ही मनुष्ययज्ञ होना प्रतीत होता और ऐसा ही श्रीदत्त के आह्निक ग्रन्थ, रत्नाकर, स्मृतिसार, प्रदीप आदि बहुत से निबन्धों का लेख भी है ।

[मूलम्]

पञ्चयज्ञप्रकारान्तरमाहुर्मनु-विष्णु-देवलाः-

देवताऽतिथिभूतानां पितॄणामात्मनश्च यः ।
न निर्वपति पञ्चानामुच्छ्वसन्न स जीवति ।। (मनु-३।७२)

तदेतेषां वाक्यानां सामान्यविषयतया साग्निनिरग्निगृहस्थमात्रविषयमेव । न च मन्वादिभिः वैश्वदेवहोमे आवसथ्याग्निविधानादनग्नेरनधिकारः,

**लौकिके वैदिके वाऽपि हुतोच्छिष्टे[1] जले क्षितौ ।**
**वैश्वदेवं[2] प्रकुर्वीत पञ्चसूनाऽपनुत्तये ॥**

इति शातातपेनाधारान्तरस्यापि विहितत्वात् । वैदिके=आवसथ्याग्नौ । हुतोच्छिष्टे=अन्येन होमं कृत्वा त्यक्ते ।

**[ संस्कृत टीका ]**

देवतेति । "देवताशब्देन भूतानामपि ग्रहणम् । तेषामपि बलिहरणे देवतारूपत्वात् । भृत्या वृद्धमातापित्रादयोऽवश्यं संवर्धनीयाः । 'सर्वत एवात्मानं गोपायेत्" इति श्रुत्या आत्मपोषणमप्यवश्यं कर्तव्यम् । देवतादीनां पञ्चानां योऽन्नं न ददाति स उच्छ्वसन्नपि जीवितकार्याकरणान्न जीवतीति निन्दयाऽवश्यकर्तव्यता बोध्यते" इति मन्वर्थमुक्तावली ।

तदेतेषामिति । तत्=गृह्योक्त पञ्चयज्ञविधानम् । एषां वाक्यानाम् संवर्तमन्वाद्युक्तवचनानाम् । सामान्य-विषयतया=निर्विशेष-विषयकतया । साग्नि-निरग्निगृहस्थमात्रविषयम्=कृतविवाह-साग्नि-निरग्नि-यजुर्वेदिसामान्यस्य कृते एव मन्तव्यम् । एतेन साग्नि-वाजसनेयिमात्र-विषयत्वं निरस्तम् । नच मन्वादिभिरिति ।

**वैवाहिकेऽग्नौ कुर्वीत गृह्यं कर्म यथाविधि ।**
**पञ्चयज्ञविधानञ्च पक्तिञ्चान्वाहिकीं गृही ॥**

इति मनु ( ३।६७) वचनेन, आदि-पदात्-

**वैवाहिकेऽग्नौ कुर्वीत पाकयज्ञानशेषतः ।**

इति व्यासादिवचनेन च, वैश्वदेवहोमे=पञ्चयज्ञान्तर्गतपाकयज्ञे । आवसथ्याग्निविधानात्=शालाग्न्यपरपर्याये वैवाहिकेऽग्नौ विहितत्वात् । अनग्नेः=निरग्नियजुर्वेदिनः । अनधिकारः=नाधिकारः इति नचेति पूर्वेणान्वीय वाच्यमिति शेषः । लौकिके इति । लौकिके=पाकसाधने,

पा० ( १ ) हुतोत्सृष्टे । ( २ ) वैश्चदेवस्तु कर्तव्यः ।

**यस्मिन्नग्नौ पचेदन्नं तत्र होमो विधीयते ।**

इत्यङ्गिरोवचनैकवाक्यत्वात् । वैदिके=आवसथ्याग्नौ, वैवाहिकाग्नाविति यावत् । 'वैवाहिकेऽग्नो कुर्वीत पाकयज्ञानशेषतः' इति व्यासवाक्यात् । हुतोच्छिष्टे=अन्येन होमं कृत्वा त्यक्ते । "एवमेव कल्पतरुरपि । अनन्तरोक्ताग्नित्रयासम्भवे जलं, तदसम्भवे भूमिरित्यपि स एव। जलक्षित्या- धारतापक्षे भूसंस्कारादिकं नास्तीति श्रीदत्त" इति वीर मित्रोदयः । पञ्चसूनाऽपनुत्तये=पञ्चसूनाजन्य-पापापनोदनाय । वैश्वदेवम्= बलिवैश्वदेवम् । प्रकुर्वीत=कुर्यात् ।

**[ हिन्दी टीका ]**

मनु, विष्णु तथा देवल ने पञ्चयज्ञ का दूसरा प्रकार यों कहा है यथा-"देवता (बलिहरण में भूतों का देवरूप होने के कारण यहाँ देवता पद से भूतसहित देवता ग्राह्य हैं), अतिथि, भृत्य (अवश्य पालनीय वृद्धमाता पिता आदि), पितर और आत्मा ('सभी साधन से आत्मा की रक्षा करनी चाहिए' इस श्रुति वचन के अनुसार अपना पोषण अवश्य कर्तव्य है) इन पाँचों को जो अन्नादि नहीं देता वह श्वास-प्रश्वासयुक्त होने पर भी जीवित नहीं है" इस निन्दा से अवश्यकर्तव्यता सिद्ध होती है ।

उक्त केचत् वाले विवेचन से निष्कर्ष में यह सिद्ध होता है कि वाजसनेयिगृह्योक्त पञ्चयज्ञविधान पूर्व प्रदर्शित वचनों से सभी के लिए प्रतिपादित होने के कारण साग्नि निरग्नि साधारण वाजसनेयी गृहस्थ मात्र के लिए है नकि केवल साग्निक वाजसनेयी के लिए ही ।

यहाँ कोई शङ्का करे कि मनु, व्यास आदि ने वैवाहिक अग्नि में ही वैश्व देव होम का विधान किया है । अतः निरग्निक वाजसनेयी का अधिकार नहीं । इसका उत्तर होगा कि शातातन ने होम का अन्य आधार भी कहा है । यथा-पञ्चसूनाजनित पाप निवारणार्थ पाकसाधन लौकिक अग्नि, वैवाहिक (वैदिक) अग्नि, दूसरे से होम के बाद परित्यक्त अग्नि, जल अथवा पृथिवी पर बलिवैश्वदेव करें ।

यहाँ वीरमित्रोदय के लेखानुसार कल्पतरु का मत है कि त्रिविध अग्नियों के असम्भव स्थिति में जल, वह भी संभव न हो तो भूमि पर वैश्वदेव कर्म होना चाहिए । किन्तु यहीं श्रीदत्त का मत है कि जल या पृथिवी को आधार बनाने के पक्ष में भू-संस्कार आदि नहीं होता है ।

[ मूलम् ]

अङ्गिराः-

शालाग्नौ तु[१] पचेदन्नं लौकिके वाऽपि नित्यशः ।

यस्मिन्नग्नौ पंचेदन्नं तस्मिन् होमो विधीयते ॥ इति

अस्यार्थः-साग्निना पाको होमश्चावसथ्याग्नावेव कर्त्तव्यः निरग्निना लौकिके इति ।

[ संस्कृत टीका ]

शालाग्नाविति । अस्यार्थः मूल एव स्पष्टीकृतोऽस्ति ।

[ हिन्दी टीका ]

साग्नि जन को पाक और होम आवसथ्य (वैवाहिक) अग्नि में और निरग्निक को लौकिक (प्रतिदिन जलाई जाने वाली) अग्नि में करना चाहिए ।

[ मूलम् ]

छन्दोगपरिशिष्टे-

पाण्याहुतिर्द्वादश-पर्वपूरिका द्रवादिना चेत्स्रुवमात्रपूरिका ।

दैवेन तीर्थेन च हूयते हविः स्वङ्गारिणि स्वर्चिषि तच्च पावके ॥

[ संस्कृत टीका ]

पाण्येति । पाण्याहुतिः=पाणिना=हस्तेन दीयमाना आहुतिः=आहुति-द्रव्यम्। द्वादशपर्वपूरिका=अङ्गुष्ठव्यतिरिक्त-चतुरङ्गुलि-व्यापिका भवेत् । द्रवादिना= घृतादिद्रवद्रव्येण चेदाहुतिः-एतद्द्रव्यमेव चेदाहुतिर्भवति तदा । स्रुवमात्र-पूरिका=स्रुवाग्रभागस्थितखातपूर्णा भवेत् । तद्धविः=हविष्यम् । दैवेन तीर्थेन । स्वङ्गारिणि=समिद्धे । स्वर्चिषि=देदीप्यमाने । पावके=अग्नौ । हूयते=हूयेत । तथाचोक्तं कर्मप्रदीप एव कात्यायनेन-

योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः ।

मन्दाग्निरामयावी च दरिद्रश्च स जायते ॥

---

पा० (१) वा ।

तस्मात्समिद्धे होतव्यं नासमिद्धे कदाचन ।

आरोग्यमिच्छताऽऽयुश्च श्रियमात्यन्तिकीं तथा ॥ इति ।

आत्यन्तिकीम्=पुत्रपौत्रानुवर्त्तिनीम् ।

अत्र ''वैश्वदेवाहुतिस्तु द्वादशपर्वपूरिका । 'पाण्याहुतिरि' त्यादिछन्दोगपरिशिष्टवचनात् । बलिप्रमाणमपि तत्रैव-'नचावराद्ध्या' इत्यादि । असम्भवे त्वशुष्कामलकमाना अपि कार्याः ।

आर्द्रामलकमानेन कुर्याद्धोमहविर्बलीन् ।

प्राणाहुतिं बलिञ्चैव मृदं गात्रविशोधिनीम् ॥

इति छन्दोगपरिशिष्टटीकालिखितवचनादित्याचारचिन्तामणिरि''ति नित्याकृत्यार्णवः ।

वीरमित्रोदयोऽपि 'आर्द्रामलके' ति वचनं व्यासवचनत्वेन निगद्य व्यासोऽपि-'उत्तानकरपञ्चाङ्गुल्यग्रैर्बलिं हरेत् । वृषभवक्त्राकारेणोत्तानेनाङ्गुलिद्वयाग्रपर्वमात्रं प्रपूर्य जुहुयात् । एवञ्च पाण्याहुतिर्द्वादशपर्वपूरिकेति छन्दोगपरिशिष्टवचनं सम्भवपरमि''त्याह ।

[हिन्दी टीका]

हाथ से दिया जाने वाला आहुतिद्रव्य अंगूठे के अतिरिक्त चारों अंगुलियों के १२ बारहों पोरों को पूरा करने वाला हो । यदि वह आहुतिद्रव्य घृत आदि रस रूप हो तो स्रुव के खात को पूरा करने वाला हो और उस हविष्य द्रव्य का देवतीर्थ (अंगुलियों के अग्रभाग) से प्रज्वलित-देदीप्यमान-अग्नि में हवन करना चाहिए ।

छन्दोगपरिशिष्ट में ही अलंग से कात्यायन ने कहा भी है कि तादृश अग्नि से विपरीत अग्नि में हवन करने पर कर्त्ता मन्दाम्नि वाला, आमाशय रोगी तथा दरिद्र होता है । अतः प्रदीप्त अग्नि में ही हवन करना चाहिए । कदाचिदपि अप्रदीप्त में नहीं । विधानानुसार करने से आरोग्य, दीर्घायु तथा पुत्रपौत्रानुवर्त्तिनी लक्ष्मी को प्राप्त करता है ।

नित्यकृत्यार्णव एवं वीरमित्रोदय के अनुसार वैश्वदेव होम में विहित उक्त परिभाषा संभव की स्थिति में है । अन्यथा कच्चे आमले के बराबर आहुति द्रव्य-जो उत्तान हाथ क़ी दो अंगुलियों (मध्यमा तथा अनामिका) के अंग्रिम पोरों को पूरा करता हो- से हवन करना चाहिए ।

[ मूलम् ]

तथा,

**हविष्येषु यवा मुख्यास्तदनु व्रीहयः स्मृताः ।**
**माष-कोद्रव-गौरादीन् सर्वाभावेऽपि[1] वर्जयेत् ॥**

गौरः=सितसर्षपः । आदिपदेन "चणक-माष-मसूर-कुलत्थोद्दालवर्जमि" ति शङ्खलिखितोक्तपरिग्रहः ।

[ संस्कृत टीका ]

तथेति । अत्र "व्रीहयः=कलमादयः । गौरोऽत्र सितसर्षप इत्याचार-चिन्तामण्यादयः । अत्र गौरो गुर्जरदेशे प्रसिद्धः पशुभक्ष्ये मसूराकृति रन्नविशेषः श्वेतसर्षप इत्येके । तन्न । तस्य भक्ष्यत्वेनाचाराभावत् । आदिपदात् कुलत्थ-मण्डूकादीनां परिग्रहः । सर्वालाभेऽपीति अनिषिद्धचीनकाद्यभावेऽपीत्यर्थः इति स्मृतिसुधाकरः । 'को द्रव चणक माष मसूर कुलत्थोद्दालवर्जान्निवपनीयमि 'ति शङ्खवचनाददिपदग्राह्याणि चणकादीनि । उद्दालो-बहुआर इति प्रसिद्ध इत्याचार-चिन्तामणिरि' 'ति नित्य कृत्यार्णवः ।

[ हिन्दी टीका ]

हविष्य अन्नों में सब से मुख्य जौ, उसके बाद साठी धान तथा अगहनी (हैमन्तिक) धान आदि हैं । अनिषिद्ध धान्यविशेष चीना या चीन आदि के न मिलने पर भी उरद, कोदो, उजली सरसो, चना, मसूर, कुलथी, वहुआर और मड़ुआ आदि तो हवन या किसी भी पवित्र कार्य में अवश्य वर्जनीय है ।

[ मूलम् ]

आपस्तम्बः-

**न क्षारलवणं[2] होमे विद्यते । तथा, परान्नस्पृष्टस्य चाहविष्यस्य न होमः। तथा, न स्त्री जुहुयान्नानुपेतः ।**

---

पा० (१) सर्वालाभेऽपि । (२) लवणहोमो विद्यते ।

एतत्साग्नेः प्रवासे ऋत्विगसन्निधाने सति । अन्यत्र प्रसक्त्यभावात् । निरग्नेस्तु स्वकर्त्तृक एव वैश्वदेवः[१] । अनुपेतः=अनुपनीतः ।

**[ संस्कृत टीका ]**

न क्षारेति । "यद्भक्ष्यमाणं पश्यतो लालोत्पद्यते तत् क्षारम् गुडमरीचि-लिचुकादि । क्षारलवणसंसृष्टं न होतव्यमि" त्येतस्योज्ज्वला-वृत्तिः । क्षारलवणम्=कृत्रिमलवणमिति कुल्लूकभट्टः । "क्षारलवणमूषरलवणमि"ति कल्पतरु नित्यकृत्यार्णववीरमित्रेदयाः । "क्षारलवणसंसृष्टेन हविषा न हो-तव्य" मिति मदनपारिजाते व्याख्यातम् । क्षारलवणमिति समाहारः द्वन्द्वः ।

**क्षारञ्च लवणं सर्वं वैश्वदेवे विवर्जयेत् ।**

इति मदनपारिजातधृतस्मृतेः । पारस्करेणापि "त्रिरात्रमक्षारलवणाशिनौ स्यातामि"ति वधूवरनियमप्रक्रमे पृथगेव क्षारलवणावभिहितौ । तत्र क्षारञ्च लवणञ्चेति हरिहरादिभाष्येषु स्पष्टमभिहितम् । तत्र क्षारगणः (मुरारिमिश्र-कृते) शुभकर्म-निर्णये स्मर्यते-

**तिलमुद्गादृते शिम्बिसस्ये गोधूमकोद्रवौ ।**
**चीनकं देवधान्यञ्च सर्वशाकन्तथैव च ॥**
**स्विन्नधान्यंन्तथौषर्यं स्थूलं क्षारगणः स्मृतः ॥ इति ।**

पर्युषिताद्यन्नमप्यत्र निषिद्धमेंव ।

**अन्नं पर्युषितञ्चैव परान्नं पायसं तथा ।**
**दग्धमन्नं तथा क्षारं वैश्वदेवे विवर्जयेत् ।**

इति धार्माधर्मप्रबोधिन्यां प्रेमनिधिठक्कुराः प्राहुरिति गोभिल-गृह्यसूत्रस्य (४।३) मृदुला-व्याख्या तट्टिप्पणी च । तत्रैव च "तथैव च छन्दोगाह्निके श्रीदत्तोपाध्यायाः प्राहुः-"क्षारं लवणं परान्नञ्च विहाय हविष्यमन्नं हविष्यव्यञ्जनान्वितं घृताक्तं दध्यक्तं पयोऽक्तं वा असम्भवे जलाक्तमपि

पा० (१) वैश्वदेवप्रयोगः

दक्षिणकराङ्गुलिद्वादशपर्वपूरकं स्वङ्गारिणि स्वर्चिषि वह्नौ काली-कराली-प्रभृति-सप्तजिह्वा-लेलिहाना ध्यायन् प्राङ्मुखो बाहुजान्वासनानारूढपादोऽकृतावसक्थिको जानुद्वयमध्यगतबाहुः साङ्गुष्ठदक्षिणकराग्रेण जुहुयादिती''ति ।

परान्न-संसृष्टम्=अन्नान्तर-सम्बद्धम् । अहविष्यम्=माषादीति कल्पतरुः ।

एतदिति । एतत्=''न स्त्री जुहुयादि'' ति वचनन्तु । साग्नेः=साग्निक-गृहस्थस्य । प्रवासे=दूरदेशस्थितौ । ऋत्विगसन्निधाने

**अग्न्याधेयं पाकयंज्ञानग्निष्टोमादिकान् मखान् ।**
**यः करोति वृतो यस्य स तस्यर्त्विगिहोच्यते ॥**

इति मनू( २।१४३ )क्तलक्षणलक्षितस्य याजकापरपर्यायस्य ऋत्विजोऽसान्निध्ये च सति स्त्रीकर्त्तृकमनुपनीत-बालककर्त्तृकञ्च प्राप्तं होमं निषेधतीत्यर्थः । अन्यत्र स्त्रिया अनुपनीतबालाच्चेतरत्रोपनीतादौ । प्रसक्त्यभावात् = प्राप्तेरभावात् । उपनयन-संस्कार-संस्कृतस्य हि जनस्य आचार्य सान्निध्यत एव कृतहोमत्वात् । अतएव ''न स्त्री जुहुयादि''ति साग्नेः प्रवासे ऋत्विगसन्निधाने सति प्रसक्तस्य निषेधनमिति रत्नाकराचारादर्शावि''ति नित्य कृत्यार्णवोऽपि निरग्नेः वैदिकस्मार्ताग्निरहितगृहस्थस्य तु स्वकर्त्तृक एव वैश्वदेव-प्रयोगः । प्रतिदिनं स्वेनैवाग्निं संस्थाप्य वैश्वदेवस्य कर्तव्यत्वात् ।

**[ हिन्दी टीका ]**

जिस खाये जाने वाले पदार्थ को देखकर मुंह में लार आ जाय वह क्षार कहलाता है । यथा, गुड़, मरीच, बडहर का फल ( मनोहर व्यञ्जन-अचार) आदि । इससे तथा नमक से मिले हुए पदार्थ सं होम नहीं होना चाहिए । अथवा बनाये गये नमक या साधारणतः नमक से मिश्रित (मिली हुई) वस्तु से भी होम नहीं होना चाहिए ।

दूसरे अन्न से मिश्रित अन्न तथा अहविष्य उरद आदि से भी होम नहीं हो ।

न तो स्त्री और नाहीं उपनयनसंस्कार से रहित व्यक्ति को हवन करना चाहिए ।

यह निषेध साग्निक गृहस्थ जन को प्रवास में रहने या ऋत्विज् (याजक) को सन्निधि में न रहने की स्थिति में समझना चाहिए । क्योंकि स्त्री तथा अनुपनीत से

अन्यत्र होम की प्राप्ति ही नहीं थी। जिसका कारण यह है कि इन दोनों से अन्य उपनयन संस्कार से संस्कृत जन तो उपनयन के समय से ही आचार्य के सान्निध्य में होमकर्त्ता बन जाता है। निरग्निनिक गृहस्थ तो जहाँ रहेगा वहीं अग्नि स्थापन कर स्वयं ही वैश्व देव (होम) प्रयोग कर लेगा।

## [ मूलम् ]

आपस्तम्बः–

आर्याः प्रयता वैश्वदेवेऽन्नस्य[1] संस्कर्त्तारः स्युः ॥१॥
भाषां कासं क्षवथुमित्यभिमुखोऽन्नं वर्जयेत् ॥ २॥
केशानङ्गवासश्चालभ्याप उपस्पृशेत् ॥ ३ ॥

आर्याः = त्रैवर्णिकाः।

## [ संस्कृत टीका ]

आर्या इति। वैश्वदेवस्य पाकसाध्यत्वात्पाकधर्मानाह आर्या इत्यादिना। आर्याः = त्रैवर्णिकाः। आर्याधिष्ठिता वा शूद्राः (२।४) इत्युत्तरदर्शनेन शूद्राणां पृथक्परिभाषणात् साधवोऽत्र द्विजातयः इति नित्यकृत्यार्णवोऽपि "प्रयताः = स्नानादिना शुचयः। वैश्वदेवे = वैश्वदेवसम्बन्धिनि गृहस्थस्य भोजनार्थे पाके। गृहमेधिनो यदशनीयस्ये (३।१२) त्यग्रिमवचनेन अशनीयस्यैव वैश्वदेवविधानादि" त्युज्ज्वलावृत्तिवीरमित्रोदयौ। कल्पतरौ तु वैश्वदेवे कर्मणि अन्नं संस्कुर्युरिति व्याख्यानात्पाकधर्माणां वैश्वदेवार्थत्वमभ्यनु ज्ञातम्। अन्नस्य संस्कर्तारः स्युः = अन्नं–भक्ष्यभोज्यपेयादिकं तत्संस्कुर्युः॥ १॥

"भाषामिति। भाषा = शब्दोच्चारणम्। कासः = घुरघुरस्वरः (राशब्दः)। क्षवथुः = छिक्का। अभिमुखोऽन्नं वर्जयेत् = भाषादिकमन्नाभिमुखो वर्जयेदित्यर्थः। संस्कर्तारः स्युरितिबहुवचने प्रकृते वर्जयेदित्येकवचनं प्रत्येकमुपदेशार्थ इति वीरमित्रोदयः॥२॥ केशानिति। केशादीन् आत्मीयानन्यदीयान् वा। आलभ्य = स्पृष्ट्वा। अप उपस्पृशेत्। नेदं स्नानम्। किन्तर्हि ? स्पर्शमात्रम्। केशालम्भने पूर्वमप्युपस्पर्शनं विहितम्। इदन्तु तत्रोक्तं वैकल्पिकं शकृदाद्युपस्पर्शनं मा भूदिती" त्यस्योज्ज्वलावृत्तिः। केशानिति, केशानां प्रयतानामपि स्पर्शनेऽप

पा० (१) वान्नस्य।

उपस्पृशेदिति नित्यकृत्यार्णवः। केशाङ्गवाससां प्रयतानामपि स्पर्शे चोदकोपस्पर्शनं कुर्यादिति वीरमित्रोदयः ॥३॥

[ हिन्दी टीका ]

वैश्वदेवकर्म पाकसाध्य होने के कारण अब पाकधर्म (पाक के समय बरती जानेवाली सावधानी या क्रियाएँ) कहे जा रहे हैं। स्नान आदि से पवित्र हो द्विजाति गृहस्थ के भोजन निमित्त बनाए जानवाले वैश्वदेव सम्बन्धी पाक के लिए भक्ष्य भोज्य पेय आदि अन्नों का संस्कार (अपद्रव्य का निराकरण आदि) करने वाले हों॥ १ ॥

अन्न के अभिमुख हो शब्द का उच्चारण, कण्ठमें घर्घर स्वर (कास) तथा छिक्का न करे ॥२॥

अन्न संस्कार के समय अपने या दूसरे के पवित्र या अपवित्र केश, अंग तथा वस्त्र के स्पर्श होने पर जल का स्पर्श करे ॥ ३ ॥

[ मूलन् ]

बौधायनः

भोजनं हवनं दानमुपहारः प्रतिग्रहः।
बहिर्जानु न कार्याणि तद्वदाचमनं स्मृतम् ॥

[ संस्कृत टीका ]

भोजनमिति। "जान्वोर्द्वयोरन्तरा दक्षिणं बाहुं निधायैतानि कार्याणीत्यर्थः। उपहारो बलिहरणम्। यद्वा प्रसिद्ध एवोपहारो देवगुरुविषय" इत्येतस्य विवरणे गोविन्दस्वामिनः।

[ हिन्दी टीका ]

दोनों घुटनों के बीच दाहिनी बाहु रखकर भोजन, हवन, दान, प्रकृतबलिहरण, देवगुरु आदि को दी जानेवाली भेंट, दानग्रहण तथा आचमन करने चाहिएँ।

[ मूलम् ]

छन्दोगपरिशिष्टे–

जुहूषंश्च[1] हुते चैव पाणि-सूर्प-स्फ्य-दारुभिः।
न कुर्यादग्निधमनं कुर्याच्च व्यजनादिभिः ॥
मुखेनैके[2] धमन्त्यग्निं[3] मुखादेषोऽ[4] ध्यजायत।
नाग्निं[5] मुखेनेति च यल्लौकिके योजयन्ति तत् ॥

---

पाठा० (१) षुश्च। (२) मुखेनैव। (३) धमेद। (४) देष व्यजा। (५) न मुखेनेति यच्चोक्तम्।

· [ संस्कृत टीका ]

जुहूषंश्चेति । समिन्धनञ्चाग्नेर्व्यजनादिना कार्यं, मुखेनैव वेत्येके । तदप्याह स एव (कर्मप्रदीप एव कात्यायनः) जुहूषँश्चेत्यादि । जुहूषन् = होतुमिच्छन् । हुते वा पाण्यादिना वह्निसन्दीपनं न कुर्यात् । किन्तु व्यजनादिनैव कुर्यादिति पूर्ववचनार्थः । कुर्याच्चेति चकारोऽवधारणे । इत्थं हि स्वमतमभि-धाय मतान्तर मुपन्यस्यति-मुखेनैक इति । 'मुखादग्निरजायते' ति श्रुतेरग्नेर्मुख-प्रभवत्वान्मुखेनैव दीपनम् । औचित्यात् । 'नाग्निं मुखेनोपधमेदि' ति श्रुतेरसंस्कृताग्निविषयत्वेन योजनादित्यर्थः । ''इदञ्च न स्वमतम् । कुर्याच्च व्यजनादिने'' ति सिद्धान्ति ते आकाङ्क्षानिवृत्तौ मुखेने ति पुनरभिधानायोगादि''ति गोभिलगृह्यसूत्र (१।१।६) व्याख्याटिप्पण्यां म० म० मुकुन्दशर्माणः ।

. [हिन्दी टीका]

होम के निमित्त अग्नि का उद्दीपन पंखे आदि से करना चाहिए । किन्हीं का मत है कि मुंह से ही होना चाहिए, यह विषय प्रकृतवचन से कहा जा रहा है। यथा– हवन करते हुए या हवन के बाद हाथ, सूप (छाजला), स्फ्य (यज्ञियपात्र विशेष जो तलवार के आकार का होता है) तथा लकड़ी से अग्नि दीपन नहीं करना चाहिए किन्तु पंखे आदि से ही करे यह मत वचनकार कात्यायन का है । इस तरह अपना अभिमत कहकर किन्हीं दूसरे का मत कहते हैं–किन्हीं अन्य आचार्य के मत से मुंह से ही अग्नि दीपन् करें, क्योंकि ''मुखादाग्निरजायत'' (ब्रह्माजी के मुंह से अग्नि उत्पन्न हुआ) इस श्रुतिवचन के अनुसार मुंह से अग्नि की उत्पति होने के कारण मुंह से ही उद्दीपन उचित है । अब (ऐसी स्थिति में) ''नाग्निं मुखेनोपधमेत्'' (मुंह से अग्नि का दीपन नहीं करना चाहिए) इस श्रुति वचन का तात्पर्य असंस्कृत अग्नि के दीपन से है ऐसी योजना कर लेनी चाहिए ।

उक्त व्याख्याकार म० म० मुकन्दशर्मा का विवेचन है कि पीछे से कहा गया मत कात्यायन का नहीं है क्योंकि ''कुर्याच्च व्यजनादिना'' (पंखे आदि से दीपन करना चाहिए) कह कर अपना सिद्धान्त मत अभिव्यक्त कर देने पर आकाङ्क्षा की निवृत्ति हो जाती है । अतः ''मुखेनैके'' आदि पदों द्वारा पुनः अपना ही मत कहना युक्ति संगत नहीं ।

यह व्यांख्या गोभिलगृह्य सूत्र की मृदुलाव्याख्या की टिप्पणी से ली गई है।

[ मूलम् ]

वायुपुराणे–

दानं प्रतिग्रहो होमो भोजनं बलिरेव च।
साङ्गुष्ठेन सदा कार्यमासुरं[१] ह्यन्यथा भवेत्॥

[ संस्कृत टीका ]

दानमिति। प्रतिग्रहः=दत्तग्रहणम्। साङ्गुष्ठेन=साङ्गुष्ठ दक्षिण कराग्रेणेत्यर्थः। वैश्वदेव-प्रकरणीय-गोभिलगृह्यसूत्रस्य जुहुयात्तूष्णीं पाणिनैवे (४।३) तिवचनात्। अतएवैतन्मृदुलाव्याख्यायां "पाणिनैवेत्येवकारः स्रुवादिपात्रान्तरं व्यवच्छिनत्ति। अत्र (पाण्याहुतौ) अङ्गुष्ठयोग आवश्यक इति। अतएव छन्दोगाह्निके- प्राङ्मुखो बाहुजान्वासनारूढपादोऽकृतावसक्थिको जानुद्वयमध्यगतबाहुः साङ्गुष्ठदक्षिणकराग्रेण जुहुयादिति। साङ्गुष्ठेन = अङ्गुलीसहिताङ्गुष्ठेनेति नित्यकृत्यार्णवः। हि=यतः। अन्यथा = अङ्गुष्ठमसंयोज्य तदाचरणे। तत् = तत्तत्कर्म। आसुरम् = असुरनिमित्तम् भवेत्।

[ हिन्दी टीका ]

दान देना और लेना, होम, भोजन तथा बलिहरण अंगुष्ठ सहित दाहिने से करना चाहिए। इस तरह न होने पर ये कर्म असुरों के लिए हो जाते हैं।

[ मूलम् ]

याज्ञवल्क्यः–

देवेभ्यश्च हुतादन्नाच्छेषाद् भूतबलिं हरेत्।
अन्नं भूमौ श्व-चाण्डालवायसेभ्यश्च निक्षिपेत्॥

श्वादिबलीनां पृथङ्निर्देशाद् भूतयज्ञबहिर्भावः।

[ संस्कृत टीका ]

देवेभ्य इति। स्वगृह्योक्तविधिना वैश्वदेवहोमं कृत्वा तदवशिष्टेनान्नेन भूतेभ्यो बलिं हरेत्। अन्नग्रहणमपक्वव्युदासार्थम्। तदनन्तरं यथाशक्ति

---

पाठा० (१) मसुरेभ्योऽन्यथा।

भूमावन्नं श्वचाण्डाल-वायसेभ्यो निक्षिपेत्। चशब्दात्कृमिपापरोगि-पतितेभ्यः। यथाह मनुः-(३/९२)

शुनाञ्च पतितानाञ्च श्वपचां पापरोगिणाम्।
वायसानां कृमीणाञ्च शनकै र्निक्षिपेद्भुवि ॥

इतीत्येतस्यं मिताक्षरा।

[हिन्दी टीका]

अपने गृह्योक्त विधि से वैश्वदेव होम कर तदवशिष्ट अन्न से भूतों के निमित्त बलिहरण करना चाहिए। यहाँ वचन में अन्नपद पढने से इस कर्म में अपक्वपदार्थ को छटजाने का संकेत मिलता है। तदनन्तर कुत्ता, चाण्डाल तथा कौवों के लिए बलि हरण करें। मूलवचन में पीठत 'च' पद से मनूक्त कृमि, पापरोगी तथा पतितों के लिए भी बलिहरण करना चाहिए।

मूल वचन में कुत्ते आदि के लिए पृथक् से बलिहरण का विधान होने से इसे (इसवलिहरण को) भूतयचज्ञ से पृथक् समझना चाहिए।

[मूलम्]

ब्राह्मादितीर्थाधिकारे हारीतः–

मार्जनार्चनबलिकर्मभोजनानि[1] दैवेन।

[संस्कृत टीका]

मार्जनेति। मार्जनम् = उदकबिन्दूनां शिरसि प्रक्षेपः। अर्चनम् = देव-पूजनम्। बलिकर्म = भूतयज्ञः। भोजनञ्च दैवतीर्थेन कार्याणीति शेषः।

[हिन्दी टीका]

ब्राह्मतीर्थ आदि के कथन प्रसङ्ग पर हारीतने कहा है कि मार्जन (उदकविन्दुओं का शिर पर प्रक्षेप), देवपूजन, भूतयज्ञ, तथा भोजन देवतीर्थ से करने चाहिए। (इन तीर्थो का विवेचन आचमन प्रकरण में पहले ही हो चुका है)।

[मूलम्]

छन्दोग-परिशिष्टे

नचावरार्धा बलयो भवन्ति, महामार्जारश्रवणप्रमाणात्।
एकत्रचेदविप्रकृष्टा भवन्ति, इतरेतरासंयुक्ताश्च ॥

पाठा० (१) भोजनादि।

अवरार्धाः = न्यूनाः । 'एकत्र चे' दित्यादि नानास्थाने बलिदानासम्भवे एकस्मिन्नेव स्थाने यदा बलयो दीयन्ते तदा, अविप्रकृष्टाः = अव्यवहिताः, इतरेतरासंयुक्ताश्च = परस्परासंयुक्ताश्च दातव्या इत्यर्थः । अस्मिन्नपिक्षे धात्रादिबलिषु द्वारादि कल्पनीयम् ।।

[ संस्कृत टीका ]

नचेति । बलीनां परिमाणमाह नचेति । महामार्जारश्रवणप्रमाणात् = महा-(वन) विडालकर्णस्य अव दीर्घ परिमाणात् अवरार्धाः= अल्पपरिमाणा-न्यूना इति यावत्. । बलयो न भवन्तीत्यर्थः । "अथ बलीन् हरेद् बाह्यतो वाऽन्तर्वा सुभूमिं कृत्वा" इति गोभिल-सूत्रानुसारम् "अन्तर्वे" त्यनेनाग्न्यागारमध्ये एकस्मिन्नेव स्थाने बलिदानमुक्तं भवति । अथेति पूर्वप्रकृतार्थः । तेनैव पूर्वप्रकृतेन हुतशेषेणान्नेन बलीन् हरेत् । बाह्यतो वा-अग्न्यागाराद्बहिः निष्क्रम्य यो यस्मिन् देशेः बलिरुक्तः, तं तत्रैव निदध्यात् । अन्तर्वाऽग्न्यागारमध्ये वैकस्मिन् प्रदेशे सर्वान् बलीनाहरेत् । सुभूमिं कृत्वेति । सम्मार्जन-प्रोक्षण-उपलेपनादीनामन्यतमेन प्रकारेण शोभनी कृत्वे''ति गोभिलसूत्रार्थः । तत्र यदा एकस्मिन् स्थाने बलयो दीयन्ते तदा वक्ष्यमाणविन्यासप्रकारेण, अविप्रकृष्टाः = अव्यहिताः, इतरेतरासंयुक्ताः = परस्परासंयुक्ताश्च, दातव्याः=देया इत्यर्थः । अस्मिन्नपि पक्षे = अग्न्यागारमध्ये एकस्मिन्नेव स्थाने बलिदानपक्षे । अत्रापि महामार्जारश्रवणप्रमाणस्य विधानन्तु शक्त्यनुसारं सम्भवपरमेव बोध्यम् ।

**आर्द्रामलकमानेनकुर्याद्धोम हविर्बलीन् ।**

**प्राणाहुतिबलिञ्चैव मृदं गात्रविशोधिनीम् ॥**

इत्याचारचिन्तामणिधृत-छन्दोगपरिशिष्टटीका-लिखित-वचनाद्, 'उत्तानकर-पञ्चाङ्गुल्यग्रैर्बलिं हरे' दिति.गद्यव्यासवचनाच्च ।

[ हिन्दी टीका ]

प्रकृत वचन से बलियों का प्रमाण कहा जा रहा है । बलियों का प्रमाण (परिमाण) बड़े (वन) विलाड के लम्बे कान के बराबर होना चाहिए । इससे न्यून (कम) नहीं ।

"या घर के भीतर परिष्कृत भूमि बना कर वहाँ बलिहरण करे" इस गोभिलवचन के अनुसार रसोई घर के मध्यभंाग में कहीं एक स्थान पर बलिहरण करना मान्य हो जाता है। यदि वहाँ एक स्थान पर बलि देना हो तो आगे बताये जाने वाले विन्यास क्रम से एक के बाद एक और एक से एक सटी हुई बलियाँ न हो। इस एक स्थान पर बलि हरण पक्ष में भी धातृ आदि देवताओं के लिए मण्डल बनाकर दिशा तथा द्वार आदि की कल्पना कर लेनी चाहिए।

यहाँ भी जो बलि का प्रमाण (परिमाण) उक्त रूप से कहा गया है वह शक्त्यनुसार सम्भवपरक समझना चाहिए, क्योंकि आचारचिन्तामणि में उद्धृत तथा छन्दोगपरिशिष्टटीकामें उल्लिखित वचन के अनुसार "कच्चे आँवले के बराबर होम के लिए हविष्य, पञ्चग्रास, बलि तथा शरीरसंस्कार के लिए मिट्टी हों। इसी तरह गद्यव्यास का कहना है कि उत्तान हाथ की पाँचो अंगुलियों के अग्रभंाग से बलिहरण करें।

[ मूलम् ]

आपस्तम्ब :-

**बलीनां तस्य तस्य देशस्य संस्कारो हस्तेन परिमृज्यावेक्ष्याभ्युक्ष्य पश्चात् परिषेचनम्।**

तस्य तस्येत्यावृत्तेः प्रत्येकं मार्जनादि अवेक्ष्य, सिक्त्वाऽनुलिप्य बलिं दत्त्वा परिषेचनम् = बलेरुपरि सेकः।

[ संस्कृत टीका ]

बलीनामिति। बलीनाम् = धात्रादीनुद्दिश्य दीयमानानां विभिन्न बलीनाम्। तस्य तस्य देशस्य = बल्याधारभूतस्य तत्तत्स्थानस्य। संस्कारः कार्यः। केन प्रकारेणेति जिज्ञायाम्-हस्तेन, परिमृज्य = परितः-सर्वतः मार्जनं परिष्करणं कृत्वा। अवेक्ष्य = शुद्धिमवलोक्य। अभ्युक्ष्य = सिक्त्वा। अनुलिप्य = गोमय- सलिलै र्लेपनं कृत्वा च। बलिं दत्त्वेति शेषः। पश्चात् = अनन्तरम्। परिषेचनम् = बलेरुपरि सेकः कर्तव्य इत्यर्थः।

"पाठक्रमादेव च परिषेचनस्य पश्चाद्भावे सिद्धे पश्चादग्रहणं बल्युपरि गन्धमाल्यादिदानार्थमि" त्युज्ज्वलाकारः। पश्चाच्छब्दस्य बलिदानबोधकत्वेन नार्थान्तरबोधकताऽपि बोध्या।

'तस्य तस्ये' ति वीप्सया प्रत्येकबलिस्थानादेः मार्जनादि बोध्यते ।

**[ हिन्दी टीका ]**

देय बलियों के आधार भूत प्रत्येक स्थान का संस्कार हाथ से बुहार कर अच्छी तरह शुद्धता देखकर, पश्चात् वहाँ बलि देकर उसके ऊपर जल से सेक करें । 'तस्य तस्य' ऐसा दुबारा कहने का तात्पर्य है कि प्रत्येक बलि स्थान का एक समान संस्कार होना चाहिए ।

यहाँ उज्ज्वलावृत्तिकार का मत है कि क्रम के अनुसार ही परिषेचन को पश्चात होना प्राप्त था तो फिर पश्चात् 'परिषेचनम्' के कहने से उन बलियों के ऊपर गन्ध, माला आदि जाने का भाव दिये द्योतित होता है । किन्तु 'पश्चात्' पद का अन्वय बलिदान के साथ कर देने से उक्त अर्थ का द्योतन न भी हो सकता है ।

**[ मूलम् ]**

बलीनुक्त्वा छान्दोगपरिशिष्टे–

**पिण्डवत् पश्चिमा प्रतिपत्तिः ।**

पिण्डवदग्न्यादिप्रक्षेपणम् । पश्चिमा = अन्तिमा ।

**[ संस्कृत टीका ]**

बलीनिति । बलीन् = वैश्वदेवानन्तरं देयबलीनुक्त्वा तत्परिषेकार्थम् 'सर्वेषामुभयतोऽद्भिः' इति पङ्क्तिमुक्त्वा 'पिण्डवदि' त्याद्युक्तम् । तथा चायमर्थः–सर्वेषम्=एतद्ग्रन्थ (छन्दोगपरिशिष्ट) रीत्या पार्थिवादिरौद्रान्तबलीनाम् । उभयतः =आदावन्ते च । परिषेकः = सकृत्प्रत्येकं वा जलसेचनं, कार्यमिति शेषः ।

प्रतिपत्तिरिति । प्रतिपत्तिपदार्थे–"मीमांसकमते फलशून्यकर्माङ्गम् । यथा–देवतोद्देश्येन यागादौ त्यक्तहविरादेरग्नौ निक्षेपः, पूजितप्रतिमादेर्जले विसर्जनमित्यादि । श्राद्धादौसर्वशेषाङ्गकर्म यथा–निर्वाहिताङ्गक द्रव्य करणाङ्गत्वं प्रतिपत्तिरूपकर्माङ्गत्वम् इति तिथ्यादितत्त्वम् । "प्रतिपत्तिकर्म = उत्तरा क्रिया । यत्र एकेन द्रव्येण कर्मद्वयं निर्वाह्यते तत्र उत्तरं कर्म प्रतिपत्तिकर्म" इति तट्टीकायां काशीरामवाचस्पतिरि' 'ति शब्दकल्पद्रुमः ।

पिण्डवदिति । अस्यार्थः—देवतोद्देश्येन त्यक्तानां बलीनां भूमौ निधानेन प्रथमा प्रतिपत्तिः । पित्रुद्देश्येन त्यक्तानां पिण्डानामपि कुशस्तरणनिधानेन प्रथमा प्रतिपत्तिः । पश्चिमा = अन्तिमा-उत्तरेति यावत् । तु—

**एवं निर्वपणं कृत्वा पिण्डांस्ताँस्तदनन्तरम् ।**

**गां विप्रमजमग्निं वा प्राशयेदप्सु वा क्षिपेत् ॥**

इति मनू (३।२६०) क्ता विज्ञेया । अत्र "एवमुक्तप्रकारेण पिण्डानां प्रदानं कृत्वा प्रकृतवरयाचनानन्तरं तान् पिण्डान् गां ब्राह्मणं छागं वा भोजयेत् । अग्नौ वा क्षिपेदिति कुल्लूकभट्टी तट्टीका । अतएव यथा पिण्डप्रतिपत्तिः विप्रगवादिषु तथा बलीनामपि चरमा प्रतिपत्तिरित्यर्थ" इत्याचारचिन्तामणिरपि ।

उत्तर–क्रियायां प्रतिपत्ति शब्दस्य व्यवहारादेवानन्तरोक्त —

**पिण्डनिर्वपणं केचित्पुरस्तादेव कुर्वते ।**

**वयोभिः खादयन्त्यन्ये प्रक्षिपन्त्यनलेऽप्सु वा ॥**

इति मनु (३।२६१) वचनस्य कुल्लूकभट्टीये "पिण्डप्रदानं केचिदाचार्या ब्राह्मणभोजनानन्तरं कुर्वते । अन्ये पक्षिभिः पिण्डान् खादयन्ति । इयञ्च पक्षिभोजनरूपा प्रतिपत्तिः अग्न्युदकप्रक्षेपयो वैंकल्पिकीति दर्शयितुमुक्तयोर-भिधानमि" ति व्याख्याने प्रतिपत्तिपदप्रयोगः ।

एवञ्च यथा पार्वणादिश्राद्धे आदौ पितृभ्यः पिण्डानां प्रदानं कृत्वा अन्ते चोक्तमनूक्तरीत्याऽग्न्यादिषु प्रक्षेपणं क्रियते तथैव पञ्चमहायज्ञेषु वैश्व-देवहोमानन्तरं देवपितृभ्यो बलीनां प्रदानं कृत्वा तेषामग्न्यादौ प्रक्षेपणं विधेयमिति सारांशः ।

**[ हिन्दी टीका ]**

'जैसे पार्वण आदि श्राद्ध में पितरों के निमित्त पिण्डों का दानकर उन्हें 'एवं निर्वपणं कृत्वा' इस मनु (३/२/६०) वचन के अनुसार गौ, ब्राह्मण या छाग को खिला

देते हैं, अथवा अग्नि या जल में डाल देते हैं, उसी तरह पञ्च मधयज्ञ में वैश्वदेव होम के बाद देव विशेष तथा पितरों के निमित्त दिये गए बलियों को गौ, विप्र आदि को खिला दें या अग्नि आदि में डाल दें।

## [ मूलम् ]

यत्तु पश्चिमा प्रतिपत्तिः = पितृबलि-प्रतिपत्तिरिति व्याख्यानम्। तदशुद्धम्। सर्वबलिप्रतिपत्त्याकाङ्क्षाया विद्यमानत्वात्। स्त्रीलिङ्गानुपपत्तेः। षष्ठी-समासे लक्षणापत्तेश्च।

## [ संस्कृत टीका ]

यत्त्विति। केषाञ्चिदश्रद्धेयं व्याख्यानान्तरं दर्शयितुमाह-यत्तु पश्चिमेति। ''पश्चिमा प्रतिपत्तिः = पितृबलिप्रतिपत्तिः -पश्चाज्जायमानस्य पितृबलेरेव पूर्वव्याख्यातोत्तरक्रिया'' इति केषाञ्चिद् व्याख्यानमश्रद्धेयम्। सर्वबलि-प्रतिपत्त्याकाङ्क्षायाः = देवविशेष-पित्रुद्देश्येन प्रदत्तानां सर्वेषां बलीनां प्रकृतत्वेन उत्तरक्रियासम्बन्ध्याकाङ्क्षायाः (अपेक्षायाः) विद्यमानत्वात् = सत्वात्। आकाङ्क्ष्या उपस्थितेषु सर्वबलिषु पितृबलेरेव ग्रहणे देवबलित्यागो निष्प्रमाणः स्यादिति भावः। पितृबलितात्पर्येण पश्चिमापदस्य प्रयोगे तु तत्र, स्त्रीलिङ्गानुपपत्तेः = स्त्रीलिङ्गनिर्देशस्यासङ्गतेश्च। पश्चिमायाः प्रतिपत्तिरिति षष्ठीसमासश्रयणे तु स्त्रीलिङ्गोपपत्तावपि पश्चिमापदस्य पित्रर्थबलौ लक्षणापत्तिरूपदोषस्य वज्रलेपत्वात्।

## [ हिन्दी टीका ]

यहाँ मूलोक्त 'पश्चिमाप्रतिपत्ति' शब्द की व्याख्या किसी ने पितृबलि प्रतिपत्ति अर्थात् पीछे होने वाली पितृबलि की उत्तर क्रिया (प्रतिपत्ति) की है, परन्तु यह अश्रद्धेय इसलिए है कि देव एवं पितरों के निमित्त दिये गए सभी बलियों की आकांक्षा (अपेक्षा) स्वभावतः विद्यमान है, तो फिर क्या कारण हो सकता है कि पश्चिमा पद से केवल पितृबलि ही ली जाय। दूसरी बात, पितृबलि को समझाने के लिए प्रयोग किये जाने वाले पश्चिमा पद में स्त्रीलिङ्ग का प्रयोग होना भी असंगत हो जायगा। तीसरी बात, यदि पश्चिमायाः प्रतिपत्तिः ऐसा षष्ठीसमास माने तो स्त्रीलिङ्ग के उपादानवाला दोष न होने पर भी लक्षणा की आपत्ति दुर्निवार हो जायगी।

[ मूलम् ]

तथा च, ''अमुष्मै नंम इत्येवं'' बलिदानं विधीयते ।

[ संस्कृत टीका ]

तथा चेति । 'अमुष्मै नमः' इत्येवं रूपेण अर्थात् पृथिव्यै नमः, पर्जन्याय नम इत्येवं रूपेण शिष्टैः बलिहरणं क्रियत इति वचनार्थः । एतेन नमः पृथिव्यै इत्येवं रूपेण नमः शब्दस्य पूर्वप्रयोगो नोचित इति ध्येयम् ।

[ हिन्दी टीका ]

'अमुष्मै नमः' इस रूप से भूतादि के लिए बलिहरण करें । अर्थात् बलि हरण के समय पृथिव्यै नमः, पर्जन्याय नमः इस तरह मन्त्रोच्चारण करें । न कि इसके विपरीत पहले ही नमः शब्द जोड़कर 'नमः पृथिव्यै' आदि ।

[ मूलम् ]

तथा,

स्वधाकारेण निर्वपेत् पित्र्यं बलिमतः परम् ।

तमप्येके नमस्कारैः कुर्वते नेति गौतमः ॥

एक इति शाखान्तराभिप्रायम् । अतएव ''स्वधा नमः'' इति वाजसनेयिगृह्ये नमस्कारोऽपि पठितः। नेति गौतम इति छन्दोगानां नमस्कारनिषेधः ।

[ संस्कृत टीका ]

तथेति । अतः = एतद्वचनात्पूर्वोक्त–

स्वधाकारः पितृणान्तु हन्तकारो नृणां यतः ।

इति छन्दोग–परिशिष्टवचनेन पितृणां स्वधाकारस्यावश्यकत्वात् । सदा=प्रति वैश्वदेवीयपितृकर्मणि । स्वधाकारेण = स्वधान्तेन पित्र्यम् = पितरो देवता अस्येति वाय्वृतुपित्रुषसो यत् (पा० सू० ४/२/३१) इति यति पितृदेवताकम् । बलिम् । निर्वपेत् = दद्यात् । तमपि =एतद्बलिमपि । एके=यजुर्वेदशाखिनः । नमस्कारैः = नमः पदप्रयोगैः (सह) कुर्वते = कुर्वन्ति । ''बलिदान–प्रदानार्थं

नमस्कारः कृतो यतः" इत्यत्र प्रकरणे छन्दोगपरिशिष्टोक्तेः । अतएव =वाजसनेयिभिरवश्यं कर्तव्यत्वादेव । "स्वधा नम" इति वाजसनेयिगृह्ये । नमस्कारोऽपि= स्वधाशब्देन सह नमः शब्दोऽपि । पठितः = कथितः । एवञ्च वाजसनेयिनां कृते 'ॐ पितृभ्यः स्वधा नमः' इ। मन्त्रः पितृबल्यर्थं निष्पन्नः ।

'नेति गौतम' इति नमस्कार-निषेधकथनन्तु । छन्दोगानाम् = सामवेदशाखिनां कृत एव मन्तव्यः । गौतमस्यापि सामवेदित्वात् । ःवञ्च छन्दोगानां पितृबल्यर्थं ॐ पितृभ्यः स्वधा नम इति मन्त्रो निष्पन्नः ।

[ हिन्दी टीका ]

जिस कारण पितृकर्म में 'स्वधा' शब्द का प्रयोग होना आवश्यक है अत: प्रत्येक पितृबलिकर्म में स्वधा शब्द के साथ ही पितरों को बलि दें । साथ ही वाजसनेयी उस स्वधा शब्द के साथ नमः शब्द का भी प्रयोग करें, 'क्योंकि वाजसनेयिगृह्य में भी 'स्वधा नमः' ऐसा पढ़ा गया है । "नेति गौतमः" ऐसा जो स्वधाशब्द के साथ नमः पद प्रयोग का निषेध कथन है वह छन्दोगों (सामवेदियों) के लिए ही है । इससे यह निष्कर्ष हुआ कि वाजसनेयियों के लिए ओं पितृभ्यः स्वधा नमः' और छन्दोगों के लिए 'ओं पितृभ्यः स्वधा' यह मन्त्र पितृनिमित्त बलिदान के लिए सिद्ध हुआ ।

[मूलम्]

सायं प्रातर्वैश्वदेवः कर्तव्यो बलिकर्म च ।
अनश्नताऽपि सततं[१] मन्यथा किल्विषी भवेत् ॥

सायमिति । पुनः पाके सति । तथा च, विष्णुपुराणे-

पुनः पाकमुपादाय सायमप्यवनीपते ।
वैश्वदेवनिमित्तं वै पत्न्यमन्त्रं[२] बलिं हरेत् ॥
तत्रापि श्वपचादिभ्यस्तथैवान्नविसर्जनम् ।

[ संस्कृत टीका ]

सायमिति । सततम्=प्रतिदिनम् । सायं प्रातरपि=सायङ्काले प्रातः काले च । अनश्नताऽपि=भोजनमकुर्वताऽपि । वैश्वदेवः=वैश्वदेवहोमः । कर्तव्यः ।

पाठा० ( १ ) कर्तव्यं । ( २ ) पत्न्या सार्धम् ।

बलिकर्म च कर्तव्यम् । अन्यथा=प्रतिदिनं सायंप्रातः वैश्वदेवबलिकर्मणोर-करणे । किल्विषी=पापी अपराधी वा (पापं किल्विष कल्मषमिति, अपराधेऽपि किल्विषमिति चामरः) भवेत् ।

पुनः पाके सतीति । यथा प्रातः पाकसिद्धान्नेनोभयं कर्म भवति तथा सायं पाके सत्येव वैश्वदेवबलिकर्मणी कर्तव्ये इत्यर्थः । अत्र प्रमाणं विष्णु पुराणीयवचनं पुनरित्यादि ।

हे अवनीपते ! = राजन् । सायमपि सायं कालेऽपि । वैश्वदेव निमित्तम्= वैश्वदेवार्थम् । पाकम्=विक्लिन्नमन्नम् । उपादाय=गृहीत्वा । पत्नी=यजमानो पनीततत्पुत्रादीनामनुपस्थितौ सवर्णा तद्धर्मपत्नी। अमन्त्रम् = मन्त्ररहितम् । बलिम्=भूतादिभ्यो बलिम् । हरेत् = दद्यात् । 'न स्त्री जुहुयादि' ति आपस्तम्ब-निषेध-वचनेन स्त्रीकर्तृकहोमस्याकरणीयत्वेन बलिहरणमात्रस्य विधेयत्वात् । तत्रापि=स्त्रीकर्तृकबलिहरणेऽपि । तथैव=भूतादिभ्यो बलिहरणमिव । श्वपचादिभ्यः =चाण्डालकुक्कुरवायसादिभ्यः । अन्नविसर्जनम्=बलिहरणं कुर्यात् । अत्र प्रकृतविष्णुपुराणवचनमेव यमवचनत्वेनोक्रम्य ''यमवचने पाकश्रुतिः पक्षप्राप्तानुवादमात्रम् । कालमात्र विधिपरत्वात्तस्य । एतेन पुनः पाकमित्यादि यमवाक्यात् पाके सत्येव सायं वैश्वदेवबलिकर्मणी कर्तव्ये इति श्री दत्तोक्तं विचारणीयम् । अन्यथा प्रातर्वैश्वदेवोऽपि पाके सत्येव स्यात् । तत्रापि सायं प्रातः सिद्धस्येत्यादिवाक्यैः पाकावगतेरि''ति वीरमित्रोदयः । परं यमवचनार्थस्य तथा स्वारस्ये स्वीकृते''अहरहः पञ्चयज्ञान्निर्वपेदाशाकोदकेभ्य'' इति शङ्खलिखित वचनार्थस्य दैनिक वैश्वदेवार्थत्वस्वीकारादिना च श्रीदत्तोक्तम-विचारणीयमेवावतिष्ठते ।

एवमेव मूलोक्तछन्दोगपरिशिष्टीयवचनमुपक्रम्य ''अत्र सायंप्रातःशब्दौ रात्रिदिवसपरवि''ति सायं प्रातरनश्नताऽपीत्युक्तेः भुञ्जानेन सकृदेव वैश्वदेवबलिकर्मणी कर्तव्ये इत्याशङ्कानिरासः । किन्तु इयान् विशेषः, अश्नतोऽकरणे प्रत्यवायद्वयं भोजनकृतोऽकरणकृतश्च । अनश्नतस्त्वकरण-

कृत एव । अतएव 'अन्यथा किल्विषी भवेदि'त्युक्तम् । एवञ्च एकादश्यादौ भोजनाभावेऽपि वैश्वदेवादि कर्तव्यमेव । तत्र च सिद्धस्य हविष्यस्य मुख्यत्वात्तदर्थं पाकः कर्तव्यः । तत्रा सामर्थ्येतु । अपक्वेनापि वैश्वदेवः कर्तव्यः। हविष्याभावे अहविष्येणापि । यथा शङ्खलिखितौ-

**अहरहः पञ्च यज्ञान्निर्वपेदापत्रशाकोदकेभ्यः ।**

श्रुतिश्च-'अहरहः स्वाहा कुर्यदाकाष्ठात्' इति च वीरमित्रोदयः ।

[हिन्दी टीका]

प्रतिदिन सायङ्काल तथा प्रातः काल भोजन के पहले ही वैश्वदेव होम तथा बलिकर्म कर ले । अन्यथा वह यजमान पापी या अपराधी हो जाता है । यह मूल छन्दोगपरिशिष्ट वचन का अर्थ हुआ ।

यहाँ ग्रन्थकार का विवेचन है कि दिनान्त में पुनः पाक होने पर ही सायंकालिक बलिवैश्वदेव कर्म होंगे । जैसा कि विष्णुपुराण का कथन है कि पुनः पाकसम्नन्न अन्न लेकर सायंकालिक बलिवैश्वदेव करे । यजमान तथा उनके उपनीत पुत्रादि की अनुपस्थिति स्थिति में यजमान की पत्नी विना मन्त्र के ही वैश्वदेव तथा बलिहरण कर लें ।

यहाँ उक्त विष्णुपुराण वचन को यम वचन के रूप में उद्धृत करते हुए वीर मित्रोदय का कहना कि इस वचन में पढ़े गए "पुनः पाक" पद सायंकाल में प्राप्त पाक के अनुवादक ही हैं । अतः "पुनःपाकम्" इत्यादि यमवचन के आधार से श्रीदत्तोपाध्याय ने "पाक होने पर ही सायं काल वैश्वदेव और बलिकर्म कर्तव्य हैं" यह जो कहा वह विचारणीय है क्योंकि ऐसा कहा जाय तो प्रातः कालिक वैश्वदेव भी पाक होने पर ही हो । जबकि यहाँ भी "सायं प्रातः सिद्धस्य" इत्यादि (आश्वलायन सूत्र) वचनों के द्वारा पाक होना अवगत होता है । इस कथन का समाधान हो सकता है कि यदि उक्त विष्णु पुराण (यम) वचन का स्वरस सायङ्कालिकपाकसाध्य वैश्वदेव का विधान ही मान लिया जाय तथा पाक की अभावस्थिति में पत्रशाक उदक आदि का अनुकल्प बताने वाले शंखलिखित वचन को दिन में होने वाले वैश्वदेव परक मान लिया जाय तो श्रीदत्त कथन अविचारणीय ही रह जाता है।

मूलोक्त "सायं प्रातः वैश्वदेवः" इत्यादि छन्दोगपरिशिष्ट वचन का प्रसंग लेकर पुनः वीरमित्रोदय का कहना है कि इस वचन में पढ़े गए सायं तथा प्रातः शब्द रात्रि एवं

दिन के वोधक हैं। साथ ही इन दोनों पद तथा अनशनता पद के कहने का यह तात्पर्य होता है कि भोजन कर लेने तथा वैश्वदेव न करने वाले को दो तरह के पाप होंगे। जिनमें पहला वैश्वदेव के पहले भोजनकर लेने सम्बन्धी। दूसरा वैश्वदेव न करने सम्बन्धी। इसी तरह भोजन न करने तथा वैश्वदेव भी न करने वाले को वैश्वदेव न करने सम्बन्धी एकविध पाप होगा। इसीलिए वचन में कहा गया है ''अन्यथा किल्विषी भंवेत् (अन्यथा पापी या अपराधी हो जायगा)। इसका तात्पर्य यह भी होता है कि एकादशी आदिव्रत के दिन भोजन न करने की स्थिति में भी वैश्वदेव आदि कर्तव्य ही होगा। यहाँ (वैश्वदेव में मुख्यत: हविष्य साथ ही सिद्ध अन्न होना चाहिए। अत: पाक होना चाहिए। किन्तु पाक करने की स्थिति अनुकूल न होने पर अर्थात् सिद्धान्न के अभावपक्ष में असिद्ध (अपक्क) से तथा हविष्य के अभाव में अहविष्य से भी निर्वाह किया जा सकता है। जैसा कि शंख एवं लिखित ने कहा है 'पत्ता, शाक तथा जल के दान) से प्रतिदिन पञ्च महायज्ञ कर लेना चाहिए। इसी तरह ेद का भी कहना है कि अन्न आदि के अभाव में अन्तत: अग्नि में काष्ठ मात्र भी देकर वैश्वदेव होम कर लेना चाहिए।

**[ मूलम् ]**

मनुः-

**सायन्त्वन्नंस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेत्।**

इदं पत्नीकर्त्तृकं बलिहरणं यजमानानुपस्थितौ।

**[ संस्कृत टीका ]**

सायमिति। एतदुत्तरार्धं यथा-मनु (३।१२१)

**वैश्वदेवं हि नामैतत्सायं प्रातर्विधीयते। इति।**

सायम्=दिनान्ते। सिद्धस्य=पाकनिष्पन्नस्य। अन्नस्य। अमन्त्रम्='इन्द्राय नम' इत्यादिमन्त्रपाठवर्जम्-मानसदेवतोद्दश्येनेति यावत्। बलिम्। पत्नी=यजमान-उपनीत-तत्पुत्रादीनामसन्निधाने यजमानस्य धर्मपत्नी। हरेत्=दद्यात्। ''न स्त्री जुहुयादि'' त्यापस्तम्बेन होमस्य निषेधात्। एवमेव मन्वर्थमुक्तावली-स्वरसः।

[ हिन्दी टीका ]

यजमान तथा उनके उपनीत पुत्र आदि की अनुपस्थिति में यजमान की धर्मपत्नी विना मन्त्र पाठ के मानस देवता के उद्देश्य से दिनान्त में पाकनिष्पन्न अन्न की मानस बलि दें। क्योंकि स्त्रियों के द्वारा होम होना तो निषिद्ध ही है।

[ मूलम् ]

अत्र भ्रात्रादीनामविभक्तानामपि संसृष्टानां मुख्येनैकेनैव पाकयज्ञाः कर्तव्याः। यदाह-

एकपाके[1] निवसतां पितृदेवद्विजार्चनम्।
एकं भवेद् विभक्तानां तदेव स्याद् गृहे गृहे।

'एकपाके निवसतामि' त्युपक्रम्य संसृष्टानामित्यभिधानाद् 'विभक्तानामिति द्रव्यपार्थक्यपरम्। देवार्चनमत्र वैश्वदेवः।

[ संस्कृत टीका ]

अत्रेति। अत्र=पञ्चमहायज्ञे। पाकयज्ञाः=ब्रह्मयज्ञेतरचत्वारो यज्ञाः। यथाच- 'ये पाकयज्ञाश्चत्वारो विधियज्ञसमन्विताः'' इति मनु (२।८६) टीकायां ब्रह्मयज्ञादन्ये ये पञ्चमहायज्ञान्तर्गता वैश्वदेवहोम-बलिकर्म-नित्यश्राद्धातिथिभोजनात्मकाश्चत्वारः पाकयज्ञा इति कुल्लूकभट्टोऽपि। भ्रात्रादीनामविभक्तानां विभज्य संसृष्टानाम्=एकाश्रमेऽशनवसनादौ मिलितानाम्। (च, मध्ये)। एकेनैव=मुख्येन-एके गृहपतिनैव। पाकयज्ञाः कर्तव्याः। अत्र ''एते चाविभक्तानां विभज्य संसृष्टानाञ्च मध्ये गृहपतिना कार्या'' इति वीरमित्रोदयोऽपि। यदाह-एकेत्यादि। एकपाके = एकपाकसम्पन्ने भक्ष्ये। निवसताम्=निर्वहताम्-भोजनंवताम्। पितृ-देव-द्विजार्चनम्=पाकयज्ञानुष्ठानम्। एकम्=अद्वितीयमेव भवेत्। न तु व्यक्तिभेदेन पाकयज्ञानुष्ठानस्यानेकत्वमिति भावः। एकगृहस्थितसकलजनाना मेज्जन्यफलभागित्वात्। एतेन ब्रह्मयज्ञस्तु विभिन्न एव भवेत्। विभक्ता नाम्=द्रव्यपार्थक्यवताम्। तदेव= पितृदेव-द्विजार्चनं

पा० (१) एकपाकेन वसताम्।

समुदितमेव । गृहेगृहे=प्रतिगृहम् । भवेत् । पाकभेदेनानेकं भवेदिति भावः । अतएव एतदर्थं गौतमेनाग्निपरिग्रहकालः "भार्यादिरग्निर्दायादिर्वा" इति सूत्रोत्त-रार्धेन पितृभ्रात्रादिभिर्दायविभागकालिकः कथितः । उपक्रम्य=प्रस्तूय । वैश्वेदवः=वैश्वदेवो होमः बलिश्च ।

अत्र प्रकृतवचनमुपक्रम्य वीरमित्रोदयस्तु "अत्र च सर्वेषामेकं भवेदित्यभि-धानात्सर्वेषामेवाधिकारप्रतिपत्तौ यत्र गृहपतेरेव श्वशुर-मरणादितोऽशौचं तत्राविभक्तेनान्येनपि वैश्वदेवादयः कार्याः । अन्यथा प्रत्यवायप्रसङ्गात् । सर्वस्वामिकद्रव्यसाध्यत्वञ्चात्र मूलम् । तेन यत्रा साधारणाविभाज्य द्रव्येण गृहपतिना तदनुष्ठीयते तत्र तदन्येन तत्पृथक्कर्तुमुचितमिति प्रतीयते । अतएव तर्पण-स्वाध्याययोः पृथगनुष्ठानाचारः । इदन्तु नित्यनैमित्तिक-काम्यसा-धारणम् । सङ्कोचे मानाभावात् । फलन्तु सर्वेषामेव । दम्पत्योरिव यागफलं सर्वेषामेकं भवेदित्यनेन सर्वेषां फलभागित्व-प्रतिपादनादि"त्याह ।

[हिन्दी टीका]

इन पाँच महायज्ञों में पाकयज्ञ (वैश्वदेव, बलिकर्म श्राद्ध नित्या तथा अतिथि भोजन रूप ये चार पाकयज्ञ) भाई आदि से अपने हिस्से का बटबारा न कर एक भोजनाश्रम में या बता पर भी साझीदार की तरह शामिल रहने वालों में एकमात्र या (मुख्य) के द्वारा ही सम्पन्न किये जायेंगे। जेसा कि वाजसनेय "एक पाक (रसोई) में भोजन करनेवालों के मध्य उक्त चारो पाकयज्ञों का एकत्र ही अनुष्ठान होगा। किन्तु जब घर के साझीदार ये व्यक्ति अपने हिस्से विभक्त (अलग) हो जायेंगे तो प्रतिपाक (प्रत्येक गृह) के अनुसार ये अनुष्ठान भी विभिन्न (अलग-अलग) हो जायेंगे।"

अलग से ज्ञातव्य है कि इसी हेतु गौतम ने "भार्या निरग्नि र्दायादिर्वा" इस सूत्र के उत्तरार्ध (अग्निर्दायादिर्वा) से अपने हिस्से के बटवारे के समय अग्नि परिग्रह-काल का विधान किया गया है।

मूल वचन में "एकपाके निवसताम्" इसके उपक्रम में "संसृष्टानाम्" (साझीदार की तरह रहने वाले) कहे जाने से "विभक्तानाम्" इस पद का अर्थ-बटवारा कर लेने वालों का हो जाता है।

यहाँ प्रकृत प्रसंग पर विशद से वीरमित्रोदय का विवेचन है कि मूल वचनानुसार एक भोजनाश्रमवासी सभी का एक पाकयज्ञानुष्ठान कहे जाने पर एक परिवार के सभी

को अधिकार प्राप्त हो जाता है । अतः ऐसी स्थिति में जहाँ गृहपति (घर के मुखिये) को श्वशुर मरण आदि कारण से आशौच हो जाय वहाँ उस गृहवासी किसी अन्य से भी वैश्वदेव आदि किये जायँ । क्योंकि सभी के सम्मिलित द्रव्य से वे यज्ञ होते हैं। यह नहीं करने पर पाप की उत्पत्ति होगी । परन्तु जहाँ अविभाज्य (बटवारा न होने वाले) वैयक्तिक द्रव्य से गृहपति अनुष्ठान करता है वहाँ प्रतिदिन पारिवारिक किसी अन्य व्यक्ति को भी पृथक् अनुष्ठान करना चाहिए, ऐसा प्रतीत होता है । अतएव विना द्रव्य के होने वाले तर्पण और वेदाध्ययन के पृथक्-पृथक् होने का शिष्टाचार है । यह निर्णय नित्य, नैमित्तिक तथा काम्य विधियों में समान रूप मं मान्य होगा । क्योंकि किसी एक को छोड़ देने में कोई प्रमाण नहीं । इन कर्मों के अनुष्ठान से होनेवाला फल सभी को होगा । जैसे याग का एक ही फल दम्पती (पति-पत्नी) को होता है, उसी तरह यहाँ भी अविभक्त परिवार के सभी इस फल के भागी होंगे ।

[मूलम्]

अत्र होमात्प्राक् स्रग्गन्धादिना वह्निपूजनं कर्तव्यम् । तदुक्तं मार्कण्डेय-पुराणे-

सम्पूजयेत्ततो वह्निन्दद्याच्चैवाहुतीः क्रमात् । इति

[संस्कृत टीका]

अत्रेति । अत्र=वैश्वदेवविधौ । होमात् प्राक् =पूर्वम् । स्रग्गन्धादिना= माल्यचन्दनादिना । वह्निपूजनम्= अग्निपूजनम् । कर्तव्यम् ।

सम्पूजयेदिति । ततः=पांकोत्तरमग्निस्थापनोत्तरं वा । वह्निम्=अग्निम् । सम्पूजयेत्= पुष्पमाल्यानुलेपनादिभिः समाराधयेत् । आहुतीः=हविष्याणि । क्रमात्=यथाशास्त्रमनुक्रमम् । दद्यात्=प्रक्षिपेत् । अत्र "इयाँस्तु विशेषो यदग्नौ होमे भू-वह्नि-संस्काराः सर्वेऽपि कार्याः जलक्षित्योस्त्वाहुतिमात्रं न तयोः संस्कार-विशेष" इति नित्यकृत्यरत्नमाला ।

यहाँ वैश्वदेव विधि में होम के पहले पुष्पमाला-चन्दन आदि से अग्नि का पूजन कर लेना चाहिए । जैसा कि मार्कण्डेय पुराण में कहा है ।

साग्निक व्यक्ति पाक के बाद किन्तु निरग्निक व्यक्ति अग्निस्थापन के बाद माल्य चन्दन आदि से अग्नि का पूजन कर उसमें शास्त्रविधानानुसार क्रमशः हवन करे ।

❀ इति पञ्चमहायज्ञाः ❀

# वैश्वदेवबलिकर्मप्रयोगः

## [ मूलम् ]

अथ प्रयोगः। पर्युक्षिते समिद्धेऽग्नौ, तदभावे जले, तदभावे भूमौ पाकादन्नमुद्धृत्य फलमूलादिना वा पञ्चाहुतीर्जुहुयात्- ( १ ) ॐ ब्रह्मणे स्वाहा, ( २ ) ॐ प्रजापतये स्वाहा, ( ३ ) ॐ गृह्याभ्यः स्वाहा, ( ४ ) ॐ कश्यपाय स्वाहा, ( ५ ) ॐ अनुमतये स्वाहा ।

## [ संस्कृत टीका ]

अथ=वैश्वदेवबलिकर्मविधिलेखनानन्तरम् । प्रयोगः=पद्धतिः । लिख्यते इति शेषः। पर्युक्षिते=मन्त्रं विनैव जलेन परिवेष्टिते । समिद्धे=प्रज्वलिते । अग्नौ । तदभावे=अग्न्यसत्त्वे। जले । तदभावे भूमौ । पाकात्=पाकपात्रात्। अन्नमादाय=कस्मिन्नप्यन्यपात्रे सिद्धं हविष्यम् अहविष्यं वा परिविष्य । एतदभावे पत्रशाकोदकैः काष्ठेन वा । फलमूलादिना प्रोक्षितेन निम्नलिखित-पञ्चसंख्याकमन्त्रैः । पञ्चाहुतीः=पञ्च हवनीयानि । पूर्वाभिमुखः जुहुयात्=होमं कुर्यात् । मन्त्राश्च ॐ ब्रह्मणे स्वाहेत्यादयः । अत्र "अयमेव देवयज्ञस्तत्र पञ्चसु ब्रह्मणे स्वाहेत्येवमादिको होमात्मकः पूर्वो देवयज्ञ" इति हरिहरभाष्यमपि । इदानीमग्रे भूतयज्ञो वक्ष्यते ।

## [ हिन्दी टीका ]

अब वैश्वदेव एवं बलिकर्मों की पद्धति लिखी जा रही है । विना मन्त्र के ही जल से परिवेष्टित तथा प्रदीप्त अग्नि इसके अभाव में जल में इसके भी अभाव में अन्ततः पृथिवी पर पाकपात्र से पाक अन्न दूसरे पात्र में रखकर इसके अभाव पक्ष में पत्र-शाक या जल से (या अन्ततः काठ से) या फल मूल आदि से 'ओं ब्रह्मणे स्वाहा, आदि मूलोक्त पाँचों मन्त्रोंसे पाँच आहुतियों का पूर्वाभिमुख हवन करें । यह प्रथम देवयज्ञ हुआ । अव आगे भूतयज्ञ कहा जा रहा है ।

## [ मूलम् ]

ततो हुतशेषान्नेन बलिदानम् । तत्र प्रत्येकं बलिदेशान् करेण मार्जनं जलेनाभ्युक्ष्य ( १ ) ॐ पर्जन्याय नमः, ( २ ) ॐ अद्भ्यो नमः, ( ३ ) ॐ पृथिव्यै नमः इत्युदपात्रसन्निधौ । ॐधात्रे नमः ॐ विधात्रे नमः इति द्वार्ययोः ।

ॐ वायवे नमः इति प्रतिदिशम् । ॐ प्राच्यै नमः, ॐ अवाच्यै नमः, ॐ प्रतीच्यै नमः, ॐ उदीच्यै नमः इत्यपि प्रतिदिशम् । ॐ ब्रह्मणे नमः, ॐ अन्तरिक्षाय नमः ॐ सूर्याय नम इति मध्ये । ॐ विश्वेभ्यो देवेभ्यो नमः, ॐ विश्वेभ्यो भूतेभ्यो नमः, ॐ उषसे नमः, ॐ भूतानां पतये नमः इत्युत्तरोत्तरम् ।

[ संस्कृत टीका ]

ततो हुतेति । ततः=वैश्वदेव होमानन्तरम् । हुतशेषान्ने=होमावशिष्टेनान्नेन । बलिदानम्=बलिहरणम् । होमानन्तरं बलिदानस्य विधानात् । मार्जयित्वा=परिसमूह्य । अभ्युक्ष्य=सिक्त्वा । उदपात्र सन्नि धौ=उदकपूर्णपात्र (जलकुम्भ) समीपे । द्वार्ययोः=द्वारदक्षिणवामप्रदेशयोः । अपाच्यै नम इति । अत्रावाच्यै इत्यशुद्धमिति नि० कृ० र० मां० । मध्ये=गृहस्य मध्यभागे । उत्तरोत्तरम्=ब्रह्मादि-बलीनामुत्तरस्यां दिशि क्रमेणोत्तरोत्तरं चत्वारो बलयो दातव्या इत्यर्थः । ॐ पर्जन्याय नम इत्यारभ्य ॐ भूतानां पतये नमः इत्येतत्पर्यन्तं बलिहरणं भूतयज्ञः, "मणिके त्रीनित्येवमादिबलिरूपो भूतयज्ञ" इति हरिहरभाष्यात् । इतोऽग्रे मन्त्रेणैकेन दीयमानबलिरूपः पितृयज्ञो वक्ष्यते ।

[ हिन्दी टीका ]

वैश्वदेव होम के बाद होम से अवशिष्ट (बचे) अन्न से बलिदान करना चाहिए । प्रत्येक बलिदान स्थान को अपने हाथ से स्वच्छ कर तथा जल से सींच कर वहाँ जल पूर्ण पात्र (जलकलश) के पास (१) ॐ पर्जन्याय नमः, (२) ॐ अद्भ्यो नमः, (३) ॐ पृथिव्यै नमः इन तीनों मन्त्रों से क्रमशः तीन बलिदान करें । ॐ धात्रे नमः ओं विधात्रे नमः इन दोनों मन्त्रों से क्रमशः द्वार के दक्षिण तथा वाम प्रदेश में एक एक बलि दें । ॐ वायने नमः इस मन्त्र से चारो दिशाओं में एक एक बार पढ़कर चार बलिदान करें । ॐ प्राच्यै नमः, ॐ अपाच्यै नमः, ॐ प्रतीच्यै नमः तथा ॐ उदीच्यै नमः इन चारों मन्त्रों से पूर्व-दक्षिण-पश्चिम-तथा उत्तर दिशा में चार बलियाँ दे । घर के मध्य भाग में ॐ ब्रह्मणे नमः, ॐ अन्तरिक्षाय नमः, ॐ सूर्याय नमः इन तीनों मन्त्रों से क्रमशः तीन बलियाँ दें । इस की उत्तर दिशा में (१) ॐ विश्वेभ्यो देवेभ्यो नमः, (२) ॐ विश्वेभ्यो भूतेभ्यो नमः, (३) ॐ उषसे नमः, (४) तथा, ॐ भूतानां पतये नमः, इन चारो मन्त्रों से उत्तरोत्तर क्रम से चार बलियाँ दें ।

यहाँ ॐ पर्जन्याय नमः से शुरू होकर ॐ भूतानां पतये नमः एतत्पर्यन्त का बलिदान 'भूतयज्ञ' कहलाता है ।

अब इसके बाद एक मन्त्र से दिया जाने वाला बलिदान रूप पितृयज्ञ कहा जायगा।

[ मूलम् ]

ततः प्राचीनावीती दक्षिणाभिमुखः पातितवामजानुः पितृतीर्थेन दक्षिणस्यां दिशि 'ओं पितृभ्यः स्वधा नमः' इति दद्यात् ।

[ संस्कृत टीका ]

ततः प्राचीनेति । ततः=भूतयज्ञानन्तरम् प्राचीनावीती=दक्षिणस्कन्धस्थित-यज्ञोपवीतः । स्पष्टमन्यत् ।

[ हिन्दी टीका ]

यज्ञोपवीत को अपसव्य करके दक्षिण मुंह हो बायें घुटने को पृथ्वी पर रखकर पितृतीर्थ (तर्जनी तथा अंगूठे के बीच के भाग) से दक्षिण दिशा में पितरों के उद्देश्य से "ओं पितृभ्यः स्वधानमः" इस मन्त्र से परिवेषण पात्र में अवशिष्ट अन्न की बलि दें ।

यही बलिदान पितृ यज्ञ कहलाता है ।

[ मूलम् ]

ततो बलिशेषान्नलिप्तपात्रं प्रक्षाल्य "यक्ष्मैतत्ते निर्णेजनं नमः" इति वायव्यां दिशि दद्यात् ।

[ संस्कृत टीका ]

ततो बलीति । ततः=पितृयज्ञानन्तरम् । बलिशेषान्नलिप्तपात्रम्=पितृ-बलिदानोत्तरमवशिष्टेनान्नेन संयुक्तमुद्धरणपात्रम् । प्रक्षाल्येत्यग्रे निर्णेजन-जलमिति शेषः । वायव्याम्=ब्रह्मादिबलीनां पश्चिमोत्तरे कोणे इत्यर्थः ।

[ हिन्दी टीका ]

पितृबलिदान के बाद अवशिष्ट अन्न से लिप्त उस परिवेषण (उद्धरणपात्र) को धोकर उस जल को ब्रह्मादिबलियों के वायव्य (पश्चिमोत्तर) कोण में "यक्ष्मैतत्ते निर्णेजनं नमः" इस मन्त्र से दान कर दें ।

[ मूलम् ]

गृहद्वारादौ बलिदानासम्भवे अग्नेः पश्चिमतश्चतुरस्रमण्डले धात्रादिबलिदानम् ।

[ संस्कृत टीका ]

गृहद्वारेति । चतुरस्रमण्डले=चतुष्कोणमण्डले, यस्य द्वारं पूर्वाभिमुखं भवेत्।

[ हिन्दी टीका ]

गृहद्वार आदि में उक्त बलिदान संभव न हो सके तो अग्नि के पश्चिम तरफ मिट्टी पर जल से चौकोना चक्र, जिसका द्वार पूरब की ओर हो, वहीं पूर्व प्रतिपादित धाता-विधाता आदि देवों को बलि दें ।

[मूलम्]

यक्ष्म-बल्यनन्तरं विष्णुपुराणे-

ततोऽन्यदन्नमादाय भूमिभागे शुचौ पुनः ।
दद्यादशेषभूतेभ्यः स्वेच्छया तु समाहितः ॥

देवा मनुष्याः पशवो वयांसि सिद्धाः सयक्षोरगदैत्य-सङ्घाः ।
प्रेताः पिशाचास्तरवः समस्ता, ये चान्नमिच्छन्ति मया प्रदत्तम् ॥ १॥
पिपीलिका कीटपतङ्गकाद्या, बुभुक्षिताः कर्मनिबन्धबद्धाः ।
प्रयान्तु ते तृप्तिमिदम्मयाऽन्नं, तेभ्यो विसृष्टं सुखिनो भवन्तु ॥ २ ॥
येषां न माता न पिता न बन्धुर्न चान्यसिद्धिर्न तथाऽन्नमस्ति ।
तत्तृप्तयेऽन्नं भुवि दत्तमेतत्तेषान्तु तृप्तिर्मुदिता भवन्तु ॥ ३ ॥
भूतानि सर्वाणि तथाऽन्नमेत दहञ्च विष्णुर्न यतोऽन्यदस्ति ।
तस्मादहं भूतनिकायभूतमन्नं प्रयच्छामि भवाय तेषाम् ॥ ४ ॥
चतुर्दशो भूतगणो य एष, तत्र स्थिता येऽखिलभूतसङ्घाः ।
तृप्त्यर्थमन्नं हि मया विसृष्टन्तेषामिदन्ते मुदिता भवन्तु ॥ ५ ॥

इत्युच्चार्य नरो दद्यादन्नं श्रद्धासमन्वितः ।
भुवि भूतोपकाराय गृही सर्वाश्रयो यतः ॥
श्वचाण्डाल-विहङ्गानां भुवि दद्यात्ततो नरः ॥

इदं काम्यबलिदानं सर्वशाखिसाधारणम् । सङ्कोचे मानाभावात् । बहुभिरभिधानाच्च ।

## [ संस्कृत टीका ]

यक्ष्मबलीति । ततः=यक्ष्मबल्यनन्तरम् । अन्यदन्नमादाय=पाकपात्रात्पुनरन्नं परिवेषणपात्रे समुद्धृत्य । शुचौ=पवित्रे । भूमिभागे । समाहितः=अनन्यमनस्कः । स्वेच्छया=निजेच्छया । अशेष भूतेभ्यः=निखिल प्राणिभ्यः । बलिमेकं दद्यात् । अत्र स्वेच्छयेत्युपादानाद् बलिदानमिदं काम्यमिति सिध्यति । अतएवैतत् सर्वशाखिसाधारणं भवति । ''देवा मनुष्या'' इत्यारभ्य ''मुदिता भवन्त्वि'' ति पञ्चश्लोकात्मकमन्त्रेण कांम्यबलिरेको दातव्य इति भावः । श्वेति । ततः=काम्यैतद्बलिदानानन्तरम् । नरः=कर्मकर्ता । भुवि । श्वचाण्डाल-विहङ्गानाम्=कुक्कुरश्वपचपक्षिणामुद्देश्येन तत्तनाम्ना पूर्ववदेवान्नं दद्यात् । अत्र ''स्वेच्छयेत्युपादानादिदं काम्यम् । पञ्चश्लोकपाठानन्तरं चैको बलिर्देयः । 'इत्युच्चार्य नरो दद्यादन्नमि' ति श्रवणात् । इदञ्च सर्वशाखि - साधारणम् । एवं श्वचाण्डाल विहङ्गानामित्यपि। एवञ्च शुनां च पतितानाञ्चेत्यादिना मनूक्तमपि । एवं वक्ष्यमाणव्यास वाक्योक्तसमन्त्रकपिण्डद्वयदानमपि । ''बहुभिस्तथाऽभिधानादिति श्रीदत्तादय'' इति वीरमित्रोदयोऽपि । '' श्वादिबलिदानञ्च यत्र तेषामुपयोगस्तत्र विधेयमिति निबन्धकारः । क्रमस्त्वत्र नाद्रियते किन्त्वन्यत्रोक्तक्रमेण वायसबलिः श्वबलिः ततः पतितचाण्डालपाप-रोगिकृमिबलयः'' इति तु नित्यकृत्यरत्नमाला ।

## [ हिन्दी टीका ]

''यक्ष्मैतत्ते'' उक्त इस मन्त्र से बलिहरण करने पर पाकपात्र से दूसरा अन्न लेकर पवित्र पृथिवी पर अशेष प्राणियों के निमित्त मूल में उल्लिखित ''देवाः मनुष्याः पशवः'' से शुरू कर तेषामिदन्ते मुदिता भवन्तु'' तकके पाँचो श्लोक रूप मन्त्र पढ़कर काम्य एक बलि दें ।

इस भूलोक में जिस हेतु गृहाश्रमी मनुष्य सभी अन्न जल आदि देने के कारण आश्रय रूप है, अतः निखिल प्राणियों को अन्नादि के प्राप्ति रूप उपकार के लिए (गृही मानव) श्रद्धापूर्वक उक्त अन्न (बलि) दें ।

मन्त्रस्वरूप भूलोक्त पाँचों श्लोकों का अर्थ निम्न प्रकार है-देवता, मनुष्य, पशु, पक्षी, सिद्ध, यक्ष, सर्प, नाग, अन्य भूतसमूह,प्रेत पिशाच तथा सम्पूर्ण वृक्ष, एवं चीटी, कीड़े और पतङ्ग आदि जीव जो कर्मबन्धन में बँधे हुए भूख से कष्ट पा रहे हों और मुझसे अन्न चाहते हों, उनके लिए यह अन्न मैंने रख छोड़ा है, इससे उनकी तृप्ति हो और वे सुखी हों ।। २ ।। जिनके माता-पिता और बन्धु नहीं है और नाहीं अन्न प्राप्ति का कोई अन्य साधन है, साथ ही नाहीं पास में अन्न हो, उनकी तृप्ति के निमित्त मैंने पृथिवी पर अन्न रख छोड़ा है; उनकी तृप्ति हो और वे प्रसन्न हों । ।। ३ ।। सब जीव, यह अन्न और मैं सब विष्णु ही हैं, उनसे अन्य कुछ भी नहीं है, इस कारण मैं जीवों के शरीर की उत्पत्ति और पोषण में हेतुभूत इस अन्न को उन प्राणियों की रक्षा के लिए देता हूँ । ।।४।। यह जो चौदह प्रकार का भूतों का समुदाय है, इसमें जो सम्पूर्ण जीव-समूह स्थित है, उनकी तृप्ति के लिए मैंने यह अन्न दिया है, वे प्रसन्न हों ।।५।।

उक्त (यह) बलिदान काम्य है; क्योंकि वचन में स्वेच्छया (अपनी इच्छा से) पद कहा गया है । अतएव छन्दोग, वाजसनेयी आदि सभी के लिए एक समान ही होगा । सङ्कोच करने में कोई प्रमाण नहीं । दूसरी बात, बहुत से निबन्धकारों न ऐसा ही कहा भी है ।

[ मूलम् ]

मनुः-

**शुनाञ्च पतितानाञ्च श्वपचां पापरोगिणाम् ।**
**वायसानां कृमीणाञ्च शनकैर्निक्षिपेद् भुवि ।।**

[ संस्कृत टीका ]

शुनाञ्चेति । शुनाम्=कुक्कुराणाम् । पतितानाम्=पातित्यवताम् । श्वपचाम्=चाण्डालानाम् । पापरोगिणाम्=कुष्ठिनां क्षयरोगिणां वा । यथाचात्र कुल्लूक-भट्टोऽपि-''पापरोगी=कुष्ठी क्षयरोगीति वे'' ति । वायसानाम्=काकानाम् । कृमीणाम्=कीटानाम् च । शनकैः । भुवि = यथा रजसा न संगृह्यते तथा पवित्रे भूभागे । निर्वपेत्=अन्यदन्न पात्रे समुद्धृत्य दद्यात् ।

एतद्=श्लोकानन्तरं फलंश्रुतिवाक्यं यथा-

---

पा ( १ ) तेजोमूर्तिः ।

एवं यः सर्वभूतानि ब्राह्मणो नित्यमर्चति ।
स गच्छति परं स्थानं तेजोमूर्तिं[1]पथर्जुना ॥ ( ३।९३ )

[ हिन्दी टीका ]

कुक्कुर, पतित, चाण्डाल, पापरोगी (कुष्ठी या क्षयरोगी), कौए तथा कृमियों के निमित्त जिस से धूल आदि में सन न जाय, इस तरह पवित्र भूभाग पर बलियाँ दें ।

उक्त वैश्वदेव बलि आदि कर्म प्रसंग पर मनु के ही अग्रिम पद्यानुसार अलग से ज्ञातव्य है कि उक्त प्रकार से जो सभी भूतों के निमित्त अन्नदान आदि के द्वारा कर्म सम्पादन करता है, वह ब्रह्म में लीन हो जाता है (क्योंकि ज्ञान एवं कर्म के द्वारा ही मोक्ष प्राप्ति होती है ।) इति

[ मूलम् ]

व्यासः—

ऐन्द्रवारुणवायव्याः सौम्या वै नैर्ऋतास्तथा ।
वायसाः प्रतिगृह्णन्तु भूमौ पिण्डं मयाऽर्पितम्[2] ॥
श्वानौ द्वौ श्यावशबलौ वैवस्वतकुलोद्भवौ ।
ताभ्यां पिण्डं प्रयच्छामि स्यातामेतावहिंसकौ ॥

वायसादिभ्यो भूमौ दत्त्वा ब्राह्मणान् भोजयेत् ।

[ संस्कृत टीका ]

ऐन्द्रेति । इदानीं देयकाककुक्कुरबली आह—ऐन्द्रेत्यादिना । प्रथमश्लोकेन काकेभ्यो द्वितीयश्लोकेन श्यावशबलनामककुक्कुराभ्यां विधिपूर्वकमुपयोगि-स्थाने बली दत्त्वा अपःस्पृशेत्=आचामेत् । अनन्तरं विप्रान् भोजयेच्च ।

अत्र नित्यकृत्यरत्नमाला यथा—"अत्र वायसबलिदानवाक्ये याम्या इत्यस्य स्थाने सौम्या इति पठन्तो भ्रान्ताः,

पौर्णमास्यां मघायोगे वायसाः पञ्च यज्ञिरे ।
इन्द्राच्च वरुणाद् वायोर्यमादथच निर्ऋतेः ॥

---

पा ( १ ) तेजोमुर्तिः । ( २ ) मयोज्झितम् ।

इत्यत्र यमात्काकोत्पत्तिश्रवणात् । सोमात्तदुत्पत्तेः क्वचिदप्यश्रवणाच्च । आश्वलायनगृह्येऽपि याम्या इत्येव पाठो दृश्यते । अत एव सर्वे प्रामाणिक-निबन्धारो मान्या याम्या इत्येवैकवाक्यतया लिखन्तिस्म'' इति । परमत्रैव नित्यकृत्यार्णवस्तु-

''तत्र वायसस्य सोमजस्य क्वाऽप्यनभिधानाद् 'याम्या' इति युक्तः पाठः इति केचिदाहुः । वस्तुतस्तु-वेदवदविच्छिन्नाध्ययनसम्प्रदायस्य हलायुध-धर्मकोष-हरिहरपद्धति-रत्नाकराचारादर्शप्रदीपाह्निकोद्धारादिषु 'सौम्या' इति पाठ-लिखनात् सम्यक्त्वावगमे छन्दोगाह्निक-स्मृतिसारादौ च याम्या इति पाठस्य-

पौर्णमास्यां मघायोगे वायसाः पञ्च यज्ञिरे ।
इन्द्राच्च वरुणाद्वायोर्यमादपि च निर्ऋतेः ॥
श्राद्धं पितृभ्यः कर्तव्यं तिलैः पूज्याश्च ते किल ।
ऐन्द्रवारुणवायव्या याम्या नैर्ऋतिजाः किल ॥
वायसाः पुण्ययशसस्ते मे गृह्णन्तु भोजनम् ।
दद्यादनेन मन्त्रेण तेभ्यो भक्तं मधुप्लुतम् ॥

इति तिथिकृत्यप्रकरणीयब्रह्मपुराणसंवादेन सम्यक्त्वावगमे तत्तच्छाखि-नान्तदाचरणेन तत्तद्देदेषु तथा पाठानुमानात् व्यवस्थित एव पाठः श्रद्धेयः । अतएव श्रीदत्तोपाध्यायैः समयप्रदीपे वायसानामुत्पत्तिवाक्यं लिखित्वाऽपि छन्दोगाह्निके 'याम्या' इति, वाजसनेयकाचारा दर्शे च 'सौम्या' इति पठितम् । अतएव आचारं प्रति नियमोऽपि घटते इत्याचार विवेक'' इति प्राह ।

इमौ च बली (वायसश्वबली) यत्र तयोरुपयोगस्तत्रैव दातव्यौ इति वृद्धाः प्राहुः । बलिमन्त्रे केचिच्छ्यामशबलाविति मकारान्तं नाम पठन्ति, वेदे मकारान्तस्य नाम्नो दर्शनादिति परमेश्वरशर्माण'' इत्यपि नि० कृ० र० मा० । उक्तकुक्कुरद्वयवर्णने ऋग्वेदेऽ पि मन्त्राः श्रूयन्ते ।

[ हिन्दी टीका ]

प्रथम श्लोक - ऐन्द्रवारुण आदि - पढ़कर काक के निमित्त तथा द्वितीय श्लोक - श्वानौ द्वौ श्यावशबलौ आदि - पढ़कर कुक्कुर के निमित्त जहाँ उपयोग हो सके उस साफ सुथरा भूभाग पर एक एक बलि देकर आचमन करे । बाद में ब्राह्मणों को भोजन कराये ।

अलग से ज्ञातव्य है कि वायस बलिदान मन्त्र याम्याः और सौम्याः दोनो पाठ प्राचीन निबन्धकार से सम्मत हैं।

[ मूलम् ]

पित्रर्थबलि-दानानन्तरं वसिष्ठः-

श्रोत्रियायाग्रं दत्त्वा ब्रह्मचारिणे चानन्तरं पितृभ्यो दद्यात्''।

एतच्च तस्मिन् काले श्रोत्रियब्रह्मचारिणोरुपस्थितौ। नोचेत्पूर्ववाक्याद् बल्यनन्तरमेव श्राद्धम्।

[ संस्कृत टीका ]

पित्रर्थेति। पित्रर्थबलिदानानन्तरम्=पितृनिमित्तकं तत्समुच्चितमन्वादि-प्रतिपादितदेवपिपीलिकावायसादिनिमितञ्च बलिदानं विधायेत्यर्थः।

श्रोत्रियाय=वेदाध्येतृब्राह्मणाय। (श्रोत्रियँश्छन्दोऽधीते इति ५।२।८४ पा० सूत्रेण छन्दोऽधीते इत्यर्थे 'श्रोत्रियन्' इति निपातनात्। एतल्लक्षणं यथा-पाद्मोत्तर-खण्डे ११६ अध्याये-

जन्मना ब्राह्मणो ज्ञेयः संस्काराद् द्विज उच्यते।
विद्याऽभ्यासी भवेद् विप्रः श्रोत्रियस्त्रिभिरेव हि॥ इति
एकां शाखां सकल्पां तु षड्भिरङ्गैरधीत्य च।
षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित्॥

इति दानकमलाकरश्च। सकल्पाम्=यज्ञविद्यासहितामित्यर्थः। ब्रह्मचारिणे= प्रथमाश्रमवासिने। ब्रह्मज्ञानं तपो वा आचरति=अर्जयत्यवश्यं (ब्रह्म + चर + आवश्यके णिनिः) प्रथमाश्रमी इति भरतः। उपनयनानन्तरं नियमं कृत्वा यो गुरोः सन्निधौ स्थित्वा साङ्गवेदाध्ययनं करोति।

बालः कृतोपनयनो वेदाहरणतत्परः।
गुरुगेहे वसेद् भूप ब्रह्मचारी समाहितः॥

इति ब्रह्मपुराणात्। स तु द्विविधः। उपकुर्वाणः नैष्ठिकश्च। यथा कौर्मे द्वितीयाध्याये-

ब्रह्मचार्युपकुर्वाणो नैष्ठिको ब्रह्मतत्परः ।
योऽधीत्य विधिवंद् वेदान् गृहस्थाश्रममाव्रजेत् ।
उपकुर्वाणको ज्ञेयोः नैष्ठिको मरणान्तिकः ॥

इति । अग्रम्=प्रथमम् । ग्रासचतुष्टयं वा । दत्वा । अनन्तरम् । पितृभ्यो दद्यात्=नित्यश्राद्धं कुर्यात् । एतदनन्तरं क्व चितु "ततोऽतिथीन् भोजयेदि"-त्यधिको विद्यते पाठः ।

एतेच्चेति । एतच्च=एतयोरग्रदानन्तु । तस्मिन् काले=पित्रर्थबलिदानं काले। नो चेत्=अनयोः श्रोत्रियब्रह्मचारिणोरनुपस्थितौ सत्याम् । पूर्ववाक्यात् = प्रकृत-वसिष्ठवाक्यात् । बल्यनन्तरमेव=पूर्वप्रदर्शितबलिदानकरणानन्तरमेव । श्राद्धम्=नित्यश्राद्धम् । एवञ्च नित्यश्राद्धात्पूर्वं भिक्षुकोपस्थितौ तस्मै भिक्षां दत्त्वा नित्यश्राद्धम् । ततोऽतिथिभोजनादीति क्रमः । नित्यश्राद्धात्पूर्वं भिक्षुकानुपस्थितावपि अग्रे तदुपस्थितौ भिक्षा देया । परं कथंचिद पि नित्यश्राद्धन्तु करणीयमेव ।

## [ हिन्दी टीका ]

पितृनिमित्तक बलिहरण के बाद यदि श्रोत्रिय वेद पढने वाले ब्राह्मण-या ब्रह्मचारी द्वार पर आ गये हों तो उन्हें भिक्षा देकर पितृश्राद्ध (पितरनिमित्तक नित्यश्राद्ध) करें । अनन्तर अतिथि भोजन आदि हो । यदि नित्यश्राद्ध के पूर्व भिक्षुक की अनुपस्थिति हो और श्राद्ध के बाद भी उपस्थित हों तो भी भिक्षा दे देनी चाहिए । परन्तु किसी भी स्थिति में नित्यश्राद्ध तो करना ही चाहिए ।

अलग से श्रोत्रिय के लक्षणमें ज्ञातव्य है कि जन्म से ब्राह्मण होता है । संस्कार से द्विज कहलाता है । विद्याभ्यासी विप्र कहलाता है तथा इन तीनों से युक्त श्रोत्रिय कहलाता है । अथवा यज्ञ विद्यां एवं छहो अंग सहित वेद की एक शाखा भी पढ़कर ब्राह्मण के लिए निर्धारित छहो कर्म (अध्ययन, अध्यापन, यजन, याजन, दान तथा प्रतिग्रह कर्म) करने वला विप्र श्रोत्रिय कहलाता है । इसी तरह उपनयन संस्कार के बाद गुरुकुल में नियमपूर्वक रहकर अङ्गसहित वेदों का अध्ययन करने वाला ब्रह्मचारी कहलाता है ।

❀ इति वैश्वदेवबलिप्रयोगः ❀

# नित्यश्राद्धम्

[मूलम्]

अथ नित्यश्राद्धम् । भविष्यपुराणे-

अहरहः क्रियते यत्तु तन्नित्यमिति कीर्त्यते ।
विश्वेदेवविहीनं तदशक्तावुदकेन तु ॥

विश्वेदेवविहीनम्=विश्वेदेवश्राद्धरहितम् ।

[संस्कृत टीका]

अहरिति । अहरहः=प्रतिदिनम् । यत्=यत्कर्म । क्रियते=अनुष्ठीयते, तत्कर्म । नित्यमिति । कीर्त्यते=उच्यते । न तु ध्वंसभिन्नत्वे सति ध्वंसाप्रतियोगित्वमित्यादिकमिह विवक्षितमिति भावः । तत्=नित्यश्राद्धम् । विश्वेदेवविहीनम् = विश्वेदेवोद्देश्यकश्राद्धकर्मरहितं ज्ञातव्यम् । तथा च लघुहारीतोऽपि "नित्यश्राद्धमदैवं स्यादर्घपिण्डविवर्जितम्" । इति । तत्= नित्यश्राद्धं, मुख्यतः सिद्धान्नेन, तदभावे, सर्वाभावे, उदकेन तु=जलेनापि सम्पादनीयम् ।

[हिन्दी टीका]

प्रतिदिन जो कर्म किया जाय वह नित्यकर्म कहा जाता है । नित्यश्राद्ध विश्वेदेवश्राद्ध (तथा अर्घ-पिण्ड) बिहीन होता है । यदि सिद्धान्न या कच्चा अन्न आदि न मिल सके तथापि अन्ततः जल से भी (नित्यश्राद्ध) कर लेना चाहिए ।

[मूलम्]

मनुशङ्खशातातपाः-

दद्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पयोमूल-फलैर्वाऽपि पितृभ्यः प्रीतिमावहन् ॥

[संस्कृत टीका]

दद्येति । अहरहः=प्रतिदिनम् । अन्नाद्येन=तिलैर्व्रीहिभिर्यवप्रभृतिभिः । पयोमूलफलैर्वा=क्षीरमूलफलैर्वा । वा अथवा । (अन्ततः) उदकेन=जलेनापि। पितृभ्यः=षट्पितृप्रीतिमावहन्=श्रद्धासमन्वितः सन् । श्राद्धम्=नित्यश्राद्धम् दद्यात् =कुर्यात् ।

[ हिन्दी टीका ]

तिल, ब्रीहि-साठी या हैमन्तिक-या वासन्तिक-जौ गेहू आदि अथवा दूध फल मूल अथवा अन्ततः जल से भी श्रद्धापूर्वक छहों पितरों का नित्यश्राद्ध अवश्य करें ।

[ मूलम् ]

छन्दोगपरिशिष्टे-

अप्येकमाशयेद् विप्रं पितृयज्ञार्थसिद्धये । इति

तथा

अप्युद्धृत्य यथाशक्त्या किञ्चिदन्नं यथाविधि ।
पितृभ्योऽथ मनुष्येभ्यो दद्यादहरहर्द्विजः ।
पितृभ्य इदमित्युक्त्वा स्वधाकारञ्च कारयेत् ॥

मनुष्येभ्यो=ब्राह्मणेभ्यः । पितृभ्य इदमित्युक्त्या मिलित-देवताकत्वं नित्यश्राद्धमिति केचित् ।

[ संस्कृत टीका ]

अप्येकेति । पितृयज्ञार्थसिद्धये=पञ्चयज्ञान्तर्गतपितृयज्ञप्रयोजनसिद्धये । एकमपि विप्रम्=विद्याऽध्यायिनमेकमपि ब्राह्मणम् । आशयेत्=भोजयेत् । अपिशब्दात्सम्भवे बहूनपि । एतेनैव वैश्वदेवब्राह्मणभोजनव्यावृत्तिः । यथाचोक्तं मनुना-

नचैवात्राशयेत् कञ्चिद् वैश्वदेवं प्रति द्विजम् । इति ।

अप्युद्धृत्येति । अत्र "ब्राह्मणभोजनाशक्तौ स्वल्पमन्नं पितृभ्यो दद्यात् । तथाहि 'अप्येकमाशयेद् विप्रमि' त्युक्त्वा ततस्तदसम्भवे प्रकारान्तरमाह - कर्मप्रदीपः "अप्युद्धृत्येत्यादीति छन्दोगाह्निकम् ।" द्विजपदं निबन्धृभिः प्रथमान्तं लिखितं न सप्तम्यन्तमि" त्यपि च तदेव । "द्विज इति शूद्रस्याप्युपलक्षणं तस्यापि तत्राधिकारादिति शूद्राचारे विशेष" इति नित्यकृत्यार्णवः । उद्धृत्य=यदि भोज्यं वस्तु ब्राह्मणतृप्तिपर्याप्तं नास्ति तदा स्थाल्यां यथाशक्ति यथाविधि चान्नं परिविष्य । पितृभ्यः=पित्रादिषड्भ्यः । पितृभ्य इदमित्युक्त्वा स्वधाकारञ्च

कारयेत् = 'ओमद्यामुकगोत्र पितरमुकशर्मन्निदमन्नं सव्यञ्जनं सतिलं तुभ्यं स्वधे' त्येवं क्रमेण पितृषट्कनिमित्तं वाक्यमुच्चार्य पितृतीर्थेन, अन्यदन्नमादाय निवीती च भूत्वा, मनुष्येभ्यः=ब्राह्मणेभ्यः । "हन्तकारं मनुष्येभ्यस्तदन्ते निनयेदपः" इत्यग्रिमछन्दोगपरिशिष्टवचनानुसारम् 'ॐ मनुष्याय हन्त' इति वाल्यमथवा यत्याद्यभावेऽपि ॐ सनकादिमनुष्येभ्यो हन्त' इति वाक्यमुच्चार्य प्राजापत्यतीर्थेन, अहरहः=प्रतिदिनम् । दद्यात्=उत्सृजेत् । अत्र "मनुष्ययज्ञेऽत्रातिथित्वमविवक्षितम्। अतिथेरनित्यत्वात् । मनुष्ययज्ञस्य नित्यत्वात् । तेनातिथ्यभावेऽन्येनापि ब्राह्मणेन मनुष्ययज्ञसिद्धिः ।....एवञ्च सनकाद्यन्नदानरूपो मनुष्ययज्ञ इति भ्रम" इति छन्दोगाह्निकम् । एवमेव नित्यश्राद्धानन्तरम्, अत्र अभ्यागताय यतिने ब्रह्मचारिणेऽन्यस्मै वा ब्राह्मणाय प्राङ्मुखोपविष्टाय भोजनपर्याप्तमन्नं तदसम्भवे षोडशग्रासरूपं हन्तकारं वा, चतुर्ग्रासरूपमग्रं वा ग्रासमात्ररूपां भिक्षां वा फलमूलादिकं वा (अन्ततः उदकमात्रं वा) यथाविभवमादायोदङ्मुखो निवीती कुशत्रयतिलजलैः "ॐ मनुष्याय हन्त" इति (कनिष्ठामूलरूप) प्राजापत्यतीर्थेन दद्यात् । यत्याद्यभावेऽपि "ॐ सनकादिमनुष्येभ्यो हन्त" इत्युक्तविधिना भूमौ दद्यादि"ति नित्यकृत्यरत्नमाला । "यदि साक्षाद् ब्राह्मणायान्नं दीयते तदा 'इदमन्नं मनुष्याय हन्त' इति वाक्यं कार्यमि"त्यपि सैव । "नमः स्वस्ती" ति सूत्रे वषट्-शब्दस्योपलक्षणत्वाद्धन्तशब्दयोगेऽपि मनुष्यायेति चतुर्थी । गोकुलनाथोपाध्यायादयोऽप्येवमेवे"त्यपि तत्रैव । उत्सृष्टमिदमन्नादिकं ब्राह्मणाय निवेदयेत्। अग्नौ जले वा क्षिपेत् ।

केचिदिति । अत्र 'अप्युद्धृत्ये' ति प्रकृतवचनमुपक्रम्य नित्यकृत्यरत्नमाला यथा-एवञ्च 'ॐ इदमन्नं पितृभ्यः स्वधा' इति लघुं नित्यश्राद्धप्रयोगं बहव आचरन्ति । अपरे तु-'पितरो देवता' इत्यादौ पितृत्व-पितामहत्वादिना पृथगेव त्यागोद्देश्यत्वरूपदेवतात्वस्य सर्वै र्निर्णयान्मिलितदेवतात्वपक्षस्य श्राद्धकल्पादिप्रामाणिकनिबन्धेषु खण्डनाद्, 'अमुकामुकगोत्रैतत्तुभ्यमन्नं स्वधा नमः' इति वचनविरोधाच्चोक्तलघुनित्यश्राद्धप्रयोगोऽप्रामाणिक एवे" ति, एवमेव "ॐ अद्यामुक गोत्राः पितृ-पितामह-प्रपितामहा अमुकामुकामुकः शर्माणः, ॐ अद्यामुकगोत्रा मातामह-प्रमातामह-वृद्धप्रमातामहा अनुकामुकामुकशर्माण इदमन्नं

सतिलं वः स्वधा, इत्येकदाऽपि दानेन तन्निर्वाहः । केचित्तु 'ॐ इदमन्नं पितृभ्यः स्वधे' त्येकदोत्सृजेदित्याहुः किन्त्वेतत्प्रामाणिका नानुतिष्ठन्ति इति नित्यश्राद्धकृत्यमि''त्यपि सैव । विस्तृतविचारो नित्यकृत्यार्णवे द्रष्टव्यः ।

अतएव ''केचित् पित्रादीनां मिलितानां देवतात्वमिच्छन्ति तथा सपत्नी-कानामपि देवतात्वमिच्छन्ति तथा सनकादिश्राद्धमपीच्छन्ति सत्सर्वं श्राद्धकल्पे निराकृतमिती''ति छन्दोगाह्निकमपि । किन्तु ''एवञ्च कुशत्रयतिलजलैरिदमन्नं मनुष्याय हन्तत' इति प्राजापत्यतीर्थेन भोजनं हन्तकारमग्रं भिक्षां वा यथाविभवं दद्यादि'' त्याचारचिन्तामण्यनुसारं पूर्वदर्शित 'हन्त' स्थाने हन्तत इति पदप्रयोगो विशेषो बोध्यः। उभयत्र- ''उद्धृत्यान्नं ब्राह्मणायावनेज्य दद्याद्धन्ततः'' इति पारस्करवचनमेव प्रयोजकं भवेदिति मन्ये । 'उद्धृत्ये' त्यादि प्रकृत-वचन-मुपक्रम्य ''अत्र षड्ब्राह्मणतर्पकान्नदानं मुख्यः कल्पः । एकब्राह्मणतर्पकान्न-दानन्तु मध्यमः । किञ्चिदन्नदानन्तु कनिष्ठः । अत्र च मिलितदेवतात्व-शङ्काऽन्यत्रैव विस्तरेण निषिद्धे'' त्यप्याचारचिन्तामणिरेव । ''अन्नपदमेव जलादिना करणेऽपि प्रयोज्यं श्रुतत्वात् । अदनीयत्वेन चार्थसङ्गतिरिति स्मृति-दीपिके'' ति नित्यकृत्यार्णवः ।

[ हिन्दी टीका ]

पितृयज्ञ की सिद्धि के लिए सम्भव हो तो बहुत-छह ब्राह्मणों अन्यथा एक ब्राह्मण को भी भोजन कराये । यदि एक भी ब्राह्मण की तृप्ति योग्य भोज्य पदार्थ (अन्न) न हो तो किसी थाली में यथाशक्ति विधानानुसार अन्न निकालकर उसे दो भागों (जगहों) में विभक्त कर एक का उत्सर्ग पिता आदि छह पूर्वजों के निमित्त, दक्षिणमुंह से ओमद्यामुकगोत्र पितरमुकशर्मन्निदमन्नं सव्यञ्जनं सतिलं तुभ्यं स्वधा' इत्यादि क्रम से वाक्यों को उच्चारण कर पितृतीर्थ से उत्सर्ग कर दें । इसी तरह दूसरे भागवाले अन्न को पूर्ववत् कुश तिल और जल लेकर उत्तर मुंह हो प्राजापत्य (कनिष्ठा-अंगुलि-मूल-रूप) तीर्थ से 'ॐ इदमन्नं मनुष्याय हन्तः' इस वाक्य का उच्चारण कर उत्सर्ग कर दें । यहाँ स्मृतिदीपिका के अनुसार ज्ञातव्य है कि यदि यें कर्म जल आदि के द्वारा भी सम्पादनीय हो तब भी अन्न पद का ही प्रयोग किया जाय । क्योंकि वचन में यही पद कहा गया है । दूसरी बात ज़ो खाया जाय व्याकरणव्युत्पत्ति के अनुसार उसे अन्न कहा जाता है । अतः अर्थसंगति भी हो ही जायगी ।

यहाँ अलग से विशेषत: ज्ञातव्य है कि छह ब्राह्मणों को तृप्तियोग अन्न का दान मुख्य कल्प है । एक ब्राह्मण के तृप्ति योगय अन्न का दान मध्यम कल्प है । ऐसा संभव न होने पर सोलह अथवा चार या एक ग्रास (कौर) योग्य अन्न अथवा फल-मूल-दूध या अन्तत: जल मात्र का भी दान करना कनिष्ठ (अधम) कल्प है। यह प्रदत्त वस्तु ब्राह्मण को दे दें, या अग्नि या जल में फेंक दें । पूर्वोक्त प्रथमभाग के दान से पञ्चमहायज्ञ के अन्तर्गत पितृयज्ञ की तथा द्वितीय भाग के दान से उसी तरह के मनुष्ययज्ञ की सिद्धि हो जाती हैं ।

मूल में पठित द्विजाति के जैसे शूद्र का भी बोधक है क्योंकि इन कर्मों में शूद्र का भी अधिकार है । हाँ, ये ॐ तथा स्वधा पदों के स्थान पर नम: पद का उच्चारण करे यह अन्य बात बात है ।

यहाँ मूलग्रन्थ में 'केचित्' पद से कथित किन्हीं निबन्धकार का कथन है कि 'ॐ इदमन्नं पितृभ्य: स्वधा' ऐसा वाक्य प्रयोग कर दहों पितररूप देवता के उद्देश्य से एक ही बार में किया गया अन्नादि-दान नित्यश्राद्ध है ।

यहाँ 'अप्युद्धृत्य' आदि प्रकृत वचन को उद्धृत कर नित्यकृत्यरत्नमाला टिप्पणी का कहना है कि बहुत से क़र्मनुष्ठाता लोग 'ॐ इदमन्नं पितृभ्य: स्वधा' ऐसे वाक्य प्रयोग के द्वारा अन्नादि का उत्सर्ग कर लघुनित्यश्राद्ध प्रयोग का आचरण कर लेते हैं । किन्तु इनसे अन्य सिद्धान्त पक्ष के पक्षपाती लोगों के मन्तव्य है कि ''पितरो देवता:'' इत्यादि स्थल में पितृत्व -पितामहत्व आदि विभिन्न धर्मों के आश्रय रूप विभिन्न पितर रूप देवताओं का निर्णय विद्व द्वर्ग द्वारा होने, श्राद्धकल्प आदि प्रामाणिक निबन्ध ग्रन्थों में मिलित देवतात्व पक्ष का खण्डन कर दिये जाने, तथा- ''अमुकामुकगोत्रैतत्तुभ्यमन्नं स्वधा नम:'' इत्यादिवचनों का विरोध हो जाने के कारण उक्त लघु नित्यश्राद्धप्रयोग अप्रामाणिक कहा है ।

इस प्रसंग का विस्तृत विचार नित्यकृत्यार्णव में देखें । ऐसी स्थिति में रहने पर भी उक्त दोनों मतों के बीच मध्यममार्ग का अनुसरण करते हुए रत्नमालाकार का कथन है कि 'ओमद्यामुकगोत्रा: पितृ-पितामह-प्रपितामहा: अमुकामुकामुकशर्माण:, ओमद्या मुकगोत्रा: मातामह-प्रमातामह-वृद्धप्रभातामहा अमुकामुकामुकशर्माण इदमन्नं सतिलं व: स्वधा' इस वाक्य प्रयोग के द्वारा एक बार के दान (उत्सर्ग) से भी नित्यश्राद्ध का निर्वाह किया जा सकता है ।

[मूलम्]

मत्स्यपुराणे–

नित्यं तावत् प्रवक्ष्यामि अर्घावाहन-वर्जितम् । इति ।

लघुहारीतः-

नित्यश्राद्धमदैवं स्यादर्घपिण्डविवर्जितम् । इति ।

ब्रह्मचर्यादिनिवृत्तिराचारात् ।

[संस्कृत टीका]

नित्यमिति । अर्घावाहनवर्जितम्=अर्घेण आवाहनेन च रहितम् । नित्यम्=नित्यश्राद्धम् । तावत् प्रवक्ष्यमि=कथयिष्यामि । लघुहारीत इति । अर्घपिण्ड-विवर्जितम्=अर्घेण पिण्डेन च रहितम् । अदैवम्=विश्वेदेवश्राद्धरहितम् (च) नित्यश्राद्धं स्यात् । नित्यश्राद्धे दक्षिणादानप्रसङ्गेऽत्र नित्यकृत्यार्णवो यथा-

"नित्यश्राद्धमदैवं स्यादर्घपिण्ड-विवर्जितम् ।
दक्षिणारहितं त्वेतद्दातृभोक्तृव्रतोज्झितम् ॥

इत्यादिवाक्ये दक्षिणारहितम्=दक्षिणया अरहितं सहितमित्यर्थः । अन्यथा सामान्यतो विधायकवचनस्य निन्दार्थवाचकस्य च सङ्कोचापत्तेः । अतएव पितृभक्तावपात्रकेऽपि नित्यश्राद्धप्रयोगे ततो यथाशक्ति दक्षिणां दद्यादिति दक्षिणादानं सिद्धवल्लिखितम् ।

नित्यश्राद्धमदैवं स्यादर्घपिण्डविवर्जितम् ।
नित्यं तावत् प्रवक्ष्यामि अर्घावाहनवर्जितम् ॥

इति च तत्र लिखितन्तत्र दक्षिणादाननिषेधस्य शङ्कापि नावतारिता । नित्यश्राद्ध-विधायकं वाक्यमवतार्य अत्र चार्घपिण्डावहनविश्वदेवश्राद्धानि निषिद्धानि । पूर्वदिननियमश्राद्धदिननियमाग्नौकणश्राद्धोत्तरकर्मज्ञातिभोजनान्या-चारान्निवर्तयन्तीति च निषिद्धपरिगणने दक्षिणा न परिगणिता पितृभक्तौ । एवमेव च नित्यश्राद्धं विधाय दक्षिणादानन्तु ब्राह्मणभोजनपक्षे निर्विवादमेवेति प्रयोगमातृकायां श्रीदत्तोपाध्यायाः । स्मृतिसारेऽपि दक्षिणादानं लिखितमि''ति ।

परमत्राग्रे आचारादर्शे छन्दोगाह्निके च प्रदर्श्यमाने नित्यश्राद्धप्रयोगे च श्रीदत्तोपाध्यायैः दक्षिणादानानुल्लेखाद्दक्षिणादानं विकल्पितमेवास्तु।

तथा चात्र "सेकसङ्कल्पजपासनपात्रालम्भतिलक्षेपान्नोत्सर्गजपा आवश्यकाः। पुष्पचन्दनादिदानं काम्यमितरत्तु नास्त्येवे" त्याचारचिन्तामणिः। ........ "एवञ्चात्र सेकसङ्कल्पजपासनदानतिलप्रक्षेपमण्डलान्नपरिवेषण-पात्रालम्भाद्यन्नोत्सर्गान्नहीनादिरुचिस्तवपर्यन्तजपदक्षिणादेवताभ्यःजप विष्णुस्मरणप्रतिपत्तयः आवश्यकाः। गन्धादिदानं काम्यमितरत्तु नास्त्ये वे" ति नित्यकृत्यार्णवश्च।

ब्रह्मचर्यादीति। आचारात् = शिष्टाचारात्।

आवाहनस्वधाकारपिण्डाग्नौकरणादिकम्।
ब्रह्मचर्यादिनियमो विश्वेदेवास्तथैव।
नित्यश्राद्धे त्यजेदेतान् भोज्यमन्नं प्रकल्पयेत्॥

इति भविष्यपुराणवचनाच्च तथा बोध्या। स्वधाकारः=स्वधावाचनम्।

ब्रह्मचर्यादीत्यत्रत्यादिपदात् इदानीमेव पितृभक्त्युक्तपूर्वदिननियमादयो ग्राह्याः। अत्र "अत्र (नित्यश्राद्ध पौर्वापर्यप्रसङ्गे) द्वैतपरिशिष्टे केशव मिश्राः-'यदा च नित्यश्राद्धकरणं तदा ततः प्रागेव वैश्वदेवबलिकर्मणी कर्तव्ये। यदा तु पार्वणमेकोदिष्टं वा तदा पार्वणानन्तरं वैश्वदेव-वैश्वदेवबलिकर्मणी। एको-द्दिष्टानन्तरन्तु विश्वबलिनित्यश्राद्धानि तदानीमिति विशेष' इत्याहुरि" ति गोभिलगृह्यसूत्र-मृदुलाव्याख्याटिप्पण्यां म० म० मुकुन्द शर्माणः।

परमिम एव महानुभावाः "इयमत्र व्यवस्था। यत्र पार्वणदिने नित्यश्राद्ध-देवताः षट्पुरुषा इष्टा भवन्ति न तत्र नित्यश्राद्धम्। यत्र च सांवत्सरिकैको-द्दिष्टादिषु ते नेष्टास्तत्र कर्तव्यमिति। तथाच स्कान्दे चमत्कारखण्डे-

नित्यश्राद्धं न कुर्वीत प्रसङ्गाद्यत्र सिध्यति।
श्राद्धान्तरे कृतेऽन्यत्र नित्यत्वान्न प्रहापयेदि ति।

वैश्वदेवादिकमपि पार्वणोत्तरमेव कर्तव्यम्।

वैश्वदेवं ततः कुर्यान्निर्वृत्ते श्राद्धकर्मणि।

इति वचनादि" त्यवोचन् नित्यकृत्यरत्नमालाटिप्पण्याम्।

[ हिन्दी टीका ]

अर्घ, आवाहन, पिण्डदान तथा विश्वेदेव श्राद्ध से वर्जित एवं छहो पुरुषों को देय दैनिक श्राद्ध को नित्यश्राद्ध कहते हैं। इस श्राद्ध में ब्रह्मचर्य आदि की निवृत्ति (नियमत्याग) शिष्टाचार तथा शास्त्रानुसार भी ज्ञातव्य है।

यहाँ ऊपर से ज्ञातव्य है कि नित्यकृत्यार्णव में उद्धृत पितृभक्ति तथा प्रयोगमातृ का नाम के ग्रन्थों में कथित श्रीदत्तोपाध्याय के मतानुसार जहाँ इस नित्यश्राद्ध में दक्षिणादान आवश्यक बतलाया गया है वहीं इन्हीं उपाध्याय महोदय द्वारा प्रदर्शित आचारादर्श तथा छन्दोगाह्निक ग्रन्थों में प्रयोग प्रकरण में दक्षिणादान की कोई भी चर्चा न देखे जाने के कारण इस दक्षिणादान को वैकल्पित मानना ही उचित प्रतीत होता है। इसलिए तो आचारचिन्तामणि में प्रदर्शित इस नित्यश्राद्ध के कर्तव्य आवयक अङ्गों में दक्षिणादान की कोई चर्चा नही की गई है तो नित्यकृत्यार्णव के विवेचन में इसे आवश्यक कर्तव्य में गिना (दिखा) दिया गया है।

मूल में कहे गए 'ब्रह्मचर्यादि' के आदि पद से श्राद्धपूर्वदिन के आचारणीय नियम, श्राद्धदिन का नियम, अग्निभ्रामण, श्राद्धोत्तर कर्म तथा ज्ञाति (वंशज लागों)यों का भोजन लिये जायेंगे।

ऊपर से यह भी ज्ञातव्य है कि साधारणतः नित्यश्राद्ध के पहले ही वैश्वदेव तथा बलिकर्म कर लेने चाहिएँ। जब पार्वण या एकोद्दिष्ट करना हो तो पार्वण के बाद वैश्व देव तथा बलिकर्म हो। एकोद्दिष्ट करने के बाद तो उसी समय वैश्वदेव, तथा बलिकर्म तथा नित्यश्राद्ध हों। हाँ, जहाँ पार्वण के दिन नित्यश्राद्ध के देव रूप छहों पुरुष इष्ट हों वहाँ नित्यश्राद्ध नहीं करना चाहिए। किन्तु जहाँ वार्षिक एकोद्दिष्ट आदि स्थलों में वे (छहो पुरुष) इष्ट नहीं होते वहाँ तो नित्यश्राद्ध करना ही चाहिए। वैश्वदेव आदि तो पार्वण के बाद ही करना चाहिए यह पहले भी कह ही दिया गया है।

❁ इति नित्यश्राधम् ❁

# नित्यश्राद्धप्रयोगः

[मूलम्]

अथ प्रयोगः। अद्य नित्यश्राद्धमहं करिष्य इति वाक्यं कृत्वा गायत्रीं देवताभ्य इति त्रिर्जपित्वा पुण्डरीकाक्षस्मरणेन श्राद्ध-द्रव्याणि सिक्त्वा अद्यामुकगोत्र-पितरमुकशर्मन्निदमासनं ते[1] स्वधेति प्राचीनावीती पातितवामजानुः पितृतीर्थेन जल-तिल-समेतं द्विगुणभुग्न-कुशत्रयेण पित्रे दद्यात्।

[संस्कृत टीका]

अद्येति। अस्य श्राद्धस्यं नित्यत्वात् तिथिपक्षादीनामुल्लेखो न। वाक्यम् =संक्षिप्तसङ्कल्पवाक्यम्। पित्र्युद्देश्यकोत्सर्गे वक्ष्यमाण प्राचीनावीतित्व-पातित-वामजानुत्वाभ्यां सह पितृधर्मत्वात् दक्षिणामुखत्वस्यापि ग्राह्यतया इतः पूर्वतने नित्यश्राद्धसम्बन्धिकार्यजाते पूर्वमुखता कुशत्रयहस्तता च स्वभावत एव सिध्यति।

[हिन्दी टीका]

पूर्वमुख हो तथा हाथ में तेकुशा लेकर "अद्य नित्यश्राद्धमहं करिष्ये" ऐसा संक्षिप्त संकल्पवाक्य पढ़कर तीन बार गायत्री तथा-

देवाताभ्यः पितृभ्यश्च महायोगिभ्य एवच।
नमः स्वाहायै स्वधायै नित्यमेव नमो नमः॥

मन्त्रों का जपकर हाथ में जल लेकर

ॐ अपवित्रः पवित्रोवा सर्वावस्थां गतोऽपि वा।
यः स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः॥

इस मन्त्र से श्राद्धीय द्रव्यों का सेचन कर यज्ञोपवीत को अपसव्य कर बायीं जांघ गिरा कर तथा दक्षिण मुंह हो पितृतीर्थ तथा मोटक (द्विगुणभुग्न) रूप कुशत्रय सहित तिल जल से 'ॐ अद्यामुकगोत्र पितरमुकशर्मन्निदमासनं ते[1] स्वधा' इस वाक्य पठन के द्वारा तिलजल प्रोक्षित एवं दक्षिणाग्र मोटक रूप आसन का उत्सर्ग कर करे।

---

पा० (१) लेख पु० अनु० तुभ्यमिति पाठः।

यहाँ अलग से ज्ञातव्य है कि प्रथम अमुक के स्थान अपने तथा मातामह आदि के पक्ष में उनके गोत्रों का एवं द्वितीय अमुक के स्थान पर क्रमशः पिता आदि छहों पूर्वज पुरुषों का नाम प्रत्येक उत्सर्ग में कहे जायँ।

[ मूलम् ]

एवमेव पितामह-प्रपितामह-मातामह-प्रमातामह-वृद्धप्रमातामहेभ्य आसनं दद्यात्। ततो "ऽपहता असुरा" इत्यादिना तिलान् विकीर्य "आयन्तु नः" इति जपित्वा ॐ अद्यामुकगोत्रेत्यादि पूर्ववत्। एतानि गन्धपुष्पधूपदीप-(ताम्बूल)[1] वस्त्राणि तुभ्यं स्वधेति यथासम्भवं गन्धादि दद्यात्।

[ संस्कृत टीका ]

एवमेवेति। पितृवत् पितामहादिपञ्चभ्योऽपि दद्यादिति भावः। तदनन्तरम् "ॐ अपहता असुरा रक्षा ँ सि वेदिषदः" इति मन्त्रेण भोजन पात्रे तिलान् विकीर्येत्यर्थः।

[ हिन्दी टीका ]

इसी तरह (गोत्र एवं नाम आदि का उच्चारण कर) पितामह प्रपितामह आदि पाँचों पूर्वजों के लिए आसन का उत्सर्ग करें। इसके बाद ॐ अपहता असुरा रक्षा ँ सि वेदिषदः" इस मन्त्र से भोजनपात्र में तिल बिखेर कर "ॐ आयन्तु नः पितरः सोम्यासोऽग्निष्वाताः पथिभिर्देवयानैः। अस्मिन् यज्ञे स्वधया मदन्तोऽधिब्रुवन्तु तेऽवन्त्वस्मान्" इस मन्त्र को पढ़कर ओमद्य तथा नाम गोत्र आदि का एवम् "एतानि गन्ध-पुष्प-धूप-दीप-(ताम्बूल) वस्त्राणि तुभ्यं स्वधा" इस वाक्य का उच्चारण क्रमशः छहों पूर्वजों के निमित्त यथासंभव गन्धादि का दान करें।

[ मूलम् ]

ततो मण्डलं कृत्वा अन्नं परिविष्यान्ने मधु दत्त्वा 'मधुवाते' ति पठित्वा पात्रमालभ्य पृथिवी ते पात्रमित्यादि जपित्वा इदं विष्णुरित्यादिनाऽङ्गुष्ठमन्ने संयोज्य 'ॐ अद्यामुकंगोत्र पितरमुकशर्मन्निदमन्नं सव्यञ्जनं सतिलं तुभ्यं स्वधे' त्युत्सृजेत्। एवं पितामहादिभ्यः प्रत्येकमुत्सृजेत्। ततो यथाशक्ति पवित्रान् (णि)[2] जपेत्। ततस्तदन्नं ब्राह्मणाय प्रतिपादयेत्।

---

पा० (१) लेख पुस्तकानुसारं 'ताम्बूले'त्यधिकः पाठः। क्वचित् ताम्बूलानीतिलिखित्वा वस्त्राणीति पदंनोल्लिखितम्। (२) लेखपुस्तकानुसारमेव "न्" इत्यत्र "णि" इति पाठः।

## [ संस्कृत टीका ]

ततो मण्डलमिति । ''मन्त्रानुक्तौ तु गायत्री'' ति शिष्टाचाराद् गायत्रीमन्त्र-सहितजलेन भोजनपात्रे पित्रासने च मण्डलं कृत्वेति भावः । पात्रमालभ्य= भोजनपात्रं स्पृष्ट्वा । पवित्रान् = गायत्र्यादिमन्त्रान् ।

## [ हिन्दी टीका ]

गन्धादि दान के बाद गायत्री मन्त्र से भोजनपात्र तथा पितरों के आसनों का गायत्री मन्त्र से मंडल कर के भोजन पात्र में अन्न परोस कर और अन्न के ऊपर मधु (शहद) छिड़ककर ॐ मधुवाता ऋतायते मधु क्षरन्ति सिन्धवः । माध्वीर्नः सन्त्वोषधीः मधु नक्त मुतोषसो मधुमत्पार्थिव ँ रजः मधु द्यौरस्तु नः पिता मधुमाँ अस्तु सूर्यः माध्वीर्गावो भवन्तु नः । ॐ मधु मधु मधु यह ऋचा पढ़े। इसके बाद भोजनपात्र का स्पर्श करते हुए ''ॐ पृथिवी ते पात्रं द्यौरपिधानं ब्राह्मणस्य मुखे अमृते अमृतं जुहोमि स्वाहा यह मन्त्र पढ़कर भोजनपात्र में परोसे गये अन्न पर ॐ इदं विष्णुर्विच- क्रमे त्रेधा निदधे पदम् । समूढमस्य पाँसुरे यह मन्त्र पढ़ते हुए अपने अंगूठे को संयोजित कर ओमद्य अमुकगोत्र पितः अमुकशर्मन् इदमन्नं सव्यञ्जनं सतिलं तुभ्यं स्वधा इस तरह वाक्य का उच्चारण कर पिता के निमित्त उत्सर्ग करे । इसी तरह प्रत्येक का नाम और गोत्र आदि का उच्चारण कर पितामह आदि पाँचो पुरुषों के लिए भी क्रमशः अन्नोत्सर्ग करे । अनन्तर यथाशक्ति गायत्री आदि मन्त्र का जप करे । उत्सर्ग किया गया यह अन्न ब्राह्मण को दे दे । (ब्राह्मण के न मिलने पर अग्नि या जल में डाल दें) ।

## [ मूलम् ]

ब्राह्मणोपवेशनपक्षे स्वागतप्रश्नाद्यधिकमिति प्रयोगः ।

## [ संस्कृत टीका ]

ब्राह्मण इति । ब्राह्मणोपवेशनपक्षे = ब्राह्मणोपस्थितिकल्पे । इति शब्दोऽत्र प्रयोगप्रकरण-समाप्ति-सूचकः ।

## [ टिप्पणी ]

अत्र '' वस्तुतस्तु पञ्चयज्ञान्तर्गत-श्राद्धासम्भवे स्नानानन्तरं पितृणामुदकतर्पणेनापि द्विजः नित्यश्राद्धफलं प्राप्नोति । यथा चाह मनुः (३।२८३)–

यदेव तर्पयत्यद्भिः पितॄन् स्नात्वा द्विजोत्तमः ।
तेनैव कृत्स्नमाप्नोति पितृयज्ञ-क्रिया-फलम् ॥ इति

अत्र द्विजोत्तमपदं द्विजपरमिति कुल्लूकभट्टः । गौतमोऽपि—

देवपितृमनुष्यभूतर्षिपूजको नित्यस्वाध्यायः पितृभ्यश्चोदकदानं यथोत्साहमन्यदिति ।

मनुष्यपूजा=अतिथिपूजा । ऋषिपूजा= स्वाध्यायाध्ययनम् । ऋषियज्ञपितृयज्ञयोः पूर्वमभिहितयोरपि 'नित्यस्वाध्यायमि' त्यादिना पुनरभिधानमितरयज्ञत्रयानुष्ठानासम्पत्तावपि किञ्चिदङ्गवैकल्येन उदकद्रव्येणाप्यादरेणावश्यानुष्ठेयत्वार्थम् । एतदेवोक्तं ''यथोत्साहमन्यदि'' त्यनेन इति कल्पतरुरिति वीरमित्रोदयः । एवमेव नित्यकृत्यार्णवोऽपि ।

## [ हिन्दी टिप्पणी ]

वस्तुतः पञ्चयज्ञ के अन्तर्गत सम्पादनीय श्राद्ध के असम्भक की स्थिति में मनु का कथन है कि ''स्नान के बाद पितरों के निमित्त किये गये जल तर्पण से ही द्विज (कर्मानुष्ठाता) नित्य श्राद्धक फल प्राप्त करलेता है'' ।

इसी तरह गौतम सूत्र का भी तात्पर्य है कि पञ्च महायज्ञों में देवयज्ञ, भूतयज्ञ तथा मनुष्यज्ञों के अनुष्ठान

न हो सकने पर भी थोड़ा बहुत भी स्वाध्याय का अध्ययन (ऋषियज्ञ) तथा आदर के साथ जल (तर्पण) से भी (पितृयज्ञ ) तथा अनुष्ठान तो अवश्य ही कर लेना चाहिए, यही बात गौन्म:सूत्र के ''यथोत्साहमन्यत्'' इन पदों से कही गई है । यह कल्पतरुकरने व्याख्या की है जिसे वीरमित्रोदय ने उद्धृत किया है । नित्यकृत्यार्णव तथा नित्यकृत्यार्णव में उद्धृत निबन्ध लेखों का भी ऐसा ही कहना है ।

## [हिन्दी टीका]

यदि ब्राह्मण (भोक्ताविप्र) पहले, से ही उपस्थित रहे हों ते स्वागत प्रश्न फूल माला आदि से सम्मान प्रभृति स्वभावतः अधिक होगा ।

यहाँ इति शब्द प्रयोग से नित्यश्राद्ध प्रयोग प्रकरण की समाप्ति सूचित होती है ।

✿ इति नित्यश्राद्ध-प्रयोग : ॥ ✿

# भिक्षादानम्

[ मूलम् ]

अथ भिक्षादानम् । भिक्षादानन्तु यदैव यतिब्रह्मचारिणोरुपस्थितिस्तदैव कर्तव्यम् । नरसिंहपुराणे-

भिक्षाञ्च भिक्षवे दद्यात्परिव्राड्ब्रह्मचारिणे ।
उद्धृत्य[1] कल्पितादन्नाद् व्यञ्जनेन युतां ततः ॥
अकृते वैश्वदेवे तु भिक्षौ च गृहमागते ।
उद्धृत्य वैश्वदेवार्थं भिक्षां दत्त्वा विसर्जयेत् ॥

[ संस्कृत टीका ]

भिक्षेति । अत्र "इदञ्च भिक्षादानमत्रे सिद्धे यदैव यतिब्रह्मचरिणोरुपस्थितिस्तदैव कर्तव्यम् । नात्र कालविशेषनियमः । वैश्वदेवात्प्रागुपस्थितौ वैश्वदेवार्थमग्रमुद्धृत्य भागान्तरेणकर्तव्यमिति विशेष" इति छन्दोगाह्निकम् । एतदेवाह नरसिंहपुराणे भिक्षाञ्चेत्यादिना । कल्पितादन्नात् = वैश्वदेवार्थं कृतपाकान्नात् । उद्धृत्य = पृथक्कृत्य । सर्वव्यञ्जनसंयुताम् = तत्कालोपलब्धसर्वविधव्यञ्जनविशिष्टाम्. । भिक्षाम् । परिव्राड्-ब्रह्मचारिणे = परित्यज्य सर्वान् विषयभोगान् गृहाद् व्रजतीति परिव्राजे-चतुर्थाश्रमिणे संन्यासिने, प्रथमाश्रमिणे च । आर्षत्वादेकवचनम् । भिक्षवे = ".अनिचयो भिक्षुरि"ति गौतमसूत्राद् द्रव्यसंग्रहरहिताय भिक्षायाचकाय । दद्यात् ।

यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ।
तयोरन्नमदत्त्वा तु भुक्त्वा चान्द्रायणं चरेत् ॥

इति व्यासवचनाच्च । वैश्वदेवे अकृते तु = वैश्वदेवहोमादावविहिते तु । भिक्षुके = भिक्षौ । गृहमागते । वैश्वदेवार्थम् = वैश्वदेवनिमित्तमग्रमुद्धृत्य । भागान्नेन भिक्षां दत्त्वा । विसर्जयेत् = तं भिक्षुं परित्यजेत् । अत्र

पा० (१) पङ्क्तिरियं-लेखपुस्तकानुसारिणी ज्ञेया । प्रकाशिताचारादर्श-वीरमित्रोदयानुसारन्तु "कल्पितादन्नादुद्धृत्य सव्यञ्जनयुतादपि" इति । परं " सङ्कल्पितादन्नादुद्धृत्य सर्वव्यञ्जन-संयुताम्" इत्यान्यत्रिकः पाठः ।

वैश्वदेवभिक्षादानयोरुत्तरस्यैव बलवत्त्वम्–

वैश्वदेवकृतं दोषं शक्तो भिक्षुर्व्यपोहितुम् ।
न तु भिक्षुकृतं दोषं वैश्वदेवो व्यपोहति ॥

इत्यग्रिमनरसिंहपुराणवाक्यात् । एतेन च वैश्वदेवात्पूर्वमागतस्य एकग्रामवासिनो यतेर्ब्रह्मचारिणो वा अतिथित्वाभावेऽपि वैश्वदेवार्थमुद्धृत्यावश्यं भिक्षा दातव्येत्युक्तं भवति । भिक्षुकाः के इत्याह व्यास :–

यतिश्च ब्रह्मचारी च विद्यार्थी गुरुपोषकः ।
अध्वगः क्षीणवृत्तिश्च षडेते भिक्षुकाः स्मृताः ॥

विद्यार्थी–स्नानोत्तरमपिं विद्यापरायणः इति विष्णुपुराणेऽपि–

व्याधितस्यान्नहीनस्य कुटुम्बात्प्रच्युतस्य च ।
अध्वानं वा प्रपन्नस्य भिक्षाचर्या विधीयते ॥ इति ।

अतिथिवद् भिक्षुकयोर्यतिब्रह्मचारिणोरपि पूज्यतामाह वीरमित्रादयोद्धृतो मनुः–

अपूर्वः सुव्रती विप्रो ह्यपूर्वश्चातिथिस्तदा ।
वेदाभ्यासरतो नित्यं त्रयोऽपूर्वाः दिने दिने ॥ इति

सुष्ठु व्रतं मोक्षसाधनीभूतो नियमो यस्य स सुव्रती–यति : । वेदाभ्यासरतो–ब्रह्मचारी । तदर्थत्वात्तस्याश्रमस्य । तावुभावप्यपूर्वौ = अतिथिवत्पूज्यावित्यर्थः । अतिथिः तत्पूज्यता चाग्रे वक्ष्यते ।

[ हिन्दी टीका ]

अब भिक्षादान प्रकरण का प्रारम्भ होता है । विश्वेदेवनिमित्त अन्न का पाक हो जाने पर जब ही चतुर्थाश्रमी संन्यासी या प्रथमाश्रमी ब्रह्मचारी उपस्थित हो जाय उसी समय भिक्षादान कर देना चाहिए । क्योंकि नरसिंहपुराण में कहा गया है कि ''यदि वैश्वदेव कर्म न किये हो और भिक्षा निमित्त संन्यासी या ब्रह्मचारी गृहद्वार पर आजाय तो वैश्व देव कर्म हेतु पकाये गए अन्न से थोड़ा निकालकर व्यञ्जनसहित यह भिक्षान्न देकर इन्हें विदा कर दें । (क्योंकि अन्य वचनानुसार ये दोनों ही पकाये गए अन्न के भागीदार माने जाते हैं)।

यहाँ ऊपर से यह भी ज्ञातव्य हे कि वैश्वदेव कर्म की अपेक्षा भिक्षादान कर्म प्रमुख माना जाता है क्योंकि भिक्षुक वैश्वदेव कर्म के अन्तर्गत होने वाले दोष को भिक्षुक

हटा सकता है किन्तु भिक्षुक के प्रति हुए अपराध को वैश्वदेव कर्म नहीं हटा सकता। व्यास वचन के अनुसार संन्यासी, ब्रह्मचारी, समावर्तन के बाद भी विद्यापरायण व्यक्ति, गुरुसेवक, राहगीर तथा अर्थ विकल व्यक्ति ये छह भिक्षुक माने जाते हैं। यही विष्णुपुराण के अनुसार रोगी, अर्थहीन, गृहत्यागी तथा राहगीर ये चार भिक्षुक गिनाये गए हैं। मनुवचनानुसार मोक्षसाधक संन्यासी तथा वेदाभ्यासी ब्रह्मचारी वेदपाठी अतिथि ब्राह्मण के जैसे प्रतिदिन पूज्य हैं।

## [ मूलम् ]

गौतमः—

स्वस्तिवाच्य[1] भिक्षादानमप्पूर्वम्[2]।

## [ संस्कृत टीका ]

स्वस्तीति। "स्वस्त्यस्त्विवति स्वस्तिवचनमुक्त्वा भिक्षोर्हस्ते पूर्वमपो दत्त्वा चे" त्येतस्य सूत्रस्य मिताक्षरावृत्तिः। यतये ब्रह्मचारिणे चान्नार्थमुपस्थिताय स्वस्तीति वाचयित्वोदकपूर्वं निरामिषविद्यमानसकलव्यञ्जनसहितां ग्रासमात्रामपिभिक्षां दद्यादिति छन्दोगाह्निकाचारचिन्तामणिवीरमित्रोदयाः। अत्र भिक्षुणा स्वस्तीति वचनाभावकल्पे स्वयमेव स्वस्त्यस्त्विवति स्वस्ति वचनं वदेदित्येवमुक्तयोः व्याख्ययोः समन्वये कृते न कोऽपि विरोधः स्यादिति प्रतीयते।

परिव्राजकहस्ते भिक्षादानात्पूर्ववदन्तेऽप्युदकदाने विशेषमाह व्यासः—

यतिहस्ते जलं दत्त्वा भैक्षं दत्त्वा पुनर्जलम्।
भैक्षं पर्वतमात्रं स्यात्तज्जलं सागरोपमम्॥ इति।

## [ हिन्दी टीका ]

संन्यासी और ब्रह्मचारी को भिक्षादान प्रकार में गौतम ने कहा है, छन्दोगाह्निक आचारचिन्तामणि तथा वीरमित्रोदय की व्याख्या के अनुसार इन दोनों से पहले "स्वस्ति" ऐसा कहवा कर इनके हाथ में जल देकर (अर्थात् जल से हाथ धुलवाकर) निरामिष एवं विद्यमान सकल व्यञ्जन सहित अन्ततः ग्रासप्रमाण भी भिक्षा दें।

यहीं इस सूत्र की मिताक्षरावृत्ति के अनुसार, कि भिक्षा देने वाला ही 'स्वस्त्यस्तु' ऐसा स्वस्तिवचन कर भिक्षुक के हाथ में पहले जल दे यह अर्थ में भेद है।

पा० (१) वाच्य,च। (२) पूर्वकम्।

दोनों अर्थों में समन्वय इस तरह किया जा सकता है कि यदि भिक्षुक वैसा बोलने या बोलवाने में असमर्थ हो तो भिक्षादाता ही वैसा बोले ।

ऊपर से व्यासवचनानुसार संन्यासी के संबन्ध में ज्ञातव्य है कि इनके हाथ में भिक्षादान के पहले और अन्त में भी जलदान कर दें तो वह भिक्षान्न पर्वत के और वह जल समुद्रजल के बराबर माना जाता है । अर्थात् इसी के दान का फल होगा ।

[ मूलम् ]

मार्कण्डेयपुराणे (मदालसालर्कसंवादे)–

ग्रासप्रमाणा भिक्षा स्यादग्रं ग्रासचतुष्टयम् ।
अग्रा[1]च्चतुर्गुणं प्राहुः हन्तकारं द्विजोत्तमाः ।
भोजनं हन्तकारं वा अग्रं भिक्षामथाऽपि वा ।
अदत्त्वा तु न भोक्तव्यं यथाविभवमात्मनः ॥

अग्रम् = पुष्कलसंज्ञकमपि ।

[ संस्कृत टीका ]

ग्रासेति । भिक्षादिपरिमाण(परिभाषा)माह ग्रासेत्यादिना । ग्रासप्रमाणा =कवलपरिमाणा-ग्रासमात्ररूपेति यावत् । भिक्षा स्यात् । ग्रासचतुष्टयम्= [illegible] । 'चल

वा= भोजनपर्याप्तमन्नं, तदसम्भवे षोडशग्रासरूपं हन्तकारं वा, तदभावे चतुर्ग्रासरूपमग्रं वा, तदभावे ग्रासमात्ररूपां भिक्षां वा (तदभावे फल मूलादिकं वा) । आत्मनः यथाविभवम् = स्वस्य विभवानुसारम् । अदत्त्वा न भोक्तव्यम् ।

अग्रम्= पुष्कलसंज्ञकमपीत्याचारचिन्तामणिरपि । पुष्कलशब्दश्चात्र परिमाणविशेषवचनः । यथा चात्र–''तित्तिरौ तु तिलद्रोणम्'' (याज्ञ० स्मृ० प्राय० 3/274) इति याज्ञवल्क्यस्मृतिवचनस्य ''द्रोणशब्दश्च परिमाण-विशेष वचनः ।

---

पा० (१) अग्रं ।

अष्टमुष्टि भवेत् किञ्चित् किञ्चिदष्टौ तु पुष्कलम् ।
पुष्कलानि च चत्वारि आढकः परिकीर्त्तितः ॥
चतुराढको भवेद् द्रोण इत्येतन्मानलक्षणम् ॥''

इति मिताक्षराव्याख्याऽपि ।

[ हिन्दी टीका ]

मार्कण्डेयपुराण (के मदालसा और अलर्क के संवाद प्रसंग) में कहा गया है कि भिक्षा एक ग्रास (कौर) के बराबर, चार ग्रास के प्रमाणवाला अग्र तथा चार अग्र के प्रमाणवाला अन्न हन्त कार कहलाता है । उपस्थित अभ्यागत या संन्यासी या ब्रह्मचारी या किसी भी ब्राह्मण को प्रथम भोजनपर्याप्त अन्न, इसके अभाव में सोलह ग्रास रूप हन्तकार, या चार ग्रास रूप अग्र या केवल एक ग्रास रूप भिक्षा, इस सब के भी अभाव में फल मूल आदि, अन्ततः जलपूर्ण पात्र भी अपने विभवानुसार दें । विना कुछ दिये अपना भोजन नहीं करना चाहिए ।

अग्र शब्द का अर्थ पुष्कल भी होता है । पुष्कलशब्द का भी अर्थ (याज्ञ० स्मृ० प्राय० ३।२७४) की मिताक्षराव्याख्या के अनुसार ६४ मुट्ठियों के बराबर का अन्न होता है । इस पक्ष में इसी के अनुपात में हन्तकार का भी अर्थ ज्ञातव्य है ।

[ मूलम् ]

विष्णुपुराणे–

दद्याच्च भिक्षात्रितयं परिव्राड्ब्रह्मचारिणे[१] ।
स्वेच्छया च बुधो दद्याद् विभवे सत्यवारितम् ॥

[ संस्कृत टीका ]

दद्येति । परिव्राड्ब्रह्मचारिणे = संन्यासिने ब्रह्मचारिणे च । भिक्षात्रितयम् = भिक्षामग्रं हन्तकारञ्च । दद्यात् । विभवे सति = धनवैभवे सति । बुधो जनः । स्वेच्छया । अवारितम् = पर्याप्तम् । दद्यात् । नहि तावत्प्रमाणमेव दत्त्वा सन्तुष्येदितिभावः ।

यदि च सर्वथैव विभवाभावस्तदाऽन्ततः जलपूर्णपात्रदानमप्याह शातातपः–

पा० (१) णाम् ।

**भिक्षां वा पुष्कलं वाऽपि हन्तकारमथापि वा।**
**असम्भवे सदा दद्यादुदपात्रमथापि वा॥ इति।**

**[ हिन्दी टीका ]**

संन्यासी और ब्रह्मचारी को अपने विभव के अनुसार भिक्षा, अग्र तथा हन्तकार इन तीनों ही परिमाणों का अन्न दे। यदि विभव हो तो ज्ञानी जन स्वच्छा से अधिकाधिक मात्रा में दे।

ऊपर से शातातपवचनानुसार ज्ञातव्य है कि विभव का सर्वथा अभाव हो तथा भिक्षा तक भी देने की सामर्थ्य न हो तो अन्ततः जल भरा पात्र भी दे।

**[ मूलम् ]**

पाखण्डानुपक्रम्य ब्रह्मपुराणे–

**तेभ्यो देयं गृहाद्बहिः।**

**[ संस्कृत टीका ]**

पाखण्डेति। अत्र "पाखण्डाः सर्वलिङ्गिनः" (२/७/४५) इत्यमर-व्याख्यायां "मूर्धन्यमध्यः। कवर्गद्वितीयमध्य (पाखण्ड इति) पाठे तु पाखण्डयति। खडि भेदने (चु० प० से०) अच् (३।१।१३४)।

**पालनाच्च त्रयीधर्मः पाशब्देन निगद्यते।**
**तं खण्डयन्ति ते यस्मात् पाखण्डास्तेन हेतुना॥ ११॥**

सर्वाणि च तानि लिङ्गानि, सर्वेषां लिङ्गानि सन्ति येषाम् 'अतः' (३।२।११५) इतीनिरि" ति भानुजिदीक्षितः। "वेदवाह्यागमसमाश्रया प्रतिषिद्धव्रतचर्या पाखण्डं तद्योगात्पुरुषोऽपि पाखण्डः इति मनु (१/११२) "पाखण्डिनश्च" वेदवाह्यव्रतलिङ्गधारिणः शाक्यभिक्षुकक्षपणकादयः" इति मनु–(४/३०) टीकयोः कुल्लूकभट्टश्च। एवञ्च पाखण्डान् = वेदव्राह्यव्रतलिङ्गधारिणः शाक्यभिक्षुकक्षपणकादीन्। उपक्रम्य=प्रस्तूय। तेभ्यः = इदानीमुक्तेभ्यः। गृहाद् बहिः = गेहाद् गेहपरिवृत-प्राङ्गणाद्वा बहिः। देयम् = भिक्षावस्त्विति शेषः।

**दुःखाकुलं जगदेतद् विचार्य, नमोऽस्तु धर्माय इति ब्रुवँश्च ।**

**दद्यादन्नं सर्वगतञ्च विष्णुं प्रणम्य वै द्वादशपर्वमात्रम् ॥**

इति ब्रह्मपुराणवचनाद् "नमोऽस्तु धर्माय" इत्युक्त्वा भिक्षा देयैवेति भावः । अतएव "अन्नबाहुल्येऽन्येऽपि भिक्षार्थिनो न प्रत्याख्येयाः । पाखण्डादीनामपि दयावशाद् भिक्षा देया । किन्तु आश्रमाद् बहिरिति छन्दोगाह्निकम् ।

[ हिन्दी टीका ]

वेद के विरुद्ध आचरण करने वाले बौद्ध जैन आदि भिक्षुकों को घर (या घरों से घिरे अंगने) के बाहर नमोऽस्तु धर्माय ऐसा कहकर सर्वगत विष्णु को प्रणाम कर दयावश भिक्षावस्तु दे दें ।

[ मूलम् ]

विष्णुः—

**भिक्षाञ्च भिक्षवे दद्या दर्चितभिक्षादानेन गोप्रदानफलमवाप्नोति । भिक्षुकाभावे चाग्रं गोभ्यो दद्यादग्नौ वा क्षिपेत् । भुक्तेऽप्यन्ने विद्यमाने भिक्षुकं न प्रत्याचक्षीत ।**

[ संस्कृत टीका ]

भिक्षाञ्चेति । भिक्षवे = संन्यासिने ब्रह्मचारिणे च, पूर्वोक्तषड्विध-भिक्षुकेभ्यो वा । भिक्षां दद्यात् । अर्चितभिक्षादानेन = सत्कृतभिक्षादानेन । गो-प्रदानफलमवाप्नोति । यथा चाह मनुरपि—

**यत्पुण्यफलमाप्नोति गां दत्वा विधिवद् गुरोः ।**

**तत्पुण्यफलमाप्नोति भिक्षां दत्त्वा तु भिक्षवे ॥ इति ।**

भिक्षुकाभावे च । अग्रम् = ग्रासचतुष्टयपरिमितमन्नम् । गोभ्यो दद्या दग्नौ वा क्षिपेत् । भुक्तेऽपि = भोजनानन्तरमपि । अन्ने विद्यमाने = अवशिष्टे सत्यन्ने । भिक्षुकम् = याचकम् । न । प्रत्याचक्षीत = प्रत्याख्यानं कुर्यात् । अतएव "भोजनोत्तरमप्यन्नसत्त्वे भिक्षा देये" ति छन्दोगाह्निकव्याख्याऽपि ।

स्त्रीद्वाराऽतिथिप्रत्याख्याने च दोष उक्त आपस्तम्बेन–"स्त्रीणाञ्च प्रत्याचक्षाणानां समाहितो ब्रह्मचारी इष्टं दत्तं हुतं प्रजां पशून् ब्रह्मवर्चसमन्नाद्यं वृक्ते । तस्मादुह वै ब्रह्मचारिसङ्घं न प्रत्याचक्षीते" ति । वृक्ते = छिन्दति । प्रत्याचक्षाणानाम् = प्रत्याख्यानं कुर्वतीनाम् । समाहितः = वशीकृतान्तः करणः । ब्रह्मचारीति यतेरप्युपलक्षणम् ।

[ हिन्दी टीका ]

छहों प्रकार के भिक्षुकों (यथा ( १ ) ब्रह्मचारी, ( २ ) संन्यासी, ( ३ ) विद्यार्थी–समावर्तन के बाद भी विद्यापरायण, ( ४ ) गुरु के सेवार्थ मांगने वाला, ( ५ ) राही तथा ( ६ ) गरीव, फिर भी इनमें मुख्य संन्यासी और ब्रह्मचारी हैं ) को भिक्षा दें । यदि सत्कारपूर्वक भिक्षा दे तो अधिक रूप में गोदान का फल प्राप्त होता है । यदि भिक्षुक न मिल सके तो चार ग्रास के बराबर वह अन्न गाय को दे दें अथवा अग्नि में डाल दें । भोजन कर लेने के बाद भी यदि अन्न बच जाता है तो उपस्थित भिक्षुक को दे दें किन्तु उन्हें अपने द्वार से हटावें नहीं ।

ऊपर से ज्ञातव्य है कि आपस्तम्ब के वचनानुसार घर की महिला के द्वारा भी जितेन्द्रिय संन्यासी एवं ब्रह्मचारी का बहिष्कार नहीं होना चाहिए । ऐसा करने पर अनिष्ट फल होते हैं ।

[ मूलम् ]

पद्मपुराणे[१]–

**यः पात्रपूरणीं भिक्षां यतिभ्यः सम्प्रयच्छति ।**
**विमुक्तः सर्वपापेभ्यो नासौ दुर्गतिमाप्नुयात् ॥**

[ संस्कृत टीका ]

य इति । पात्रपूरणे तु फलाधिक्यमाह य इत्यादिना । यः=ज्ञानी जनः यतिभ्यः = निर्जितसर्वेन्द्रियेभ्यः संन्या सिब्रह्मचारिभ्यः । ( ये निर्जितेन्द्रियग्रामाः यतिनो यतयश्च ते इत्यमरः ।)

यतिपदं ब्रह्मचारिणोऽप्युपलक्षम् । पात्रपूरणीम् = एतद्धस्तस्थितपात्रपूरिकां भिक्षाम् । सम्प्रयच्छति = सत्कृत्य ददाति । असौ जनः । सर्वपापभ्यो विमुक्तः (सन्) दुर्गतिम् = नरकगतिम् । नाप्नुयात् ।

पा० ( १ ) ब्रह्मपुराणे ।

[ हिन्दी टीका ]

जो ज्ञानीजन उपस्थित संन्यासी एवं ब्रह्मचारी को पात्र भरकर भिक्षा देता है वह सभी पापों से विमुक्त हो जाता है और नरक की गति नहीं पाता।

[मूलम्]

यमः—

**हस्तदत्ता च या भिक्षा व्यञ्जनं[1] सलिलानि च।**
**भुक्त्वा त्वशुचितां याति दाता स्वर्गं न गच्छति॥**

[ संस्कृत टीका ]

हस्तेति। या भिक्षा। हस्तदत्ता = हस्तेन समर्पिता। (यच्च) व्यञ्जनम् = (व्यज्यते भ्रक्ष्यते अन्नादि संयोज्यते अनेनेति, (वि+अञ्ज्+ल्युट्) अन्नोपकरणाम्, तत्तु सूपशाकादि इति राजनिर्घण्टुः। तत्पर्यायः तेमनमित्यमर'' इति शब्दकल्पद्रुमः। ''व्यञ्जनानु लेपनम्'' (३।५।२६) इत्यमरहिन्दीटीकायाम्''व्यञ्जनविशेष से दधितक्र आदि का ग्रहण है'' इति रामस्वरूपः। ''अन्नेन व्यञ्जनमि-(२/१/३४) ति पाणिनिसूत्रस्य ''व्यञ्जनम् = संस्कारद्रव्यवाचकम्। दध्ना ओदनः दध्योदनः। इहान्तर्भूतोपसेकद्वारा सामर्थ्यमि''-सिद्धान्तकौमुदी। व्यञ्जनशब्दं व्याचष्टे संस्कारेति। संस्क्रियते = गुणविशेषतया क्रियतेऽनेनेति संस्कारः = उपसेकादिसाधनं दध्यादि, तद्वाचकमित्यर्थः'' इति तट्टीका बालमनोरमा। एवञ्च) सूपशाकतेमनदधितक्रादि। (हस्तदत्तम्) एवमेव च यानि सलिला नि हस्तदत्तानि। (तानि) भुक्त्वा च। चकारात् पीत्वा च अशुचिताम् = अपवित्रताम्। याति-ग्रहीतेति शेषः। दाता। स्वर्गं न गच्छति नैतद्दानजन्य-पुण्यवान् भवतीत्यर्थः।

[ हिन्दी टीका ]

हाथ से दी हुई भिक्षा, हाथ से दिये हुए दाल साग भाजी, तेमन, अचार तथा दही तक्र आदि, एवमेव हाथ से दिये हुए जल क्रमशः खाने या पीने पर भोक्ता अपवित्र होता है और दाता इनके दान से होने वाले पुण्य का भागी नहीं होता।

---

पा० (१) सलिलं व्यञ्जनानि च इति लं०पु०नित्यकृत्यरत्नमालानुसारं च पाठः।

[ मूलम् ]

देवलः

सायं प्रातर्गृहद्वारं भिक्षार्थं नावघट्टयेत् ।

भिक्षुकवारणार्थं नावरुन्ध्यादित्यर्थः ।

[ संस्कृत टीका ]

सायमिति । सायंकाले प्रातःकाले चेत्यर्थः ।

[ हिन्दी टीका ]

सन्ध्याकाल तथा प्रातः काल भिक्षुक को लौटाने के निमित्त घर के मुख्य द्वार को बन्द नहीं करें । क्योंकि इनके आने का विशेषतः यही समय होता है ।

❀ इति भिक्षादानम् ❀

# गोग्रास :

[मूलम्]

अथ गोग्रासः । ब्रह्मपुराणे–

सौरभेय्यः सर्वहिताः पवित्राः पुण्यराशयः ।
प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः ॥
दद्यादनेन मन्त्रेण गवां ग्रासं[१] सदैव हि ॥

''सदैव ही''त्युक्तेर्नित्याधिकारः ।

[संस्कृत टीका]

सौरेति । सुरभेपरत्यं स्त्री सौरभेयी, ताः सौरभेय्यः । सर्वहिताः = दुग्धादिदानद्वारा सर्व प्राणिकल्याणकारिण्यः । पवित्राः= सर्वदेवानामाश्रयतयाऽपि पूताः । पुण्यराशयः = पुण्यरूपाः । त्रैलोक्यमातरः = हितकारिणीत्वेन त्रैलोक्यपालिन्यः । हे गावः । मे ग्रासम् = मया प्रदत्तं घासादिरूपं कबलं गोबलिमिति यावत् । प्रतिगृह्णन्तु = स्वीकुर्वन्तु इति मन्त्रेण । सदैव हि=प्रतिदिनमेव गवां ग्रासं दद्यात् । नित्याधिकारः=नित्यं कर्तव्यतासिद्धिः । अत्र ''अत्रच 'सदा' श्रवणात् । फलश्रवणाच्च नित्यकाम्यतेति छन्दोगाह्निकादयः । अन्ये तु विधिरेवायं नतु कालविधिरपि, वाक्यभेदापत्तेः । सदेति तु अर्थवादमित्याहुरि''-त्याचारचिन्तामणिः ।

एकदा गोपाङ्गनापरिवृतो राधया सहितः श्रीकृष्णः वृन्दावने रहसि विहारं कुर्वन् क्षीरपिपासायां जातायां लीलया स्ववामपार्श्वतः सवत्सां दुग्धवतीं सुरभिं नाम कामगवीं ससर्ज । एतत्सुरभिलोमकूपतः कामधेनूनां सवत्सानां लक्षकोटयः सहैव समुदपद्यन्त । तासां पुत्राः पौत्राश्च संबभूवुरसंख्यकाः । भगवान् पश्चात् सुरभिमर्चयामासेति ब्रह्मवैवर्त्तीया कथा ।

[हिन्दी टीका]

सौरभेय्यः से त्रैलोक्यमातरः पर्यन्त के मन्त्ररूप वाक्य से प्रतिदिन (अन्न सहित) घास आदि का ग्राम गौओं को दें । मन्त्र का अर्थ है–

---

पा० (१) घासमिति वीरमित्रोदय पाठ : ।

हे सुरभि की सन्तान, सभी प्राणियों को दुग्ध आदि के दान से हित करने वाली पवित्र, पुण्यमय, एवं त्रिलोकी की माता गौएँ, मेरे द्वारा दिया हुआ यह घास आदि का ग्रास स्वीकार करो ।

किसी समय गोपाङ्गनाओं से परिवृत राधा सहित श्रीकृष्ण भगवान् एकान्त वृन्दावन में घूमते हुए को दुग्धपान की इच्छा हुई । सर्वशाक्तिमान् श्रीकृष्ण ने अपने बायें भाग से तुरत बछड़े सहित दूध देने वाली सुरभि नाम की कामधेनु की सृष्टि की जिसके रोमकूप से लाखो करोड़ कामधेनु तथा बछडे उत्पन्न हुए । सहैव असंख्य उनके पुत्र पौत्र आदि भी उत्पन्न हुए । इस सुरभि की पूजा सर्वप्रथम श्रीकृष्ण ने ही की । यह कथा ब्रह्मवैवर्त से ली गई है ।

## [ मूलम् ]

भारते–

**घासमुष्टिं परगवे सान्नं दद्याच्च यः सदा ।**
**अकृत्वा स्वयमाहारं स्वर्गलोकं स गच्छति ॥**

अकृत्वा स्वयमाहारमितिश्रवणाद् भोजनात्प्राक् ग्रासदानं न तु तत्र कालनियमः। फलश्रवणाच्चात्र सकामाधिकारोऽपि ।

## [ संस्कृत टीका ]

यः जनः । स्वयमाहारमकृत्वा = स्वभोजनात्प्राक् । सान्नं घासमुष्टिम् = अन्नसहितं मुष्टिपूर्णं तृणम् । परगवे = अन्यस्य गवे । सदा= प्रतिदिनम् । दद्यात् । स स्वर्गलोकं गच्छति । सकामाधिकारोऽपि = स्वर्गफलकाम-नावतामप्यत्राधिकारः । व्याख्यायामपि पदस्य मूले 'सदे' ति पदस्योपादानेनास्य नित्यविधित्वमपि बोध्यम् । एवञ्च निष्कामः स्वर्गलोकगमन-कामश्च पर गवे सान्नं मुष्टिपूर्णं घासं दद्यादिति भावः ।

## [ हिन्दी टीका ]

जो कोई भोजन करने के पहले दूसरे की गाय को अन्नसहित मुट्ठी भर घास प्रतिदिन देता है वह स्वर्ग लोक जाता है । अर्थात् मूल वचन में स्वर्गलोक गमन की बात कही जाने के कारण सकामव्यक्ति तथा सदा पद के उपादान होने से निष्काम व्यक्ति निर्दिष्ट गोग्रासदान विधि का आचरण करे ।

[मूलम्]

भविष्यपुराणे-

तृणोदकादि[1]संयुक्तं प्रदद्याच्च गवाह्निकम् ।
कपिलाशतदानस्य फलं विद्यान्न संशयः ॥

पञ्चभूते शिवे पुण्ये पवित्रे सूर्यसम्भवे ।
प्रतीच्छेदं मया दत्तं सौरभेयि नमोऽस्तु ते ॥

गवाह्निकम् = गवा यदह्ना भुज्यते । पञ्चभूत इत्यादिना गवाह्निकदान-मन्त्रः । गोग्रासदान-मन्त्रस्तु सौरभेय्यः इत्यादिः प्रागुक्तः ।

[संस्कृत टीका]

तृणोदकादीति । च = पुनः । तृणोदकादिसंयुक्तम् = घासजलान्नप्रभृति-सहितम् । गवाह्निकम् = गवा यदह्नाभुज्यते-दिवसाहारमिति यावत् । चे त्परस्य गवे प्रदद्यात् । (तदा) कपिलाशतदानस्य फलम्= कपिलानाम्-स्वर्णवर्णगोविशेषाणाम् (कपिला गोविशेष इति हेमचन्द्रः । सा तु स्वर्णवर्णेति पुराणमिति शब्दकल्पद्रुमः) । शतस्प यद्दानं तस्य फलम्=फलसदृशं फलम् । विद्यात् = जानीयात् । (अत्र) संशयः न कार्य इति शेषः ।

गवाह्निकदानमन्त्रो यथा-पञ्चभूत इत्यादि । सौरभेयीति सम्बोधनान्तरस्य पञ्चभूत इत्यादि विशेषणानि । पञ्चभूते=पृथिवीजलतेजोमरुदाकाशस्वरूपे तत्पवित्रताऽऽधायके । शिवे कल्याणकारिणि । पुण्ये=पुण्यमयि । पवित्रे = सर्वथा पूते । सूर्यसम्भवे = सूर्यजाते । हे सौरभेयि! कामधेनुतनुजे गोमातः । मया दत्तम् । इदं गवाह्निकम् । प्रतीच्छ=स्वीकुरु । ते तुभ्यम् । नमः = प्रणामोऽस्तु ।

"सौरभेय्य" इत्यादिस्तु गोग्रासममन्त्रः पूर्वमुक्त एव । एतेन गोग्रासदान-मन्त्रः गवाह्निकदानमन्त्रश्च विभिन्न एव । गोप्रणामविषये उपरिष्टाद् ब्रह्मपुराणं यथा-

---

पा० (१) तृणोदकंन ।

**सदा गावः प्रणम्यास्तु मन्त्रेणानेन पार्थिव ।**

**नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च ।**

**नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ॥**

**मन्त्रस्य स्मरणादेव गोदानफलमाप्नुयात् ॥**

गव्यपवित्रतायां भविष्यपुराणम्–

**गोमूत्रं गोमयं क्षीरं सर्पिर्दधि च रोचना ।**

**षडङ्गमेतन्मङ्गल्यं पवित्रं सर्वदा गवाम् ॥ इति**

**[ हिन्दी टीका ]**

दिन भर खाने योग्य घास जल अन्न आदि से संयुक्त भोज्य पदार्थ जो व्यक्ति दूसरे की गाय को देता है उसे सौ स्वंर्णवर्ण गोविशेष (कपिला) के दान फल समान फल प्राप्त होता है । इस दान को गवाह्निक दान कहते हैं । इस दान का मन्त्र ''ॐ पञ्चभूते'' से लेकर ''नमोऽस्तु'' पर्यन्त मूल में उल्लिखित है ।

इसका अर्थ है :- पृथिवी जल तेज वायु आकाश स्वरूपे कल्याणदायिनि पुण्यराशे अतिपवित्रे सूर्यसम्भवे हे कामधेनु की पुत्रि गोमातः, मुझसे दिया गया यह दिन भर का भोजन स्वीकार करो और तुझे प्रणाम है ।

ऊपर से ब्रह्मपुराण के अनुसार ज्ञातस्य है कि संस्कृत व्याख्या में उल्लिखित ''नमो गोभ्यः'' से ''नमो नमः'' पर्यन्त मन्त्र से सदैव गायों को प्रणाम करे । इस मन्त्र के स्मरण से ही गोदान का फल पाता है । इस कथन से सूचित होता है । कि मन्त्र पढ़कर प्रमाण करने पर तो और भी विशिष्ट फल होगा । मन्त्र का अर्थ- कामधेनु की सन्तान श्रीमती गायों को प्रणाम । पावन करने वाली गौओं को प्रणाम । ब्रह्माजी की पुत्रियों को प्रणाम। पावन करनेवाली गौओं को प्रणाम । भविष्य पुराण के अनुसार ज्ञातव्य है कि गायों के विकारभूत मूत्र-गोबर-दूध-दही-घी तथा तक्र मलाई आदि ये छहों पदार्थ सदैव मंगल (कल्याण) कारी तथा पवित्र हैं ।

**❁ इति गोग्रासप्रकरणम् ❁**

# अतिथिपूजा

[ मूलम् ]

अथातिथिपूजा । तत्र वसिष्ठ :-

पितृभ्यो दद्यात्ततोऽतिथीन् पूजयेत् ।

एवञ्चात्र नित्यश्राद्धानन्तरमतिथिपूजाविधानात् स्मृत्यन्तरे वैश्वदेवानन्तरं वैश्वदेवात्प्रागागतोऽपि नातिथिरित्येवंपरम् ।

[ संस्कृत टीका ]

पितृभ्य इति । पितृयज्ञं (नित्यश्राद्धं) समाप्य अतिथीन् सम्मानयेदिति मूलवचनार्थः । एवञ्च=तथासति । अत्र=वसिष्ठमते । इदानीमेवाग्रे वक्ष्यमाण-पराशरवसिष्ठस्मृत्यनुसारं वैश्वदेवानन्तरम् = वैश्वदेवानन्तर्याभिधानम् । वैश्वदेवात् प्रागागतोऽपि =वैश्वदेवात्पूर्वमुपस्थितोऽपि । अतएव "एवञ्च स्मृत्यन्तरे वैश्वदेवानन्तर्याभिधानं ततः प्रागुपस्थितो नातिथिरेवंपरम् । तथा चश पराशरशातातपौ प्रियो वेत्यादि" इति नित्यकृत्यरत्नमालाऽपि ।

[ हिन्दी टीका ]

नित्यश्राद्ध कर लेने के बाद अतिथियों का पूजन करें यह मूल वचन का अर्थ हुआ । अब इससे सिद्ध होता है कि अभी आगे कहे जाने वाले पराशर एवं शाता तप के वचनानुसार वैश्वदेव के बाद या पहले आये हुए भी अतिथि अतिथि के रूपमें मान्य नहीं है ।

[ मूलम् ]

तथा च पराशर[1]शातातपौ-

प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा ।

वैश्वदेवे तु[2] सम्प्राप्ते[3] सोऽतिथिः स्वर्गसङ्क्रमः ॥

[ संस्कृत टीका ]

प्रिय इति । "काममभ्यर्चयेन्नित्यं नाभिरूपमपि त्वरि"मिति वीरमित्रोदयद्धृत-मनुवचनेन द्वेष्यभोजने निषिद्धेऽपि,

पा० ( १ ) लें० पु० पाराशर । ( २ ) प्राप्तस्तु वैश्वदेवान्ते । ( ३ ) सम्प्राप्तः इति छन्दोगाह्निक पाठः ।

नष्टशौचे व्रतभ्रष्टे विप्रे वेदविवर्जिते ।
दीयमानं रुदत्यन्नं किं मया दुष्कृतं कृतम् ॥

इति स्मृत्यन्तरवचनेन च मूर्खायान्नदाने निषिद्धेऽपि तदपवादमाह ''प्रियो वे'' त्यादिना । वैश्वदेवे तु सम्प्राप्ते=वैश्वदेवानन्तरम् । अतएवाग्रे ''कालः=वैश्वदेवोत्तरः प्रागुक्त'' इति ग्रन्थकारोपि । यदि प्रियः=स्निह्यः । द्वेष्यः=शत्रुः । मूर्खः=स्वकर्मरहितः । पण्डितः=क्रियावान् पुरुषः । ''यस्तु क्रियावान् पुरुषः स विद्वानि''ति नियमात् । आगतो योऽतिथिः=एतादृशोऽप्यतिथिः । सः । स्वर्गसंक्रमः=स्वर्गप्राप्तिसाधनम् । अतोऽविचार्य भोजनीय एवेति भावार्थः ।

[ हिन्दी टीका ]

मित्र या शत्रु, मूर्ख या पण्डित जो भी अतिथि वैश्व देव कर्म समाप्ति के बाद आवे उसे सम्मान (भोजन) कराने पर स्वर्ग की प्राप्ति होती है ।

[ मूलम् ]

हारीतः-

**सर्वा अस्य देवता गृहानभ्यागच्छन्ति, यस्यैवं विद्वान् गृहमभ्येति[१], तमनभ्युत्तिष्ठतः प्राणा देवता अपक्रामन्ति ।**

[ संस्कृत टीका ]

सर्वा इति । अस्य गृहान् । सर्वा देवताः= त्रिंशत्कोटिः देवताः । अभ्यागच्छन्ति=प्राप्नुवन्ति । यस्य गृहम् । एवं विद्वान् ब्राह्मणः= विशिष्टो ज्ञानी ब्राह्मणः । अभ्येति=आगच्छति । तम्=विद्वांसम् । अनभ्युत्तिष्ठतः= अभ्युत्थानमकुर्वतः। प्राणा देवता अपक्रमान्ति= प्राणाः देहाद् बहिर्गन्तु मीहन्ते, देवताश्च गेहेभ्य इत्यर्थः । अतएव तन्निवारणार्थमभ्युत्थानादिकमावश्यकम् । यथा चोक्तमग्रे ''अतः प्राणैः पापीयान् यातयामत्वमुपैति, तस्मै यदाह स्वागतमिति तेन गृहदेवता प्रीणाति'' इति । प्राणैः=प्राणदेवताभिरपक्रान्ताभिः हेतुभूताभिः । पापीयान् । यातयामत्वम् । यातयामत्वम्=जीर्णत्वम् ।

---

पा० (१) ''श्रान्तः'' इत्याधिकः पाठश्छन्दोगाह्निके ।

[ हिन्दी टीका ]

उसके घरों में सभी देवता आ जाते हैं, जिसके घर में विशिष्ट ज्ञानी ब्राह्मण अतिथि रूप से आते हैं, उनके प्रति उठकर खड़ा न होनेवाले मनुष्य के प्राण देह से बाहर और आगत देवता घर से बाहर जाने की इच्छा करने लगते हैं। (अतः इन्हीं के अग्रिम वचनानुसार अभ्युत्थान, स्वागत प्रश्न आदि आवश्यक हैं जिससे ये स्थिर रहें)।

[ मूलम् ]

अत्र बृहस्पतिः-

**प्रीयते स्वागतेनाग्निरासनेन शतक्रतुः।**
**पितरः पादशौचेन भोजनेन प्रजापतिः॥**

[ संस्कृत टीका ]

अत्रेति। अत्र=विशिष्टविदुषो ब्राह्मणस्य सम्माने। प्रीयत इति। विद्वांसमतिथिमुद्दिश्य स्वागतप्रश्नेनाग्निः, आसनदानेनेन्द्रः, प्रदत्तोदकैः पादप्रक्षालनेन पितृगणः, भोजन दानेन च ब्रह्मा प्रसीदतीत्यर्थः।

[ हिन्दी टीका ]

विशिष्ट विद्वान् अतिथि ब्राह्मण के सम्मान प्रसंग में बृहस्पति का वचन है कि इनके उद्देश्य से किये गए स्वागत प्रश्न से अग्नि, आसनदान से इन्द्र, पैर धुलाने से पितृगण तथा भोजनदान से ब्रह्मा प्रसन्न होते हैं।

[ मूलम् ]

शातातपः-

**भिक्षां वा पुष्कलं वापि हन्तकारमथापि वा।**
**असम्भवे सदा दद्यादुदपात्रमथापि वा॥**

[ संस्कृत टीका ]

भिक्षामिति।

**ग्रासमात्रा भवेद् भिक्षा पुष्कलञ्च चतुर्गुणम्।**
**पुष्कलानि च चत्वारि हन्तकारं विदुर्बुधाः॥**

इति शातातपोक्त्यनुसारञ्च हन्तकारं पुष्कलं भिक्षां वा यथाविभवं दद्यात्। एतदसम्भवे, उदपात्रमपि= पात्रपूरितमुदकमपि वा । सदा दद्यात् ।

[ हिन्दी टीका ]

संभव हो तो अतिथि को विभवानुसार १६ ग्रास अथवा ४ ग्रास अथवा १ ग्रास भोजनीय अन्न दें । ऐसा भी संभव न होने पर अन्ततः जलपान हेतु जलपूर्ण जलपात्र ही सौंपे ।

[ मूलम् ]

पारस्करः-

उद्धृत्यान्नं ब्राह्मणायावनेज्य दद्याद्धन्ततः । इति ।

एवञ्चातिथ्यभावे अन्येनापि ब्राह्मणेन मनुष्ययज्ञसिद्धिः ।

[ संस्कृत टीका ]

उद्धृत्येति । वचनस्यास्य हरिहर भाष्यं यथा-"अतिथिप्राप्तौ पादप्रक्षालन-पूर्वकं गन्धमाल्यादिभिरभ्यर्च्य अन्नं परिवेष्य 'हन्त तेऽन्नमिदं मनुष्याये'ति सङ्कल्प्य तमाशयेत् । तदभावे षोडशग्रासपरिमितं चतुर्ग्रासपरिमितं वा अन्नं पात्रे कृत्वा निवीती भूत्वा उदङ्मुख उपविष्टो 'हन्त तेऽन्नमिदं मनुष्याये'ति सङ्कल्प्य कस्मैचिद् ब्राह्मणाय दद्यात् मनुष्ययज्ञसिद्धये" इति ।.'अवनेक्ष्य प्रोक्ष्ये'त्याचारचिन्तामणिः । एवञ्चातिथ्यभावे इति । अतएवात्र "मनुष्ययज्ञे चात्रातिथित्वमविवक्षितम् । अतिथेरनित्यत्वात् । मनुष्ययज्ञस्य नित्यत्वात् तेनातिथ्यभावेऽन्येनापि ब्राह्मणेन मनुष्ययज्ञ-सिद्धिरिति छन्दोगाह्निकमपि ।

[ हिन्दी टीका ]

हरिहरकृत भाष्य के अनुसार वचन का अर्थ है कि अतिथि प्राप्त होने पर उनका पैर धोकर चन्दन पुष्प माल्य आदि से पूजा कर बाद में अन्न परोस कर उसे जल से सीच कर तथा 'हन्त तेऽन्नमिदं मनुष्याय' इस मन्त्र से सङ्कल्प कर अतिथि-भोजन कराये । यदि अतिथि प्राप्त न हो सकें तो सोलह कौर (ग्रास) के बराब या इसके अभाव में चार कौर के बराबर अन्न परोस कर निवीती (कण्ठावलम्बितयज्ञोपवीती) और उत्तर मुंह हो बैठकर "हन्त तेऽन्नमिदं मनुष्याय" ऐसा संकल्प कर किसी ब्राह्मण को दे दें ।

यहाँ आचारादर्श एवं विशेषत: छन्दोगाह्निक का कहना है कि मनुष्य यज्ञ में अतिथि ही होना विवक्षित नहीं है क्योंकि अतिथि का आना निश्चित नहीं रहता। अत: अतिथि के अभाव में अन्य ब्राह्मण से भी मनुष्ययज्ञ सिद्ध कर लेना चाहिए।

[ मूलम् ]

अभ्यागतानुवृत्तौ वसिष्ठः-

**तं भोजयित्वोपासीत ततो गच्छन्तमासीमान्तमनुव्रजेदनुज्ञानाद्वा।**

[ संस्कृत टीका ]

अभ्यागतेति । अभ्यागतानुवृत्तौ=तिथिपर्वोत्सवमुद्दिश्यागतस्योपक्रमे । अभ्यागतानाह यमो यथा

**तिथिपर्वोत्सवाः सर्वे त्यक्ता येन महात्मना।**
**सोऽतिथिः सर्वभूतानां शेषानभ्यागतान् विदुः ॥ इति।**

तम्=अभ्यागतम् । भोजयित्वा=खादयित्वा । उपासीत=उपवेशयेत् । अत्र "भोजयित्वा प्रियप्रश्नोत्तरेण क्षणं स्थित्वा" इति छन्दोगाह्निकमपि । ततः= अनन्तरम् । तत्स्थानाद्वा । गच्छन्तम् । आसीमान्तम्=स्वग्रामसीमापर्यन्तम् । अनुज्ञानाद्वा= अथवाऽनुज्ञापर्यन्तम् । अनुव्रजेत् = अनुगम्य विसर्जयेत् ।

यदप्यत्र प्रकृतग्रन्थेनाभ्यागतातिथ्योः भासते भेदस्तथाप्यस्यैव ग्रन्थ-कारस्यान्यत्रिक-व्याख्यानुसारमभेद एव विज्ञायते । यथाचात्र छन्दोगाह्निकम्- "प्राप्तमतिथिमादरातिशयेनाभ्युत्थाय......अयानवन्तमनुज्ञापर्यन्तमननुज्ञाने आसीमान्तमनुव्रज्य विसर्जयेदि"ति ।

[ हिन्दी टीका ]

अभ्यागत के प्रसंग पर वसिष्ठ का वचन है कि इन्हें भोजन कराकर विश्राम निमित्त प्रिय प्रश्नोत्तरों के द्वारा कुछ देर बैठायें। वहाँ से चलने के बाद अपने गाँव की सीमा तक या आज्ञाऽनुसार अनुव्रजन कर विदा कर दें।

अतिथि और अभ्यागत में ऊपर से भेद यह ज्ञातव्य है कि किसी तिथि विशेष या पर्वविशेष पर होनेवाला उत्सवों को उद्देश्य मानकर किसी के घर पहुँचना जिन महात्मा ने छोड़ दिया है अर्थात् अनिश्चित रूप में पहुँचने वाले अतिथि कहलाते हैं और उन उत्सवों का ध्यान रखकर पहुँचने वाले अभ्यागत कहलाते हैं। इन दोनों में वस्तुत: ऐसा

पारिभाषिक भेद रहने पर भी इसी ग्रन्थकार के अपर ग्रन्थ छन्दोगाह्निक में की गई व्याख्या के अनुसार यह भेद यहाँ नहीं देखा जाता है।

[मूलम्]

आपस्तम्बः-

**यानवन्तमायानाद्[१] यावन्नानुजानीयादितरमप्रतिभाया[२] मासीम्नो निवर्तेत।**

इतरम्=यानशून्यम्। अप्रतिभायाम्=अनुज्ञानास्फूर्तौ।

[संस्कृत टीका]

यानेति। "प्राप्तमतिथिम्.......यानवन्तमायानारोहणादयानवन्तमनुज्ञापर्यन्तमननुज्ञाने आसीमान्तमनुव्रज्य विसर्जयेदि"ति व्याख्या छन्दोगाह्निके। अत्र "यानवन्तम्=अश्वादियानयुक्तम्, अतिथिं यावद्यानमनुव्रजेत्। यावन्नानुजानीयात्तावत्=अयानवन्तं यावन्नानुजानीयात्-न ज्ञापयेत् तावत् संसाधयेदित्यनुषङ्गः। (संसाधयेत्=अनुव्रजेत्) अप्रतिभायामिति। यदि तु अतिथेः अनुज्ञातुं प्रतिभा न भवति तदा ग्रामसीमान्तं गत्वा अननुज्ञातोऽपि निवर्तेत" इति वीरमित्रोदयः।

[हिन्दी टीका]

घोड़ा गाड़ी, बैल गाड़ी आदि सवारी वाले अतिथि का सवारी पर चढ़ने तक, विना सवारी वाले का लौटने के लिए संकेत होने तक, किन्तु वैसा संकेत न होने पर भी अपने गाँव की सीमा तक अनुव्रजन कर विदा कर दें।

[मूलम्]

विष्णुपुराणे-

**अनिकेता ह्यनाहारा ये च सायं गृहागताः।**
**तेषां गृहस्थः सर्वेषां प्रतिष्ठा योनिरेव च॥**

प्रतिष्ठा=आश्रयः। योनिः=अन्नादिदानेन जीवनहेतुः[३]। तथा,

---

पा० (१) मायानम्। (२) यांसीम्नो। (३) ले० पु० हेतवः

दिवाऽतिथौ तु विमुखे गते यत्पातकं महत् ।
तदेवाष्टगुणं पुसां सूर्योढे विमुखे गते ॥

सूर्योढः सूर्यास्तमनसमयः[१] ।

[ संस्कृत टीका ]

अनिकेता इति । अनिकेताः=न विद्यन्ते निकेताः-आवासस्थाननानि येषां ते । अनाहाराः=न विद्यन्ते आहराः=भोजनसाधनानि येषां ते । ये सायम् = सन्ध्याकाले । गृहागताः=गृहस्थस्य गृहमागताः । तेषाम्=इदानीमुक्तानामेषाम्। सर्वेषाम् । गृहस्थः=गृहस्थाश्रमी । प्रतिष्ठा=आश्रयः । योनिः =अन्नादिदानेन जीवनहेतुश्च भवति । तथा, दिवा=दिवसे । अतिथौ=प्राघुणे। (प्राघुणस्त्व-तिथिर्द्वयोरिति त्रिकाण्डशेषः) । विमुखे गते तु=स्वागताद्यभावेन गृहात् प्रतिनिवृत्ते तु । नृणाम्= मनुष्याणाम् । यत् पातकम् = पापम् । भवति । तदेव= पापम् । अष्टगुणम् । सूर्योढे=सूर्यास्तमनसमये । "सूर्योढः सायंसमय" इत्याचार-चिन्तामणिः अप्रणोद्योऽतिथिः सायं सूर्योढो गृहमेधिना" इति मनु-व्याख्यायाम्-अस्तङ्गच्छता सूर्येण देशान्तरगमनाशक्तिमुत्पाद्य गृहं प्रापित इत्यर्थ" इंति वीरमित्रोदयः । अतिथौ विमुखे गते सति । पुंसाम् = मनुष्याणाम् । भवति । एवमेव याज्ञवल्क्योऽपि "अप्रणोद्योऽतिथिः सायमपि वाग्भूतृणोदकैः" इति ।

[ हिन्दी टीका ]

विना घरवाले या विना आहारवाले या सूर्यास्त के (सायं) समय में किसी गृहस्थ के घर आने वाले इन सभी का आश्रय अन्न जल आदि के दान से जीवन की रक्षा करने वाला गृहस्थ ही है । और, दिन में निराश होकर अतिथि के लौटने पर मनुष्यों को जो पाप होता है उसका आठ गुना पाप सांयकाल अतिथि को विमुख हो कर लौट जाने पर उस गृहस्थ व्यक्ति को होता है जैसा कि याज्ञवल्क्य ने भी कहा है-सायं काल भी आगत अतिथि का प्रत्याख्यान नहीं करना चाहिए । यदि खिलाने के लिए घर में भोजन साधन न हो तो भी वाणी-पृथिवी - चटाई तथा जल से भी उनका सत्कार करें ।

---

पा० (१) सूर्यास्तमयसमयायातः । (आ) सूर्यास्तमन सम इति नि० कृ० र०मा० । (इ) सूर्यास्तसमयागतः ले० पु० ।

[मूलम्]

विष्णुः-

**प्रतिश्रयं तथा शय्यां पादाभ्यङ्गं सदीपकम्।**
**प्रत्येकदानेनाप्नोति गोप्रदानसमं फलम्॥**

प्रतिश्रयो = वासगृहम्।

[संस्कृत टीका]

प्रतिश्रयमिति। अतिथये दद्यादित्यनुवृत्तौ - विष्णुः प्रतीति। प्रातिश्रयमिति। गृहस्थः, अतिथये, सदींपकम्=दीपकेन सहितम् प्रतिश्रयम्। वासनिमित्तं गृहम्। शय्याम्। पादाभ्यङ्गम्=पादसंवाहनार्थ तैलादि, तैलादिना पादयोः संवाहनं वा (दद्यात्), एषां चतुर्णां मध्ये, प्रत्येकदानेन=एकैकस्य दानेन। गोप्रदानसमं फलमाप्नोति।

[हिन्दी टीका]

गृहस्थ अतिथि को दीपक, वासगृह, विस्तरा तथा तेल अवटन आदि से पैरों को मालिश या इस मालिश हेतु तेल आदि का प्रदान करे। इन चारों में एक एक के दान से गोदान के जैसा पुण्यफल प्राप्त होता है।

[मूलम्]

मनुः-

**आसनाशनशय्याभिरद्भिर्मूलफलेन वा।**
**नास्य कश्चिद् वसेद् गेहे शक्तितोऽनर्चितोऽतिथिः॥**

[संस्कृत टीका]

आसनेति। यथासामर्थ्यमासंन-भोजन-शय्या-जल-मूल फलादिभिः सत्कार-रहितोऽतिथिस्तस्य गृहस्थस्य गृहे वासं न कुर्यात्।

[हिन्दी टीका]

विभवानुसार आसन-भोजन-विस्तरा-पानी-अदरख आदि मूल तथा आम आदि फलों से सत्कार रहित अतिथि उस गृहस्थ के घर में नहीं रहे। सारांश में गृहस्थ के द्वारा अतिथिसत्कार होना ही चाहिए।

[ मूलम् ]

आपस्तम्बः-

( ३ ) एकां रात्रिञ्चेदंतिथिं वासयेत्पार्थिवा[1]ल्लो[2]कानभिजयति । द्वितीया[3]मान्तरिक्षान्, तृतीया[3] दिव्यान्[4], चतुर्थी[5] पारवतो[6] लोकान्, अपरिमिताभिरपरिमितान्[7] जयतीति विज्ञायते ।

[ संस्कृत टीका ]

एकामिति । इदानीन्तने उज्ज्वलावृत्तिसहिते प्रकाशितप्रकृतपुस्तकेतु "एकरात्रञ्चेदतिथीन् वासयेत्पार्थिवाल्लौँकानभिजयति, द्वितीयया ऽऽन्तरिक्ष्याँस्तृतीयया दिव्यांश्चतुर्थ्या परावतो लोकानपरिमिताभिरपरिमिताल्लौँकानभिजयतीति विज्ञायते" इति पाठः । एतस्योज्ज्वलावृत्तिरपि यथा "य एकां रात्रिमतिथीन् गृहे वासयति स पृथिव्यां भवान् लोकानभिजयति । द्वितीयया रात्र्या आन्तरिक्ष्यान्, तृतीयया दिव्यान्, चतुर्थ्या परावतः=सुखस्य परा मात्रा येषु लोकेषु तांनभिजयति । अपरिमिताभिः रात्रिभिरपरितान् लोकानिति विज्ञायते" इति । "अधिकदिनवासेन च फलाधिक्यमाह आपस्तम्ब" इत्याचारचिन्तामणिः ।

[ हिन्दी टीका ]

अधिक दिनों तक अतिथियों को वास (विश्राम) कराने पर अधिक फल प्राप्ति के सम्बन्ध में आपस्तम्ब का कहना है कि जो गृहस्थ अपने यहाँ एक रात अतिथि का वास (विश्राम) कराता है वह इस पृथिवी पर विद्यमान अनेको सुखप्रद लोक (स्थान विशेष) प्राप्त करने का अधिकारी बन जाता है । इसी तरह दो रात तक विश्राम कराने पर अन्तरिक्ष में विद्यामान सिद्ध-चारण-गन्धर्व किन्नर आदि लोकों को तथा तीन रात तक स्वर्ग में स्थित अनेक लोक एवं इसी तरह चार रात तक की वासव्यवस्था में उत्कृष्ट सुखवाले (व्रह्म) लोक आदि का , तथा अपरिमित रात तक विश्राम कराने पर उत्कृष्ट अपरिमित लोकों का अधिकारी होता है ।

---

पाठा० आचारचिन्तामण्यनुसारम्- ( १ ) भौमा न् । ( २ ) 'अभि' इति नास्ति । ( ६ ) परतो । लेख लेख पुस्तकानुसारम्-( ३ ) या । ( ४ ) या । ( ५ ) चतुर्थी पारवतो लोकान्' इति पाठो नास्ति । ( ७ ) मितलांकान भि ।

[ मूलम् ]

यमः–

न पृच्छेद् गोत्रचरणं[1] देशन्नाम कुलं श्रुतम् ।
अध्वनोऽभ्यागतं विप्रं भोजने[2] समुपस्थितम् ॥

चरणम्=शाखाविशेषव्यवस्थितिः । तथा,

देशं गोत्रं[3] कुलं विद्यामन्नार्थे यो निवेदयेत् ।
वैवस्वतेषु धर्मेषु वान्ताशी स निगद्यते[4] ॥

तथा,

अपि शाकं पचानस्य शिलोञ्छेनापि जीवतः ।
स्वदेशे परदेशे वा नातिथिर्विमना भवेत् ॥

[ संस्कृत टीका ]

न पृच्छेदिति । दात्रा गोत्रादि न प्रष्टव्यमित्याह 'न पृच्छेदि' त्यादिना । अध्वनः=मार्गात् । अभ्यागतम्=आगतम् । भोजने समुपस्थितम्=भोजनार्थमुखस्थितम् । विप्रम्=ब्राह्मणम् । गोत्रम् = वंशप्रवर्तकमहर्षिरूपम् । यथाचाह गोत्रकरान् मनुः–

शाण्डिल्यः काश्यपश्चैव वात्स्यः सावर्णकस्तथा ।
भरद्वाजो गोतमश्च सौकालीनस्तथाऽपरः ॥

इत्यादि । अतएव "चरणम्= स्वशाखे"ति नित्यकृत्यार्णवः । अत्र समाहारद्वन्द्वाश्रयणादेकवंचनम् । चरणम् = व्यवस्थितवेदशाखाविशेषम् । देशम् जन्म-कर्म-देशम् । नाम = संज्ञाम् । कुलम्=वंशम् । श्रुतम्= अधीतशास्त्रम् । न पृच्छेत् । अत्र यथा गृहपतिकर्तृकं तत्तत्प्रश्नकरणं निषिद्धं तथैव अभ्यागतकर्तृकमप्येतन्निवेदनं निषिद्धमित्युच्यते-देशमित्यादिना ।

यः=अभ्यागतः । अन्नार्थे=अन्नप्राप्त्यर्थम् । देशं गोत्रं कुलं विद्यां वा । निवेदयेत् = कथयेत् । सः । वैवस्वतेषु धर्मेषु=विवस्वतः सूर्यस्यापत्यं पुमानित्यर्थे "तस्यापत्यमि"ति (पा० सू०) सूत्रेणाणि वैवस्वतः=यमः मनुर्वा ।

पा० (१) गोत्रं चरणं (२) भोजनार्थमुपस्थितम् । (३) नाम । (४) प्रकीर्त्तितः ।

पुनरेतस्माच्छब्दात् "तस्येदमि (पा० सू०) त्यनेनाणि वैवस्वतसम्बन्धीत्यर्थकं वैवस्वंतमिति धर्मविशेषणम् । एवञ्च यममनुप्रतिपादितधर्मेष्वित्यर्थः । वान्ताशी=वान्तं -वमितमुद्गीर्णमिति यावत् वस्तु, अश्नाति - अत्तीति वान्ताशी - कुक्कुरः। (वान्तादः कुक्कुर इति त्रिकाण्डशेषः)। गृहपतेरनिच्छा-यामपि गोत्रादिश्रावणेन लब्धान्नस्य भक्षणाद् भोक्तुः वान्ताशित्वं स्पष्टमेव । यथा चाहमनुरपि (३।१०९)-

**न भोजनार्थे स्वे प्रियः कुल-गोत्रे निवेदयेत् ।**

**भोजनार्थं हि ते शंसन् वान्ताशीत्युच्यते बुधैः ॥ इति ।**

परं कारणान्तरेण जातिज्ञानं करणीयमेव । यथा चाह छन्दोगाह्निके ग्रन्थकारोऽपि- "अन्नदानार्थं गोत्र-कुल-नाम-देश-श्रुताचरणानि न प्रष्टव्यानि । न चासावन्नार्थं तानि कथयेत् । अतिथित्वोपयुक्तजात्यादिज्ञानं हेत्वन्तरेण कर्तव्यम् । अयमेव विधिः सायन्तनेऽप्यतिथावि"ति ।

न कदाप्यतिथिः प्रत्याख्येय इत्याह - अपि शाकमित्यादिना । अपि शाकं पचानस्य=शाकमात्रमपि पक्त्वा जीवनं निर्वहतः (तथा) शिलोञ्छेनापि जीवतः=शिलानाम् - लूनसस्यशेषाणां क्षेत्रपतितानामन्नानामुच्चयनेनापि जीवनवृत्तिं सम्पादयतो महात्मनः । अतिथिः स्वदेशे परदेशे वा यथा न विमनाः=असत्कृतो भवेत्तथा गृहपतिनाऽऽचरणीयमिति भावः । एतेन दरिद्रेणा-प्यतिथिपूजनं कर्तव्यमित्युक्तं भवति । आतिथ्याकरणे दोषमुपरिष्टादाह यमः-

**वैश्वदेवविहीना ये आतिथ्येन बहिष्कृताः ।**

**सर्वे ते नरकं यान्ति काकयोनिं व्रजन्ति च ॥ इति ।**

रौरवादि-नरकं भुक्त्वा काकयोनिं व्रजन्तीत्यर्थः ।

**[ हिन्दी टीका ]**

दाता गृहपति सूर्यास्त आदि कारणवश रास्ते से आकर भोजन हेतु उपस्थित ब्राह्मण अतिथि से गोत्र, अपनी वेदशाखा, जन्म या कर्म, देश, नाम तथा कुल कुछ भी नही पूछे । इसी तरह उपस्थित होनेवाला अतिथि के द्वारा भी अन्न के लिए अपने देश, गोत्र,

कुल तथा विद्या का निवेदन नहीं होना चाहिए। ऐसा कहकर खानेवाला व्यक्ति यम या मनुधर्म में कुत्ता कहा गया है।

केवल शाक ही पका कर जीवन निर्वाह करनेवाले (क्यों न हों) तथा गृहस्थों (किसानों) के द्वारा फसल काट लेने पर खेत में गिरे हुए अनाज के दानों को चुनकर उससे जीवनवृत्ति चलाने वाले (आदर्श महापुरुष भी) असम्मान आदि से अतिथि को अपने देश या विदेश में विमन न करे। इससे यह सिद्ध हुआ कि दरिद्र भी अतिथि का पूजन अवश्य करे। ऊपर से पराशर वचन के अनुवार आतिथ्य न करने पर दोष ज्ञातव्य है कि ''जो वैश्वदेव नहीं करते तथा अतिथि का आतिथ्य नहीं करते वे सभी रौरव आदि नरक का भोग कर कौए की योनि पाते हैं। आदि।

[मूलम्]

मनुः-

**तृणानि भूमिरुदं वाक् चतुर्थी च सूनृता।**
**एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन॥**

[संस्कृत टीका]

तृणानीति। गृहेऽन्नाभावे आह-तृणानीति। तृणानि तृणनिर्मितासन-शय्यादीनि। भूमिः=विश्रामभूमिः। उदकम्=पादप्रक्षालनाद्यर्थं जलम्। चतुर्थी=तुरीया। सूनृता वाक्='धन्या वयमद्य भवदागमनादि'त्येवमादि प्रिय-सत्यवचनानि। एतान्यपि=चत्वारीमानि वस्तूनि। सतां गृहे=धार्मिकजनगेहेषु। कदाचदन = कदाचिदपि। नोच्छिद्यन्ते=नैतेषां सामान्याभावो भवतीति मूल-वचनार्थः।

अथवा (विकल्प पक्षे) यदि दारिद्र्याददतिथिभोजनादिकं दातुं न क्षमते तदा ब्रह्मयज्ञे नियुक्तः स्यादग्नौहोमे च। यथाऽऽह मनुः (३।७५, ७६)-

**स्वाध्याये नित्ययुक्तस्यादैवे चैवेह कर्मणि।**
**दैवकर्मणि युक्तो हि विभर्त्तीदं चराचरम्॥ १॥**
**अग्नौ प्रास्ताहुतिः सम्यगादित्यमुपतिष्ठते।**
**आदित्याज्जायते वृष्टिर्वृष्टेरन्नं ततः प्रजाः॥ २॥इति**

[ हिन्दी टीका ]

अन्न न होने पर भी ( १ ) तृण की बनाई गई चटाई आदि, ( २ ) विश्राम के लिए भूमि, ( ३ ) पैर धोने आदि के लिए जल और चौथी( ४ ) प्रियसत्य वाणी- ये चार चीजें सुजन धार्मिकों के घर में होती ही हैं । अतः इनसे भी अतिथिका स्वागत अवश्य कर दें । यह मूल वचन का अर्थ हुआ ।

ऊपर से ज्ञातव्य है कि मनुवचनानुसार यदि दरिद्रता के कारण अतिथि को भोजनादि देने में क्षमता न हो तो ब्रह्मयज्ञ तथा अग्नि के मध्य होम कर्म में नित्य नियुक्त हो जाय । उन दोनों मनुवचनों का अर्थ है कि दरिद्रता के कारण अतिथि के सत्कार में असमर्थ हो तो वह नित्य स्वाध्याय करे । क्योंकि दैव कर्म में लगा हुआ पुरुष इस चराचर को धारण (पोषण) कर सकता है ।। १ ।। अग्नि में भली भाँति से दी हुई आहुति सूर्य को प्राप्त होती है । सूर्य से वर्षा होती है वर्षा से अन्न उपजता है और उससे प्रजा की उत्पत्ति होती है ।। २ ।।

[मूलम्]

तथा (मनुः ३।१०८)–

**वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत् ।**
**तस्याप्यन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत् ।।**

वैश्वदेवे = होमाद्यर्थे[१] पाके । ''वैश्वदेवस्य सिद्धस्ये'' त्यादौ दर्शनात् । निर्वृत्ते=व्ययिते[२] । न बलिं हरेत्[३]=आतिथ्यार्थे[४] पुनः पाके केवल[५] बलिहरण-निषेधः।

[ संस्कृत टीका ]

वैश्वदेव इति । वैश्वदेवे=होमाद्यर्थपाके । 'वैश्वदेवस्य सिद्धस्ये' त्यादौ दर्शनात्=''वैश्वदेवस्य सिद्धस्य गृह्योऽग्नौ विधिपूर्वकम्'' इति मनुना ( ३।८४) मुख्यतः पंक्वान्नेन वैश्वदेव (सर्वदेवतार्थ) विधानदर्शनात् । आदिपदात् ''अथ सायं प्रातःसिद्धस्य हविष्यस्य जुहुयात्'' इति वैश्वदेव-प्रकरणे आश्वलायनसूत्रम्–

---

पा० ( १ ) होमाद्यनु ।( २ ) व्यतीते ।( ३ ) हरेदिति ।( ४ ) अतिथ्यर्थे ।( ५ ) केवल ।

**वैश्वदेवं प्रकुर्वीत स्वशाखाविहितञ्च यत्।**

**संस्कृतान्नैः हविष्यैश्च हविष्य-व्यञ्जनान्वितैः।**

इति व्यासवचनादिकं बोध्यम्। संस्कृतान्नैः=सिद्धा (पक्का)न्नैः। निर्वृत्ते= व्ययिते -होमादौ व्ययीकृते इति यावत्। यदि। अन्योऽतिथिः पूर्वमागतातिथेः स्वागताद्यनन्तरमपरोऽतिथिः। आव्रजेत्=आगच्छेत्। (तदा तदर्थं पुनः पाकं कृत्वा) तस्यापि = पश्चादागतस्याप्यतिथेः। यथाशक्ति=सामर्थ्यानुसारम्। अन्नं प्रदद्यात्। बलिं न हरेत्=किन्तु पश्चात्पक्कान्नतो बलि हरणं न कुर्यात्। भूतयज्ञादेः पूर्व सिद्धान्नत एव कृतत्वात् अतएवात्र अन्यशब्द निर्देशादतिथिभोजन-पर्यन्तं वैश्व देवे कृते यद्यपरोऽतिथिरागच्छेत्तदा तदर्थं पुनः पाकं कृत्वा तस्यान्नं दद्यात्। बलिहरणं ततो नात्र कुर्यादि''ति तन्मन्वर्थमुक्तावली।

अत्र वैश्वदेवान्नपाके निर्वृत्ते तु प्रकृतप्रयोजननिश्शेष इति यावत्। अतिथिः=अतिथिलक्षणोपेतः। बलिं हरेदिति मनुष्ययज्ञव्यतिरिक्तपाक-यज्ञोपलक्षणमिति रत्नाकरः'' इति नित्यकृत्यार्णवः।

**[ हिन्दी टीका ]**

अतिथि भोजन पर्यन्त का बलिवैश्वदेव कर्म समाप्त कर लेने पर यदि दूसरा अतिथि आवे तो उसे भी पुनः पाक करके यथाशक्ति भोजन करावे। किन्तु पीछे पकाये गए इस अन्न से बलिहरण अर्थात् मनुष्ययज्ञ (अतिथिपूजन) से अतिरिक्त पाकयज्ञ (वैश्वदेव होम, बलिदानरूप भूतयज्ञ तथा पितृयज्ञ) न करें। क्योंकि पूर्व सिद्धान्न से ही पहले ये कर्म हो चुके हैं)। यह अर्थात् वाला अर्थ रत्नाकरनिबन्धानुसार ज्ञातव्य है।

**[ मूलम् ]**

केचिद् व्याचक्षते–वैश्वदेवहोमान्ते अतिथ्यन्तरोपस्थितौ तस्मै[१] दत्त्वा बलिहरणं न कर्तव्यमित्यर्थः[२]। तदयुक्तम्। बलिहरणात्पूर्वमतिथ्यन्न-दानेन स्मृत्यन्तर-विरोधात्। अन्नाल्पत्वे बलिहरण-विरोधेना[३]प्यतिथयेऽन्नदानमित्यपि च[४] व्याख्या-नन्न युक्तम्। ''न बलिं हरेदि''त्यविशेषितश्रवणात्। अतएव बलिमपि न हरेदिति स्तुतिरित्य पि व्याख्योपेक्ष्या। अप्यर्थाध्याहारदोषाच्च।

---

पा० (१) 'अन्नम्' इत्यधिकः पाठः ह० पुस्तके। (२) नित्यकृत्यार्णवोद्धृताचारादर्श-प्रकाशिताचारादर्शपुस्तकानु सारमिति। (३) धेऽ। (४) 'च' इति नास्ति।

[ संस्कृत टीका ]

केचिदिति । केचित्तु मूलोक्तमनुवचनस्य व्याख्यामेवं विदधति यद्—वैश्वदेवहोमान्ते=ॐ ब्रह्मणे स्वाहेत्येवमादियज्ञस्य देवरूपात्मक-वैश्वदेवहोमस्यावसाने । अतिथ्यन्तरोपस्थितौ= कस्याप्यतिथेरुपस्थित्यनन्तर-मपरस्याप्यतिथेरागमने । तस्मै दत्त्वा=द्वितीयातिथये भोजनमन्नं वा दत्त्वा । बलिहरणं न कर्तव्यमित्यर्थः='न बलिं हरेदि' ति मनुवाक्यान्तस्यार्थः । तदयुक्तम् = अर्थोऽयमयुक्तः । बलिहरणात्पूर्वम् = 'ॐ पर्जन्याय नमः' इत्येवमादिरूपेण उदपात्रसन्निधौ हुतशेषान्नेन कर्तव्यबलिदानात्प्राक् । अतिथ्यन्नदानेन = कस्मैचिदप्यतिथयेऽन्नप्रदानेन । स्मृत्यन्तरविरोधात् ''पितृभ्यो दद्यात्ततोऽतिथीन् पूजयेदि'' ति वसिष्ठस्मृति-वचनानुसारं बलिदाना (भूतयज्ञा) नन्तरं विधेय-पितृयज्ञानन्तरमेवातिथिपूजनस्य विधानात् । एवञ्च पितृयज्ञात्पूर्वं विधेय-भूतयज्ञात्मकबलिदानात्प्राक् कथञ्चिदपिकर्तव्यस्यातिथिपूजन-रूपस्यान्न-दानस्य सर्वथाविरुद्धत्वं विज्ञेयम् । अतएव ''कर्मप्रदीप :–

देव-भूत-पितृ-ब्रह्म–मनुष्याणामनुक्रमात् ।
महासत्राणि जानीयात् त एव हि महामखाः ॥
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणम् ।
होमो दैवो, बलिर्भौतो नृयज्ञोऽतिथि-पूजनम् ॥
श्राद्धं वा पितृयज्ञः स्यात्पित्र्यो बलिरथापि वा ॥

अनुक्रमादिति–प्रकृतक्रमविधिः । तेन प्रथमं देवयज्ञः । ततो भूतयज्ञः । ततः पितृयज्ञः श्राद्धरूपः । ततो मनुष्ययज्ञ इति क्रमः । ब्रह्मयज्ञस्तु–

स चर्वाक् तर्पणात्कार्यः पश्चाद्वा प्रातराहुते : ।
वैश्वदेवावसाने वा नान्यत्रर्ते निमित्तकात् ॥

इत्युक्तकालः ।......

भूतयज्ञस्तथा श्राद्धं नित्यञ्चातिथिपूजनम् ।
क्रमेणानेन कर्तव्यं स्वाध्यायाध्ययनं तथा ॥

अनेनेति प्रकृतक्रमविधिः। तेनायमर्थः– प्रकृतक्रमेण भूतयज्ञादि कर्तव्यम्। स्वाध्यायाध्ययनञ्च कर्तव्यम् इति। अतएव तथेति समञ्जसम् ............न तु स्वाध्यायाध्यनमन्तर्भाव्य·क्रमविधिः। विरोधादि'' ति छन्दोगाह्निकमपि।

अन्नाल्पत्व इति। व्याख्यान्तरं प्रदर्शयन्नाह अन्नाल्प इति। अन्नाल्पत्वे = सिद्धान्नस्य न्यूनत्वस्थितौ। बलिहरणविरोधेनापि = बलिहरणातिथिसम्प्रदान-कान्नदानयोरुपस्थितयोर्मध्ये बलिहरणतिरस्कारेणापि। अतिथयेऽन्नदानम्-कर्तव्यमेव। अत्रैव मनुवचनस्य तात्पर्यात्। इत्यपि च व्याख्यानन्न युक्तम् = केनचिदन्येन व्याख्यात्रा कृतेयमुक्तव्याख्याऽपि न युक्तिसहा। ''न बलिं हरेदि'' त्यविशेषितश्रवणात् = मनुवचनस्यास्य मुख्यं वाच्यार्थं विहाय तथाकृतव्याख्यानस्य निर्मूलत्वेन कपोलकल्पना-दोष-ग्रस्तत्वात्। अतएव = ''न बलिं हरेदि'' ति वचनस्याविशेषितश्रवणादेव। 'बलिमपि न हरेदि'ति = अन्नाल्पत्वस्थितौ न बलिं हरेद्, न वा उपस्थितायातिथये अन्नं दद्यादिति प्रकृतमनुवचनार्थः। स्तुतिः = प्रशंसाबोधनपरं बोध्यम्। इत्यपि व्याख्या= केनचिदपरेण कृतं पूर्वोक्तं व्याख्यानम्। उपेक्ष्या=तिरस्करणीया। (पञ्चसंख्याकानां महायज्ञानामनिष्पत्तेः। प्रत्युत पूर्वसम्पादितसिद्धान्नेन पञ्च-महायज्ञान् सम्पाद्य पुनः कृतपाकेन आगतातिथयेऽप्यन्नदानेन सर्वत्र सामञ्जस्यात्।) अप्यर्थाध्याहार-दोषाच्च='बलिमेतदुत्तरम् 'अप्य'र्थस्य (समुच्चयस्य) उपरिष्टाद् बोधनरूपाध्याहारदोषाक्रान्तत्वाच्च। ('गर्हा समुच्चय-प्रश्न-शङ्कासम्भावनास्वपि' इत्यमरः)। तथा च ''केचिद् व्याचक्षते'' इति शीर्षकेण प्रदर्शितास्तिस्रोऽपि व्याख्या हेया एवेति सारांशः।

[ हिन्दी टीका ]

यहाँ कोई (निबन्धकार) प्रकृत मनुवचन का अर्थ करते हैं कि ''ॐ ब्रह्मणे स्वाहा'' इत्यादि रूप से किये जानेवाले देवयज्ञ स्वरूप वैश्वदेव होम के बाद किसी अतिथि के आने के अनन्तर यदि दूसरे अतिथि भी उपस्थित हो जाते हैं तो इन द्वितीय अतिथि अन्न देकर (अब अन्नाभाव के कारण) बलि हरण नहीं करना चाहिए।'' किन्तु यह अर्थ इसलिए उचित नहीं कि 'ॐ पर्जन्याय नमः', इत्यादि रूप से जलपात्र के पास हुतशेष अन्न से होने वाले भूतयज्ञ रूप बलिदान के पहले किसी अतिथि को अन्नदान करने में अन्यस्मृति वचनों का विरोध हो जायगा। अर्थात् संस्कृत टीका में दिखाये गये वसिष्ठस्मृति वचन·तथा कर्म प्रदीप (छन्दोगपरिशिष्ट) वचनों के आधार

पर छन्दोगाह्निक में किये गए विवेचन के अनुसार सर्वप्रथम देवयज्ञ हो। इसके बाद क्रमशः भूतयज्ञ, पितृश्राद्धरूप पितृयज्ञ, मनुष्य यज्ञ (अतिथिपूजन) तथा ब्रह्मयज्ञ हों। फलतः बलिहरण (भूतयज्ञ) के बाद अतिथि पूजन अर्थात् अतिथि को अन्न देना धर्मशास्त्र विरुद्ध है।

प्रकृत मनुवचन की व्याख्या प्रसंग में किन्हीं दूसरे व्याख्याकार की व्याख्या है कि "यदि सिद्धान्न कम बच गया हो और पहले आये हुए अतिथि के बाद दूसरे अतिथि आ गए हों तो बलि हरण को छोड़कर भी द्वितीय अतिथि को अन्न दे देना चाहिए।" किन्तु यह व्याख्या भी समीचीन नहीं क्योंकि "न बलिं हरेत्" (बलि हरण नहीं करें) इतने ही मनुवचन का मुख्य वाच्यार्थ को छोड़कर अपने मनमाने ढंग से कुछ से कुछ जोड़कर कुछ भी अर्थ कह देना तो अन्ततः स्वकपोल कल्पना ही कहा जायेगा ?

इसी हेतु अर्थात् "न बलिं हरेत्" इतना ही मनुवचन कहे जाने पर भी किसी तीसरे सज्जन व्याख्यकार ने जो "बलिमपि न हरेत्" (बलि हरण भी न करें) ऐसा वचन तात्पर्यार्थ मानकर संकेत किया कि "अन्न अल्प रहने पर न बलिहरण करे और नहीं अतिथि को अन्न ही दें" इस अर्थ को समझाने वाले प्रकृत मनुवचन स्तुति (प्रशंसा) परक है। (अर्थात् स्तुति या निन्दा परक वचनों के द्वारा विधि या निषेध प्रतिपादित होने से कर्म में प्रवृत्ति या निवृत्ति बोधित होती है। परन्तु यह व्याख्या भी उपेक्षणीय है। क्योंकि प्रथम तो इस तरह का अर्थ करने पर पाँच संख्यावाले इस महायज्ञ का निष्पादन नहीं होगा। जब कि पूर्ववाले सिद्धान्न से पञ्च महायज्ञ सम्पन्न कर लेने पर भी द्वितीय आगत अतिथि को पुनः पाक कर भोजन करा देने से सर्वत्र सामञ्जस्य हो जाता है 'दूसरी बात, "न बलिं हरेत्" वचन का बलिमपि न हरेत्' अर्थ करने या मानने में तों बीच में जोड़े गए अपि' पदके अर्थ (समुच्चय) का अध्याहार (ऊपर से अधिक कहना या समझना) करना दोष तो आ टपकेगा ही।

सारांश में "केचिद् व्याचक्षते" शीर्षक से दिखाई गई तीनों ही व्याख्याएँ मनगढन्त होने के कारण अमान्य तथा उपेक्षणीय हैं।

[ मूलम् ]

पराशरशातातपौ–

अचिन्तितमनाहूतं देशकाल उपस्थितम्।
अतिथिं तं विजानीयान्नातिथिः पूर्वमागतः॥

देशः="उपस्थितं गृहे विद्याद् भार्या यत्राग्नयोऽपि वा" मनु-विष्णुशातातपैरुक्तः ।
कालः = वैश्वदेवोत्तरः प्रागुक्तः ।

[ संस्कृत टीका ]

अचिन्तितमिति । अचिन्तितम् = आकस्मिकम्-अज्ञातपूर्वागमनमिति यावत् । अनाहूतम्=अकृताह्वानम् । अतएव "अज्ञातपूर्वगृहागत-व्यक्तिरतिथिरिति श्रीधरस्वामी ।

यस्य न ज्ञायते नाम न गोत्रं नैव च स्थितिः ।
अकस्माद् गृहमायाति सोऽतिथिः प्रोच्यते बुधैः ॥

इति पुराणमित्याह्निकतत्त्वमि"ति च शब्दकल्पद्रुमः । देश इति । गृहे = भार्याऽग्नियुक्तगेहे ।

उपस्थितं गृहे विद्याद् भार्या यत्राग्नयोऽपि वा ।

इति शास्त्रोक्तेः । एतेन भार्याऽग्निरहितस्य प्रवासस्थस्य नातिथिरिति बोधितम् । काले = वैश्वदेवोत्तरसमये ।

"प्राप्तस्तु वैश्वदेवान्ते सोऽतिथिः स्वर्गसङ्क्रमः" ॥

इति पराशर शातातपाभ्यामुक्तत्वात् । अतएव देशः = भार्याऽग्निसन्निहितः । कालः =वैश्वदेवान्तादिरिति रत्नाकर इति नित्यकृत्यार्णवोऽपि ! उपस्थितम् = आगतम् । तम् = जनम् । अतिथिम् । विजानीयात् = विशेषतो विद्यात् । (किन्तु) पूर्वम् =वैश्वदेवात्प्राक् । आगतः = उपस्थितः । अतिथिर्न भवति ।

[ हिन्दी टीका ]

जिसके सम्बन्ध में न सोचा था और नहीं जिसे बुलाया ही था, यदि वह वैश्वदेव के बाद अग्नि तथा भार्या से युक्त घर में आता है तो उसे ही अतिथि समझना चाहिए । इससे सिद्ध होता है कि पत्नी और अग्नि से रहित प्रवासी के लिए कोई भी अतिथि नहीं हो सकेगा । न कि वैश्वदेव के पूर्व आया हुआ भी (अतिथि कहला सकता) ।

[ मूलम् ]

याज्ञवल्क्यः-

अध्वनीनोऽतिथिर्ज्ञेयः ।

[ संस्कृत टीका ]

अध्वनीन इति । अध्वनीनः = अध्वनि वर्तमान इति तन्मिताक्षरा । 'सततमध्वगामी' त्याचारचिन्तामणि-नित्यकृत्यार्णववीरमित्रोदयाः । अध्वानम् अलं गच्छतीति (अध्वन् + ख ईन इति) संस्कृतशब्दार्थकौस्तुभः । अतिथिः = अतति सातत्येन गच्छति (अत् + इथिन्) इति व्युत्पत्या मार्ग क्रमेण गमनशील एवातिथिपद वाच्यः । एवञ्च अध्वनीनातिथिपदे प्रायः समानार्थके भवतः ।

अत्रत्यं सम्पूर्ण वचनं यथा,

**अध्वनीनोऽतिथिर्ज्ञेयः श्रोत्रियो वेदपारगः ।**
**मान्यावेतौ गृहस्थस्य ब्रह्मलोकमभीप्सतः ॥**

**( या० आ० गृ० धर्म० १११ )**

अत्र "श्रोत्रियः = एकशाखाध्यायी । "एकां शाखामधीत्य श्रोत्रियो भवतीति बोधायन-वचनादि" त्याचारचिन्तामणिः ।

[ हिन्दी टीका ]

"पथिक को अतिथि समझना चाहिए" यह अर्थ मूल में लिखित वचन का हुआ । शेष वचन का अर्थ है कि श्रोत्रिय (अर्थात् वेदपाठी) और वेद के (एक शाखा का भी) पण्डित (यदि पथिक हो तो ) ब्रह्मलोक की कामना रखने वलो गृहस्थ के लिए दोनों माय अतिथि होते हैं ।

**[ मूलम् ]**

**गौतमः—**

**असमानग्रामीणोऽतिथिरेकरात्रिकः[१]।**

एकरात्रिकः = तद्दिनागतः । पूर्वन्तु द्वितीय-दिनादावपि वासनं फलार्थमुक्तम् ।

**[ संस्कृत टीका ]**

असमानेति । अतिथेर्लक्षणमाह-असमानेति । असमानग्रामीणः = अन्यग्रामवासी । यथाचाह मनुरपि (३/१०३)—

पा० (१) वैकरात्रिकः ।

**नैकग्रामीणमतिथिं विप्रं साङ्गतिकं तथा।**
**उपस्थितं गृहे विद्याद् भार्या यत्राग्नयोऽपि वा ॥ इति**

यत्र गृहे भार्याऽग्नी अपि स्यातां तत्राप्युपस्थितमेकग्रामवासिनं, साङ्गतिकम् = लोकेषु विचित्रपरिहासादिकथाभिः संगत्या भोजनमात्रार्थमितस्ततो भ्रमन्तं चातिथिं न विद्यादिति मन्वर्थः।

एकरात्रिकः = 'एकरात्रं वासशील' इति नित्यकृत्यार्णवः। तद्दिनागतः = परगृहे रात्रिमेकामुषित्वा द्वितीयदिने समागतः। एकरात्रिकवासमुद्दिश्य तद्दिने समागतो वा। अतएव अतिथि-शब्दार्थ-निर्वचने मनु (३।१०२) रपि-

**एकरात्रन्तु निवसन्नतिथिर्ब्राह्मणः स्मृतः।**
**अनित्यं हि स्थितो यस्मात्तस्मादतिथिरुच्यते ॥ इति**

पूर्वमिति। पूर्वन्तु-एतद्ग्रन्थात् प्राक्। द्वितीय-दिनादावपि= "द्वितीयामान्तरिक्ष्यान् तृतीयां दिव्यानि"त्यादिना आपस्तम्बीयवचनेन द्वितीयादिदिनेष्वपि। वासनम् = अतिथिनिवासनम्। फलार्थम् = उत्तमलोकप्राप्तिरूप फलाधिक्यार्थम्। उक्तम्। एतेनैवं विज्ञायते यद् दिनान्तरेऽतिथेः पूजने फलोत्कर्षः, अपूजने "अतिथिर्यस्य भग्नाश" इत्यादि निषेध-(वचन) विषयत्वं नास्तीति।

**[ हिन्दी टीका ]**

अतिथि वही है जो दूसरे गाँव का वासी तथा एकरात के लिए ही निवास करने वला हो। यह मूलवचन का अर्थ हुआ।

ऊपर से ज्ञातव्य है कि इसी तरह मनु (३/१०३) का भी कहना है कि " जिस घर में भार्या और वैवाहिक अग्नि भी हो वहाँ भी उपस्थित एक गाँव के निवासी जन तथा लोगों के समक्ष विचित्र परिहास प्रभृति कथा आदि के द्वारा सङ्गति कर भोजन मात्र के लिए इधर उधर घूमने वाले को भी अतिथि नहीं समझना चाहिए।"

मूलवचनानुसार एकरात के लिए वासशील (निवास करने वाला ) व्यक्ति ही अतिथि है।

हाँ, अप्रसिद्ध होने के कारणं अतिथि शब्दार्थ के निर्वचन प्रसङ्ग पर मनु (३/१०२) ने भी कहा है कि "दूसरे के घर में एक रात ही निवास करने वाला ब्राह्मण अतिथि होता है क्योंकि इनकी वासस्थिति अनिश्चित होने के कारण 'न विद्यते द्वितीया तिथिरस्य' (अर्थात् जिनका निवासदिन अगला दूसरा दिन न हो) वही अतिथि कहा जा सकता है।

मूल में ग्रन्थकार का विवेचन है कि इस ग्रन्थ के पहले आपस्तम्ब के वचनों से कहा गया है कि दूसरे तीसरे आदि दिनों में भी अतिथि निवास को अधिक फलदायी के रूप में कह दिया गया है।

ऊपर से यहाँ समन्वय के रूप में ज्ञातव्य है कि दूसरे दिनों में यदि अतिथि का पूजन (स्वागत आदि) कर दें तो फल में उत्कर्ष होगा। यदि पूजन न भी कर सकें तो 'अतिथिर्यस्य भग्नाशः' इत्यादि रूप से (पूर्व में) कहे गए निषेध वचन का प्रतिकूल फलभागी नहीं होंगे।

## [ मूलम् ]

**आपस्तम्बः–**

**धर्मपुरस्कारो[1] नान्नप्रयोजनः[2] सोऽतिथिर्भवति।**

धर्मपुरस्कारः = तीर्थयात्रादिप्रवृत्तः। अत्रातिथिरिति सम्बध्यते। अन्न-प्रयोजनः = भोजनमात्रार्थमटनशीलः।

## [ संस्कृत टीका ]

धर्मेति। अत्र "धर्मपुरस्कारः = धर्मम्-तीर्थयात्रादिकम्, पुरस्कृत्यैव आगच्छति; न तु अन्नमात्रलोलुपतये" ति वीरमित्रोदयः। "धर्मपुरस्कारः = धर्मार्थमटनशीलः" इतितु नित्यकृत्यार्णवः। म० म० मुकुन्द झा शर्मणा-छन्दोगा "धर्म्यपुरस्कारो नान्नप्रयोजनं सोऽतिथिर्भवती" ति पाठान्तरं मत्वा "यस्य धर्मनिबन्धनः पुरस्कार (आदरातिशय) एवं प्रयोजनं नान्नं स इति तदर्थः" इत्युट्टङ्किता क्वाचित्की टिप्पणी।

---

पा० (१) प्रकाशित पुस्तके भ्रामकं पाठं दृष्ट्वा प्राचीन हस्तलिखित पुस्तकानुसारमेव पाठो मूले स्थापितोऽस्ति। (२) 'नान्येति पाठान्तरं नित्यकृत्यार्णववीरमित्रोदयसम्मतम्।

अतएवातिथ्यलोभेनाटनशीलस्य दोषमाह मनुः (३/१०४)–

**उपासते ये गृहस्थाः परपाकमबुद्धयः।**

**तेन ते प्रेत्य पशुतां व्रजन्त्यन्नादिदायिनाम् ॥ इति।**

उक्त–मूलवचनानन्तरमापस्तम्बीय–फलश्रुतिर्यथा–

**"तस्य पूजायां शान्तिः स्वर्गः पुष्टिश्च" इति।**

**[ हिन्दी टीका ]**

तीर्थयात्रा प्रभृति (धर्म) के प्रसङ्ग से ही आने वाला हो तथा केवल भोजन के निमित्त ही घुमक्कड़ न हो वही अतिथि कहलाता है।

ऊपर से ज्ञातव्य है कि इसी हेतु आतिथ्यलाभ के लोभ से घूमने वालों के लिए मनु (३/१०४) ने दोष कहा है–यथा अतिथ्य के लोभ से जो गृहस्थ दूसरे-दूसरे गाँव में जाकर परान्न का सेवन करते हैं, वे निषिद्ध परान्नदोषों के न जानने वाले उस परान्न भोजन के कारण अगले जन्मों में अन्नदाताओं के पशु बनते हैं। अतः वैसा न करें। उक्त मूल के बाद फलश्रुतिं है कि अतिथि की पूजा से शान्ति, स्वर्ग तथा पुष्टि मिलती है।

**[ मूलम् ]**

मनुः –

**ब्राह्मणस्य[1]त्वनतिथि र्गृहे[2] राजन्य उच्यते।**
**वैश्यशूद्रौ सखा चैव ज्ञातयो गुरुरेव च ॥ १ ॥**

**यदि त्वतिथि-धर्मेण क्षत्रियो गृहमाव्रजेत्।**
**भुक्तवत्सु तु विप्रेषु कामन्तमपि भोजयेत् ॥ २ ॥**

**वैश्यशूद्रावपि प्राप्तौ कुटुम्बेऽतिथिधर्मिणौ।**
**भोजयेत्सह भृत्यैस्तावानृशंस्यं[3] प्रयोजनम्[4] ॥ ३ ॥**

**इतरानपि सख्यादीन् संप्रीत्या गृहमागतान्।**
**प्र[5]कृत्याऽन्नं यथाशक्ति भोजयेत्सह भार्यया ॥ ४ ॥**

---

पा० (१) न ब्राह्मणस्यत्वतिथि। (२) र्गे। (३) स्य। (४) यन्। (५) सत्कृत्या

कुटुम्बे = गृहे । आनृशंस्यम् = दया । प्रकृत्य = पक्त्वा । सह भार्यया = भार्यया सहितः ।

## [ संस्कृत टीका ]

ब्राह्मणस्येति । अत्र " ब्राह्मणस्य क्षत्रियादयोऽतिथयो न भवन्ति, क्षत्रियादीनां ब्राह्मणस्योत्कृष्ट-जातित्वात् । मित्रज्ञातीनामात्मसम्बन्धात् । गुरोः प्रभुत्वात् । अनेनैव न्यायेन क्षत्रियस्य उत्कृष्टो ब्राह्मणः सजातीयश्च क्षत्रियोऽतिथिः स्यान्नापकृष्टौ वैश्यशूद्रौ । एवं वैश्यस्यापि द्विजातयोऽतिथयो न शूद्रः" इति मन्वर्थमुक्तावली (३/११०) । अत्रैव "अत्र च शातातपवाक्ये प्रियो वा यदि वा द्वेष्यः इत्यत्र प्रियस्यातिथित्वाभिधानात् मार्कण्डेयवचनं यथा–

**"न मित्रमतिथिं कुर्यान्नैकग्राम-निवासिनम् ।। इति**

मार्कण्डेय[1]-मनुवाक्ये च 'न मित्रमतिथिं कुर्यादि'ति, 'सखा चैव ज्ञातयो गुरुरेव चे'त्यादिना सख्यादीनामतिथित्वनिराकरणादेवं विज्ञायते,–मत्प्रियस्य मच्छिष्यस्य वा इदं गृहमिति सम्बन्धं पुरस्कृत्यागतस्य नातिथित्वम्, अपुरस्कृत्य सम्बन्धं दैवादागतस्य तु तस्य अतिथित्वमिती" ति वीरमित्रोदयः ।।१।।

यदीति । "यदि ग्रामान्तरादागतत्वादतिथिकालोपस्थिततत्वादतिथिधर्मेण क्षत्रियो विप्रगृहमागच्छेत्तदा विप्रगृहोपस्थितविप्रेषु कृतभोजनेषु स्थितेष्विच्छातस्तमपि भोजयेत्" इति मन्वर्थमुक्तावली ।।२।। (३/१११) ।

वैश्येति। "यदि वैश्यशूद्रावपि ब्राह्मणस्य, कुटुम्बे=गृहे, प्राप्तौ ग्रामान्तरादागतत्वादतिथिधर्मशालिनौ तदा तावपि–क्षत्रिय–भोजन कालात्परतो दम्पतीभोजनात्पूर्वं दासभोजनकाले अनुकम्पामाश्रयन् भोजयेत् इति म० मु० झाशर्म्माणः ।। ३ ।। (३/११२) ।

अत्र "ब्राह्मणस्यायातौ वैश्यशूद्रौ करुणया भोजयितव्यौ इत्यर्थः इत्याचार-चिन्तामणिरपि ।

आनृशंस्यम् = दया–परप्राणरक्षेति यावत् ।। ३ ।। (३ / ११२)

इतरानिति । उक्तभोजनकाले क्षत्रियादिव्यतिरिक्तान् सखि–सहाध्यायि-प्रभृतीन् संप्रीत्या गृहमागतान् । नत्वतिथिभावेन, तस्य प्रतिषेधात् । यथाशक्ति

पा० (१) च्चा

प्रकृष्टमन्नं कृत्वा भार्याया भोजनकाले भोजयेत् । गृहस्थस्यापि स एव भोजनकालः । 'अवशिष्टं तु दम्पती' (३/११६) इति वक्ष्यमाणत्वात् । आत्मना सहेति वक्तव्ये वचनवैचित्रीयमाचार्यस्य । गुरोस्तु भोजनकालानभिधानं प्रभुत्वेन स्वाधीनकालत्वात् इति म० मु० झा ।।४।।(३/११३)।

परन्तु "प्रकृत्याऽन्नं यथाशक्ति" इति मनुवचनांशस्य ग्रन्थकृद् व्याख्यानुसारं प्रतीयते—संप्रीत्या गृहे भोजनकाले समागतानां सखि-सहाध्यायिप्रभृतीनां पूर्णतृप्त्यर्थं यथाशक्ति, प्रकृत्य = पक्त्वा-पुनः पाकं विधायेति यावत्, सहभार्यया=भार्यया सहितः-अर्थात् लज्जादिवशात् सख्यादिसमक्षमुपस्थातुमक्षमाया भार्याया अन्ततः सहमतिमप्यादाय, असहमतौ तु अर्धनारीश्वरस्य भागवतो नटराजराजस्यासफलनृत्तवद् गैहिकस्य कस्यापि कर्मणश्चारुतया निष्पत्यभावात् सादरमन्नं भोजयेदिति ।"

कदा भोजयेदेतानिति प्रश्नस्य समाधानाय द्रष्टव्यमेतदीयं छन्दोगाह्निकं यथा—"याज्ञवल्क्यः—

भोजयेदागतान् काले सखिसम्बन्धिबान्धवान् ।
बालान् सुवासिनीर्वृद्धान् गुर्विण्यातुरकन्यकाः ।
सम्भोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम् ।।

अत्र बालादीनामसामर्थ्ये सति पूर्वं भोजनम् । सामर्थ्ये तु—

अग्रे भोजयेदतिथीनन्तर्वत्नीं तदन्तरम् ।
बालवृद्धांस्तथा दीनान् व्याधितांश्च विशेषतः ।।

इति बौधायनवचनादतिथिभोजनानन्तरमेव बाल-भोजनम् । .....अथवा—

गुरूनतिथिबालांश्च तर्पयेत्पूर्वमेव हि ।
आत्मानं तर्पयेत्पश्चान्नियतो वाग्यतः शुचिः ।।
स्त्री-शूद्रं तर्पयेत् पश्चादेष धर्मः सनातनः ।।

इति यमवचनात् अभ्यर्हितस्यासमर्थस्य च भोजनं यौगपद्यसम्भवेऽपि प्रागेव ।

इतरस्य सहापि । अतएव–

पात्रेष्वर्थानुरूपेषु पुत्रभृत्यानुजैः सह ।
भूम्यां पात्रं प्रतिष्ठाप्य मौनेनान्नं तु भोजयेत् ॥

इति पुत्रादिसहत्वं ब्रह्मपुराणोक्तम्'' इति ।

एतेन–अतिथि गुरुबालादीनां भोजनोत्तरं सखिसहाध्यायिसम्बन्धिबान्धवान् भोजयित्वा पुत्र-भृत्य-अनुजादिभिः सह एषामनन्तरं वा स्वयं गृहपतिरश्नीयात् । अत्र–

भुक्तवत्स्वथ विप्रेषु स्वेषु भृत्येषु चैव हि ।
भुञ्जीयातां ततः पश्चादवशिष्टन्तु दम्पती ॥ (३।११६) ।

इति मनोः, इदानीमेव पूर्वप्रदर्शितयाज्ञवल्क्यस्य च वचनसद्भावेऽपि पौर्वापर्यविचारणायां –

स्त्री-शूद्रं तर्पयेत्पश्चादेष धर्मः सनातनः ।

इति यमवचनाधारेण भार्यादिसामान्यस्त्रीणां सर्वान्ते भोजनकरणं सिध्यति । एवमेव विद्यते सार्वत्रिकव्यवहारोऽपि । इति ।। ३।। (३/११३)

**[ हिन्दी टीका ]**

यदि ब्राह्मण के घर क्षत्रिय, वैश्य, शूद्र, बान्धव (विरादरी के लोग) और गुरु आवें तो अतिथि नहीं कहे जाते । इसी तरह क्षत्रिय के यहाँ उत्कृष्ट जाति वाला ब्राह्मण या समानजाति वाला क्षत्रिय ही अतिथि हो सकता है, न कि वैश्य शूद्र भी । एवं वैश्य का अतिथि द्विजाति ही हो सकता है न कि शूद्र भी.यह अर्थ मनुवचन का हुआ ।

यहीं वीरमित्रोदय का शंका-समाधान है कि–

न मित्रमतिथिं कुर्यान्नैकग्राम-निवासिनम् ।

इस मार्कण्डेय वचन तथा उक्त मनुवचन के अनुसार मित्र तो अतिथि नहीं होते किन्तु पहले कहे गये ''प्रियो वा यदि वा द्वेष्यः'' इस शातातप के वचनानुसार मित्र भी अतिथि होतें हैं । फलतः विरोध स्पष्ट है । अतः इस विरोधपरिहार निमित्त यहाँ यह समझना चाहिए कि 'मेरे प्रिय या मेरे शिष्य का यह घर है' इस सम्बन्ध की बुद्धि से आने वाला वह अतिथि नहीं कहलाता, किन्तु इस सम्बन्ध की भावना के विना ही संयोगात् आनेवाला अतिथि कहलाता है ।। १।। (३/ ११०)।।

यदि कोई क्षत्रिय ब्राह्मण के घर अतिथि धर्म (दूसरे गाँव, वैश्वदेव के बाद, मध्याह्न के समय, या संध्या समय) से आया हो तो अतिथि ब्राह्मणों को भोजन कराकर गृहस्थ (ब्राह्मण) उसे भी भोजन करा दे ।। २ ।। (३/१११)

यदि अतिथि-धर्म (रूप) से ही वैश्य या शूद्र ब्राह्मण के घर आवें तो गृहपति क्षत्रिय इन्हें भी भोजनकाल के बाद दम्पति (पति-पत्नी) भोजन के पहले दया (परप्राण की रक्षा की भावना) पूर्वक भृत्योंके साथ भोजन करा दें ।। ३ ।। (३/११२) ।

उक्त भोजन के समय क्षत्रिय आदि के अतिरिक्त मित्र साथ-साथ पढ़नेवाले (सहाध्यायी) एवं बान्धव (माता-पिता के सम्बन्धी) जन प्रेम से न कि अतिथि भाव से, क्योंकि ये अतिथि होते ही नहीं हैं, घर में आये हों तो अपने भोजन के समय इन्हें भी यथाशक्ति उत्तम (उत्कृत्ष्ट) अन्न से भोजन करा दें ।

यहाँ गुरु के भोजनकाल के न कहे जाने का कारण है कि उनके समय को नियन्त्रण करने का अधिकार प्रभु होने से स्वयम् उन्हीं का है, न कि शिष्यादि का भी । यह अर्थ मन्वर्थमुक्तावली के अनुसार हुआ ।

परन्तु,

**प्रकृत्याऽन्नं यथाशक्ति भोजयेत्सह भार्यया ।**

(मनु० ३/११३) इस मनुवचनांश की '' प्रकृत्य = पक्त्वा'' (पुनः पाकं विधायेतियावत् ''सहभार्यया = भार्यया सहितः'' (अन्ततो भार्यायाः सहमत्याऽपि सहित इति भावः) इस ग्रन्थकारीय व्याख्या के अनुसार इनका अभिप्रेत अर्थ प्रतीत होता है कि भोजन के समय प्रेम के कारण ही न कि अतिथि भाव से (क्योंकि इन मित्र आदिका अतिथित्व प्रतिषिद्ध है) आये हुए मित्र-सहाध्यायी प्रभृति को पूर्णतृप्ति के लिए यथाशक्ति पुनः पाक कर के भार्या के साथ होकर सादर भोजन करावे । यदि लज्जा आदि वश मित्रविशेष आदि के समक्ष उपस्थित होने में भार्या असमर्थता व्यक्त करे तो अन्ततः उसकी सहमति ही ले ले । अन्यथा असहमति की स्थिति में वागर्थ के जैसे सम्पृक-अर्धनारीश्वर नटराजराज भगवान् भवानीपति के असफल सायंकालिक नृत्त के समान गैहिक किसी भी कार्य का सफल निष्पादन संभव नहीं हो सकता ।

अब विचार करें कि इन मित्र आदि को भोजन कब करावें ? तथा दम्पति में भी पूर्व भोजन किस का हो ? इन प्रश्नों के समाधान हेतु इन्ही ग्रन्थकार का अपरग्रन्थ छन्दोगाह्निक देखा जाय । यथा, ''याज्ञवल्क्य का वचन (आचाराध्याय १०८) है कि ''भोजन के समय पर आये हुए मित्र, सम्बन्धी (जिनसे कन्या ली हो या जिन्हें दी हो) तथा बान्धव (माता या पिता के सम्बन्धी या सम्बद्ध व्यक्ति) को भोजन करावें ।''

पुनः याज्ञवल्क्य का ही वचन (आचाराध्याय १०५) है कि "बालक (पिता के घर में रहने वाली) विवाहित पुत्री, वृद्ध, गर्भवती, रोगी, कन्या, अतिथि और सेवकों के भोजन कराने के बाद शेष भोजन पति-पत्नी ग्रहण करें।" यहाँ यह विशेषतः ज्ञातव्य है कि असामर्थ्य (अधिक भूखे होने) की स्थिति में बालक आदिका भोजन पहले हो जाना चाहिए। यदि वैसी स्थिति न हो तो "पहले अतिथि तथा गर्भवती, इसके बाद बालक, वृद्ध, गरीव तथा रोगी को ध्यान रख कर भोजन करा दें।" इस बौधायनवचन, अथवा- "गुरु, अतिथि एवं बालकों को सर्व प्रथम भोजन करा दें। इसके बाद इन्द्रिय संयत-मौनी (चुपचाप) और पवित्र हो कर गृहपति भोजन करे। इसके पश्चात् स्त्री (पत्नी प्रभृति) तथा शूद्र का भोजन हो यही सनातन धर्म है" इस यमवचन वचन के अनुसार भी अतिथि भोजन के बाद ही बालक का भोजन हो।

सारांश में अभ्यर्हित तथा भूखे व्यक्ति का भोजन अन्य लोगों के साथ-साथ (एकबारगी) संभव होने पर भी पहले ही हो जाना चाहिए। इतर व्यक्ति का तो साथ साथ भी (भोजन हो)। अतएव ब्रह्मपुराण का भी कहना है कि-"अपने-अपने विभव के अनुकूल विभिन्न भोजनपात्रों में - जो भूमिपर रखे गए हों-पुत्र, भृत्य और अनुजों के साथ मौन होकर गृहपति भोजन करे।"

उक्त छन्दोगाह्निक के विवेचन से सिद्ध होता है कि अतिथि, गुरु, या गुरु, अतिथि और बालक आदि के भोजन के बाद मित्र, सहाध्यायी, सम्बन्धी एवं बान्धवों को भोजन करा कर पुत्र, भृत्य तथा अनुज आदि के साथ या इनके बाद स्वयं गृह पति भोजन करें। यहाँ मनुवचन (३/११६) के "ब्राह्मणों तथा अपने भृत्यों (सेवकों) को भोजन करा देने पर पश्चात् बचे अन्न का भोजन दम्पती करे" इस कथनानुसार, तथा अभी-अभी पूर्व प्रदर्शित 'सम्भोज्यातिथि-भृत्यांश्च दम्पत्योः शेष भोजनम्।" अर्थात् अतिथि और भृत्यों को भोजन करा दम्पती शेषान्न का भोनज करे इस याज्ञवल्क्यवचन के अनुसार सर्वान्त में दम्पती का भोजन निश्चित होने पर भी इनमें भी

**स्त्री-शूद्रं तर्पयेत्पश्चादेष धर्मः सनातनः ॥**

इस यमवचन के आधार से भार्या आदि सामन्य स्त्रियों का भोजन गृहपति आदि सभी के अन्त में होना निश्चित (सिद्ध) हो जाता है। ऐसा ही सर्वत्र का दैशिक व्यवहार भी है। वचन में कहे गए शूद्र का भोजन के पहले भृत्य भोजन तो अन्य मनुवचन (३/११२) के आधार से दम्पति-भोजन के पहले भृत्य भोजन के समय ही निश्चित माना गया है। इत्यलम्।

[ मूलम् ]

**बौधायनः–**

सायंप्रातर्यदन्नं[१] स्यात्तेन[२] वैश्वदेवं[३] बलिमुपसंहृत्य ब्राह्मणक्षत्रिय-वैश्य-शूद्रान् अभ्यागतान्[४] यथाशक्त्या पूजयेत् । यदि बहूनां न शक्नुयादेकस्मै गुणवते दद्याद् । यो वा प्रथमागतः स्यात् ।

[ संस्कृत टीका ]

सायमिति । सायंप्रातः । यदन्नं स्यात् = वैश्वदेवकर्मार्थं भोजनार्थञ्च यत्सिद्धान्नं भवेत् । तेन- अन्नेन । वैश्वदेवं बलिम्-पूर्वव्याख्यातम् । अत्र 'यदन्नः' इति पाठं मत्वा ".यदन्नः स्यात् = यदन्नभुग्भवति तेनान्ने न" इति, विश्वदेवमिति पाठञ्च मत्वा "विश्वदेवम् = विश्वे-अनेके देवा यस्मिन् तं बलिमित्यर्थः" इति च वीरमित्रोदयः । उपसंहृत्य=समाप्य । ब्राह्मण-क्षत्रिय-वैश्य-शूद्राभ्यागतान् = अभ्यागत-रूपेण समागतान् ब्राह्मणादीन् । यथाशक्त्या । पूजयेत् = भोजयेत् । यदीति । अत्र "यदा बहूनामतिथीनां ब्राह्मणादीनां दातुं न शक्नुयात् तदा एकस्मै तु गुणवते दद्यात् । युगपदागमने गुणवते दानं, क्रमागमने तु प्रथमागतायेति व्यवस्थितो विकल्पः" इत्यादि वीरमित्रोदयः । उभयोऽपि वीरमित्रोदयो नित्यकृत्यार्णवोद्धृत-कल्पतरु-ग्रन्थानुसारी बोध्यः ।

[ हिन्दी टीका ]

सायं तथा प्रातः समय में वैश्वदेव कर्म तथा भोजन के लिए बनाये गए सिद्धान्न वैश्वदेव बलि समाप्त कर अभ्यागत रूप से आये हुए ब्राह्मण, क्षत्रिय, वैश्व तथा शूद्र को यथाशक्ति भोजन करा दें । (उत्कृष्ट जाति वालों के घर में निकृष्ट जाति वाले अतिथि नहीं होते यह तो पहले कहा जा चुका है) ।

यदि आगत ब्राह्मण आदि बहुत व्यक्तियों को भोजन देने की शक्ति न हो तो एक ही समय में आये हुए इन में गुणवान् एक को दें । क्रम से आये हुए हों तो प्रथमागत को भोजन दें । (अन्यों को यथाविभव सम्मान कर दें) ।

---

पा० (१) न्नः । (२) तेनान्नेन । (अ) तेनैवं । (३) वि । (४) नागतान् = ह० पु० ।

[ मूलम् ]

गौतमः–

''ऋत्विगाचार्य-श्वशुर-पितृव्य-मातुलानामुपस्थाने मधुपर्कः ॥१॥ संवत्सरे पुनः ।२। यज्ञविवाहयोरर्वाक् ॥३॥ रा[१]ज्ञश्च श्रोत्रियस्य[२] ॥४॥ अश्रोत्रियस्यासनोदके ॥५॥ श्रोत्रियस्य तथा, पाद्य[३]मर्घमन्न-विशेषांश्च प्रकारयेत् ॥६ ॥ नित्यं वा सत्कार[४]-विशिष्टम् ॥७॥ मध्यतोऽन्नदानमविद्ये[५] साधुवृत्ते[६] ॥ ८॥ विपरीते तु[७] तृणोदकभूमिस्वागतमन्ततः पूजाऽनत्यासश्च[८] ॥ ९ ॥

श्रोत्रियः = 'वेदानामेकैकां शाखामधीत्य श्रोत्रियो भवती' त्यापस्तम्बोक्तः । नित्यम् = यादृशमहरहर्गृहे पच्यते । मध्यतः = मध्यविधादरेण । अविद्ये[९]= मूर्खे । विपरीते = असाधुवृत्ते । अनत्यासः = अनतिक्रमः ॥

[ संस्कृत टीका ]

ऋत्विगिति । ऋत्विक् = यज्ञे येन यस्यार्त्विज्यं कृतम्–याजक इति यावत् । ('ऋत्विजो याजकाश्च ते' इत्यमरः) । आचार्यः = ''उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः'' (२।१४०) इत्यादिना मनूक्तलक्षणः । श्वशुरः = पतिपत्न्योः पिता । पितृत्यः = पितुर्भ्राता । मातुलः = मातुर्भ्राता । यथा चामरोऽपि ( २ । ६ । ३१ ) पतिपत्न्योः प्रसूः श्वश्रूः श्वशुरस्तु पिता तयोः । पितुर्भ्राता पितृव्यः स्यान्मातुर्भ्राता तु मातुलः इति । उपस्थाने = गृहागमने सति । मधुपर्कः =''गृह्योक्तेन मधुपर्काख्येन कर्मणा पूजनमि''ति मनुवचन ( ३/११९ ) व्याख्यायां कुल्लूकभट्टः ॥१॥

संवत्सर इति । ''संवत्सरे प्रथमागमनापेक्षया अतीते सतीति शेषः । पुनःशब्दः मधुपर्कपूजनाभ्यासविधानार्थः'' इति वीरमित्रोदयः । एवञ्च

---

पा० ( १ ) मनोः ( ३।१२० ) मन्वर्थमुक्तावल्ली -व्याख्यायां गौतमवचने ''राज्ञः श्रोत्रियस्य च'' इति । नित्यकृत्यार्णवे तु राज्ञश्च श्रोत्रियस्यासनोदकं इतिपर्यन्तं पाठः । ( २ ) 'तु' इत्यधिकः पाठः । ( ३ ) र्घ्यं । ( ४ ) संस्कार । ( ५ ) वैधे । ( ६ ) त्तौ । ( ६ ) पु । ( ८ ) श ( ९ ) वैधे ।

पूजितास्ते यदि संवत्सरे अतीते सति पुनरागच्छेयुस्तदा पुनरपि मधुपर्केण पूज्याः। न ततः पूर्वमपीति भावः ।।२।।

यज्ञेति । अर्वाक् = पश्चात् । अवरेत्वर्वाक् इत्यमरः (३/४/१६)। "यज्ञविवाहयोरर्वाक् = अपि संवत्सरात् । पुनरित्यत्रापि सम्बध्यते" इति वीरमित्रोदयः ।। ३ ।।

राज्ञश्चेति । राज्ञः=राज्याभिषिक्तस्य क्षत्रियस्य । श्रोत्रियस्य = वेदानामेकैकशाखाध्यायिनश्च । मधुपर्केण पूजा कार्येत्यर्थः । अतएव मनोः (३।१२०) वचन व्याख्यायां कुल्लूकभट्टोपि– "राजस्नातकयोः पूजासङ्कोचार्थमाह-राजेति । राजस्नातकौ संवत्सरादूर्ध्वमपि यज्ञकर्मण्येव प्राप्तौ मधुपर्केण पूजनीयौ, न तु यज्ञव्यतिरेकेण । जामात्रादयस्तु संवत्सरादूर्ध्वं यज्ञं विनापि मधुपर्कार्हाः । । संवत्सरमध्ये तु सर्वेषां यज्ञविवाहयोरेव मधुपर्कः । तदाह गौतमः(५।२५-२७) 'ऋत्विगाचार्यश्वशुरपितृव्यमातुलादीनामुपस्थाने मधुपर्कः । संवत्सरे पुनर्यज्ञविवाहयोरर्वाक् राज्ञः श्रोत्रियस्य च' इति ।।४।।

अश्रोत्रियस्येति । अत्र "अश्रोत्रियस्य पुनः राज्ञः, आसनोदके एव न तु मधुपर्कः । तथा च मनुः–

राजर्त्विक्-स्नातक-गुरु-प्रिय-श्वशुर-मातुलान् ।
अर्चयेन्मधुपर्केण ततः संवत्सरात्पुनः ॥
राजा च श्रोत्रियश्चैव यज्ञकर्मण्युपस्थितौ [१]।
मधुपर्केण सम्पूज्यौ न त्वयज्ञ इति स्थितिः ॥(३/११९-२०)"

इति वीरमित्रोदयः ।

अत्र पूर्वमनुवचनमुपक्रम्य कुल्लूकभट्टः–"परिसंवत्सरादिति–संवत्सरं वर्जयित्वा तदूर्ध्वं गृहागतान् पुनर्मधुपर्केण पूजयेत् । 'पञ्चम्यपाङ्परिभिः' (पा० २/३/१०) इति सूत्रेण वर्जनार्थ-परियोगेनेयं पञ्चमी ।......

पाठा. (१) उपस्थितं ।

मेधातिथिस्तु–'परिसंवत्सरान्' इति पठित्वा ''परिगतो-निष्क्रान्तः, संवत्सरो येषां तान् पूजयेदिति व्याख्यातवान् । उभयत्रापि पाठे संवत्सरमध्यागमने न मधुपर्कार्हता'' इति व्याख्यातवान् ।। ५ ।।

श्रोत्रियस्येति । पाठान्तररूपेण पठितोऽपि तुशब्दो न ब्राह्मणं व्यावर्तयति । श्रोत्रियस्य–ब्राह्मणस्यातिथेः । पाद्यम् = पादोदकम् । अर्घम् = फलोपहारताम्बूलादि । अन्नविशेषाः = पायसापूपादयः । तांश्च, प्रकारयेत् = प्रकर्षेण कारयेत्समर्थः ।।६।।

असामर्थ्ये आह–नित्यमिति । वा = अथवा-असामर्थ्ये । नित्यम् = यादृशमन्नाद्यहरहः गृहे पच्यते (तदेव) सत्कार-विशिष्टम् = सादरम् । (दद्यात्) । अत्र 'संस्कारविशिष्टमि' ति पाठमङ्गीकृत्य ''यदस्य गृहे नित्यं विद्यमानं तदेव मरिचजीरकादिंसंस्कारविशिष्टं साधयेदि''त्यस्य मिताक्षरावृत्तिकारः हरिहरः ।।७।।

यस्त्वतिथिः अविद्यः=विद्यारहितः मूर्खोऽपीति यावत् । साधुवृत्तः = साध्वाचारः । तस्मिन्नुपस्थिते । मध्यतः = मध्यविधादरेण । हरदत्तरीत्या तु मध्यमेन संस्कारेणेत्यर्थः । अन्नदानं कर्तव्यमिति शेषः ।। ८ ।।

विपरीते असाधुवृत्तेऽपि विद्यायुक्ते इहाऽस्यतामिति भूमिम् । तृणम् = आसनम् । उदकम् = पादप्रक्षालनाद्यर्थं जलञ्च दद्यात् । स्वागतम् = सम्भाषणम् । अन्ततः = अन्ते । पूजाऽनत्यासः = पूजायाम्–सत्कारे, अनत्यासः–अनतिक्रमः–अतिक्रमणाभाव इति यावत् । आवश्यकः । एवञ्च विद्यारहितस्य साधुवृत्तस्यातिथेः मध्यमविधादर इव असाधुवृत्तस्य विद्यायुक्तस्यातिथेरयमादरः संमुचित इति भावः ।

मिताक्षरावृत्तिकारस्तु–'अनत्याश' इति पाठं मत्वा ''अत्याशः=पायसापूपादि-विशिष्टक्रमस्तदन्यो मध्यमरीत्या कर्तव्यः । आशोऽशनमिति यावदि'' त्याह । परं नैतयोरर्थयोः मार्मिको भेदः ।।९।।

## [ हिन्दी टीका ]

ऋत्विक् (यज्ञ करने वाला), आचार्य (शिष्य को यज्ञोपवीत संस्कार कर वेद, उपनिषद् तथा यज्ञविद्या का उपदेश देने वाला, श्वशुर, चाचा तथा मामा को घर पर उपस्थित होने पर गृह्योक्त मधुपर्क नाम के कर्म से पूजन (सत्कार) करे । ।।१।।

प्रथम आने की अपेक्षा एक वर्ष के बाद यदि पुनः आये हों तो पुनः उक्त मधुपर्क कर्म से ये पूजनीय हैं । किन्तु इसके पूर्व नहीं ।। २ ।।

राजा एवं श्रोत्रिय (वेदशाखाध्यायी-विद्या तथा तपसे युक्त स्नातक) के लिए पूजा में संकोच के निमित्त कहा जा रहा है कि राज्याभिषिक्त क्षत्रिय राजा तथा श्रोत्रिय एक वर्ष के बाद भी विवाह या यज्ञकर्म में ही आये हुए हों तो ये मधुपर्क से पूजनीय हैं । न कि इन से अतिरिक्त समय में भी । किन्तु शेष चाचा मामा आदि सभी वर्ष के बाद विवाह एवं यज्ञ के विना भी मधुपर्क के योग्य हैं । वैसे एक वर्ष के मध्य भी यज्ञ एवं निवाह कर्म में ही आये हुए वचनोक्त ये सभी मधुपर्क के योग्य होते हैं । (यह प्रसंग मनु (३।११९-२०) के दोनों वचनों से भी ज्ञात किया जा सकता है) ।।३-४।।

अतिथिरूप में आये हुए वेदशाखा के अनपढ़ राजा को आसन और जल ही मिलना चाहिए, न कि मधुपर्क भी ।।५।।

श्रोत्रिय ब्राह्मण अतिथि को अने पर पैर धोने के लिए जल, फल का उपहार और पान आदि तथा खीर पूआ आदि से समर्थ व्यक्ति सत्कार करे ।।६।।

ऐंसे स्वागत करने में असमर्थ गृहस्थ प्रतिदिन अपने घर में जैसा खाना बनता हो उससे या उसे ही जीर, मरीच आदि से संस्कृत बनाकर उससे स्वागत करे ।।७।।

जो अतिथि मूर्ख (विद्याहीन) होकर भी क्रियावान् हो उसे मध्यमश्रेणी के आदर सत्कार के साथ अन्न दें ।।८।।

इसी तरह जो अतिथि क्रियावान् न होकर विद्यायुक्त (विद्वान्) हो उसे ''यहाँ पधारिये'' ऐसा संकेत कर भूमि, बैठने का आसन तथा पैर धोने आदि के निमित्त जल दें । अनन्तर खीर पूये आदि के बजाय मध्यश्रेणी के अन्न से सम्भाषण पूर्वक स्वागत करे ।

सारांश में क्रियावान् की अपेक्षा विद्वान् की ओर इस स्मृति (धर्मसूत्रग्रन्थ) का कुछ अधिक झुकाव प्रतीत होता है ।।९।।

[ मूलम् ]

आपस्तम्बः–

ब्राह्मणायानधीयानायासनमुदकमन्नमिति देयम् । न प्रत्युपतिष्ठेत् । अभिवादनायोपतिष्ठेदभिवाद्यश्चेत्[1] । राजन्यवैश्यौ च[2] । शूद्रमभ्यागतं कर्मणि[3] नियुञ्जीत[4] अथास्मै दद्यात् ॥''

राजन्यवैश्यौ चेत्यत्र न प्रत्युपतिष्ठेदित्यनुषङ्गः । तथा,

सर्वान् वैश्वदेवभागिनः कुर्वीत चाण्डालादिभ्यो नानर्हद्भ्यो दद्यादित्येके ॥

'नानर्हद्भ्य' इति निषेधात्तेभ्यो दानमनावश्यकम् ।

अपि कीटपतङ्गानां शुनां चाण्डाल-योनिनाम् ।
दत्त्वान्नं लोकमाप्नोति प्राजापत्यं शतं[5] समाः ॥

[इति ] नन्दिपुराणात् फलार्थत्वस्यैवावगमात् ।

[ संस्कृत टीका ]

ब्राह्मणेति । अनधीयमानाय=अध्ययनमकुर्वते । ब्राह्मणायातिथये । उपवेशनार्थमासनं, पाद्यार्घ्यार्थं पानीयं, भोजनार्थमन्नञ्च । इति = एतावदेव । देयम् । न प्रत्युतिष्ठेत् = आगमनपरावर्त्तनसमये सत्कारार्थं स्वासनात् तं प्रति नोत्तिष्ठेत् । (किन्तु) चेत् = यदि । अभिवाद्यः = वयोबाहुल्यादिना प्रणम्यः स्यात् । (तदा) अभिवादनाय= प्रणामाय । उपतिष्ठेत् = उत्तिष्ठेत् । राजन्यवैश्यौ च प्रति न उपतिष्ठेदिति । अनुषङ्गः = सम्बन्धः । परं शेषमातिथ्यमन्नदानन्तु कुर्यादेव । अभ्यागतं शूद्रम् । कर्मणि = तद्योग्य-कर्मसु

---

पा० (१) पाठोऽयं छन्दोगाह्निकतोऽप्यनुसन्धाय तदनुसारं स्थापितः । प्रकाशित पुस्तकं स्खलित- पाठदर्शनात् । परं वीरमित्रोदये त्वयं पाठो व्याख्या च–''ब्राह्मणायाधीयानायासनमुदकमन्नमिति देयम्, प्रत्युत्तिष्ठेदभिवाद्यश्च'' इति । (२) तु । (३) सु । (४) ञ्ज्यात् । (५) समाःशतम् । इति शब्दोऽन्येषामुपचाराणां संग्रहार्थः । अभिवाद्यश्चेत् = अभिवादनयोग्यः । श्रोत्रियश्चेत्तदा प्रत्युत्तिष्ठेदिति योजना'' इति ॥

नियुञ्ज्यात् = प्रवर्तयेत् । अथ = अनन्तरम् । अस्मै = शूद्राय । दद्यात्–अन्नादिकमितिशेषः ।

यथा च शङ्खलिखितावपि–"नाब्राह्मणोऽतिथिर्ब्राह्मणस्य, श्रोत्रियाय गुणवते आतिथ्यं राजन्यवैश्याभ्यां मित्रवत्, शूद्रायानृशंस्यार्थमातिथ्यं यथावत्"इति ।

"नाब्राह्मणोऽतिथिर्ब्राह्मणस्य=प्रणामादिना न सम्भाष्यः । अपितु श्रोत्रियाय तथाविधमातिथ्यं कार्यमन्येषां मित्रवदन्नमात्रम् । आनृशंस्यार्थम् = दयाजन्य-फलार्थमि' ति कल्पतरुरत्नाकराविति नित्यकृत्यार्णवः ।" आतिथ्यं कर्त्तव्यमिति शेषः । मित्रवत् = अन्नमात्रं देयमित्यर्थः । आनृशंस्यार्थम् = अनुकूल-तार्थमिति वीरमित्रोदयः ।

अन्यमतमुच्यते सर्वानित्यादीत्यादि । सर्वान् = प्राणिनः । वैश्वदेव-भागिनः = वैश्वदेवकर्मसमाप्त्युत्तरं शेषसिद्धान्नभागिनः । कुर्वीत = कुर्यात् । किन्तु अनर्हद्भ्यः = प्रतिष्ठापूर्णव्यवहारा योग्येभ्यः । चाण्डालादिभ्यः । न दद्यात् । इत्येके = इति केचनाचार्याः वदन्तीत्यर्थः ।

नानर्हद्भ्य इती । निषेधात् = निषेधबोधक-वचनात् । तेभ्यः = चाण्डालादिभ्यः । दानमनावश्यकम् । एतेन नायं नित्यविधिरपितु काम्य-विधिरेव । अनुपदमुच्यमाननन्दिपुराण वचनेन फलार्थत्वस्यैवावगमात्–एभ्यो विधीयमादानस्य फलार्थत्वेन बोधनात् । तद् वचनञ्च–अपि कीटेत्यादि । अपिश्चार्थे कीटपतङ्गानाम् । शुनाम् = कुक्कुराणाम् । चाण्डालयोनिनाम् = चाण्डालानां चाण्डालोत्पन्नवर्णसंकराणाञ्च । अन्नं दत्त्वा । शतं समाः = शतवर्षपर्यन्तम् । प्राजापत्यं लोकम् = ब्रह्मलोकम् आप्नोति ।

[ हिन्दी टीका ]

अनपढ़ ब्राह्मण अतिथि को आसन, अन्न तथा जल तो दें किन्तु आने या जाने के समय सत्कारार्थ उठकर खड़े न हों । यदि वह अतिथि सम्बन्धवश या अधिक आयु होने आदि कारणवश प्रणम्य हो तो प्रणाम करने के लिए उठें। इसी तरह अभ्यागत क्षत्रिय एवं वैश्व के लिए भी न उठें । किन्तु अभ्यागत शूद्र को उसके योग्य कर्म में लगावें; अनन्तर भोजन दें ।

यहीं आपस्तम्ब ग्रन्थानुसार किसी अन्य आचार्य का मत है कि "वैश्वदेव कर्म

करने के बाद बचे हुए सिद्धान्न के भागी सभी प्राणी हैं । किन्तु प्रतिष्ठापूर्णव्यवहार के अयोग्य चाण्डाल आदि को अन्न नहीं दें ।''

यहाँ ग्रन्थकारके विवेचनानुसार इस निषेधका तात्पर्य है कि इन्हें अन्न देना आवश्यक नहीं है । क्योंकि नन्दि-पुराण के ''कीट, पतङ्ग, कुक्कुर, चाण्डाल तथा चाण्डाल से उत्पन्न अन्य वर्णसंकरोंको अन्न देने से सौ वर्ष तक ब्रह्म लोक पाता है''

इस कथन के अनुसार इन्हें दिया गया दान फलनिमित्तक (फलार्थ) समझा जाता है । सारांश में नित्यविधि के रूप में दान देना अनावश्यक होने पर भी ब्रह्मलोक की चिरकाल प्राप्ति की कामनावालों के लिए काम्यविधि रूप से अन्नदान देना सर्वथा उचित है । केवल कथन वैचित्र्य है ।

[ मूलम् ]

जाबालिः–

**अस्नाताशी मलं भुङ्क्ते अजपी पूय-शोणितम् ।**
**अहुत्वा तु कृमिं भुङ्क्ते अदत्त्वा विड्विभोजनम्[1] ॥ ( १ )**

[ संस्कृत टीका ]

अस्नातेति । अस्नाताशी= स्नानमकृत्वैव भोक्ता । मलम् =

**वसा, शुक्रमसृङ्, मज्जा, मूत्रं विट्, कर्णविण्णखाः ।**
**श्लेष्माऽश्रुदूषिकास्वेदा द्वादशैते नृणां मलाः॥**

इति मनूक्तं द्वादशविधं मलम् । स्नानापनेयमलानां विद्यमानत्वात् । अजपी = जपमकृत्वैव भोक्ता । पूयशोणितम्=पूयशोणितमिश्रितमन्नमेव भुङ्क्ते । आन्तरिक-शुद्ध्यकरणात् । अहुत्वा = हवनमविधायैव ( भोक्ता) कृमिं भुङ्क्ते । वाह्यवातावरणे शुद्ध्यजननात् । अदत्त्वा देवपितृब्राह्मणातिथ्यादिभ्यो न दत्त्वा । (भोक्ता) विड्-विभोजनम् = विष्ठायाः विशेषेण भोजनं करोतीति शेषः । विष-भोजनमिति पाठे तु– विषस्य भक्षणमित्यर्थः । निन्दात्मक फलश्रुतावाचार-चिन्तामण्युद्धृतो दक्षोऽपि यथा–

**अस्नात्वा चाप्यहुत्वा च अदत्त्वा ये च भुञ्जते ।**
**देवादीनामृणी भूत्वा निरयन्ते व्रजन्त्यधः ॥ इति ।**

---

पा० ( १ ) विषभोजनम् ।

[ हिन्दी टीका ]

विना स्नान का खाने वाला (आचमन निमित्त प्रकरण में मनूक्त बारहो प्रकार का) मल (क्योंकि स्नान के द्वारा दूर होने वाले ये मल उसके शरीर में ही सटे हुए रहते हैं), बिना जप के खाने वाला पीप और खून से सना हुआ अन्न (क्योंकि उसकी आन्तरिक शुद्धि तो हो पाई नहीं है), बिना हवन के खाने वाला कृमि-कीड़ा (क्योंकि उसका वाह्यवातावरण अशुद्ध ही रह गया है) तथा बिना देवता अतिथि आदि को दिये खानेवाला विष्ठा या विष ही (क्योंकि केवल अपना उदरभरण तो कुत्ते-कौवे भी कर लेते हैं ) खाता है । इसी हेतु दक्षवचनानुसार भी ऊपर से ज्ञातव्य है कि-''बिना स्नान, बिना हवन, तथा बिना कुछ दिये हुए भोक्ता देव आदि का कर्जदार होकर अन्त में नरक चला जाता है ।''

[ मूलम् ]

यमः-

अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात् ।
इन्द्रियप्रीतिजमकं[1] वृथा पाकं विवर्जयेत् ॥

[ संस्कृत टीका ]

अघमिति । आतिथ्यमकुर्वतो निन्दामाह यमः - अघमित्यादि । यः = भोक्ता । आत्मकारणात् पचति = आत्मार्थमेव, न देवाद्यर्थमपि पक्त्वा भुङ्क्ते । सः केवलमघम् = पापहेतुत्वात्पापमेव नत्वन्नमपि भुङ्क्ते इति भावः । नथा च श्रुतिः ''केवलाघो भवति केवलादी'' इति । इन्द्रियप्रीतिजनकम् = रसनेन्द्रियसुख-स्वाद-कारकम् । वृथापाकम् = अपुण्यफलकं पक्वान्नम् । विवर्जयेत् = परित्यजेत् । अदत्तभक्षणे दोष उक्तः वीरमित्रोदयोद्धृत-मार्कण्डेयपुराणे-

मांसमन्नं तथा शाकं गृहे यच्चोपपादितम् ।
न वै स्वयं तदश्नीयादतिथिं येन नार्चयेत् ॥ इति

एवमेव मनुरपि (३।१०६) ''उत्कृष्टं वस्त्वतिथये देय'' मित्याह ।

---

पा० (१) जननं ।

[ हिन्दी टीका ]

जो देवता, अतिथि आदि को न देकर केवल अपने ही निमित्त अन्न पका कर खाता है वह पाप के कारणभूत होने के कारण केवल पाप ही खाता है। अत: केवल अपने रसनेन्द्रिय (जिह्वा) के सुख-स्वाद निमित्त अपुण्यकारी उस वृथा पाक का परित्याग कर दे। बिना दिये हुए वस्तु के खाने में वीरमित्रोदय में उद्धृत मार्कण्डेयपुराण तथा मनुका भी कहना है–(१) मांस, अन्न या शाक जो कुछ भी घर में पकाया गया हो उसे अतिथि आदि को बिना दिये स्वयं न खाये। (२) स्वयं वह उत्कृष्ट वस्तु न खायें जिसे अतिथि आदि को न खिला दें। आदि।

[ मूलम् ]

शङ्खलिखितौ–

न भोजनार्थी पाकशालां प्रविशेत्।

[ संस्कृत टीका ]

नेति। भोजनार्थी=आत्मार्थमेव पाचितभक्ष्यस्य भोजनार्थं भोक्ता। पाकशालाम् = महानसम्-भोजनस्थानमिति यावत्। न प्रविशेत् = न गच्छेत्। यथा चाह हारीतोऽपि–

आत्मार्थं भोजनं यस्य रत्यर्थं यस्य मैथुनम्।
वृत्त्यर्थं यस्य चाधीतिर्निष्फलं तस्य जीवनम्॥ इति॥

[ हिन्दी टीका ]

अपने लिए ही पकाए गए भक्ष्य पदार्थ के भोजन निमित्त गृहपति को भोजनशाला में नहीं जाना चाहिए। ऊपर से हारीत के कथनानुसार ज्ञातव्य है कि अपनी उदर पूर्त्ति के लिए ही जिसने भोजन बनवाया हो या रति (आनन्द) के लिए ही मैथुन किया हो या जिसने अपनी जीविका चलाने के लिए ही अध्ययन किया हो उसका जीवन निष्फल है।

[ मूलम् ]

नन्दिपुराणे–

यतेत ब्राह्मण[१]पूर्वं भोक्तुमन्नं सदा गृही।

---

पा० (१) णं।

[संस्कृत टीका]

यतेतेति । गृही = गृहस्थः । सदा =प्रतिदिनम् । अन्नम् । ब्राह्मणपूर्वम् = ब्राह्मणः पूर्वः =पूर्ववर्त्ती यस्मिन् कर्मणि तद् यथा स्यात् तथा, ब्राह्मणभोजन पूर्वकमित्यर्थः । भोक्तुं यतेत ।

[हिन्दी टीका]

गृहस्थ प्रतिदिन ब्राह्मण भोजन के बाद स्वयं भोजन करे ।

[मूलम्]

देवलः—

न[२] घृतं भोजयेद् विप्रं स्वगृहे सति सर्पिषि ।
परत्र निरयं घोरं गृहस्थः प्रतिपद्यते ॥ १ ॥
मिष्ट[३] मन्नं स्वयं भुक्त्वा पश्चात्कदशनं लघु[४] ।
ब्राह्मणं[५]भोजये[६] न्मूर्खो[६] निरये चिरमाविशेत्[७] ॥२॥

[संस्कृत टीका]

नेति । गृहस्थः = गृही । स्वगृहे = निजगेहे । सर्पिषि = घृते सति । विप्रम् = ब्राह्मणम् । घृतं न भोजयेत् । (सः) परत्र=परलोके । घोरं निरयम् = दुस्सहं नरकम् । प्रतिपद्यते = प्राप्नोति ॥१॥ स्वयम् । मिष्टमन्नम् = मधुरं भक्ष्यम् । भुक्त्वा । पश्चात् । ब्राह्मणम् । कदशनम् = कुत्सितं भोजनम् । लघु = तदप्यल्पपरिमाणमेव । भोजयत् । (सः) मूर्खः विवेकहीनः । निरये = नरके । चिरम् = बहुकालपर्यन्तम् । आविशेत् = निवसेत् ॥२॥

[टिप्पणी]

ब्राह्मणस्य सर्वश्रेष्ठत्वमाह शातातपः—

जन्मनैव महाभागो ब्राह्मणो नाम जायते ।
नमस्यः सर्वभूतानां वर्णश्रेष्ठः पिता गुरुः ॥

(२) 'अघृतं भोजयेद् यस्तु' इति नित्यकृत्यार्णव-पाठः । अघृतं भोजयन् विप्रम्' इति वीरमित्रोदयपाठ एवमग्रेऽपि । (३) मृ । (४) नरः । (५) ब्राह्मणान् (६) ये (७) मावसेत् ।

तथा,

देवता द्रव्यंभूतेषु क्वचित् काश्चित् प्रतिष्ठिताः ।
ब्राह्मणो देवताः सर्वा अतस्तं परिपूजयेत् ॥ इति ॥

द्रव्यभूतेषु = ताम्रादि-द्रव्यप्रभवेषु । क्वचित् =केषुचित्स्थानेषु । काश्चि-द्देवताः प्रतिष्ठिता इति सम्बन्धः ।

एकपङ्क्तिस्थितानां विषमदानेऽपि दोषमाह वसिष्ठः

यद्येकपङ्क्तौ विषमं ददाति स्नेहाद् भयाद्वा यदि वाऽर्थहेतो : ।
वेदेषु दृष्टामृषिभिश्च गीतां तां ब्रह्महत्यां मुनयो वदन्ति ॥ इति ॥

आसनदाने भेदमाह-हारीतः-

विद्यातपोऽधिकानान्तु प्रथमासनमुच्यते ।
पङ्क्तौ सहस्थितानान्तु भोजनादि समं स्मृतम् ॥ इति ।

[ हिन्दी टिप्पणी ]

ब्राह्मण की सर्वश्रेष्ठता शातातप ने यों कही है :-

"जन्म से ही ब्राह्मण ऐश्वर्यशाली होते हुए सभी प्राणियों का प्रणम्य होता है । वह सभी वर्णो में श्रेष्ठ है तथा पिता (आधिदैविक तापों से आन्तरिक रक्षक) है और गुरु है । तथा, किसी स्थान विशेष में ताँवा आदि की मूर्त्तियों में देवता प्रतिष्ठित होती हैं किन्तु ब्राह्मण सर्वदेवस्वरूप हैं अतः इनका सम्मान करें ।" इसी तरह वसिष्ठ ने एक पङ्क्ति में बैठे व्यक्तियों के प्रति विषम रूप से परोसने पर दोष कहा है- स्नेह भय या अर्थ प्रलोभन से एक पङ्क्ति में विषम रूप से परोसता है तो उसे वेदों से ज्ञात तथा ऋषियों से कथित ब्रह्महत्या ही मुनिलोग कहते हैं ।

आसनभेद प्रसंगपर हारीतका कहना है कि विद्या एवं तपस्या से श्रेष्ठ व्यक्तियों को प्रथमासन दें किन्तु एक पङ्क्ति में बैठे हुए सभी की भोजन सामग्री समान ही हो ।

[ हिन्दी टीका ]

गृहस्थ अपने घर में घृत रख कर भी भोजन के समय ब्राह्मण को नहीं खिलाता है तो वह मरने के बाद घोर नरक पाता है । ॥१॥इसी तरह जो गृहस्थ पहले स्वयं मीठा (स्वादिष्ट) अन्न खा लेता है, बांद में कुत्सित भोजन वह भी अल्प मात्रा में ही ब्राह्मण (अतिथि) को देता है वह मूर्ख बहुत समय तक नरक में निवास करता है ॥२॥

[मूलम्]

वसिष्ठः–

महयेच्च यथाशक्ति सर्वभूतानि सर्वदा ।
गृहस्थ एव यजते गृहस्थस्तप्यते तपः ।
चतुर्णामाश्रमाणान्तु गृहस्थस्तु विशिष्यते ॥

महयेत् = पूजयेत् ।

[संस्कृत टीका]

महयेच्चेति । गृहस्थः । यथाशक्ति = शक्त्यनुसारम् । सर्वदा । सर्वभूतानि = सर्वप्राणिनः । महयेत् = अन्नादि दानेन पूजयेत् । वस्तुतः गृहस्थ एव यजते = देवान् पूजयति । उदाहरणार्थमतिथिभोजनेऽपि–

हिरण्यगर्भबुद्ध्या तं मन्येताभ्यागतं गृही ।
धाता, प्रजापतिः, शुक्रो, वह्निर्वसुगणो यमः ।
प्रविश्यातिथिमेते वै भुञ्जतेऽन्नं नरेश्वर ॥

इति विष्णुपुराणात् । यज् धातोः देवपूजा-सङ्गतिकरण-दानार्थकत्वेन ददाति चेत्यर्थः । अर्थादन्नादिना जीवनदानेन सर्वान् प्राणभृतः पोषयन्तीति भावः । यथाऽऽह वसिष्ठोऽपि–

यथा नदी नदाः सर्वे सागरे यान्ति संस्थितिम् ।
एवमाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम् ॥

यथा मातरमाश्रित्य सर्वे जीवन्ति जन्तवः ।
एवं गृहस्थमाश्रित्य सर्वे जीवन्ति जन्तवः ॥ इति ।

गृहस्थः । तप्यते तपः = तपः अर्जयति-प्राजापत्य-चान्द्रायणादि-कृच्छ्राद्यात्मकं तपः सम्पादयती त्यर्थ'' इति सिद्धान्तकौमुदीव्याख्या बालमनोरमा । ''तपस्तपः कर्मकस्यैव'' (पा० सू० ३।१।८८) इति सूत्रेण कर्तुः कर्मवद्भावः ।

चतुर्णामिति । चतुर्णामाश्रमाणान्तु = ब्रह्मचर्य-वानप्रस्थगृहस्थ-संन्यासाश्रमाणां मध्ये तु । तु = निश्चयेन । गृहस्थः = गृहस्थाश्रमः । विशिष्यते = अन्नादिदानद्वारा अतिशय्य वर्तते ।

तथा चान्नदानस्य स्वर्गादि-फलमाह व्यासः–

ग्रासमप्येकमन्नस्य यो ददाति दिने दिने ।
स्वर्गलोकमवाप्नोति नरकं न च पश्यति ॥
द्वाविमौ पुरुषौ लोके सूर्यस्योपरि तिष्ठतः ।
अन्नप्रदाता दुर्भिक्षे सुभिक्षे वस्त्र-हेमदः ॥
ब्राह्मणेष्वक्षयं दानमन्नं शूद्रे महाफलम् ॥ इति

गृहस्थाश्रमस्य श्रेष्ठत्वे बृहस्पतिरपि यथा–

आश्रमाणां समुत्पत्तिर्वर्धनं पालनं तथा ।
गृहस्थाज्जायते सम्यक् तस्मादभ्यधिकः स्मृतः ॥ इति ।

मनुरपि यथा (३। ७८-७९)–

यस्मात् त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम् ।
गृहस्थेनैव धार्यन्ते तस्माज्ज्येष्ठाश्रमो गृही ॥ १॥
स संधार्यः प्रयत्नेन स्वर्गमक्षयमिच्छता ।
सुखं चेहेच्छता नित्यं योऽधार्यो दुर्बलेन्द्रियैः ॥ २॥ इति ।

[ हिन्दी टीका ]

गृहस्थ यथाशक्ति सभी प्राणियों का अन्नादिदान से संरक्षण प्रदान करे । सचमुच में गृहस्थ ही देवताओं का पूजन करता है । (उदाहरणार्थ-अतिथि भोजन में ही विष्णु पुराण का कहना है कि गृहस्थ आगत अतिथि का सम्मान ब्रह्मा की बुद्धि से करे क्यों कि धाता, प्रजापति, शुक्र, अग्नि, वसुगण तथा यम उस अतिथि में प्रविष्ट होकर अन्न भोजन करते हैं )।

यज् धातु का अर्थ देवपूजन, सङ्गतिकरण, तथा दान है । अतः दूसरा अर्थ यह भी होगा कि वह गृहस्थ ही दान भी करता है । अर्थात् अन्नादि से जीवन दान देता है । फलतः सभी प्राणियों का भरण पोषण करता है ।

(जैसा कि वसिष्ठ का भी कहना है:–जैसे सभी नदी, नद अपना आश्रय समुद्र में पाते हैं, उसी तरह चारो आश्रमवाले गृहस्थ के यहाँ आश्रय पाते हैं। अथवा जैसे माँ के आश्रय में सभी जीव जीवित होते हैं उसी तरह सकल प्राणी गृहस्थ के आश्रय से जीवित होते हैं।)

गृहस्थ ही तपस्या का अर्जन करता है। अर्थात् प्राजापत्य, चान्द्रायण आदि तथा कृच्छ आदि स्वरूप तप का उपार्जन करता है। वास्तव में ब्रह्मचर्य, वानप्रस्थ, गृहस्थ तथा संन्यास आश्रमों के बीच निश्चय ही गृहस्थाश्रम प्रधान है।

उदाहरण स्वरूप एक अन्न दान आदि के फलवर्णन में व्यास का कहना है कि प्रतिदिन जो अन्न के एक ग्रास (कौर-ग्रास) का भी दान करता है वह स्वर्गलोक पाता और नरक नहीं देखता।

दुर्भिक्ष के समय अन्नदाता तथा सुभिक्ष के समय वस्त्र एवं सुवर्णदाता (ये दोनों तरह के दाता) सूर्य के ऊपर स्थित हो जाते हैं अर्थात् मुक्त हो जाते हैं। ब्राह्मण को दिया गया दान अक्षय तथा शूद्र को दिया गया अन्नदान महान् फल को देनेवाला है। भोजनार्थ अन्नदान तो ब्राह्मण तथा शूद्र में समान होता है। अत: शूद्र को भी दयाभाव से ही क्यों न हो अन्न अवश्य दें।

इसी हेतु गृहस्थाश्रम को आश्रमप्रधान बताते हुए बृहस्पति का कहना है कि सभी आश्रमों का जन्म, अग्रिम वृद्धि तथा पालन गृहस्थाश्रम से ही अच्छी तरह होते हैं अत: यह आश्रम अन्य आश्रमों से ऊँचा है।

यहाँ मनु का भी कहना है कि अतिरिक्त तीनों ही आश्रमवाले जिन गृहस्थों से वेदार्थ का व्याख्यान तथा अन्न का दान पाकर सदैव उपकृत होते हैं॥ १॥

आगे स्वर्गसुख की इच्छा करने वाले तथा इस लोक में स्त्रीसम्भोग, स्वादिष्ट अन्न आदि के भोजन सुख को चाहने वाले लोग इस गृहस्थाश्रम की सुरक्षा प्रयत्नपूर्वक करें। असंयमित इन्द्रियवाले इस आश्रम की सुरक्षा में असमर्थ रहते हैं॥ २॥

## [ मूलम् ]

**पैठीनसि :–**

**चत्वारो ह्याश्रमाः। ब्रह्मचारी गृहस्थो वानप्रस्थो भिक्षुकश्चेति सर्वे गृहस्थमूलास्तदुपजीविनः। इति**

गृहस्थमूला:= गृहस्थस्यैव पूज्योपादानाधिकारित्वात्।[1]

पा० (१) धिकारात्।

[ संस्कृत टीका ]

चत्वार इति । गृहस्थमूला: = गृहस्थाश्रम: मूलम् = अन्नादिदानेन कारणं येषां ते तथा । तदुपजीविन: = उपजीवयन्तीत्युपजीविन: - गृहस्थाश्रमोपजीविता:, गृहस्थाश्रमानुचरा इति यावत् । सर्वेऽपि चत्वार: आश्रमा: सन्ति । यथाचाह मनुरपि (३।७७) -

यथा वायुं समाश्रित्य सर्वे जीवन्ति जन्तव: ।
तथा गृहस्थमाश्रित्य वर्तन्ते सर्वआश्रमा: ।। इति

विपन्नगृहस्थविशेषं प्रति सम्पन्नगृहस्थविशेषद्वारा साहाय्ययकरणादुक्तं सर्वे गृहस्थमूला इति । गृहस्थाश्रमस्य श्रेष्ठत्वे हेतुमाह ग्रन्थकार:-पूज्येति । गृहस्थस्यैव = गृहाश्रमिण एव । पूज्यम् = अन्नम् ।

अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलि: कथयेत्तत: ।
अस्माकं नित्यमस्त्वेतदिति भक्त्या स्तुवन्नमेत् ।।

इत्यादित्यपुराणवचनात् । "पूजयेदशनं नित्यमि" ति मनु(२।५४)वचनाच्च । तस्य, उपादानम् = संग्रहणम् । अथवा पूज्यानाम् = देवादीनां चतुराश्रमेषु सम्माननीयानामतिथीनाञ्च ।·उपादान-प्राप्ते:। अधिकारित्वात् = अधिकारात् ।

[ हिन्दी टीका ]

ब्रह्मचारी, गृहस्थ, वानप्रस्थ एवं सन्यासियों के लिए क्रमश: ब्रह्मचर्य, गृहस्थ, वानप्रस्थ तथा संन्यास ये आश्रम हैं । जिनमें गृहस्थाश्रम ही सभी आश्रमों का मूल (जड़) है क्योंकि जीवन सञ्चालन के प्रमुख साधन अन्न का संग्रह तथा देव, पितर, ऋषि: अतिथि आदि का पूजन सम्मान (पञ्च महायज्ञ आदि के द्वारा) करने का अधिकार है । सचमुच में देखा ज़ाय तो ये सभी इसी आश्रम से उपजीवित होते हैं ।

[ मूलम् ]

दक्ष:-

देवैश्चैव मनुष्यैश्च तिर्यग्भिश्चोपजीव्यते ।
गृहस्थ: प्रत्यहं यस्मात्तस्माज्ज्येष्ठो[1] गृहाश्रमी[2] ।।

पा० (१) श्रेष्ठो । (२) ज्येष्ठाश्रमो गृही । श्रेष्ठाश्रमोगृही। ह. पु. ।

[ संस्कृत टीका ]

देवैश्चैवेति । देवैः = सुरैः । मनुष्यैः = मानवैः । तिर्यग्भिः पशुपक्षिभिश्च । प्रत्यहम् = प्रतिदिनम् । गृहस्थः । यस्मात् उपजीव्यते = संरक्षकत्वेन मन्यते । तस्मात् । गृहाश्रमी = गृहस्थः । ज्येष्ठः = चतुराश्रमिषु श्रेष्ठः । यथा चोक्तं मनुनाऽपि । (३/८०-८१)–

ऋषयः पितरो देवा भूतान्यतिथयस्तथा ।
आशासते कुटुम्बिभ्यस्तेभ्यः कार्यं विजानता ॥१॥
स्वाध्यायेनार्चयेतर्षीन् होमैर्देवान् यथाविधि ।
पितॄन् श्राद्धैश्च नॄनन्नै र्भूतानि बलिकर्मणा ॥२॥ इति ।

दक्षेणाऽपि यथा–

त्रयाणामाश्रमाणाञ्च गृहस्थो योनिरुच्यते ।
सीदमानेन तेनैव सीदन्तीहैव ते त्रयः ॥ इति ।

[ हिन्दी टीका ]

देवता, मनुष्य और पशुपक्षी भी जिस हेतु गृहस्थ को सदैव संरक्षक के रूप में मानते हैं अंतः यह अन्य आश्रमियों की अपेक्षा श्रेष्ठ है । यह मूल वचन का अर्थ हुआ ।

ऊपर से मनुवचनानुसार ज्ञातव्य है कि ''ऋषि, पितर, देवता, भूत (प्राणी) तथा अतिथि गृहस्थों से तृप्ति की आशा (प्रार्थना) करते हैं । अतः शास्त्रज्ञ को इनके प्रति कर्तव्य का पालन करना चाहिए ॥१॥

पञ्चमहायज्ञ के अन्तर्गत स्वाध्याय आदि (इस का वर्णन पूर्ण रूप से पहले हो चुका है) से ऋषि, देवता, पितर, अतिथि तथा भूतों का शास्त्रविधि से पूजन करे ॥ २ ॥

दक्ष ने तो अन्यवचन से यहाँ तक कहा है कि अन्य तीनों आश्रमों का प्रधान कारण गृहस्थाश्रम ही है (ब्रह्मचर्याश्रम ब्रह्मचारी तथा वानप्रस्थ एवं संन्यासाश्रम में सदस्य कहाँ से आयेंगे ?) अतः यदि यह आश्रम सीदित हो जाय तो अन्य तीनों ही आश्रम सीदित होने लग जाते हैं ।

[ मूलम् ]

याज्ञवल्क्यः –

बाल-स्ववासिनी-वृद्ध-गर्भिण्यातुर-कन्यकाः ।
सम्भोज्यातिथिभृत्याँश्च दम्पत्योः शेषभोजनम् ॥

[ संस्कृत टीका ]

बालेति । बालाः = कुमाराः । स्ववासिन्यः = ''परिणीता पितृगृहे स्थिता स्ववासिनी'' इति याज्ञवल्क्यमिताक्षरा । सुवासिनी=ऊढा पितृगृहस्था'' इत्याचारचिन्तामणिः ।

''सुवासिनीः कुमारीश्च रोगिणो गर्भिणीः स्त्रियः''।
अतिथिभ्योऽग्र एवैता भोजयेदविचारयन् ॥
अदत्वा तु य एतेभ्यः पूर्वं भुङ्क्ते विचक्षणः ।
स भुञ्जानो न जानाति श्वगृध्रैर्जग्धिमात्मनः ॥

इति विष्णु-मनु ( ३।११४।११५ ) वचनव्याख्या, ''सुवासिन्यो नवोढाः स्त्रियः स्नुषा दुहितरश्च'' इति मन्वर्थमुक्तावली । सुवासिनी = ऊढा कन्या कुमाराः = बाला इति मनुवचनव्याख्यां 'दुहितरो भगिन्यश्च' ''भोजयेत् पूर्वमतिथि'' मित्यादि गौतमसूत्रस्य (१/५/२३) व्याख्यायां 'दुहितरो भगिन्यश्च' इतिमिताक्षरावृत्तिः । अत्रैव 'स्ववासिन्यो विवाहित-दुहितर' इति वीरमित्रोदयः । ''स्ववासिनी–पितृगृहोषिता कन्या –स्वे= आत्मीये पितृभ्रातृकुले, वसति-तच्छीलेति तदर्थः । सुवासिनीति तु वधूरुच्यते । सा हि स्वे गृहे च सुखेनान्यानधीना वसतीति नित्यकृत्यरत्नमाला । वृद्धाः=स्थविराः । गर्भिण्यः= गर्भवत्यः । आतुराः = रोगिणंः । कन्यकाः = कुमार्यः । ताः । अतिथीन् = अतिथिलक्षणोपेतान् । भृत्यान् = परिचारकान् । च सम्भोज्य = भोजयित्वा । दम्पत्योः =जायापत्योः । शेषभोजनम् = अवशिष्टान्नभोजनं कर्तव्यमितिशेषः ।

---

पा० ( १ )''बालान् सुवासिनींर्वृद्धान् गुर्विण्यातुर- ''इति सटिप्पण-छन्दोगाह्निक-सम्मतः पाठः । अत्र सुवासिनी इति पाठ आचारादर्श-छन्दोगा ह्निक-कुल्लूक भट्टीय मनुस्मृति-आचार-चिन्तामणि-सम्मतः पाठः । परं मितारान्वितयाज्ञवल्क्यस्मृति, वीरमित्रोदय-नित्यकृत्यरत्नमाला टिप्पणी-सम्मतः 'स्ववासिनी'' इति पाठः ।

यथा च गौतमोऽपि–

**''भोजयेत्पूर्वमतिथिकुमार-व्याधित-गर्भिणी- सु ( स्व ) वासिनी-स्थविरान् जघन्यां श्चात्मनः पूर्वमेतान् भोजयेत्'' ।इति ॥**

अत्र '' अत्र यद्बालादेः पूर्वभोजनं तदसामर्थ्ये । तत्सामर्थ्ये त्वतिथि-भोजनमेवे'' त्याचार चिन्तामणिः । ''गौतमेन बालादिभोजनात्पूर्वमतिथिभोजनमुक्तं तदतिथेरभ्यर्हितत्वंबोधयितुं विवक्षितमि'' ति नित्यकृत्यार्णवः । वीरमित्रोदयस्तु–''अत्र च यदतिथेः पूर्वमाम्नानं तदीयार्हितत्व-प्रतिपादनार्थम् । यच्च मनु-विष्णुवाक्ये स्ववासिन्यादि-भोजनस्यातिथि-भोजनात्पूर्व-भावित्वमुक्तम्, तदपि क्षुधातुराणामवश्यभोजनीयत्वार्थं न तु तत्रैव तात्पर्यम् । ''अदत्त्वा तु य एतेभ्यः'' इतिवाक्यशेषे दातुः पूर्वभोजन–निन्दाश्रवणात् । तदनुरोधेन तस्य पुरस्ताद्भोजनविधान एव वाक्यस्य तात्पर्यमवगम्यते । ..... तस्माद् वचनद्वयस्यापि तात्पर्यं दम्पत्योः शेषभोजन एव । अतिथि–कुमारादीनां तु भोजने पौर्वापर्यमनियतमि'' तत्याह । परमितः पूर्वं मूलोक्तस्य–

**इतरानपि सख्यादीन् संप्रीत्या गृहमागतान् ।**
**प्रकृत्याऽन्नं यथाशक्ति भोजयेत्सह भार्यया ॥**

इति मनुवचनस्य संस्कृतटीकायां प्रदर्शितं भोजनपौर्वापर्यप्रासङ्गिकं छन्दोगाह्निकविवेचनमपि सम्मेल्य द्रष्टव्यम् । प्रायशोऽत्रैव सर्वमन्यद् विवेचनं गतार्थं भवति । (इत्यतिथि-पूंजा)

**[ हिन्दी टीका ]**

बच्चा, स्व(सु)वासिनी [मिताक्षरा तथा आचारचिन्तामणि के अनुसार–पिता के घर में स्थित व्याही हुई लड़की, मन्वर्थमुक्तावली के अनुसार–नव विवाहिता पुत्रवधू या पुत्री, नित्य कृत्यार्णवके अनुसार-विवाहिता कन्या, गौतम सूत्र ( १।५।२३ ) की व्याख्या मिताक्षरावृत्ति के अनुसार- पुत्री या बहन, इसी सूत्र की व्याख्या वीरमित्रोदय के अनुसार विवाहिता पुत्री, 'स्ववासिनी' पाठ पक्ष में नित्यकृत्यरत्नमालाटिप्पणी के अनुसार पिता या भाई के कुल में वास करने वाली कन्या, किन्तु ' सुवासिनी' पाठ पक्ष में (पुत्रादि) वधू ] वृद्ध, गर्भवती, रोगी, अतिथि तथा परिचारक (भृत्य) को भोजन कराकर घर के मालिक तथा मालकिन (दम्पती पत्नी-पति) भोजन करे । यह मूलवचन का अर्थ हुआ ।

ऊपर से ज्ञातव्य है कि गौतमधर्मसूत्र का भी ऐसा ही कहना है ।

अब यहाँ निवन्धग्रन्थों में आचारचिन्तामणि का कहना है कि यहाँ बालक आदि का जो पूर्व भोजन कहा गया वह उन्हें विशेष भूखे रहने की स्थिति के लिए ही । अन्यथा इनकी अपेक्षा सर्वप्रथम अतिथिभोजन हो । यहीं नित्यकृत्यार्णव का मन्तव्य है कि गौतम ने बालादिभोजनके पहले जो अतिथि भोजन कहा है वह अतिथि की पूजनीयता के बोधन के लिए है ।

यहीं वीरमित्रोदय का विवेचन है कि गौतमवचन में अतिथि का जो पूर्व कथन हुआ है वह इनकी पूज्यता दिखाने के निमित्त है । विष्णु एवं मनु ( ३।११४-११५ ) वचनों में अतिथि भोजन की अपेक्षा पहले स्ववासिनी आदि का भोजन कहा गया है वह भी इनकी क्षुधासे व्याकुलता की स्थिति में अवश्य भोजन करा देने के निमित्त ही है न कि भोजन अवश्य करा देने मात्र में बचन का तात्पर्य है । 'अदत्त्वातु य एतेभ्य:' (अर्थात् वचन के क्रम से पूर्व में कहे गए पूर्व भोजन वाले को विना भोजन दिये) दोष को न जाननें वाला गृहस्थ यदि इनसे पहले भोजन कर लेता है तो वह मरने के बाद कुत्तों और गीधों का भोजन बनता है । अत: बिना कुछ विचार करते हुए अतिथि के पहले ही इन सुवासिनी आदि को भोजन करा दें ।।१-२।।) आदि विष्णु मनुवचनों के वाक्यशेष के द्वारा अन्नदाता गृहस्थ के पूर्व भेजन में निन्दा की गई है । अत: इन दोनों वचनों का तात्पर्य दम्पती (गृहमुख्य पति-पत्नी) के शेषान्न भोजन में ही है । अतिथि कुमार आदि के भोजन में पहले और बाद की कोई सीमारेखा नहीं की जा सकती है ।''

फलत: इसी हेतु 'गुरूनतिथिबालाँश्च तर्पयेत्पूर्वमात्मन: इस यमवचन में बीच में ही अतिथि पद उपलब्ध होता है । परन्तु—इस से पहले इसी प्रकरण में कहे गए—

इतरानपि सख्यादीन् संप्रीत्या गृहमागतान् ।
प्रकृत्याऽन्नं यथाशक्त्या भोजयेत्सहभार्यया ।।

(मनु-३ ।११) इस मनुवचन की संस्कृतटीका एवं हिन्दी टीका में प्रदर्शित भोजन संबन्धी पूर्व या बाद के प्रसंगी छन्दोगाह्निक विवेचन को इसी साथ मिलाकर पढें तो देखा जा सकता है कि प्राय: अंन्य सभी विवेचन इसी छन्दोगाह्निक विवेचन में गतार्थ हो जाता है । हाँ वाग्वैदग्ध्य तो विद्वानों का अपना अपना पृथक् होता ही है ।

❁ अतिथि-पूजा-प्रकरण समाप्त ❁

# भोजनविधिः

[ मूलम् ]

अथ भोजन-विधिः ।[१] दक्षः—

**पञ्चमे च तथा भागे संविभागो यथाऽर्हतः ।**

**देवपितृमनुष्याणां कीटानाञ्चोपदिश्यते ॥**

**संविभागं ततः[२] कृत्वा गृहस्थः शेषभुग् भवेत् ॥**

संविभागो= विभज्य प्रतिपादनम् ।

[ संस्कृत टीका ]

पञ्चमे इति । तथा = चतुर्थभागकृत्यसम्पादनानन्तरम् । पञ्चमे भागे- अष्टधाविभक्तदिनमानस्य पञ्चमे भागे-देवपितृमनुष्याणां कीटानाञ्च । यथार्हतः = यथायोग्यतया । संविभागः = विभज्य प्रतिपादनम् । देवपित्रादिभ्यः पक्वान्नतो विभज्य दानमिति यावत् । उपदिश्यते = शिक्ष्यते । मुनिभिरिति शेषः । यदाह मनुरपि । (३।११७)

**देवानृषीन् मनुष्यांश्च पितॄन् गृह्यां श्च देवताः ।**

**पूजयित्वा ततः पश्चाद् गृहस्थः शेषभुग्भवेत् ॥ इति ।**

ततः = पक्वान्नतः । संविभागं कृत्वा। गृहस्थः = गृही । शेषभुग् = अवशिष्टांशभोक्ता । भवेत् देवपित्रादियुतवैश्वदेवादिक्रियां कृत्वा गृहपतिना भोक्तव्यमित्यर्थः "यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्विषैः" (३।१३) इति भगवद्गीतावचनाच्च । इतः पूर्वतनं वचनं यथा—

**चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत् ।**

**तिलपुष्पकुशादीनि स्नानं चाकृत्रिमे जले ॥ इति**

---

पा० (१) 'अथ भोजनविधिः' इति पाठो यद्यपि मुद्रितपुस्तके दक्ष नाम्ना प्रदर्शित-मूलग्रन्थानन्तरं विद्यते, तथाप्यन्य-निबन्धपुस्तकानुसरं मयाऽप्यत्रैव स्थानपरिवर्तनेन स्थापितोऽस्ति ।

(२) तथा ।

अत्रदक्षोक्तवचनद्वयमुपक्रम्य छन्दोगाह्निकं यथा–"इति दक्षेण स्नानविधौ चतुर्थो भागः । पञ्चमहायज्ञभोजनविध्योस्तु पञ्चमभागोऽपि नियमितस्तद्दृष्टार्थमत एव वैद्यके मध्याह्ने स्नानं तदुत्तरं भोजनमुक्तमिति शिष्टा अपि मध्याह्नोत्तरमासुरीं (वेलां) परित्यज्य स्नानमाचरन्ति । उपवासादि-विशेषेण पूर्वाह्ण एव भुञ्जते । तस्मादहनि स्नात्वा पञ्च यज्ञान् कृत्वाऽति प्रातर्मध्याह्नञ्च निषिद्धकालं विहाय भोजनमेतन्मात्रमेव वैधमिति । यदि च दक्षोक्तकालविशेषस्य वैधत्वमपि तथापि कार्यान्तरानासक्तौ बोद्धव्यम् । ग्रामगमनसभोपवेशनादिकार्यान्तरासक्तौ एकस्मिन्नेव कस्मिंश्चिदहर्भागे स्नान-पञ्चयज्ञ-करणम्" इति ।

[ हिन्दी टीका ]

चतुर्थ भाग के कृत्यों के समापन के बाद आठ भागों में विभाजित दिन के पाँचवे भाग में देव, पितर, मनुष्य तथा कीट आदि के लिए यथायोग्य विभाजन पूर्वक अन्न देकर अर्थात् देव, पितर प्रभृति सहित वैश्व देव आदि की क्रिया सम्पन्न कर गृहस्थ बचे अन्न का भोजन करे । (भगवद्गीता का भी उपेदश देकर )यज्ञ से बचे अन्न का उपभोक्ता सभी प्रकार के पापों से मुक्त हो जाता है ।

मूलोक्त वचन से पूर्ववचन को भी छन्दोगाह्निक में प्रकृत ग्रन्थकार का ही विवेचन है कि दक्षने स्नान निमित्त दिन का चौथा भाग निर्धारित किया है तो पञ्चमहायज्ञ तथा भोजन के लिए दिन का पाँच्रवाँ भाग । इसका प्रत्यक्ष प्रयोजन भी है । अतएव आयुर्वेद में मध्याह्न के समय स्नान तथा इसके बाद भोजन करने को कहा गया है । इसी हेतु शिष्टलोग भी मध्यह्न के बाद आसुरी वेला का परित्याग कर स्नान का आचरण करते हैं । किन्तु एकादशी उपवास (एवं श्राद्धदिन) आदि की विशेष स्थिति में इसके उत्तर दिन में पूर्वाह्ण में ही भोजन करते हैं । इससे सिद्ध होता है कि दिन के किसी भी समय में स्नान एवं पञ्चमहायज्ञ सम्पन्न करके निषिद्ध काल–अतिप्रातः (सूर्योदय के पहले) तथा मध्याह्नकाल–का मरित्याग कर भोजन करना वैध है ।

यद्यपि अभी दक्षवचन द्वारा कहे गये काल विशेष (पञ्चम भाग) वैध है तथापि इसे अन्य कार्यों में संलग्न न रहने की स्थिति में ही समझना चाहिए । दूसरे गाँव की यात्रा, किसी सभा- सोसाइटी में उपस्थित होना आदि अन्य कार्य सामने में हो तो दिन के किसी भी एक भाग में स्नान तथा पञ्चमहायज्ञ का सम्पादन (कर भोजन) कर लेना चाहिए । (प्रमाण के लिए जिज्ञासुजन यहाँ का ग्रन्थ देखें) ।

[ मूलम् ]

बौधायनः –

**सुप्रक्षालितपाणिपादोऽप आचम्य शुचौ संवृते देशेऽन्नमुपहृत[१]-मुपसंगृह्य कामक्रोधलोभमोहानपहत्य सर्वाभिरङ्गुलीभिः शब्दमकुर्वन्प्राश्नीयात्[२] ।**

[ संस्कृत टीका ]

सुप्रक्षालितेति । भोजनं चेत्थं कार्यमित्याह-सुप्रक्षालितेत्यादिना । सुप्रक्षालितपाणि पादः = सम्यक्तया प्रक्षालितचरणद्वयहस्तद्वयश्च । अभ्यर्हितत्वात्पाणिपदस्य पूर्वप्रयोगः । शुचौ = उपलेपादिना पवित्रीकृते । संवृते देशे = वस्त्रादिना परिवेष्टिते देश इत्यर्थः इति वीरमित्रोदयः । उपविश्येतिंशेष इति नित्य कृत्यार्णवः । ''उपहृतम् = उपनीतम् । उपसंगृह्य = आदरेण स्वीकृत्य, शब्दम् = सीत्कारादिकमि'' त्याचारचिन्तामणिः । ''उपसंगृह्य = निकटस्थे पात्रे समादरेण सम्यग्गृहीत्वे''ति नित्यकृत्यार्णवः । वीरमित्रोदयस्तु–'उपहृतमि' ति मूलपाठमनुल्लिख्य उपसंगृह्येत्यस्य ''सम्यक् उपनीतमन्नं समीपस्थे पात्रे सम्यक् प्रीतिपूर्वकं गृहीत्वेत्यर्थः'' इत्याह । ''शब्दमकुर्वन्=भक्षणे क्रियमाणे सी(शी) त्कारादिक(ध्वनि)मनाचरन्, मौनस्याग्रे विधानादि'' ति नित्यकृत्यार्णवः । काम-क्रोध-लोभ-मोहान् अपहत्य=दूरीकृत्य । सर्वाभिरङ्गुलीभिः । प्राश्नीयात् भक्षयंत् ।

[ हिन्दी टीका ]

भोजन किस प्रकार किया जाय ? इस प्रसंग पर कहा जा रहा है कि दोनों पैर तथा दोनों हाथ अच्छी तरह धोकर जल से आचमन कर गोवर आदि से लिपे (स्वच्छ-पवित्र) एवं वस्त्र आदि से घिरे स्थान पर बैठकर, समीपस्थ पात्र में परोसकर लाये गये भक्षणीय पदार्थ का आदर से (प्रीतिपूर्वक) स्वीकार कर काम, क्रोध, लोभ, मोह आदि को अपने से दूर रखकर, भोजन के समय मुंह से ''शी'' ''शी'' आदि शब्द न करते हुए सभी अंगुलियों से भोजन करना चाहिए ।

---

पा० (१) ''मुपहृत' इति पाठः मुद्रित-हस्तलिखिताचारादर्श- वीरमित्रोदयेषु नोपलभ्यते तथाप्याचार-चिन्तामणौ नित्यकृत्यार्णवे च व्याख्या-सहितैतन्मूलपाठस्य दर्शनेन मयापि तथा पाठः मूले सन्निवेशितः । (२) 'त्रश्नीयात्'।

[ मूलम् ]

ब्रह्मपुराणे–

आसनस्थस्तु यो दर्पात्पङ्क्ति मध्य उपस्पृशेत् ।
स सर्वेषान्तु यत्पापं तद् गृह्णाति नराधमः ॥
तस्माद् बहिरुपस्पृश्य आचान्तः प्रविशेद् गृहम् ॥

तथा,

पात्रेष्वर्था[१]नुरूपेषु पुत्रभृत्यानुजैः सह ।
भूम्यां[२] पात्रं प्रतिष्ठाप्य मौनेनान्नन्तु भक्षयेत्[३] ॥
पवित्रपाणिः पुण्यञ्च लभे[४] त्तत्राघमर्षणम् ॥

अघमर्षणजन्यं पुण्यमिति सामानाधिकरण्यम् । लभेत्[५] जपेदित्येके । तन्मतेऽघमर्षण[६] मुख्यमेव ।

[ संस्कृत टीका ]

आसनस्थ इति । वीरमित्रोदयानुसारमितः प्राक्तनं वचनं यथा–''विशेद् भोजनभूमिं तु सुप्रक्षालित-पाणिमान्'' इति । यः, आसनस्थः = आसनोपविष्टः । पङ्क्तिमध्ये–भोजनार्थमुपविष्टानामिति शेषः । दर्पात् = गर्वात् । उपस्पृशेत् = आचामेत् । अप्रक्षालितपाणिपादः सन् भोजनस्थानं प्रविशेच्चेत्यपि प्रसङ्गाद् बोध्यम् । नित्यकृत्यार्णवानुसारं ''विशेद् भोजनभूमिञ्च अप्रक्षालितपाणिमान्'' इत्यग्रिमवचनस्य सत्वात् । सः एवं विरुद्धा चरणशाली । नराधमः । उपविष्टानां सर्वेषां पापं गृह्णातीत्यर्थः । ''प्रक्षाल्य पाणी पादौ चोपविश्य त्रिराचामेदि'' ति गोभिलवचनात् । ''सुप्रक्षालितपाणिपादोऽप आचम्य'' इति बौधायन-वचनाच्च । अतएव ''भोजनस्थानाद्-बहिरेवाजानुपादवामणिबन्धात् पाणी च प्रक्षाल्य द्विराचम्य''. इति छन्दोगाह्निकमपि । आचान्तः = कृताचमनः सन् । गृहम् = यत्र-भुज्यते तदित्यर्थः । प्रविशेत् = आगच्छेत् ।

पात्रेष्विति । अत्र ''अन्नानुरूपेषु = धनानुरूपेष्विति रत्नाकरः । कुशपत्रद्वय-पाणेर्मौनिनो भोजनेनाघमर्षणजन्यं पुण्यं भवतीत्यर्थ

पा० (१) प्वन्ना । (२( भूमौ । (३) भोजयेत् । (४) नात्रा । (५) त । (६) र्षणपदं ।

इत्याचारचिन्तामणिरिति'' नित्यकृत्यार्णवः । ''अन्नानुरूपेषु = स्वविभवानुसारेण सौवर्णराजतादिषु । अघमर्षणंम् = अघमर्षणजन्यं फलम् । क्वचित् जपेदिति पाठः । तत्राघमर्षणं मुख्यमेवे'' ति वीरमित्रोदयः । स्थानसङ्कीर्णत्वे बालादिक्रमेण भोजनक्रमः । स्थानसौष्ठवे तु परिवेषणं बालादिक्रमेण, भोजनं तु सहेति विशेषः । मातृपितामह्यादेस्तु पुत्रपौत्रभोजनपूर्वमेव, स्थानसौष्ठवे सह वा भोजनम् । वृद्धपदेन तत्प्रतिपादनात् । भृत्यः = पुत्रपौत्रादिः परिचारकविप्रश्चेति स्मृतिदीपिकेति नित्यकृत्यार्णवः । अस्य स्मृतिदीपिकालेखस्य ''इतरानपि सख्यादीनि'' ति पूर्वोक्तमनुवचनव्याख्याया सह पठनेन परिवेषणभोजन-क्रमज्ञानमधिकसुलभं स्फीतञ्च भवेदिति मन्ये ।

अत्र लभेत्तत्राघमर्षणमिति परस्मैपदघटितः पाठः मुद्रित-हस्तलिखिता-चारादर्शवीरमित्रोदयसम्मतः । अतएव ''सम्मार्ज्य बाहू जानू च गोप्रदानफलं लभेत् '' इति छन्दोगाह्निकपठितं भोजन-प्रकरणीय-ब्रह्मपुराण वचनमुपक्रम्य ''एवमादिप्रयोगेषु 'अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यमि' ति नियमब-लात्परस्मैपदप्रयोगो बोध्यः'' इति म० म० मुकुन्दझा-कृता टिप्पण्यपि । परमाचारचिन्तामणि-नित्यकृत्यार्णवसम्मतस्तु लभेतात्राघमर्षणमित्यात्म-नेपदघटित एव पाठ उपलभ्यते । अतएव ''लभेत=जपेदित्येके'' इत्येव नित्यकृत्यार्णवे आचारादर्शनाम्ना उद्धृतः पाठोऽपि दृश्यते । अतो नात्र समाधानस्याप्यपेक्षा भवति ।

[ हिन्दी टीका ]

पैर और हाथ अच्छी तरह धोकर भोजन स्थान पर बैठे । किन्तु यदि इन्हें बिना धोये ही भोजनकर्त्ताओं की पङ्क्ति-के बीच में भोजनस्थान पर बैठकर घमण्ड से आचमन करता है तो वह नराधम वहाँ बैठे हुए सभी के पापों का भागी बन जाता है । अतः ('हाथ पैर धोकर और बैठकर तीन बार आचमन करना चाहिए इस गोभिलवचनानुसार) बाहर में ही हस्तपादप्रक्षालननिमित्तक आचमन करके ही भोजन स्थान पर प्रवेश करे ।

तथा, भूमि पर रखे गए अपने अपने विभवानुसार सोना चाँदी के विभिन्न भोजन पात्रों में परोसे गए अन्न पुत्र पौत्रादि अनुज तथा परिचारक विप्र के साथ मौन होकर एवं पवित्री धारण कर भोजन करे । इस तरह करने पर साधारण पुण्य तथा अघमर्षण

सूक्तमन्त्र का पाठ से होने वाले पुण्य का भी लाभ करता है। यह मूलवचनों का अर्थ हुआ।

ग्रन्थकार का विवेचन है कि उक्त साधारण पुण्य तथा अघमर्षण पाठजन्य पुण्य को एक ही आत्मा रूप एक अधिकरण में रहने के कारण सामानाधिकरण्य (एकाधिकरण वृत्तित्व) हो जाता है। अर्थात् मौन तथा पवित्री हाथ में रखकर उक्त विधान से भोजन करने पर उक्त दोनों तरह के पुण्यों का भागी वह भोजनकर्त्ता बन जाता है।

किसी अन्य व्याख्याता या 'लभेत' के स्थान पर 'जपेत' पद का पाठ मानने वाले के मत से अर्थ होगा कि उस तरह अन्न का भोजन करे और अनन्तर अघमर्प-मन्त्र का जप करे। इस तरह करने पर वह कर्ताजन्य पुण्य का भागी होगा।

यहाँ नित्यकृत्यार्णव में उद्धृत स्मृतिदीपिका के लेखानुसार ऊपर से ज्ञातव्य है कि यदि भोजनस्थान सङ्कीर्ण (तंग, सँकरा, सङ्कुचित) हो तो बालक, अतिथि आदि के क्रम से भोजनक्रम रहना चाहिए। यदि वह भोजन स्थान फैला हुआ हो तो परोसना बालक आदि के क्रम से हो किन्तु भोजन साथ-साथ हो यह विशेष बात है। इसी तरह माता, पितामही आदि के स्थल में भी पुत्र पौत्र आदि का भोजन पहले हो या जगह फैली होने पर बालक आदि के लिए पहले परोसे जाँय तथा भोजन साथ साथ हो। प्रकृत वचन में पठित भृत्यपद का अर्थ–पुत्रपौत्रादि (समान) बालक तथा परिचारक ब्राह्मण है।

(यदि इस लेख को " इतरानपि सख्यादीन्" आदि पूर्वोक्त मनुवचन की व्याख्या के साथ पढ़ा जाय तो यह विषय और भी स्पष्ट अवभासित होगा)।

[ मूलम् ]

विष्णुपुराणे–

**विशुद्धवदनः प्रीतो भुञ्जीत[१] न विदिङ्मुखः'॥**

विदिङ्मुखः = आग्नेयी-नैर्ऋती-वायव्यैशान्यभिमुखः।

[संस्कृत टीका]

विशुद्धेति। विशुद्धवदनः = पूर्वं गण्डूषादिना पश्चादाचमनेन च वदनं विशुद्धं विधायेत्यर्थः। प्रीतः = प्रसन्न चित्तः सन्। भुञ्जीत = 'प्राङ्मुखोदङ्मुखो[२] वाऽपि न चैवान्यमना नरः' इत्युत्तरार्धवचनानुसारं पूर्वाभिमुखः उत्तराभिमुखो

पा० (१) न भुञ्जीत इति ह. पु. (२) 'प्राङ्मुख उदङ्मुखो वाऽपि' इति नित्यकृत्यार्णवपाठः। परमत्र पाठेऽन्यदोषपरिहारेऽपि छन्दोभङ्गदोषः।

वा भूत्वा भक्षयेत् । किन्तु विदिङ्मुखः=आग्नेयी-नैर्ऋती-वायवीऐशानी-दिक्कोणाभिमुखः सन् न वा अन्यमनाः सन्नपिभुञ्जीत इति पूर्वक्रियाऽन्वयः । (अत्र "विदिङ्मुखः आग्नेयकोणादिमुखः । प्राङ्मुख उदङ्मुखो वेत्यत्र भुञ्जीतेत्यन्वयः । वाकार श्चानास्थायामितिशेष" इति नित्यकृत्यार्णवः )

### [ हिन्दी टीका ]

पहले कुल्ला आदि और बांद में आचमन से मुँह को स्वच्छ कर तथा प्रसन्नचित्त हो पूर्व या उत्तर दिशा की ओर मुंह करके भोजन करे । किन्तु आग्नेय (पूर्व-दक्षिण), नैर्ऋत्य (दक्षिण-पश्चिम) वायव्य (पश्चिम-उत्तर) या ईशान (उत्तर-पूर्व) कोण की ओर मुंह करके या अन्यमनस्क (चिन्ता करते हुए) भोजन न करे ।

### [ मूलम् ]

हारीतः-

**नोदङ्मुखो नाधिशयने आसने[३]ऽश्नीयात् ।**

अधि = उपरि । शयने = शय्यायाम् । आसने-पीठादौ । अन्नं पात्रे कृत्वेति शेषः ।

### [ संस्कृत टीका ]

नोदङ्मुख इति । उदङ्मुखः = उत्तराभिमुखः । "अधिशयने =उपरिशयने खट्वादौ । अन्नं प्रकृत्येतिशेष" इति वीरमित्रोदयः ।

### [ हिन्दी टीका ]

सोये जाने वाले खटिया आदि तथा पीढ़े आदि के ऊपर न अन्नपात्र को रखकर और ना ही उत्तर मुंह होकर भोजन करना चाहिए ।

### [ मूलम् ]

वामनपुराणे-

**भुञ्जीत नोदङ्[१अ] न च दक्षिणामुखो न च प्रतीचीमभि भोजनीयम्[१आ] ।**

एते[१] उदग्दक्षिण-प्रत्यङ्मुखनिषेधा निष्कामस्य ।

---

( ३ ) 'नासन' इति ह. पु० । पा० (१अ) 'नैवेह च' इति हस्तलिखिताचारादर्शवीरमित्रोदययोः सम्मतः पाठः । नित्यकृत्यार्णवे 'नोदक्' इति एतदनुसारं 'नोदङ्मुख' इति कल्पतरुरत्नाकरपाठः। (१आ) नीयः ।

तथा च मनुः–

आयुष्यं प्राङ्मुखो भुङ्क्ते यशस्यं दक्षिणामुखः ।
श्रियं प्रत्यङ्मुखो भुङ्क्ते ऋतं भुङ्क्ते उदङ्मुखः ॥

श्रियमृतमित्युभयत्र कामयमान[1] इति शेषः । ऋतम् = सत्यं यज्ञं वा । दक्षिणामुखभोजनं प्रमीतमातृ[3] विषयम् । तथा चापस्तम्बः–

न[4] दक्षिणामुखो भुञ्जीत अनायुष्यन्त्वेवम्मुखस्य भोजनं मातुरित्युपदिशन्ति ।

[ संस्कृत टीका ]

भुञ्जीतेति । उदङ्मुख उत्तराभिमुखः । नच दक्षिणामुखः । नच प्रतीचीम् । अभि=अभिमुखीभूय । भोजनीयम् = भोक्तव्यम् । निष्कामस्य = कामनारहितस्य । आयुष्यमिति । मनुः ( २।५२ ) आयुष्यम् = आयुषे हितम् । अत्र प्राङ्मुखो भुङ्क्ते । आयुष्कामः प्राङ्मुखो भुङ्क्ते इत्यर्थः । यशस्यम् = यशसे हितम् । दक्षिणामुखः । श्रियम् । कामयमानः (इच्छन्) इति शेषः । ऋतम् = सत्यं यज्ञं वा अथवा तत्फलमित्यर्थः । अत्रापि कामयमान इति शेषः । उदङ्मुखः = उत्तराभिमुखः । भुङ्क्ते= भुञ्जीतेत्यर्थः । अतएव "यज्ञकामः सत्यकामो वा उदङ्मुख......अश्नीयादिति अथवा ऋतम् = सत्यम्, तत्फलमिच्छन्नुदङ्मुखो भुञ्जीते" ति मन्वर्थमुक्तावली । किन्तु दक्षिणामुखभोजनम् । प्रमीतमातृविषयम् = मृत (अजीवित) जन्मदातृविषयम् । तथा चाह आपस्तम्बः–पुष्टिकामं प्रकृत्य दक्षिणेत्यादि । एवं मुखस्य = दक्षिणामुखस्य । भोजनम् = भोजनक्रिया । मातुः = जनन्याः । अनायुष्यम्=आयुषे अहितम् । उपदिशन्ति–आपस्तम्बादयो मुनय इति शेषः ।

अत्र आचारादर्शनाम्नाऽत्रत्यपङ्क्तीरुल्लिख्य आचारविवेकोऽप्येवम् । कल्पतरुरत्नाकरयोस्तु आयुषे हितमायुष्यम् । एवं यशस्यम् । श्रियमृतं वाञ्छन्निति शेषः । नोदङ्मुख इति तु निषेध ऋतमवाञ्छतामि" ति नित्यकृत्यार्णवः । वीरमित्रोदयस्तु 'भुञ्जीत नोदग्' इति मूलोक्तवचन-स्थाने

पा० ( १ ) अत्र'च' इत्यधिक पाठः (२) इत्याध्याहारः, (३) मातृक इति च पाठभेदा ह० पु० । (४) नित्यकृत्यार्णवोद्धृताचारादर्शेतु–दक्षिणामुखो न ।

"भुञ्जीत नैवेह च दक्षिणामुखो नच प्रतीचीमभि भोजनीयः" । इति पाठं मत्वा " वामनपुराणस्थ निषेधो निष्काम-विषयः । सकामस्य 'आयुष्यं प्राङ्मुख' इत्यादिना दक्षिणामुखत्वप्रत्यङ्मुखत्वयोर्विधानात्" इति, "एवञ्च प्राङ्मुखत्वोद- ङ्मुखत्वयोः विष्णुपुराणस्थ-वचने फलासंयोगेन विधानात् मनुवचने च फलसंकीर्त्तनात् नित्यत्वं काम्यत्वञ्च । दक्षिणामुखत्व-प्रत्यङ्मुखत्वयोस्तु फलार्थतयैव विधानात् केवल काम्यत्वम्" इति चाह ।

अत्र नित्यकृत्यरत्नमाला टिप्पणी- "दक्षिणामुखभोजनं प्रमीतमातृविषयम् । तथा चापस्तम्बः-दक्षिणामुखो न भुञ्जीत, उपदिशन्तीति गौडनिबन्धे । केचित्तु, 'न जीवत्पितृकः कुर्याद्दक्षिणामुखभोजनम्' इति आचाररत्नाकर-धृतवचनाज्जीवत्पितृकस्यापि निषेधमाहुरि" त्याह । परमत्र 'गौडनिबन्ध' इति कथनं न युक्तम् । आचारादर्शा- चारचिन्तामणि-प्रभृतिप्राचीनमैथिलनि-बन्धेष्वप्युल्लेखात् ।

[ हिन्दी टीका ]

'उत्तर, दक्षिण तथा. पश्चिम हो भोजन नहीं करना चाहिए' यह अर्थ वामनपुराणवचन का हुआ । किन्तु उक्त निषेध कामनारहित व्यक्तियों के लिए ही है, क्योंकि काम्यभोजन प्रसंग पर मनु का कहना है कि 'आयु की इच्छा करनेवाले पूर्व मुख, यश चाहने वाले दक्षिण मुंह, धन के अभिलाषी पश्चिम मुंह और सत्य या यज्ञ अथवा सत्यफल या यज्ञफल की कामनावाले जन उत्तर मुंह हो भोजन करे ।

साथ ही यह भी ज्ञातव्य है कि दक्षिणमुँह का भोजन जिनकी माता मर चुकी हैं, उन्हीं के लिए विहित है । क्योंकि इस प्रसंग पर आपस्तम्ब का कथन है कि "दक्षिण मुँह हो भोजन नहीं करना चाहिए । चूँकि ऐसा भोजन माता की आयु के लिए हितकारी नही है । ऐसा मुनि लोग उपदेश करते हैं ।" यह मूल ग्रन्थ का अर्थ हुआ ।

अब ऊपर से ज्ञातव्य है कि नित्यकृत्यार्णव के अनुसार यहाँ आचारविवेक का विवेचन भी आचारादर्श के अनुसार ही है तथा कल्पतरु एवं रत्नाकर ग्रन्थों में कहा गया है कि वामनपुराण में पठित 'नोदङ्मुखः' पद से किया गया निषेध ऋत, सत्य या यज्ञ के फलों को न चाहने वालों के लिए है । अर्थात् उत्तरमुख भोजन काम्य है ।

मूलोक्त वामनपुराणवचन में कुछ पाठभेद मानते हुए वीरमित्रोदय ने विवेचन किया है कि वामनपुराण द्वारा प्रतिपादित दक्षिण एवं पश्चिम मुँह होकर भोजन का निषेध कामनारहित व्यक्तियों के लिए है । क्योंकि मनु (२/५२) ने यश चाहने वालों

के लिए दक्षिण मुख भोजन एवं धनार्थियों के लिए पश्चिममुखभोजन का विधान किया है । दूसरी बात 'प्राङ्मुखोदङ्मुखो वाऽपि न चैवान्यमना नरः ' इस विष्णुपुराण वचन के अनुसार पूरब तथा उत्तर मुंह का भोजन बिना किसी फलनिर्देश के साथ कहा गया है तो मनु (२।५) ने आयु की इच्छा वालों के लिए पूरब मुँह का भोजन, एवं सत्य या यज्ञफल की कामनावालों के लिए उत्तर मुँह का भोजन कहा है । अतः इन पूरब या उत्तर दिशाओं की ओर मुंह कर के किया जाने वाला भोजन नित्य और काम्य है ।

किन्तु यहाँ विशेष ध्यान देने योग्य बात यह है कि आचारादर्श में उल्लिखित वामन पुराण के वचन तथा इसके अनुसार किये गए विवेचन के अनुसार श्रीदत्तोपाध्याय के मत में पूरब मुंह का ही भोजन नित्य और काम्य है । शेष तीनों दिशाओं की ओर मुंह कर के किया जाने वाला भोजन उक्त मनु (२।५२) के अनुसार केवल काम्य है । ऐसा ही अभिप्राय कल्पतरु एवं रत्नाकर का भी है।

यहाँ आचारादर्श में प्रतिपादित दक्षिण मुंह के भोजन प्रसंग पर उद्धृत आपस्तम्ब वचन सहित को गौडनिबन्धीय विषय होने का उल्लेख करते हुए नित्यकृत्यरत्नमाला टिप्पणी का कहना है कि कितने अन्य निबन्धकार आचाररत्नाकर में उद्धृत–'न जीवत्पितृकः कुर्याद्दक्षिणामुखभोजनम्' (अर्थात् जिसका पिता जीवित हो वह दक्षिण मुंह होकर भोजन न करे) इस वचन के अनुसार जीवित पिता वाले व्यक्तियों के लिए भी दक्षिण मुंह का भोजन निषिद्ध मानते हैं ।

परन्तु इस टिप्पणी का यह कहना कि जीवित माता वाले व्यक्तियों के लिए आपस्तम्ब वचनानुसार भोजन का निषेध गौड़निबन्धसम्मत है, उपयुक्त प्रतीत नहीं होता । क्योंकि आचारादर्श, आचारचिन्तामणि, आचारविवेक आदि प्राचीन मैथिल निबन्ध ग्रन्थों में वैसा कुछ संकेत न कर स्वतन्त्र रूप से इस विषय का उल्लेख किया गया है ।

## [ मूलम् ]

यमः –

प्राङ्मुखोऽन्नानि भुञ्जीत पञ्चार्द्रो वाग्यतः शुचिः ।
आर्द्रपादस्तु भुञ्जानः शतं वर्षाणि जीवति ॥

पञ्चार्द्रः–पादद्वये, करद्वये, मुखे च । पुनरार्द्र–पादोपादानं फलार्थम् ।

## [ संस्कृत टीका ]

प्राङ्मुख इति । पञ्चार्द्रः = पाणिद्वयं पादद्वयं मुखञ्चेति पञ्च आर्द्राणि–क्लिन्नानि यस्य सः । वाग्यतः = मौनी । शुचिः = स्नानादिना

पवित्रः । प्राङ्मुखः = पूर्वदिगभिमुखः । अन्नानि = सर्वविधमन्नम् । भुञ्जीत । आर्द्रपादः = आर्द्रौ पादौ यस्य सः । तु = एवम् । भुञ्जानः = सदैव भक्षयन् । शतं वर्षाणि । जीवति= प्राणान् धारयति । फलार्थम् दीर्घजीवित्वरूप-फललाभार्थमित्यर्थः ।

अत्र 'पञ्चार्द्र' इत्यभिधायार्द्रपाद इति पुनरभिधानमार्द्रपादताया आदरातिशयार्थमिति कल्पतरुः । पञ्चार्द्रः = चरणयोः करयोः मुखे चार्द्रः । पुनरार्द्रपदोपादानं दीर्घजीवित्वफलार्थमित्याचारविवेकादयः । अन्नानीत्यभि-धानात्र ताम्बूलादौ दिङ्नियम इत्याचारचिन्तामण्याचारविवेकादय'' इति नित्यकृत्यार्णवः । पुनरार्द्रपदोपादानप्रयोजने वीरमित्रोदयस्तु कल्पत-रुममतवलम्बते ।

मौनभोजने व्यासः

भूमौ पात्रं प्रतिष्ठाप्य यो भुङ्क्ते वाग्यतः शुचिः ।
भोजने भोजने चैव त्रिरात्रफलमश्नुते ॥ इति ॥

[ हिन्दी टीका ]

पञ्चार्द्र (दोनों पैर, दोनों हाथ तथा मुंह धोकर), मौनी, स्नान आदि से पवित्र और पूर्व मुंह हो अन्नों का भोजन करना चाहिए । प्रतिदिन पैरों को धोकर भोजन करने वाला सौ वर्ष का जीवन (दीर्घ जीवन) प्राप्त करता है । यह मूल वचन का अर्थ हुआ ।

यहाँ ग्रन्थकार ने प्रश्न उठाया है कि 'पञ्चार्द्रः' कह देने पर भी पुनः 'आर्द्रपादः' (गीला पैरवाला) कहने का प्रयोजन विशेषफल (दीर्घजीवन्) की प्राप्ति दिखाया जाना है । यहाँ नित्यकृत्यार्णव के अनुसार ऊपर से ज्ञातव्य है कि आचारविवेक आदि ग्रन्थों की भी ऐसी (पूर्व जैसी) ही व्याख्या है । हाँ, कल्पतरु का कहना है कि 'आर्द्रपाद' पद के कहने से पैर धोने में आदरातिशय (अवश्य कर्तव्यता) का बोधन किया जाता है । अर्थात् भोजन करने के पहले कमसे कम दोनों पैर तो अवश्य धो लेना चाहिए । वीरमित्रोदय ने कल्पतरु मत का अवलम्बन किया है ।

मूल वचन में 'अन्नानि' पद के कहे जाने पर आचारचिन्तामणि तथा आचारविवेक आदि की व्याख्या है कि अन्न भोजन के जैसे पान-सुपारी ग्रहण, दुग्धपान आदि में दिशा का कोई भी नियमन न होना सूचित होता है ।

ऊपर से यह भी ज्ञातव्य है कि व्यासवचनानुसार भूमिपर भोजनपात्र रखकर पवित्रतापूर्वक मौन होकर भोजन करने वाले को प्रत्येक भोजन में तीन रात तक उपवास से होने वाला पुण्य फल मिलता है ।

[ मूलम् ]

शङ्खः—

चतुष्कोणं द्विजाग्रस्य[1] त्रिकोणं क्षत्रियस्य तु ।
मण्डलाकृति वैश्यस्य शूद्रस्याभ्युक्षणं स्मृतम् ॥

[ संस्कृत टीका ]

चतुष्कोणमिति । कस्य कीदृशं मण्डलमुचितमित्याह चतुष्कोणमित्यादिना । द्विजाग्रस्य = ब्राह्मणस्य । चतुष्कोणम् = चतुरस्रम् । क्षत्रियस्य तु त्रिकोणम् । वैश्यस्य । मण्डलाकृति = वर्तुलम् । शूद्रस्य । अभ्युक्षणम् = जलेन सेचनम् । स्मृतम् = मुनिभिः कथितम् ।

अत्र मण्डल करणे दिगुपक्रमनियमो नास्ति । प्रमाणाभावात् । यद्यप्यत्र मन्त्रोऽपि नाम्नायते—तथापि ''मन्त्राऽनुक्तौ तु गायत्री''ति शिष्टाचाराद् गायत्र्या मण्डलं कार्यमिति बहवः । अतएव रूपनाथाह्निके ''गायत्र्या जलेन मण्डलं कृत्वे''ति उक्तमिति ।

शूद्रस्तु—शूद्रं प्रकृत्य''नमस्कारेण मन्त्रेण पञ्चयज्ञान्न हापयेत्'' इति याज्ञवल्क्य-वचनानुसारं वैश्वदेवाचरणवत् नम इति मन्त्रेण मण्डलममन्त्रकं वा कुर्यादिति प्रतीयते ।

[ हिन्दी टीका ]

ब्राह्मण का चौकोना, क्षत्रिय का तिकोना, वैश्य का गोलाकार तथा शूद्र का जल सेचन ही मण्डल होना चाहिए । यह मूलवचनार्थ हुआ ।

यहाँ ऊपर से नित्यकृत्यरत्नमालाटिप्पणी के अनुसार ज्ञातव्य है कि मण्डल करण में किस दिशा से शुरुआत करें इसका कोई भी नियम नहीं है । क्योंकि इसमें कोई भी प्रमाण नहीं है । यद्यपि इसके लिए किसी मन्त्र का भी विधान नहीं किया है तथापि 'मन्त्र का कथन न होने पर गायत्री मन्त्र समझना चाहिए' इस शिष्टाचार के अनुसार

पा० ( १ ) द्विजाग्र्य ।

गायत्री मन्त्र से मण्डल कर लेना चाहिए, ऐसा बहुत से लोगों का मत है। अतएव रूपनाथ कृत आह्निक पुस्तक में लिखा गया है कि गायत्री मन्त्र तथा जल से मण्डल कर के'। शूद्र को 'नमः' मन्त्र से अथवा बिना मन्त्रका ही विहित मण्डल कर लेना चाहिए।

[ मूलम् ]

ब्रह्मपुराणे–

चतुरस्रं त्रिकोणञ्च वर्तुलञ्चार्धचन्द्रकम् ।
कर्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम् ॥
ब्रह्मरुद्रेन्द्रचन्द्रार्कवसवो मण्डलान्तरात् ।
निवेदितं नरैरन्नं यस्माद्[१] गृह्णन्ति नान्यथा ॥

एवञ्च ब्रह्मादीनां भोजनकाले बलिर्देयः।

[ संस्कृत टीका ]

चतुरस्रमिति । नरैः । निवेदितम् = समर्पितम् । अन्नम् । यस्माद्धेतोः । मण्डलान्तरात् = पूर्वङ्कृतमण्डलाभ्यन्तरात् । ब्रह्मरुद्रेन्द्रचन्द्रार्कवसवः । गृह्णन्ति । अन्यथा न । (अतः) ब्राह्मणादिषु आनुपूर्व्येण = ब्राह्मणादिक्रमेण। चतुरस्रम् = चतुष्कोणम् '। त्रिकोणम् । वर्तुलम् । अर्धचन्द्रकम् = अर्धचन्द्राकारम्। मण्डलं कर्तव्यम् । तथा च पूर्वोक्तशङ्खवचन-प्रकृत-ब्रह्मपुराण-वचनाभ्यां शूद्रस्याभ्युक्षणमर्धचन्द्राकारञ्च मण्डलं विकल्प्यते । अतएव "शूद्रस्यार्धचन्द्राकृति-मण्डलाभ्युक्षणयोर्विकल्प इत्याचारविवेकः इति नित्यकृत्यार्णवः । शूद्रस्त्वर्धचन्द्राकारमाण्डलमभ्युक्षणमात्रं वा कुर्यादिति छन्दोगाह्निकञ्च ।

मण्डलकरणाभावे दोषमाहाग्रेतनेन वचनेन यथा–

अकृत्वा मण्डलं ये तु भुञ्जतेऽधमयोनयः ।
तेषां तु यक्ष रक्षांसि हरन्त्यन्नस्य यद्बलम्[२] ॥ इति ।

एवञ्चेति । एवञ्च=नरैः ब्रह्मादिभ्यो मण्डलमध्यतोऽन्नस्य निवेदनीयत्वे

पा० (१) तस्माद् । (२) तद्बलम् ।

सिद्धे। ब्रह्मादीनाम् = ब्रह्मरुद्रेन्द्रादीनाम्। भोजनकाले = भोजनारम्भपूर्वकाले। बलिः = देवार्थमुत्सृज्यमानं शुद्धमन्नम्। देयः = समर्पणीयः। एतदर्थं मण्डल-करणमप्यावश्यकं बोध्यम्। अतएव "एवञ्च ब्रह्मादीनां बलिर्भोजनकाले मण्डलाभ्यन्तरे देयस्तदर्थमपि मण्डलमावश्यकमिती" त्याचारविवेकः।

अत्र बलिनैवेद्ययोर्भेदे समर्पणसम्बन्धे च नित्यकृत्यार्णवो यथा- "मण्डलान्तराद् गृह्णन्तीत्यन्वयः।....अन्नमिति शुद्धान्नोपादानाद् बलिपरमिदम्। बलिदानेऽपि मानमिदं वचनमर्थतः। नतु नैवेद्यपरम्। 'अदत्त्वा तु न भोक्तव्यमि' त्यनेन तत्र व्यञ्जन दुग्धादेरपि देयत्वात्।....शूद्रैरपि नैवेद्यं देयम्। 'अनिवेद्य न भुञ्जीते' ति वचनात्। एवमनुपनीतयोषिद्भ्यामपि। ब्रह्मादिबलिर्वाजसनेयिनामेव। सामगानान्तु

अभ्युक्ष्याग्निं नमस्कारैर्भुवि दद्यात् बलित्रयम्।
भूपतये भुवनपतये भूतानां पतये तथा॥

इति बृहद्व्यासवचनेन बलित्रयम्। शूद्राणान्तु वाजसनेयिरीत्या बलिदानं, जनमात्रसाम्यादिना तद्रीतेरन्यत्र दर्शनात् बलित्रयपूर्वं नारायणाय नम इति बलिदानमाचरन्ति सामगाः।.......बल्यन्तरे व्यञ्जनाद्यनुपग्रहादिहापि तत्त्याग' इति स्मृतिदीपिका। आचारादर्शोऽप्येवम्। शूद्रस्यापि ब्रह्मरुद्रादिबलिदान-मविरुद्धमि' ति शूद्राचार" इति।

अत्र नित्यकृत्यरत्नमाला टिप्पणी यथा-भोजनपात्रदक्षिणतश्चतुरस्रमण्डले (मण्डलाभ्यन्तरे) प्राक्संस्थमुदक्संस्थं वा कर्माणि संतिष्ठन्ते' इतिकातीय सूत्रात् प्राक्संस्थसंमुदक् संस्थं वा वाजसनेयी ॐ ब्रह्मणे नमः। ॐ रुद्राय नमः। ॐ इन्द्राय नमः। ॐ चन्द्राय नमः। ॐ अर्काय नमः। ॐ वसुभ्यो नमः इति बलिषट्कम्। छन्दोगस्तु- ॐ नारायणाय नमः। तत्पार्श्वेषु ॐ भूपतये नमः। ॐ भुवनपतये नमः। ॐ भूतानां पतये नमः। इति बलिचतुष्कं भूमावेवोत्सृजेत्। यदि वैश्वदेवात्पूर्वं सिद्धमन्नं सूर्यादिभ्यो नैवेद्यं न दत्तं तदा भोजन-काले एव क्वचित्पात्रे पञ्चधाऽन्नं सोपस्करं (सोपकरणं) विभज्य ॐ

सूर्याय नमः । ॐ गणपतये नमः । ॐ दुर्गायै नमः । ॐ शिवाय नमः । ॐ विष्णवे नमः । इति नैवेद्य पञ्चकं दत्त्वा पूर्वोक्त बलीनुत्सृजेदि''ति रत्नमाला ।

(क) अत्र केचिन्नवैव बलीन् ददति । पात्रे त्रीन् भूमौ षट् । तेषा मुत्सर्गेऽयं क्रमः । ॐ विष्णवे नमः । ॐ दुर्गायै नमः । ॐ गणपतये नमः इति । भूमौ तु यथोक्तम् ।

अयं हि तेषामाशयः । पञ्चदेवतामध्ये सूर्यायार्करूपेणाग्नये वसुरूपेण शिवाय रुद्र-रूपेण बलीनां दास्यमानत्वादवशिष्टेभ्यो विष्णु-दुर्गा गणपतिभ्यस्त्रिभ्य एव पात्रे नैवेद्यं देयमिति । मैथिलेषु कतिपये माण्डरवंश्यब्राह्मणाः कुलाचारात्पञ्चदेवता-विष्णुभ्यो-नैवेद्यानि दत्त्वा नाग कूर्म-कर्कोटक-देवदत्त- धनञ्जयेभ्यो बाह्यवायुभ्यो नैवेद्यानि ददति । तथा च विष्णुपुराणे–

**नागः कूर्मश्च कृकरो देवदत्तो धनञ्जयः ।**
**बहिस्था वायवः पञ्च तेषां भूमौ प्रतीयते ॥**
**अदत्त्वा बाह्यवायुभ्यः प्राणादिभ्यो न होमयेत् ॥ इति ।**

अत्र नैवेद्ये बहव आचारभेदाः । केचिद्दश, केचिच्चैकादश बलीन् ददति । तेषां देवतानामपि न नियमस्तत्र कुलाचारो मूलम् । छन्दोगेष्वपि केचिद्दश केचित्सप्तैवेत्यपि तथैव ।

(ख) एष चक्रबलिरुच्यते स एष आचारपरिप्राप्त एव च्छन्दोगानाम् ।

(ग) छन्दोगाह्निकोद्धारे शङ्करमिश्रा अप्येवमाहुः । अत्र मूलम् 'तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः' इति भगवद्गीतावचनम् । अत्राग्नये पूर्वमेव पाके वृत्तेऽलवणं सिद्धान्नमर्पितमिति पञ्चभ्य एव विष्णुसहितेभ्यो देयम् इति तट्टिपणी ।

वस्तुतस्त्वद्यत्वे मिथिलायां बलि-नैवेद्ययोः तत्स्थापनस्थान-भूमि-पत्रादि-पात्रयोश्च भेदं पूर्वोक्त 'अत्र नैवेद्ये बहव आचारभेदाः । केचिद्दश केचिच्चैका-दश बलीन् ददति' प्रभृति टिप्पण्यनुसारमपि विहाय नेवैद्यनाम्नैव देवसमर्पणीयं शुद्धान्नरूपं बलिं व्यञ्जनादिमिश्रितमन्नं नैवेद्यं वा समर्पयन्त्याधुनिकाः ।

छन्दोगानामिव वाजसनेयिनां कृतेऽप्येवंरूपेण नैवेद्यमन्त्राः स्थिरीकृताः सन्ति। यथा च विद्वद्वर–उग्रानन्द झा सम्पादिते वाजसनेयिसङ्क्षिप्ताह्निके–ॐ विष्णवे नमः (१), ॐ दुर्गादेव्यै नमः (२), ॐ गणपतये नमः (३), ॐ इन्द्राय नमः (४), ॐ चन्द्राय नमः (५), ॐ अर्काय नमः (६), ॐ अग्नये नमः (७), ॐ ब्रह्मणे नमः (८), ॐ वसुभ्योनमः (९), इति।

यद्यपि शुद्धान्न-मिश्रितान्नाभ्यां भूमौ नैवेद्यादिदानस्य शिष्टव्यवहारोऽपि मया दृष्टोऽस्ति तथापीदानीमयमपि विलुप्तप्रायोऽस्ति। एवमेव 'ब्रह्मरुद्रेन्द्रचन्द्रार्कवसवो मण्डलान्तरात्' इति मूलोक्तब्रह्मपुराणवचनानुसारं 'चतुष्कोणं त्रिकोणं वर्तुलञ्चेति ब्राह्मणादिक्रमेणोदकेनात्मानमन्नञ्च वेष्टयित्वा मण्डलं कुर्यादि'ति च्छन्दोगाह्निक लेखानुसारञ्च पूर्वमण्डलमध्ये भोजनपात्रदक्षिणतो बलिदानार्थं नैवेद्यादानार्थं वा मण्डलान्तरमपेक्ष्यते। परमद्यत्वे पूर्वकृतैकेन बृहन्मण्डलेनैव उभयमण्डल-कृत्यं निर्वहन्त्याधुनिकाः सदाचारशालिनो लोकाः। अतएव 'बलिस्थानात्मनो र्मण्डलवेष्टनेनोभयनिर्वाह' इति स्मृतिदीपिकाऽपि।

## [ हिन्दी टीका ]

जिस कारण मण्डल के अभ्यन्तर (भीतर) से ही ब्रह्मा- रुद्र-इन्द्र-चन्द्र-सूर्य और वसु मनुष्यों के द्वारा समर्पित अन्न का ग्रहण करते हैं, अन्यथा नहीं, अतः ब्राह्मण आदि चारो वर्णों के क्रमशः चतुष्कोण, त्रिकोण, गोलाकार तथा अर्धचन्द्राकार मण्डल होने चाहिएँ। यह मूलवचन का अर्थ हुआ।

यहाँ मूलोक्त पूर्व शंखवचन के साथ समन्वय करने पर शूद्र के लिए विकल्प में जल सीच देना भी मण्डल समंझना चाहिए।

मण्डल न करने पर आगे के वचन से दोष यों कहा गया है कि जो अधम विना मण्डल करके ही भोजन करते हैं उनके उन भोजनीय अन्न की शक्ति यक्ष राक्षस लोग हर लेते हैं। यहाँ ग्रन्थकार का विवेचन है कि मूलोक्तवचनानुसार समर्पणीय अन्न भोजन आरम्भ करने के पहले ब्रह्मा आदि देवों के लिए भोजनीय शुद्धान्न से पृथक् पृथक् स्थान में बलि रूप से (मूभिपर) समर्पित करना चाहिए।

अतएव इसकी व्याख्या रूप में आचारविवेककार का विवेचन है कि भोजन के पहले मण्डल के भीतर ब्रह्मा आदि देवों के लिए भोजनीय शुद्ध अन्न से बलि दें।

इसलिए भी मण्डल करना आवश्यक है।

यहाँ नित्यकृत्यार्णव में उद्धृत लेखानुसार ऊपर से विशेषंतः ज्ञातव्य है–''मूलवचन में पठित अन्नपद शुद्ध अन्न का बोधक होने के कारण बलिपरक है। यह वचन अपने अर्थानुसार बलिदान के लिए भी प्रमाण है। किन्तु इसे नैवेद्य दानपरक नहीं मानना चाहिए क्योंकि अदत्त्वा तु न भोक्तव्यम् अर्थात् भगवान् विष्णु एवम् अन्य इष्ट देवताओं को बिना निवेदन (समर्पण) किये कुछ भी नहीं खाना चाहिए इस वचनानुसार उस अन्न नैवेद्य के साथ उसके उपकरण व्यञ्जन तथा दूध आदि का देना भी आवश्यक होता है। (इससे बलि एवं नैवेद्य में भेद स्पष्ट प्रतिपादित हो गया है) उक्त नीति के अनुसार शूद्र, अनुपनीत द्विजबालक तथा स्त्रियों के द्वारा भी नैवेद्य समर्पित होना चाहिए। यह ब्रह्मादिबलिदान वाजसनेयियों के लिए ही है। क्योंकि छन्दोग के लिए बृहद्व्यासवचनानुसार (१) ॐ भूपतये नमः (२) ॐ भुवनपतये नमः (३) ॐ भूतानां पतये नमः इन तीन मन्त्रों से तीन बलियाँ होती है। इसके पूर्व भी छन्दोग लोग 'ॐ नारायणाय नमः' इस मन्त्रसे एक और बलिदान का आचारण करते हैं। हाँ, अन्यत्र जैसे बलिदान सामग्री में व्यञ्जनआदि का सम्मिश्रण नहीं किया जाता है उसी तरह यहाँ के बलिदान में भी व्यञ्जन आदि का त्याग होगा। यह विवेचन स्मृति दीपिका का है। आचारादर्श का भी ऐसा ही मन्तव्य है।''

(यहाँ उक्त नित्यकृत्यार्णवलेख से अधिकतः दृष्टिनिक्षेपयोग्य निषय है कि स्मृतिदीपिका से आवश्यकतानुसार मेरे द्वारा लिये गये कुछ कुछ अंशों से सहित सम्पूर्ण विवेचन को आचारादर्श की छोटी-सी पङ्क्ति ''एवञ्च ब्रह्मादीनां भोजनकाले बलिर्देयः'' का भावार्थ या तात्पर्यार्थ कथन से इस आचारादर्श के लघु लेखों का भी भावगाम्भीर्य स्वतः आँका जा सकता है)।

यहीं नित्यकृत्यरत्नमाला तथा उसकी टिप्पणी का कहना है कि अपने भोजन पात्र के दक्षिण भाग में किये गए मण्डल के भीतर भूमिपर पहले से रखे गए छह बलियों का वाजसनेयी लोग ॐ ब्रह्मणे नमः (१) ॐ रुद्राय नमः (२) ॐ इन्द्राय नमः (३) ॐ चन्द्राय नमः (४) ॐ अर्काय नमः (५) ॐ वसुभ्यो नमः (६) इन छहो मन्त्रों से क्रमशः उत्सर्ग करें। यहाँ कितने वाजसनेयी नौ बलिदान करते हैं। पात्रों में तीन और भूमि पर छह। इन पात्रवाले तीनों बलियों का क्रमशः ये तीन मन्त्र हैं। यथा ॐ विष्णवे नमः (१) ॐ दुर्गायै नमः (२) ॐ गणपतये नमः (३)। उनका आशय यहाँ यह है कि पञ्चदेवता के बीच सूर्य को अर्करूप से, अग्नि को वसुरूप से और शिवको रुद्ररूप से क्रमशः आगे बलिदान दिये जाने के कारण अवशिष्ट विष्णु, दुर्गा और गणपति इन तीनों देवों को ही पात्र में नैवद्य दिये जायँ। मैथिलों में कितने ही माण्डर (भड़रे) वंश के ब्राह्मण कुलाचार के अनुसार विष्णु सहित पञ्चदेवता को नैवेद्य

(४) और धनञ्जय (५) नाम के बाह्य वायुओं के लिए भी नैवद्य देते हैं। इस नैवेद्य दान में विभिन्न आचार (व्यवहार ) हैं। कितने वाजसनेयी दस तो कितने ग्यारह (जगह) देते हैं। इनके देवता भी नियमित नहीं है। इसका मूल कारण अपना अपना कैलिक आचार है।

छन्दोग (सामवेदी) 'ॐ नारायणाय नमः' पहला बलिदान करके उसके आसपास में ही ॐ भूतपये नमः (१), ॐ भुवनपतये नमः (२), ॐ भूतानां भूतये नमः (३), इन मन्त्रों से भी भूमिपर ही फलतः चारो बलिदान करे। छन्दोगों में भी कितने लोग दस या सात बलिदान उसी तरह करते हैं।

यही चक्रबलि भी कहा जाता है और यह छन्दोगों को कुलाचारानुसार आचारपरि प्राप्त है। छन्दोगाह्निक के अनुसार अपने भोजन पात्र से दक्षिण भाग में बुहारे तथा लिपे गए भूभाग पर किये गए चतुष्कोण मण्डल के ऊपर आचार प्राप्ताचार बलियाँ दें। जिनमें ॐ नारायणाय नमः.इस मन्त्र से पहली बलि उदकलिखित चक्र के ऊपर शेष तीन बलियाँ इसके समीप में देने का विधान है। इसीलिए ऊपर के लेखमें चक्रबलि की चर्चा की गई है।

छन्दोगाह्निकोद्धार में शङ्कर मिश्रने लिखा है कि "यदि वैश्वदेव के पहले सिद्ध अन्न सूर्यादि पञ्चदेवता को न दिया गया हो तो भोजन समय में ही किसी पत्र पर पाँच भागों में उपकरण सहित अन्न का विभाजन पूर्वक स्थापन कर ॐ सूर्यायनमः (१), ॐ गणपतये नमः ।(२), ॐ दुर्गायै नमः (३), ॐ शिवाय नमः (४), ॐ विष्णवे नमः (५), इन पाँचों मन्त्रों से क्रमशः इन पञ्चदेवों के लिए पाँचो नैवेद्यों का दान कर पूर्वोक्त बलियों का उत्सर्ग छन्दोग लोग करें।"

इस उद्धृत लेख पर उक्त टिप्पणी का कहना है कि पाक पहले ही हो जाने पर यदि तत्काल ही अग्नि को बिना नमक का सिद्धान्न अर्पित कर दिया गया हो तो विष्णु सहित उक्त पञ्चदेवता के ही निमित्त नैवेद्यों का उत्सर्ग करें।

वस्तुतः देखा जाय तो आज वेद्य कल की मिथिला में बलि और नैवेद्य में इसी तरह इनके स्थापनस्थान क्रमशः भूमि एवं पत्र आदि पात्र में भेद को त्याग कर परिष्कृत भूमि पर ही भोजनपात्र से दक्षिण भाग के नौ स्थानों पर स्थापित व्यञ्जनादि मिश्रित अन्नों को नैवेद्य रूप से आधुनिक ब्राह्मणादिवर्ग उत्सर्ग करते हैं। छन्दोगों के जिस तरह। ॐ नारायणाय नमः (१) ॐ भूपतये नमः (२) ॐ भुवनपतयेनमः (३) भूतानां पतयेनमः (४) उत्सर्ग हेतु निर्धारित हो गये हैं उसी तरह विद्वद्वर उग्रानन्द झा सम्पादित

'वाजसनेयि संक्षिप्ताह्निक' में उद्धृत 'ॐ विष्णवे नमः (१) ॐ दुर्गा देव्यै नमः (२) ॐ गणपतये नमः (३) ॐ इन्द्राय नमः (४) ॐ चन्द्राय नमः (५) ॐ अर्काय नमः (६) ॐ अग्नये नमः (७) ॐ ब्रह्मणे नमः (८) ॐ वसुभ्यो नमः (९) ये नौ मन्त्र वाजसनेयियों (यजुर्वेदियों) के लिए निर्धारित हैं।

यद्यपि शुद्ध (अमिश्रित) अन्न तथा मिश्रित अन्नों से भूमि पर बलिदान एवं नैवेद्य दान होते हुए शिष्ट व्यवहार मैंने देखा है तथापि अभी तो यह भी विलुप्तप्राय है।

इसी तरह, यद्यपि मूलोक्त वचन तथा छन्दोगाह्निक के लेखानुसार भोजनपात्र के मण्डल से बलिदान तथा नैवेद्यदान के लिए अन्य मण्डल (मण्डलान्तर) अपेक्षित है फिर भी भोजनपात्र से लेकर बलि या नैवेद्य स्थान तक किये गए बृहद् एक ही मण्डल से उभय मण्डल का कृत्य-सम्पादन आधुनिक सदाचरण-शील लोक कर लेते हैं।

### [मूलम्]

मण्डलानुवादमात्रमेतदिति चेन्न। तस्यापि सावलम्बनत्वात्। असताऽप्यर्थेन स्तुतिरिति चेन्न। असम्भवे हि तथा स्यात्। नचैवं वाक्यभेदः। सूक्त-वाक्यादिवदविकल्प्यत्वात्।

### [संस्कृत टीका]

मण्डलानुवादमात्रमिति। एतत् = ब्रह्मपुराणवचनमिदम्। मण्डलानुवादमात्रम् —अनुवादो नाम पूर्वमुक्तस्य तच्छब्देन शब्दान्तरेण वा पुनः कथनम्। प्रकृते प्रथमश्लोकात्मकवचनेन मण्डलकरणस्य विधानेन पुनः द्वितीयश्लोकग्थितेन मण्डलान्तरादित्यादिना प्रतिपादितं मण्डलकरणमनुवादः स्पष्टं प्रतीयते। एवञ्च पूर्णमेवात्र ब्रह्मपुराणवचनं मण्डलानुवादप्रतिपादनप्रयोजनकं। इति चेन्न = इति न शङ्कनीयम्। तस्यापि = ब्रह्मादिबलेरपि। सावलम्बनत्वात् = प्रामाणिकत्वात्—प्रमाणसंवलितत्वादिति यावत्। तथा च 'मण्डलं कर्तव्यम्। एतस्य मण्डलस्याभ्यन्तरे मण्डलान्तरे वा ब्रह्मादिबलिदानं कर्तव्यम्। एव-मुभयोः ब्रह्मपुराणवचनविधेयतया 'वचनमिदमनुवादमात्रप्रदर्शनपरमि'ति कल्पनाया अन्याय्यत्वात्।

असताऽपीति। नन्वेवमपि ''वाचं धेनुमुपासीते''त्यादौ वाचि धेनुत्वाभावेऽपि आरोपितधेनुत्वेन वाच इव प्रकृते मण्डलकरणेनापि न किमपि प्रयोजनमन्वेषणीयम्, अपितु ब्रह्मादीनां विधेयबलिदानस्य कृते मण्डलकरणं

स्तुतिमात्रं (प्रशंसनपरकमेव) कल्प्यतामिति चेन्न । असम्भवे हीति । "मण्डलं कर्तव्यम् । तस्य मण्डलस्याभ्यन्तरे मण्डलान्तरे वा ब्रह्मादिभ्यो बलिर्देयः" इति विधिवाक्यस्य वचनप्रतिपादिततया, अस्मिँश्च विधिवाक्ये कस्यापि बाधकतत्त्वस्यादर्शनेन मण्डल-(स्तुति) करणपूर्वकं ब्रह्मादिबलिदानस्यावश्यं विधेयत्वावगतेः ।

अत्र "अनुवादोऽयमिति चेन्न । तस्यापि सावलम्बनत्वात् । स्तुतिमात्रमिति चेन्न। विधिबाधकाभावादि" त्याचारविवेक इति नित्यकृत्यार्णवः ।

नचैवमिति । नचैवं वाक्यभेदः=प्रथमश्लोकात्मकवचनेन मण्डल- स्तुतिरेको वाक्यार्थः सम्पद्यते । द्वितीयश्लोकात्मकवचनेन च बलिदानविधिः द्वितीयो वाक्यार्थो जायते । अत्र वाक्यार्थद्वयस्य जायमानत्वादेव वाक्यभेदो जायते । एवञ्च वाक्यभेदनामको दोषः निश्चप्रचमेवापतेत् तस्मादेतद्दोषवारणार्थं मण्डलकरणबलिदानयोरेकमेव विधेयं विकल्पेन मन्यतामिति वाच्यम् ।

सूक्तवाक्यादिवदिति । अत्र विवेचनसन्दर्भस्यास्य म० म० रघुनाथ-कृता आचारादर्शफक्किकाया व्याख्या यथा—"तस्यापीति । ब्रह्मादिबलेरप्रामाणिकत्वे किमालम्ब्य स्तुतिः स्यादित्यर्थः । असतेति । "वाचं धेनुमुपासीते" त्यादौ धेनुत्वेनेवेति भावः । बाधकाभावान्न स्तुतिमात्रतेत्यभिप्रेत्याह—असम्भव इति। वाक्यभेद इति । मण्डलस्तुतिरेको वाक्यार्थो बलिदानविधिरपर इति । वाक्यार्थभेदाद् वाक्यभेद इत्यर्थः । सूक्तवाक्यादिवदिति । यथा सूक्तवाक्येन प्रस्तरं प्रहरतीत्यग्नीन्द्रादि-प्रकाशक-नाना-मन्त्रैः कुशमुष्टीत्यर्थके तत्तद्देवता-प्रकाशनसामर्थ्यात्तत्तद्देवतोद्देश्यककुशमुष्टित्यागः पृथगेव, वाक्यार्थ-गौरवस्य प्रामाणिकत्वात्तथेत्यर्थः । नानादेवतोद्देश्यक एक कुशमुष्टित्याग एव सर्वैर्मन्त्रैः कथन्नेति चिन्त्यमि" ति ।

**[ हिन्दी टीका ]**

यहाँ आशङ्का की जा सकती है कि यह ब्रह्मपुराण वचन मण्डलकरण का अनुवाद मात्र है । अर्थात् पहले कहे गए विषय का उसी शब्द या अन्य शब्द से कहा जाना अनुवाद कहलाता है । प्रकृत में ब्रह्मपुराण के प्रथम श्लोकवाले वचन से मण्डलकरण का विधान किया गया है तो पुनः 'मण्डलान्तरात्' इत्यादि पदवाले द्वितीय श्लोक (वचन) से उसी का प्रतिपादन किया जाता है। फलतः यहाँ ब्रह्मपुराण के पूरे वचन

का प्रयोजन मण्डलकरण का अनुवाद प्रतिपादन ही है ? इसका उत्तर होगा कि वास्तव में देखा जाय तो ब्रह्मपुराण के दोनों वचनों से 'मण्डल करना और उस मण्डल या दूसरे मण्डल के भीतर में ब्रह्मा रुद्र आदि देवों के निमित्त बलि (भोज्य हविष्य पदार्थ का) दान करना' ये दोनों ही विषय प्रतिपादित होते हैं तो फिर ब्रह्मपुराण के वचन अनुवाद मात्र के बोधक हैं ऐसी कल्पना करना कदापि उचित नहीं है ।

इसका समाधान हो जाने पर भी पुनः शङ्का की जा सकती है कि ''वाचं धेनुमुपासीत'' (अर्थात् कामधेनुरूपा वाणी की उपासना करनी चाहिए) इत्यादि स्थल में वस्तुतः वाणी में धेनुत्व का अभाव रहने पर भी आरोपित धेनुत्व से जैसे वाणी की प्रशंसा मात्र बोधित होती हैं, उसी तरह इस मण्डल करण का भी अपना कोई प्रयोजन नहीं, अपितु ब्रह्मा आदि देवों के निमित्त कर्तव्य बलिदान की प्रशंसा करने के लिए ही मण्डलकरण विधान को क्यों न मान लिया जाय ? इसका भी उत्तर होगा कि 'मण्डल करना चाहिए और उस मण्डल या दूसरे मण्डल के भीतर में ब्रह्मा आदि देवों के निमित्त बलि दें' ऐसा विधिवाक्य ब्रह्मपुराण वचन से प्रतिपादित होता है । साथ ही इस विधिवाक्य में कोई बाधकतत्त्व भी देखने में नहीं आता । फलतः मण्डल (स्तुति) करण के साथ ही ब्रह्मा आदि देवों के निमित्त बलि देना विधेयरूप में मानना होगा । ऐसी स्थिति में स्तुति मात्र प्रदर्शन की बात करना कपोल कल्पना ही तो होगा ।

इतना होने पर भी एक यह आपत्ति उठाई जा सकती है कि प्रथमश्लोकवाले वचन से मण्डल करना एक वाक्यार्थ होगा और द्वितीय श्लोक से दूसरा वाक्यार्थ बलिदानविधि होगा । इस तरह ये वाक्यार्थभेद होने के कारण उत्पन्न 'वाक्यभेद' नाम का दोष निश्चित ही आ खड़ा होगा (आ टपकेगा); फलतः इस दोष को हटाने हेतु मण्डलकरण और बलिदान विधि में एक को ही विकल्प से विधेय क्यों न मान लिया जाय ? इसका भी उत्तर होगा कि 'अग्नि, इन्द्र आदि देवों के अर्थप्रकाशक विविध मन्त्रों से कुशमुष्टि (कुशा का मुठ्ठा) का त्याग करें इस प्रकार के अर्थवाले ''प्रस्तरं प्रहरति'' इत्यादि सूक्त (वैदिकमन्त्र) वाक्यस्थल में जैसे उन-उन देवों के अर्थप्रकाशन के कारण उन-उन देवों के उद्देश्य से अलग-अलग से ही कुशमुष्टि का त्याग किया जाता है, क्योंकि ऐसे स्थल में वाक्यार्थ-गौरव प्रामाणिक माना जाता है न कि दोषावह । वैसे ही प्रकृतस्थल में भी वाक्यार्थभेद प्रयुक्त होने वाले वाक्यभेद का दोष दोष रूप से नहीं माना जा सकता है । अतः मण्डलकरण और बलिदान ये दोनों ही समुच्चित रूप से विधेय माने जायेंगे ।

यहाँ आचारादर्श की फक्किका के व्याख्याता टीकालेखक महामहोपाध्याय रघुनाथ शर्मा का निजी चिन्तन (मत) है कि ऐसे स्थल में सभी मन्त्रों से नाना देवों के उद्देश्य से एक ही बार में कुशमुष्टि का त्याग क्यों न मान लिया जाय, यह एक चिन्तनीय प्रश्न है।

उक्त निजी चिन्तन म. म. श्रीदत्तोपाध्याय द्वारा प्रदर्शित अन्तिम समाधान के ऊपर आक्षेपात्मक एक प्रश्न कहा जा सकता है।

इस आचारादर्श फक्किका (शास्त्रार्थ) के ऊपर म. म. रघुनाथ शर्मा ने जो भी संक्षिप्त व्याख्या लिखी है, वह संस्कृत व्याख्या के अन्त में दिखा दी गई है। संस्कृतज्ञ सुजन यथासंभव अधिकाधिक लाभ उससे उठा सकते हैं।

[ मूलम् ]

विष्णुपुराणे–

प्रशस्तरत्नपाणिस्तु भुञ्जीत प्रयतो गृही।

प्रशस्तरत्नम् = गारुडादि।

[ संस्कृत टीका ]

प्रशस्तेति। इतः प्राक्तनं पद्यार्धवचनं यथा–"स्नातो यथावत्कृत्वा तु देवर्षि-पितृतर्पणम्" इति। एवञ्च, प्रयतः = स्नानतर्पणादिसम्पादनेन पवित्रीभूतः। गृही=गृहस्थाश्रमी। प्रशस्तरत्नपाणिः = प्रशस्तरत्नम्–गारुडादि, पाणौ–दक्षिणहस्ताङ्गुलौ यस्य सः। (तथाभूतः सन्) भुञ्जीत=भक्षयेत्। गारुडम् = मरकतमणिः। "गारुडं स्यान्मरकते विषशास्त्रेऽपि गारुड"मिति विश्वः।

[ हिन्दी टीका ]

स्नान, तर्पण आदि से पवित्र होकर तथा दाहिने हाथ की अनामिका अङ्गुलि में प्रशस्त मरकत गारुड़ आदि रत्न की अंगूठी पहन कर गृहस्थ भोजन करे।

[ मूलम् ]

मनुः–

पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन्।
दृष्ट्वा हृष्येत्प्रसीदेच्च प्रतिनन्देच्च सर्वशः[१]॥

---

पा० (१) सर्वदा।

[ संस्कृत टीका ]

पूजयेदिति । अशनम् = अश्यते-अद्यते इति अन्नम् । नित्यम् = सर्वदा । पूजयेत् = प्राणार्थत्वेन ध्यायेत् । तदुक्तमादि (ब्रह्म) पुराणे–

अन्नं विष्णुं स्वयं प्राह नित्यमेव जनार्दनः ।
यो मां ददातिं प्राणाय भुञ्जानः श्रद्धयान्वितः ॥
प्राणार्थं मां सदाध्यायेत् स मां सम्पूजयेत्सदा ।
अनिन्दँश्चैतदद्यात्तु हृष्ट्वा हृष्येत्प्रसीदेच्च ॥ इति ।

एतच्च=अन्नम् । अकुत्सयन् =जन्मकालुष्यालवणानम्लत्वादिदोषानकीर्त्तयन् । अद्यात्= तत्तदीप्सितं वस्तु भक्षयेत् । (इतः पूर्वम् ) सर्वशः =सर्वमन्नम् दृष्ट्वा हृष्येत् = प्रसीदेच्च = हेत्वन्तरमपि खेदमन्नदर्शने त्यजेच्च । प्रतिनन्देत् = नित्यमस्माकमेतदस्त्वित्यभिधाय वन्दनम्–प्रतिनन्दनं कुर्य्याच्च । तदुक्तमादि (ब्रह्म) पुराणे–

अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः कथयेत्ततः ।
अस्माकं नित्यमस्त्वेतदिति भक्त्या स्तुवन्नमेत् ॥ इति ॥

एवंकरणाभावे दोषो मनुनैवाग्रेतनेन वचनेन दर्शितो यथा( २/५५)–

पूजितं ह्यशनं नित्यं बलमूर्जञ्च यच्छति ।
अपूजितं तु तद्भुक्तमुभयं नाशयेदिदम् ॥

[ हिन्दी टीका ]

भोजनीय सभी प्रकार के अन्न का नित्य आदर करें । उपस्थित अन्न को देखकर प्रसन्न हों । किसी अन्य कारणवश आये हुए खेद का त्याग कर दें । ''नित्य ही हमें अन्न मिले'' ऐसा कह कर भक्तिपूर्वक स्तुति करता हुआ नमस्कार करें । अनन्तर उत्पत्ति स्थान के तथा नमक खटाई की कमी बढ़ी आदि के दोष का वर्णन न करता हुआ भोजन करें ।

[ मूलम् ]

ब्रह्मपुराणे–

वामेन पाणिना पात्रं गृहीत्वा भुवि संस्थितम् ।
तेजोऽसीति जपन्नन्नं[1] प्रणमेदमृतञ्च[2] तत् ॥

[ संस्कृत टीका ]

वामेनेति । भुवि संस्थितम्, अन्नपात्रं, वामेन पाणिना गृहीत्वा = धृत्वा, ५= ''ॐ तेजोऽसि शुमस्यमृतमसि धामनामासि प्रियं देवानामि'' त्यादिमन्त्रं जपन्, अन्नममृतञ्चेतिश्रुतेः अमृतस्वरूपम्, तत्–उपस्थितम्, अन्नम्, प्रणमेत् । ज़पमात्र एव पात्र–धारणं न सर्वदे'ति स्मृतिसमुच्चय इति नित्य–कृत्यार्णवः ।

अत्र ''अत्र 'तेजोऽसी'ति मन्त्रः सामवेदिनां गुणविष्णुभाष्ये ॐ ते जोऽसि सहोऽसि बलमसि भ्राजोऽसि देवानां धामनामासि विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूः' इति पठ्यते । यजुर्वेदिनां तु ''ॐतेजोऽसि शुमस्यमृतमसी' त्यादि युज्यते । किन्तु निबन्धृभिरेक एव 'यजुः सर्वत्र गीयते' इति न्यायेनादृतः । तेन जलैरन्नसेकमेव कुर्वन्ति न वामेन पाणिना पात्र–धारणमाचारविरोधादि''ति नित्यकृत्यरत्नमाला–टिप्पणी ।

[ हिन्दी टीका ]

पृथ्वी पर रखे हुए अन्नपात्र को बायें हाथ से पकड़ कर ॐ तेजोसि शुक्र मस्यमृतमसि धामनामासि प्रियं देवानामनाधृष्टं देवयजनमसि' इस मन्त्र को पढ़ते हुए आगे में उपस्थित अमृतस्वरूप अन्न को प्रणाम करे । यहाँ स्मृतिसमुच्चय के अनुसार जपसमय में ही पात्रधारण होगा, न कि सर्वदा ।

यहाँ नित्यकृत्य रत्नमाला टिप्पणी का ऊपर कहना है कि यद्यपि सामवेदियों के लिए गुणविष्णु भाष्य में ॐ ते जोऽसि सहोऽसि' आदि मन्त्र पढ़ा गया है फिर भी सभी निबन्धकारों ने 'यजुः सर्वत्र गीयते'–'यजुर्वेदीमन्त्र सभी जगह पढ़ा जा सकता है' इस न्याय के अनुसार उपरि उल्लिखित यजुर्वेदीमन्त्र का ही आदर किया है फलतः जल

---

पा० (१) जपँस्त्वन्नम् । (२) प्रणमेनोदितञ्च यत् ।

से इस मन्त्र के द्वारा अन्न से कक ही किया जाता है न कि वायें हाथ से अन्नपात्र का धारण भी। क्योंकि यह बात आचार विरुद्ध है।

[मूलम्]

विष्णुपुराणे—

अन्नं प्रशस्तं प्रोक्षितं प्रोक्षणोदकैः।

[संस्कृत]

अन्नमिति। प्रशस्तम्=अनिन्दितम्। पथ्यम्=हितकरम्। प्रोक्षणोदकैः = पवित्रजलैः। प्रोक्षितम्=सिक्तम्। अन्नम्। 'भुञ्जीत' इति शेषः।

[हिन्दी टीका]

अनिन्दित, हित (गुण) कारी तथा पवित्रजलसे सिञ्चित अन्न का भोजन करना चाहिए।

[मूलम्]

ब्रह्मपुराणे—

अपोशानञ्च[१] गृह्णीयात्सर्वतीर्थमयञ्च[२] तत्।
अमृतोपस्तरणमसीति विष्णोरन्नमयस्य च॥
असीत्यनन्तरं स्वाहाकारं कुर्वन्ति मानवाः॥
हस्तेन लङ्घयेनान्नं सोदकेन कदाचन॥

तथा

प्राणेभ्यस्त्वथ पंञ्चभ्यः स्वाहा प्रणवसंयुताः।
पञ्चाहुती[३]ः प्रजुहुयात्[४] प्रलयाग्निनिभेषु[५] च[६]॥

प्राणाः=प्राणापानव्यानसमानोदाना अत्रैव क्रमोक्ताः। स्वाहाप्रणवसंयुताः = स्वाहान्ताः प्रणवाद्याश्च। ॐ प्राणाय स्वाहा। ॐ अपानायस्वाहा। ॐ

पा० (१) तु। (२) हि (३) पञ्चाहुतीस्तु जुहुयादिति लेखपुस्तकनित्यकृत्यार्णवोद्धृताचारादर्शपाठः। (४) तु। (५) ष्विति' इति प्रकाशिताचारादर्श-पुस्तकपाठः। (६) 'तु' इति ह. पु. पाठः।

व्यानाय स्वाहा । ॐ समानाय स्वाहा । ॐ उदानाय स्वाहा इत्येवंरूपाः । प्रलयाग्निनिभेष्विति ध्येयत्वार्थम् ।

[ संस्कृत टीका ]

अपोशानमिति । अन्नमयस्य=भोजनपात्रस्थान्नस्वरूपस्य । विष्णोः । (उत्सर्गार्थम्) सर्वतीर्थमयम् = सर्वतीर्थजलस्वरूपम् । अपोशानम् = उदक-पाननिमित्तम् । तत् = जलम् । गृह्णीयात् । अनन्तरम् । 'ॐ अमृतोपस्तरणमसि स्वाहा' इति मन्त्रेण भोजनपात्रस्थमन्नमुत्सृज्य तेनैव जलेन आचामेदिति भावः । यथा च कूर्मपुराणेऽपि—अमृतोपस्तरणमसीत्यापोऽशान क्रियाञ्चरेत् इति ।

अत्र "अमृतम्=अन्नम् । (अन्नममृतञ्चेतिश्रुतेः) तस्य उपस्तरणम् (परिधानम्) उदकम्, तत्त्वमसीति उदकमामन्त्र्यते । 'अपोऽशान-कर्म कुरु' इति यदुक्तमुपनयनसमये तदिदमि''ति बौधायनीय-भोजन-प्रकरणस्थ-"न्यस्ये"त्यादि सूत्रव्याख्यायां गोविन्दस्वामिनः । एवञ्च अपोऽशानमित्यत्र क्रियापदमनुकृत्याव्युत्पन्नप्रातिपदिकत्वात्सुबुत्पत्तिः ।

हस्तेनेति । सोदकेन = संजलेन । हस्तेन । कदाचन = कदाचिदपि । अन्नं न । लङ्घयेत् = एकपार्श्वतोऽपरपार्श्वं यावन्नातिक्रामेत् । तथाकरणे तत्रैव दोषमाह—

दम्भाद् यो लङ्घयेद् भुञ्जन् तेनान्नं निहतं भवेत् ।
हतं चान्नमभक्ष्यत्वं तस्य याति दुरात्मनः ॥ इति ।

प्रलयाग्निनिभेषु=प्रलयकालिकाग्निसदृशेषु । एतत्कथनं ध्यानार्थमेव न तु व्यावर्तकतया विशेषणार्थमपि । (उदरवर्त्तिवह्निषु प्राणेभ्यः = पञ्चभ्यः प्राणापानादिप्राणेभ्यः । पञ्चभ्य इत्यनुरोधाद् बहुवचनमाद्यर्थम् । स्वाहा प्रणवसंयुताः = स्वाहान्ताः प्रणवाद्याः ॐ प्राणाय स्वाहे त्यादिरूपाः पञ्चाहुतयः । प्रजुहुयात् = दद्यात् । अत्रैव = ब्रह्मपुराण एव । क्रमोक्ताः = क्रमेण कथिताः ।

अत्राचारचिन्तामणिस्तु—

अथोपस्तरणार्थन्तु प्राश्य तोयामृतं सकृत् ।
अमृतोपस्तरणमसि स्वाहेत्यन्तेन तत्त्ववित् ॥

इति संन्यासपद्धति-लिखितं वचनं प्रमाणयन्तः स्वाहाकारमन्ते कुर्वन्ती''त्याह। अत्र नित्यकृत्यरत्नमालाटिप्पणी यथा ''अत्र पुलस्त्यः-

**करेण तु पिबेत्तोयं यावन्मांसं न भक्षयेत् ।**

**मांसलिप्तकरे तोये तुल्यं गोमांसभक्षणम् ॥ इति ॥**

तदेतत्प्रत्यपोशानविषयमपोशाने यथावत्कर्तव्ये तत्सम्पर्काभावात् । तथा च प्रत्यपोशाने कर्तव्ये मांसलिप्तकरं प्रक्षाल्य पुनरन्नान्तरलिप्तकरेण तत्कार्य-मि''ति प्रतिपादयति ।

भोजनादौ अपां प्राशनमन्त्रस्यार्थव्याख्यायाम्-''हे पीयमान जल ! त्वममृतम् = विनाशरहितं, प्राणदेवताया उपस्तरणमसि = यथा शयानस्य पुंसो मञ्चकस्योपरितनं पटादिकमुपस्तीर्यते तद्वत्प्राणदेवताया इदमुपस्तरणम् । तथा च वाजसनेयिनः प्राणविद्यायां प्राणदेवताया जलवस्त्रत्वमामनन्ति । (तस्मादशिष्यन्नाचामेदशित्वा चाचामेदेतमेव तदन्नमनग्नं कुरुते) इति । (पञ्च-प्राणहुतिमन्त्राणामर्थाः) । प्राणाय = प्राणदेवतायै । स्वाहा = स्वाहुतमस्तु । एवमपानादिषु योज्यम् ।'' इति तै० आ० ना० उ० सायण भाष्यम् । 'हे जल, त्वम् अमृतोपस्तरणमसि=अमृतस्य-पञ्चमहायज्ञावशिष्टान्नस्य, उपस्तरणम् = आस्तरणमसि' इति हलायुधेन व्याख्यातम् इति मन्त्रार्थसंग्रहः ।

## [ हिन्दी टीका ]

भोजनपात्रस्थित अन्नमय विष्णु के उत्सर्गनिमित्त तथा आचमननिमित्त जल ग्रहण करना चाहिए । अनन्तर ''ॐ अमृतोपस्तरणमसि स्वाहा'' इस मन्त्र से भोजनपात्रस्थ अन्न का उत्सर्ग कर एक बार में ही शेष जल का प्राशन (पान) कर ले । कभी भी जल सहित हाथ से अन्न का लंघन नहीं करना चाहिए । तथा, प्रलयकालिक अग्नि के समान ध्यान करते हुए अपने उदरवर्त्ती अग्नियों में प्राण, अपान आदि पाँचों प्राण देवताओं को (१) ॐ प्राणाय स्वाहा, (२) ॐ अपानाय स्वाह, (३) ॐ व्यानाय स्वाहा, (४) ॐ समानाय स्वाहा, (५) ॐ उदानाय स्वाहा, क्रमशः इन पाँचों मन्त्रों को पढ़ते हुए अन्न का एक एक लघु ग्रास रूप एक एक आहुति का प्रक्षेप करे । अर्थात् मुंह में डाल डाल कर क्रमशः निगलते जाय । यहाँ तक प्रकृत ग्रन्थ का अर्थ हुआ ।

अब ऊपर से नित्यकृत्यरत्नमाला टिप्पणी का कहना है कि ''मांसभक्षण के पहले ही हाथ से जल का पान करें । यदि मांसलिप्त हाथ से जल ग्रहण किया जाय तो वह

गोमांस भक्षण के समान माना जाता है–'' यह पुलस्त्य का कथन अभी अभी कहे गए अपोऽशान (भोजन के पहले होने वाले जल प्राशन) परक न होकर प्रत्यपोशान (भोजनान्त में होने वाले जल प्राशन) परक है, क्योंकि पूर्वस्थल में मांस का सम्पर्क संभावना न होकर उत्तरस्थल में ही हो सकती है। अतः ऐसी स्थिति में मांसलिप्त हाथ को धोकर पुनः दूसरे अन्न से लिप्त हाथ के द्वारा अन्तिम जल प्राशन करना चाहिए।''

भोजन के पहले उक्त जल प्राशन मन्त्र का सायाणभाष्यानुसारी अर्थ है कि–''हे पीयमान (पिया जाने वाला) जल! जैसे सोनेवाले व्यक्ति के लिए खटिया, चौकी, या पलंग के ऊपर चादर बिछा दी जाती है उसी तरह तुम प्राण देवता के लिए वह्निके ऊपर बिछने वाला विनाशरहित उपस्तरण (चादर) स्वरूप हो। इसी हेतु वाजसनेयी लोग प्राण विद्या में प्राण देवता के लिए इस जल को वस्त्र स्वरूप मानते हैं।

यहीं हलायुधव्याख्यानुसार अर्थ है कि ''हे जल। तुम पञ्चमहायज्ञ के अवशिष्ट तथा भोजन किये जानेवाले अन्न का बिछौना हो।'' इस दूसरे अर्थ से मिलती-जुलती हुई बौधायन सूत्रटीकाकार गोविन्द स्वामी की व्याख्या है कि हे जल! तुम भोजन किये जाने वाले अन्न का वस्त्र हो।

[ मूलम् ]

याज्ञवल्क्यः–

**प्राणो व्यानस्तथाऽपानः समानोदान एव च।**

**ॐकारपूर्वैः स्वाहान्तैः पञ्च दद्यात्तथाऽऽहुतीः॥**

[ संस्कृत टीका ]

प्राण इति। ॐकारपूर्वैः स्वाहान्तैः = ॐ प्राणाय स्वाहेत्यादिमन्त्रैः। प्राणव्यानापानसमानोदानेभ्यः पञ्चाहुतीः दद्यात्। पञ्च लघुग्रासान् निगलेदिति भावः। अतएव ''अस्विन्नतण्डुलस्य भक्तं सघृतं परिगृह्य...........ओं अमृतोपस्तरणमसि स्वाहेति अपोशानमादाय पञ्चाहुती : घृताक्त केवलभक्तकृता आर्द्रामलक प्रमाणा .....जिह्वांमूले जुहुयात्। तास्तु प्रत्येकं निगरेदिति कृत्यप्रदीप इति नित्यकृत्यार्णवः। अत्र ''आचारविवेके तु–अत्र यद्यपि 'प्राणोव्यानस्तथाऽपानः समानोदान एव च' इति याज्ञवल्क्येन क्रमोभिऽहितः। स्थानान्तरे च, 'प्राणापानसमानानामुदानव्यानयोस्तथा' इति क्रमाभिधानं तथापि माध्यन्दिनीयानां प्राणापानव्यानोदानसमानक्रमेणाहुतयः कार्याः। 'प्राणो

यज्ञेन कल्पतां स्वाहाऽपानेन यज्ञेने'त्यादि यजुषि तथैव क्रमदर्शनात् । ....... पञ्चाहुतीर्हुत्वा तूष्णीं भूयो व्रतयेदिति वचनाच्चेति विशेषः'' इति नित्यकृत्यार्णवः ।

[ हिन्दी टीका ]

ॐकारपूर्वक स्वाहान्त अर्थात् (१) ॐ प्राणाय स्वाहा, (२) ॐ व्यानाय स्वाहा, (३) ॐ अपानाय स्वाहा, (४) ॐ समानाय स्वाहा, (५) ॐ उदानाय स्वाहा, इन पाँचों मन्त्रों से क्रमशः पाँच लघुग्रास निगलें। यह मूल वचन का अर्थ हुआ। (पूर्वोक्त मूल वचनों से व्यान तथा अपान के कथन क्रम में व्युत्क्रम कर दिया गया है यह ज्ञातव्य है।)

यहाँ नित्यकृत्यार्णव में उद्धृत आचारविवेक के विवेचनानुसार ऊपर से ज्ञातव्य है कि यद्यपि 'प्राणो व्यानः' आदि मूलोक्त याज्ञवल्क्य वचन तथा 'प्राणापान' इत्यादि विष्णु पुराण वचन के अनुसार पूर्वापेक्षया व्युत्क्रम से क्रम कथन किया गया है तथापि संस्कृतटीका में देखाये गए यजुर्वेद के वचन तथा बौधायन वचन के अनुसार शुक्ल यजुर्वेदियों के लिए पूर्व प्रदर्शित ब्रह्मपुराणोक्त क्रम से ही पाँचों आहुतियाँ होनी चाहिएँ।

[ मूलम् ]

विष्णुपुराणे–

पञ्च ग्रासान् महामौनं प्राणाद्याप्यायनाय तत्[1] ।

महामौनमिति सर्वथा ध्वनिनिवृत्तिरभिहिता[2] ।[3]

प्राणापान-समानानामुदान-व्यानयोस्तथा ।'

इति क्रमान्तरेणोक्ताः[4] ।

एताश्चाहुतयो न दन्तेन भेद्याः प्राणाय स्वाहेत्येकयाऽऽहुत्या सर्वान् प्राणान् प्रीणातीति समस्ता निगिरेदिति हारीताभिधानात् । अङ्गुष्ठाऽनामिकामात्रग्राह्या[5] अन्नेनैता[6] आहुतय इति हारीतव्याख्यातारः ।

सर्वाभिरङ्गुलीभिरश्नीयादिति सामान्यविधेस्तु पञ्चग्रासस्यापि तथैव, क्षुद्रता च ग्रासानां निगलनसामर्थ्याल्लभ्यते ।

---

पा० (१) तु । (२) 'मता' इति ह. पु. पाठः । (३) 'प्राणादयः' इत्यधिकः ह. पु. पाठः । (४) णात्रोक्ताः इति ह. पु. पाठः । (५) ''ग्राह्यान्नेनआहुतयः'' इति नित्यकृत्यार्णवे आचारादर्शनाम्ना उद्धृतलेखानुसार पाठः । (६) अन्नेनैता इति ह. पु. पाठः । अन्नेता इति प्रकाशित-पुस्तकपाठः

[संस्कृत टीका]

पञ्चग्रासानिति । इतः पूर्वार्धवचनं यथा–

**'अनिन्दन् भक्षयेन्नित्यं वाग्यतोऽन्नमकुत्सयन्' । इति ।**

एवञ्च, प्राणाद्याप्यायनाय = प्राणादिपञ्चदेवतानां तृप्तये । तत् = अन्नम् । पञ्चग्रासान् = पञ्चाहुती: । महामौनम् = महातूष्णीम् (यथा स्यात्तथा) । अत्र महदिति विशेषणाभिधानात् सर्वथा ध्वनिनिवृत्तिरभिधीयते । तथा च पञ्चग्रासनिगलनपर्यन्तं महामौनमूर्ध्वन्तु मौनमात्रमिति भावार्थः । हुत्वा नित्यमन्नमकुत्सयन् अनिन्दंश्च भक्षयेदिति सम्पूर्णवचनार्थः ।

अत्र प्रकृतवचनमुपक्रम्य–''महामौनमिति ध्वनिचेष्टादिनिवृत्तिपरम् । मौनस्य सामान्यविधेः । प्राणाहुतिमन्त्रस्तु मनसैव पाठ्यः । इदन्त्ववधेयम्– भक्तमागच्छेदित्युपनिषद्दर्शनाद् व्यञ्जनादेर्न प्राणाहुतिकर्मता सति सम्भवे भक्तं घृताक्तं......'नाघृतं भौजयेद् विप्रं स्वगृहे सति सर्पिषि' इति वचन–स्वरसाच्चेति । अशौचेऽपि प्राणाहुति–तन्मन्त्र–पाठादिरि' ति स्मृतिदीपिके''ति नित्यकृत्यार्णवः । अत्र तदयद्भक्तं प्रथममागच्छेदित्यत्र'' भक्त–पदेन फलमूला–द्यन्यतर्पकाभिधानमिति नित्यकृत्यरत्नमालाव्याख्या अत्रैव ''महामौनम् = हुङ्कारादिरहितम् । तथा च अत्रिः–'मौनव्रतं महाकष्टं हुङ्कारेणैव नश्यति' इति । ततः परं तु न नियमः काम्यत्वात् । तथा च पराशरः–

**यदीच्छेत्सर्वपापानि हन्तुं निरवशेषतः ।**
**मौनेनान्नं समश्नीयादगस्त्यशिरसा स्वपेत् ।। इति ।**

अगस्त्यशिरसा = दक्षिणस्यां शिरः कृत्वा । काशीखण्डे–

**यावदेवान्नमश्नीयान्न ब्रूयाद् तद्गुणागुणान् ।**
**अतो मौनेन यो भुङ्क्ते स भुङ्क्ते केवलामृतम् ।।**

इति । तदेतच्छ्राद्धीय–ब्राह्मणविषयमिति केचित् । अपरे तु भोजने सर्वत्रैव मौनमावश्यकम् ।

स्नास्यतो[1] वरुणस्तेजो जुह्वतोऽग्निः श्रियं[2]हरेत्।
भुञ्जानस्य[3] यमस्त्वायुस्तस्मान्न व्याहरेत् त्रिषु ॥

इति भविष्योत्तरे तदकरणेऽनिष्टश्रवणादित्याहुरि''ति।

प्राणापानेति । विष्णुपुराणीयैतद्वचनेन तु पूर्वोक्तब्रह्मपुराण-याज्ञ-वल्क्यवचनाभ्यां प्रतिपदितादन्येनैव क्रमेण प्राणादय उक्ताः। अतएव ''शूद्राचारे तु—प्राणाय नमः, अपानाय नमः, समानाय नमः, उदानाय नमः, व्यानाय नमः इति विष्णुपुराणोक्तक्रमः । अथवा प्राणाय नमः, अपानाय नमः, व्यानाय नमः, उदानाय नमः, समानाय नमः, इति ब्रह्मपुराणोक्तक्रमः। प्राणाद्याहुतयश्च शूद्रस्यापि न विरुद्धाः पौराणिकविधित्वादित्युक्तमि''ति नित्यकृत्यार्णवः । अत्र अविकल्पेन ब्रह्मपुराणोक्त एव क्रमो ग्राह्य इत्युक्तपूर्व एव।

एताश्चेति । एताश्च पञ्च आहुतयः न दन्तेन भेद्याः= छेद्याः खण्डनीया इति यावत्। प्राणाय स्वाहेत्यादिहारीतवचनात्। अत्र वचने प्राणानिति-पदेन प्राणापानव्यानसमानोदानानां ग्रहणम् । एकया = एकैकया । प्रीणाति = तर्पयति । समस्ता निगरेत् = क्षिप्ताहुतिं सकलामेव निगलेन्नतु दन्तेन भिन्नां कुर्यादिति भावार्थः । अतएव 'दन्तच्छेदेऽन्नमुच्छिष्टं भवती' ति स्मरन्ति । 'उच्छिष्टं तु न होमीयमि' ति च। होमीयम् = होमार्हमिति नित्यकृत्यरत्नमाला-टिप्पण्यपि।

अङ्गुष्ठेति । उक्तहारीतवचनव्याख्यातारश्च यद्यपि अङ्गुष्ठानामिकाऽ-ङ्गुलिद्वयमात्रग्राह्यान्नेन आहुतिग्रहणमिति प्रतिपादयन्ति तथापि 'सर्वाभिरङ्गुली भिरश्नीयादि' ति पूर्वोक्तबौधायनब्रह्मपुराणयोर्वचनेन पञ्चग्रासस्यापि = सर्वप्रथमं भक्षणीय पञ्चाहुतेरपि तथैव = सर्वाभिरङ्गुलीभिरेवाशनीयत्वम् । एवं सति पञ्चग्रासस्य स्वल्पपरिणामत्वं कथङ्कारं सिद्ध्येयदित्याह क्षुद्रतेत्यादि। ग्रासानाम् =पञ्चग्रासानाम् । क्षुद्रतां च= स्वल्पता च । निगलनसामर्थ्यात् = 'समस्ता निगरेदि' ति हारीतवचनेन निगलनार्थे बोधनबलात् । लभ्यते = बोध्यते । अन्यथा निगलनमेवासम्भावि स्यादिति भावः।

---

पा० (१) स्नातस्य। (२) हरेत् श्रियम्। (३) भुञ्जतो मृत्युरायुष्यं तस्मान्मौनव्रतं चरेत् ॥

[हिन्दी टीका]

प्राण आदि पाँचो देवताओं की तृप्ति के लिए जिससे किसी भी प्रकार का शब्द नहीं हो इस तरह पञ्चग्रास का ग्रहण करें। यह मूल वचन का अर्थ हुआ।

मूलवचन में महामौन पद के सन्निवेश से यह भी स्वत: सिद्ध हो गया कि पञ्चग्रास के समय महामौन (जिसमें किसी भी प्रकार का शब्द न हो) तो बाद के भोजन समय में मौन रहें।

यहाँ नित्यकृत्यार्णव में उद्धृत्त स्मृतिदीपिका के अनुसार ऊपर से ज्ञातव्य है कि " प्रकृत वचन में पठित 'महामौन' पद का प्रयोजन ध्वनि चेष्टा आदि की निवृत्ति का बोधन करना है। क्योंकि भोजन के समय तो मौन होने का सामान्यत: विधान है। प्राणाहुति के मन्त्र तो मन ही मन पढे जायँ। उपनिषद् वचन के आधार से कहा जा सकता है कि इस पाँच आहुतियों में भात (चावल) के साथ व्यञ्जन आदि को न मिलायें। हाँ, सम्भव हो तो घृत से उस अन्न को अवश्य अच्छी तरह मिला लें। अशौच के समय भी प्राणाहुति तथा इनके मन्त्रों के पाठ होने चाहिए।"

यहीं नित्यकृत्यरत्नमाला-टिप्पणी के अनुसार ऊपर से ज्ञातव्य है कि महामौन में महा विशेषण का प्रयोजन हैं–पञ्चग्रास भोजन में हुङ्कार आदि भी न हो। क्योंकि अत्रि(स्मृति) ने कहा है कि 'मौनव्रत बहुत ही कष्टकारी होता है। जिस कारण वह हुंकार से ही नष्ट होता है।' इस पञ्चग्रास के बाद के भोजन में मौन होना काम्य (करना न करना स्वेच्छाधीन) है। क्योंकि पराशर (स्मृति) का कहना है कि "यदि बिना कुछ अवशेष बचाये ही सारे पापों का नाश करना चाहते हो तो मौन होकर अन्न का भोजन करना चाहिए और दक्षिण दिशा में शिर कर के सोना चाहिए।" इसीतरह काशीखण्ड में कहा गया है कि "जबतक अन्न का भोजन करें उसके गुण या अगुण का वर्णन नहीं करना चाहिए। अत: मौन होकर जो खाता है वह केवल अमृत खता है। यहाँ कितने लोग इस काशीखण्ड वचन को श्राद्धीय ब्राह्मण के भोजन परक मानते हैं। (श्राद्धीय ब्राह्मण के लिए विशेष शास्त्रीय निर्देश है कि उसे भोजन के समय भोज्य पदार्थ का गुण दोष कीर्त्तन नहीं करना चाहिए)। किन्तु अन्य लोग का कहना है कि किसी भी भोजन में मौन होना आवश्यक है। क्योंकि भविष्यपुराण के उत्तरखण्ड में कहा गया है कि "स्नान के समय बोलने बाले के तेज को वरुण, हवन के समय बोलने वाले की श्री को अग्नि तथा भोजन के समय बोलने बालों की आयु को यम अपहरण कर लेते हैं। अत: इन तीनों ही समयों में नहीं बोलना चाहिए।" फलत: इस वचन के अनुसार अनिष्टश्रवण के कारण मौन रहना ही श्रेयस्कर है।

मूलग्रन्थ में कहे गए ''प्राण, अपान, समान, उदान तथा व्यान नाम के पाँचों प्राणवायु या प्राणदेवताओं को पञ्चग्रासरूप पाँच आहुतियाँ दें '' इस विष्णु पुराण के वचन से तो मूल में ही पहले कहे गए ब्रह्मपुराण तथा याज्ञवल्क्यवचन से प्रतिपादित क्रम से पाँचों प्राणों का क्रम भिन्न भिन्न कहा गया है।

अतएव नित्यकृत्यार्णव में उद्धृत शूद्राचार निबन्ध के अनुसार ऊपर से ज्ञातव्य है कि विष्णुपुराण के वचन के अनुसार 'प्राणाय नमः, अपानाय नमः, समानाय नमः उदानाय नमः, तथा व्यानाय नमः' यह मन्त्रक्रम बनता है तो ब्रह्मपुराण के अनुसार प्राणाय नमः, अपानाय नमः, व्यानाय नमः उदानायनमः, समानाय नमः, मन्त्रक्रम होता है। प्राण आदि की ये आहुतियाँ शूद्र के लिए भी कर्तव्य विरुद्ध नहीं हैं क्योंकि यह विधिविधान पौराणिक है। यहाँ ऊपर से यह भी कहा या जाना जा सकता है कि शूद्रों के जैसे ही अनुपनी तबालक तथा स्त्रियों के लिए ये आहुतिदान कर्तव्य हैं। साथ ही यह भी ज्ञातव्य है कि मूलग्रन्थ में हो दिखाये गए अनेकविध उक्तक्रम में ब्रह्मपुराणोक्त क्रम ही शुक्ल यजुर्वेदियों के लिए शास्त्र एवं व्यवहार के अनुकूल है यह पहले ही दिखाया गया है।

मूल में कहा गया है कि 'इन पाँचों आहुतियों का दाँत से छेदन नहीं होना चाहिए। क्योंकि हारीत का कहना है कि ''प्राणाय स्वाहा'' इस मन्त्र से दी गई एक ही आहुति से पाँचों प्राण आदि को तृप्त कर देती है। अतः समस्त आहुति को निगल जाना चाहिए।''

यहाँ इस हारीतवचन के अन्य व्याख्याताओं की व्याख्या है कि वचन में आहुति पदके उपादान से अंगूठा और अनामिका इन दोनों अंगुलियों से लेने योग्य अन्न का ग्रहण हो जिससे उसे निंगला जाय। किन्तु 'सभी अंगुलियों से खाना चाहिए' इस पूर्वोक्त बौधायन के सामान्यतः विधायक वचन से ही इन पञ्चग्रासों का भी सभी अंगुलियों से ग्रहण सिद्ध हो जाता है। बात रही स्वल्प परिमाण की, वह तो 'समस्त आहुति निगल जायँ' इस हारीत के कथनानुसार निगलने के विधान से ही सिद्ध हो जाता है। क्योंकि बृहत्परिमाण होने पर निगला नहीं जा सकता।

पूर्वोक्त आहुतियों के दन्तच्छेदन न होने के सम्बन्ध में नित्यकृत्यरत्नमाला के टिप्पणीलेखानुसार ऊपर से ज्ञातव्य है कि दाँत से छेदन होने पर अन्न उच्छिष्ट (जूठा) हो जाता ऐसी स्मृतियों की मान्यता है और उच्छिष्टवस्तु होमयोग्य नहीं होती।

[ मूलम् ]

विष्णुपुराणे[१]–

**प्रज्ञाऽऽढ्यो[१क] ब्रह्मचारी स्यात् पक्वान्नै[२] वर्धते च सः ।**

**प्राणाग्निहोत्र[३]विद् विप्रो दाता सस्यात्समृद्धिमान् ॥**

[ संस्कृत टीका ]

प्रज्ञाढ्य इति । ब्रह्मचारी = प्रथमाश्रमी । प्राणाहुतिविधिना भोक्तेति प्रकरणाल्लभ्यते । प्रज्ञाऽऽढ्यः = प्रखरबुद्धिः । स्यात् । च = पुनः । सः = ब्रह्मचारी । पक्वान्नैः = घृतपक्वपयःपक्वैरन्नैः प्राणाहुतिविधिना भोक्ता । वर्धते = शारीरिकमानसिकसमुन्नतिशीलः स्यात् । प्राणाग्निहोत्रवित् = प्राणाहुतिविधिविज्ञः । विप्रः = ब्राह्मणः । दाता = पक्वान्नदाता । धनधान्यादि सम्पत्तिशाली स्यात् ।

[ हिन्दी टीका ]

प्राणाहुति विधि से भोजनकर्त्ता ब्रह्मचारी प्रखरबुद्धि वाला है । वही ब्रह्मचारी घृतपक्क पूआ आदि या पायंस आदि के द्वारा प्राणाहुतिविधि से भोक्ता हो तो शारीरिक और मानसिक रूप से समुन्नतिशाली होता है । यदि प्राणाहुति विधि को जाननेवाला ब्राह्मण उस पक्कान्न का दाता हो तो धनधान्य आदि सम्पत्ति का भागी बनता है ।

[ मूलम् ]

भोजन–विध्यनन्तरं बौधायनः–

**स एवमहरहः सायं प्रांतश्च जुहुयादद्भिर्वा सायं जुहुयादिति प्राणाहुत्यभिप्रायम्।**

तथा,

**गृहस्थो ब्रह्मचारी वा[४] योऽनश्नँश्च[५] तपश्चरेत् ।**

**प्राणाग्निहोत्र[६]लोपेन[७] अवकीर्णी भवेत्तु सः ॥**

अन्यत्र प्रायश्चित्तात् प्रायश्चिते तदेव विधानम् ।'' तथा,

पा० ( १ ) ब्रह्मपुराणे इति ह. पु. पाठः । (१क) प्रजाद्यो । इति नित्यकृत्यार्णवपाठः । पूजाख्यो इति ह. पु. पाठः । (२) पश्वन्नैः इति नि. कृ. पाठः । (३) होत्रवान्–इति नि. कृ. । (४) च । (५) स्तु। (६) होम । (७) नावकीर्णी च भवेत्तु सः ।

प्राणाग्निहोममन्त्राँस्तु[1] निरुद्धो[2] भोजने जपेत् ।
त्रेताऽग्निपहोममन्त्रान्वै[3] द्रव्यालाभे यथा जपेत् ॥

गृहस्थोऽत्राहिताग्निः ।

अनड्वान् ब्रह्मचारी च आहिताग्निश्च ते त्रयः ।
अश्नन्त एव सिद्ध्यन्ति नैषां सिद्धिरश्नताम् ॥

इत्यापस्तम्बवचनात् । प्राणाग्निहोत्रम् = प्राणाहुतिः । त्रेता= गार्हपत्याहवनीयदक्षिणाग्निरूपमग्नित्रयम् । द्रव्यालाभे = अग्निहोत्र-विहितदध्यादि[4] द्रव्यालाभे[5] ।

## [ संस्कृत टीका ]

भोजनविध्यनन्तरमिति । भोजनविध्यनन्तरम् = भोजनविधिकथनान्तरम् । सः = स्नानादिना निवृत्तो भोक्ता । एवमेव = कृत प्राक्तनकर्मानुसारमेव । अहरहः =''सम्मृष्टोपलिप्ते देशे प्राङ्मुख उपविश्य'' इत्यादि पूर्व सूत्रोक्तदिशा प्रतिदिनम् । सायम् = रात्रौ । प्रातः = दिने च जुहुयात् = पञ्च प्राणाहुतीरिति शेषः । अद्भिर्वा सायम् = ''सायं भोजनासम्भवे अद्भिरेव प्राणाहुत्यादिकं सर्वं सम्पादनीयमि''ति वीरमित्रोदयः । जुहुयात् = आहुतीः दद्यादिति बौधायनवचनम् । प्राणाहुत्यभिप्रायम् = प्राणाहुतिषु अभिप्रायो यस्य तत् ।

गृहस्थ इति । गृहस्थः = गृहस्थपदेनात्र आहिताग्निर्विवक्षितः । अनड्वानित्याद्यग्रिमापस्तम्बवचनैकवाक्यत्वात् । ब्रह्मचारी = प्रथमा श्रमी वा । यः । अनश्नन् = अभुंञ्जानः । तपश्चरेत् = तपस्यामनुतिष्ठेत् । सः । प्राणाग्निहोत्रलोपेन = प्राणाहुतीनामप्रदानेन । तु । अवकीर्णी= अवकीर्णविहितप्रायश्चित्तार्हः स्यात् । अवकीर्णिनोऽवकीर्ण-प्रायश्चित्तस्य च परिभाषायां यथा मनुः –

---

पा० (१) 'तु' पदमत्राधिकं दृश्यते नि. कृत्यार्णवे । (२) द्धे । (३) दयैः इति ह. पु. पाठः । (४) क्वचिद् (प्रकाशिताचारादर्शपुस्तके वीरमित्रोदये च 'दध्यादि' पदं नास्ति । (५) भावे । नित्यकृत्यार्णवे हस्तलिखित पुस्तके च 'दध्यादि' इति पदं दृश्यते । अतएव मयापि मूले तथा सन्निवेशितम् ।

कामतो रेतसः सेकं व्रतस्थस्य द्विजन्मनः ।
अतिक्रमं व्रतस्याहुर्धर्मज्ञा ब्रह्मवादिनः ॥ ( ११।१२० )
एतस्मिन्नेनसि प्राप्ते वसित्वा गर्दभाजिनम् ।
सप्तागारांश्चरेद् भैक्षं स्वकर्म परिकीर्त्तयन् ॥ ( ११।१२२ )

एतयोः मन्वर्थमुक्तावली यथा—"अप्रसिद्धत्वादवकीर्णवतो लक्षणमाह-कामत इति । इच्छातो द्विजः, अवकीर्णी भवेद् गत्वा ब्रह्मचारी च योषितम् ' (या० स्मृ० प्रा० ५।२८१) इति वचनात्स्त्रीयोनौ शुक्रोत्सर्गं ब्रह्मचर्यस्यातिक्रममवकीर्णरूपं सर्वज्ञा वेदविदः प्राहुः ।।(११/१२०) इति ।

एतस्मिन्निति । एतस्मिन्नवकीर्णाख्ये पाप उत्पन्ने पूर्वोक्तं गर्दभयागादि-कृत्वा 'गर्दभचर्म परिधाय' इति हारीतस्मरणात्स गर्दभसम्बन्धि-चर्मप्रावृतोऽवकीर्ण्यहमिति स्वकर्मख्यापनं कुर्वन् सप्त गृहाणि भैक्षं चरेत्" (१२१) इति च ।

एवञ्च प्राणाग्निहोमलोपनिन्दैषा मन्तव्या ।

नन्वेवं सति पञ्चाहुतिलोपे एव दोषः कल्प्यताम्, नेतरग्रासलोपे, यथाऽग्निहोत्रहोमे हुतशेषप्रशानाभावे दोषो नास्ति तद्वदेतदपीति चेन्न । वचनेन स्पष्टतः अनशनप्रतिषेधप्रतिपादनात् सामान्यतोऽशनाभावे एव निन्दाया मन्तव्यत्वात् ।

अन्यत्रेति । "अन्यत्र प्रायश्चित्तात् = उपवासरूपात् नक्ताच्च प्रायश्चित्तादन्यत्र । तत्र हेतुः । प्रायश्चित्ते तदेव विधानम् = अनशनमेव विशिष्य विहितम् । तेनेदमुक्तं भवति—यत्राहिताग्न्युद्देशेन उपवासविधिः तत्रैवोपवासे कर्मणि तस्याधिकारो नान्यत्रेति । आहिताग्निरनड्वांश्चेत्यस्याप्ययमेवार्थ इति कल्पतरौ तात्पर्योपेतोऽर्थः" इति वीरमित्रोदयः । इतोऽधिकमत्रैव द्रष्टव्यम् ।

प्राणाग्निहोमेति । भोजने = भोजनसमये । निरुद्धः = अवरुद्ध प्राणवायुः । तु । प्राणाग्निहोममन्त्रान् = ॐ प्राणाय स्वाहे त्यादिमन्त्रान् जपेत् । वीरमित्रोदये तु- निरुद्धे इति पाठं मत्वा निरुद्धे भोजने = "भोजनार्हत्वे

सत्येवान्नादयसम्भवादेर्भोजने निवृत्ते'' इति व्याख्यातम् । द्रव्यालाभे=अग्निहोत्रविहित दध्यादिद्रव्यालाभे–अग्निहोत्रहवनीयदध्यादिद्रव्याभावे इतियावत् । त्रेताऽग्निहोममन्त्रान् = त्रीन् भेदान् एति-प्राप्नोतीति पृषोदरादित्वात्साधुत्वे प्रकृते त्रयोऽग्नयस्त्रेता, गार्हपत्यादयः, तथा चामरकोशोऽपि 'दक्षिणाग्निर्गार्हपत्याहवनीयौ त्रयोऽग्नयः । अग्नित्रयमिदं त्रेता, (२।७।१९-२०) इति । 'त्रेता युगेऽग्नित्रये च' इति तु हैमः । ''क्वचित्तु त्रयाणां द्वन्द्वः । एकैकम्–अग्निविशेषस्य नामे'' त्यमरकोशस्य रामाश्रमी व्याख्या । एषामग्नीनां परिचये शब्दकल्पद्रुमो यथा–

(अ) ''गार्हपत्यः –गृहपतिर्यजमानस्तेन संयुक्त इति ।। गृहपतिना संयुक्ते ञ्यः (४।४।९०) । गृहपति गृहस्वामी तेन नित्यसम्बद्धः इत्यमरभरतौ । यज्ञीयाग्निविशेषः । यथा–ऋग्वेदे–(१०। ८५ । २६) ''इह प्रियं प्रजया ते समृध्यतामस्मिन् गृहे गार्हपत्याय जागृहि'' इति । भक्तिवर्धनाय पिताऽपि गार्हपत्याग्नित्वेन पुत्रादिना वेदितव्य इत्युपदिदेश भगवान् मनुः–यथा-'पिता वै गार्हपत्योग्नि र्माताऽग्निर्दक्षिणः स्मृतः' इति (२।२३१) ।

(इ) आहवनीयः– (आहूयते-आज्यादिरस्मिन्) आङ्+हु+अनीयर। यज्ञाग्निविशेषः । गार्हपत्यादुद्धृत्य होमार्थं संस्क्रियते स इति भरतः । यथा मनौ (२।२३१) 'गुरुराहवनीयस्तु साग्नित्रेता गरीयसी' ।

(उ) दक्षिणाग्निः–दक्षिणः=अनुकूलोऽग्निः । यज्ञाग्निविशेषः इत्यमरः (२/७/१९) । दक्षिणस्या दिशोग्निर्दक्षिणाग्निः इति भरतः । अस्य नामकरणं यथा–

दत्तासु दक्षिणास्वादौ तृप्तिर्भूत्वा यथाऽमरान् ।
नयसे दक्षिणाभागं दक्षिणाग्निस्ततोऽभवत् ॥

(ए) त्रेता–त्रीन् भेदानेति प्राप्नोतीति । यद्वा त्रित्वमिता त्रेता, स्त्री । पृषोदरादित्वात्साधुः । एतन्निरुक्तिर्यथा हरिवंशे (२०५/५) 'त्रिधा प्रणीतो ज्वलनो मुनिभिर्वेदपारगैः । अतस्त्रेतात्वमापन्नो यदेकस्त्रिविधः स्मृतः'।। दक्षिणाग्निः गार्हपत्याग्निः आहवनीयः एकोक्त्या इदमग्नित्रयम् । इत्यमर :

(२।७।२०)'' इति । एषाम् । होममन्त्रान् = ऋग्वेद (१०।८५।२७) प्रदर्शित--''इहप्रियं प्रजया ते समृध्यतामस्मिन् गृहे गार्हपत्याय जागृहि''इत्यादि होममन्त्रान् । यथा जपेत् = यथाक्रमं यथाशक्तिचजपेत् ।।–इति शब्दकल्पद्रुमः।

आहिताग्निः = स्वगृहे सर्वदैव स्थापितसंस्कृताम्निः । अनड्वानिति । ''अनुडुद्ग्रहणं दृष्टान्तार्थम् । नैतेषां परिमितमित्येतत्सिध्यति । कर्मकर्त्तृत्वेनानशनतामेषां न सिद्धिः कर्मणः । उपवास-प्रतिषेधो वाऽयम् । आहिताग्नेः ब्रह्मचारिणश्चोपवासे सति शुश्रूषायाः कर्मणश्च लोप-प्रसङ्गात्'' इत्यापस्तम्बसूत्रसमानबौधायनधर्मसूत्रव्याख्यायां गोविन्द-स्वामिनः। ग्रास-विषये आपस्तम्बबौधायनौ यथा–

**अष्टौ ग्रासा मुनेर्भक्ष्याः षोडशारण्यवासिनः ।**
**द्वात्रिंशतं गृहस्थस्यापरिमितं ब्रह्मचारिणः ।। इति ।**

एवञ्च ब्रह्मचारिणो ग्रासानां परिमाणसंख्यानियमो नास्तीत्यर्थः ।

## [ हिन्दी टीका ]

भोजनविधि कहने के बाद बौधायन सूत्र का कहना है कि स्नानादि कृत्या से निवृत्त हो भोक्ता गोवर और मिट्टी से लिपी भूमि पर पूरब मुंह हो आसन पर बैठकर दिन की प्राणा हुतियों (भोजन) के जैसे रात में आहुतियाँ दें । अर्थात् भोजनक्रिया सम्पन्न करें.। यदि साय काल भोजन सामग्री न मिल सके तो जल से ही प्राणाहुति आदि सभी कार्य का सम्पादन करें । तथा,

(आहिताग्नि) गृहस्थ अथवा ब्रह्मचारी ये बिना भोजन के तपस्या न करे । क्योंकि प्राणाहुति (भोजन) के लोप कर देने से वे अवकीर्णी (व्रतभ्रष्ट) हो जाते हैं । अर्थात् मनु (११।१२०। १२२) तथा याज्ञवल्क्यस्मृति प्रायश्चित्त प्रकरण (५।२८१) के अनुसार जिस द्विजब्रह्मचारी के द्वारा ज्ञानपूर्वक स्त्रीप्रसंग (स्त्रीयोनि में शुक्रोत्सर्ग) किया जाता है वह अवकीर्णी-अवकीर्णनामक प्रकृतपापवाला-कहलाता है । ऐसा पाप (अवकीर्ण) प्राप्त होने पर वह ब्रह्मचारी गदहे के चमडे को पहन कर और (पूर्वोक्त गर्दभयज्ञ करके) अपने कर्म को कहता हुआ सात घरों से भिक्षा मांग कर लावे इत्यादि रूप से कहे गए अवकीर्ण (पाप) सम्बन्धी प्रायश्चित्त का भागी (योग्य) प्राणाग्निहोत्र लोप कर्त्ता बन जाता है । इस तरह यहाँ प्राणग्निहोमलोप की कही गई निन्दा समझनी चाहिए ।

यहाँ ऊपर से शङ्का की जा सकती है कि जैसे अग्नि होत्र होम में हुतशेष के प्राशनाभाव में कोई दोष नहीं माना जाता है उसी तरह प्रकृत में अभी ही पूर्वोक्तदोष (निन्दा) प्राणाहुति होम के लोप में मान लिया जाय, न कि इसके बाद होने वाले भोजन के लोप (अभाव) में भी । किन्तु यह कल्पना करना इसलिए उपयुक्त नहीं होगा कि अभी आगे मूल में ''अश्नन्त एव सिध्यन्ति नैषां सिद्धिरनश्नताम् '' इत्यादि रूप से कहे जाने वाले आपस्तम्ब के इस वचन के अनुसार स्पष्टरूप से भोजनाभाव का ही प्रतिषेध (निषेध) कहा गया है । अतः सामान्यतः यह निन्दा भोजनाभाव में ही मत्तव्य है ।

आहिताग्नि गृहस्थ के उद्देश्य से जो उपवास विहित है उसी उपवास में इसका अधिकार है, अन्यत्र नहीं ।

भोजन के समय प्राणवायु को रोक कर 'प्राणाय स्वाहा' आदि प्राणाग्नि होम मन्त्रों का जप करें । यदि प्राणाग्नि होम के लिए विहित दही, घृत आदि हविष्यान्न न मिल सकेतो गार्हपत्य, आहवनीय, एवं दक्षिणाग्नि रूप तीनों अग्नियों के शास्त्रप्रतिपादित मन्त्रों का यथाक्रम तथा यथाशक्ति जप करे ।

उक्त तीनों अग्नियां का संक्षिप्त परिचय संस्कृतशब्दार्थकौस्तुभ के अनुसार यों है–

(अ) गार्हपत्य–अग्निहोत्रका अग्नि, तीन प्रकार के अग्नियों में से एक।

(इ) आहवनीय–गहिपत्याग्नि से हवन करने योग्य लिया हुआ अभिमन्त्रित अग्नि, जो यज्ञमण्डपमें पूर्वदिशा में स्थापित किया जाता है ।

(उ) दक्षिणाग्नि–अन्वाहार्यपचन । यज्ञाग्नि जो दक्षिण दिशा में स्थापित की जाती है ।

इसी का कुछ विशद परिचय वामन शिवराम आपटे कृत 'संस्कृत हिन्दी कोश' पृ. सं. ३४३ के अनुसार यों है–

(अ) गार्हपत्य–गृहपति के द्वारा स्थायी रूप से रक्खी जाने वाली तीन यज्ञाग्नियों में से एक । यह अग्नि पिता से प्राप्त की जाती है तथा सन्तान को सौंप दी जाती है । इसी से यज्ञ में अग्न्याधान किया जाता है ।

(इ) आहवनीय–आहुति देने योग्य–गार्हपत्याग्नि ली हुई अभिमन्त्रित अग्नि, तीन अग्नियों में से एक (पौर्व) जो यज्ञ में प्रज्वलित की जाती है ।

(उ) दक्षिणाग्नि–दक्षिण की ओर स्थापित होने वाली अग्नि । इसको 'अन्वाहार्यपचन' भी कहते हैं ।

यहाँ ऊपर से वास्तव में ज्ञातव्य है कि "यो गार्हपत्यादानीय दक्षिणाग्निः प्रणीयते । तस्मिन्नानाय्यः" (२।७।२१) इस अमरकोश के अनुसार यह दक्षिणाग्नि भी आहवनीयाग्नि के जैसे ही मूल पैतृक गार्हपत्य-अग्नि से ही लेकर यज्ञ में स्थापित की जाती है ।

अब निष्कर्षतः सिद्ध हुआ कि ऋग्वेद (१०/८५/२७) में "इह प्रियं प्रजायते समृध्यतामस्मिन् गृहे गार्हपत्याय जागृहि" इत्यादि होममन्त्रों का जप करें ।

इससे विशेष जिज्ञा सुजन वहाँ के ग्रन्थ का अवलोकन करें ।

मूल के उक्त बौधायन वचन में पठित गृहस्थ पद का अर्थ आहिताग्नि गृहस्थ है । क्योंकि आपस्तम्ब (तथा प्रक्षि प्तबौधायन) वचन का स्पष्ट प्रतिपादन वैसा ही है । यथा—भारवाही बैल ब्रह्मचारी तथा आहिताग्नि गृहस्थ ये तीनों भोजन करने पर ही स्वकार्यक्षम होते हैं । भोजन के अभाव में कर्म करने वाले इनके कर्मों की सिद्धिन हीं हो सकेगी । अतः कर्म लुप्त न हो इस दृष्टि से इन्हें उपवास नहीं करना चाहिए । प्रकृत वचन में बैल का कहा जाना दृष्टान्तरूप में समझना चाहिए ।

यहाँ ऊपर से आपरत्तम्ब एवं बौधायन के वचनानुसार ज्ञातव्य है कि मुनियों को ८, वानप्रस्थियों को १६, तथा गृहस्थों को ३२ ग्रास (गास-कौर) भोजन करना चाहिए । किन्तु ब्रह्मचारियों के लिए ग्रास की संख्या तथा परिमाण का कोई नियम नहीं है ।

## [ मूलम् ]

मनुः—

सायं प्रातर्द्विजातीनामशनं देव-निर्मितम् ।
नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः ॥

अन्तराभोजननिषेधो मूलफलादन्यत्र । तथा चापस्तम्बः—

दिवा च न भुञ्जीतान्यत्र फलमूलेभ्यः ।

चकारः पुनरर्थे । छन्दोगपरिशिष्टे—

ऋषिभि र्द्विरशनमुक्तं विप्राणाम[२] प्रवासिनां नित्यम् ।
अहनि च तथा तमस्विन्यां सार्धप्रहर यामान्तः ॥

पा० (२) विप्राणां मर्त्यवासिनां सततम् ।

अहनीति–सति सम्भवे पञ्चमभागपरं दक्षदर्शनात् । तमस्विन्याम् = रात्रौ । सार्धप्रहरयामान्तः = अर्धप्रहरसहितप्रथमप्रहराभ्यन्तरे । एवञ्च मन्वादावपि सायं प्रातश्चेत्येतदनुसाराद् व्याख्येयम् ।

[ संस्कृत टीका ]

सायमिति । सायंप्रातः = रात्रौ दिवसे चेत्यर्थः । ऋषिभिरित्यग्रिम-छन्दोगपरिशिष्टवचनात् । द्विजातीनाम् = द्विजानाम्–मनुष्याणामिति यावत् । अशनम् = भोजनम् । देवनिर्मितम् = वैश्वदेवादिदेवनिमित्तं भवति । तेनान्नेन पञ्चमहायज्ञान्तर्गतानां यज्ञानां सम्पादनात् । अतएव–

तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ।
यज्ञशिष्टाशिनः सन्तो मुच्यन्ते सर्वकिल्बिषैः ॥
भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकारणात् ।

इति भगवद्गीता–वचनमपि (३/१२/१३) ।

अन्तरा = मध्ये–उभयभोजनसमययोर्मध्ये इति यावत् । भोजनम् = अशनम् । न कुर्यात् । अयञ्च भोजन–निषेधः फलमूलभक्षणादन्यत्रैव ज्ञातव्यः । "दिवा चे" त्यापस्तम्बवचनात् । तथाहि–दिवा=दिससे । च = पुनः । फलमूलेभ्यः । अन्यत्र=अन्यत् । न भुञ्जीत = भक्षयेत् ।

अत्र चकारः पुनःशब्दार्थे । "अत्र प्राञ्चः–दिवापुनर्भोजननिषेधो विवाहादूर्ध्वं नतूपनयनमात्रेण पाणिग्रहणादधिगृहमेधिनोर्व्रतं कालयोर्भोजनं तृप्तिश्चान्नस्ये त्यापस्तम्बवचनादिति वदन्ती''ति नित्यकृत्यरत्नमाला । अथवा चकारः समुच्चयार्थो बोध्यः । तेन चकाराद्रात्रिः नेया । पुनरित्यत्र शेषः करणीयः । एवञ्च दिवा रात्रौ च "पुनः न भोक्तव्यमित्यर्थः । अतएव पुनरिति शेषः । चकारात् रात्रावपि पुनः न भोक्तव्य मिति'' वीरमित्रोदयः ।

विधिः = उक्तभोजनविधिः । अग्निहोत्रसमः = अग्निहोत्रनामक-यागविशेषसमानः– मन्त्रपूर्वकमग्निं संस्थाप्य सायं प्रातः नियमेन क्रियमाणत्वेन

होमसम इति यावत्। अतएव दिवा रात्रौ च क्रियमाणत्वेन अग्निहोत्रसमत्वमिति वीरमित्रोदयोऽपि।

छन्दोगपरिशिष्टे इति। दिवसे एकवारं रात्रावेकवारमिति कृत्वा दिवा रात्रौ च द्विवारमेव नियतसमयाभ्यन्तरे भोक्तव्यमिति प्रतिपिपियिषुराह ऋषिभिरिति। ऋषिभिः = मन्त्रद्रष्टृभिस्तपोनिधिभिः। अहनि = सति सम्भवे दिवसस्य पञ्चमे भागे "पञ्चमे च तथा भागे संविभागो यथाऽर्हतः" इति दक्षवचनात्। एतदसम्भवे सन्ध्यामध्याह्नार्धरात्रादिनिषिद्धकालादन्यभागेऽपि। सायंप्रातः शब्दावेतत्परावेव। एकवाक्यतानुरोधात्। अतएव "दक्षेण पञ्चमकाले भोजनमुक्तं तथापि तददृष्टार्थम्। तेनानिषिद्धकाले वैधं कर्म कृत्वा प्रातरपि भोक्तव्यमेव। अतएव 'सायं प्रातर्मनुष्याणामशनं देवनिर्मितम्' इत्यपि घटते इति द्वैतपरिशिष्टम्। एवं स्मृतिसार छन्दोगाह्निक स्वरस इति नित्यकृत्यार्णवः। तथा, तमस्विन्याम् = रात्रौ। सार्धप्रहरयामान्तः = अर्धप्रहर सहितप्रथम-प्रहराभ्यन्तरे। अतएव रात्रौ प्रथमसार्धप्रहरयामाभ्यन्तरे द्वितीयमशन-मित्याचारचिन्तामणिरपि। अप्रवासिनाम् = स्वगृहवर्त्तिनाम्। अत्र"क्वचिन्मर्त्यवासिनामित्यत्र अप्रवासिनामिति पाठः। स्वगृहस्थिताना-मिति तदर्थः। एवञ्च प्रवासंस्थितानां नैष नियमः इति नित्यकृत्यरत्नमाला। विप्राणाम् = द्विजानामित्यर्थः। उक्तमनुवचनैकवाक्यत्वात्। नित्यम् = प्रत्यहम्। द्विरशनम् = द्विर्भोजनम्। उक्तम् = कथितम्। एवञ्च प्रकृतवचने अहस्तमस्विनीशब्ददर्शनात् तदेकवाक्यतया उक्त-मनुवचनादावपि सायं प्रातः शब्दौ प्रकृतग्रन्थानुसारं रात्रि दिवसपरौ व्याख्येयौ। अत्र "पृथुकादि-भोजनञ्चोभयत्र निषिद्धं, प्राणाहुतिमच्च। भक्तपदेन फलमूलाद्यन्यतर्पकाभि-धानात्। स्त्रीशूद्रयोस्तु नान्तराभोजननिषेधः। अग्निहोत्रसमत्वाभिधानेन-तदधिकारि विषयत्वात्। अतएव विभक्तकनिष्ठभ्रात्रादेरनुपनीतस्य न निषेधः। जलञ्चोभयत्र दिवसभोजनात्पूर्वं निषिद्धम्। तदनन्तरञ्च कार्यमेव। 'अभुक्ते भुंक्तवत्पीतं भुक्ते पीतमपीतवत्' इति वचनादित्याकलयामः इति स्मृतिदीपिके"ति नित्यकृत्यार्णवः।

[ हिन्दी टीका ]

द्विजातियों अर्थात् मनुष्यों का भोजन रात और दिन में एक एक बार का होना चाहिए। यह भोजन देवताओं के लिए बनाया गया हुआ होता है। (क्योंकि उसी अन्न के कुछ हिस्से से पञ्चमहायज्ञ के अन्तर्गत चार पाकयज्ञ सम्पन्न किये जाते हैं, जैसा कि भगवद्गीता ( ३।१२-१३ ) का भी कहना है कि इस प्रकार उन देवताओं के द्वारा दिये हुए भोगों को जो व्यक्ति उनको बिना दिये स्वयं भोगता है, वह चोर है। यज्ञ से बचे हुए अन्न को खानेवाले श्रेष्ठ पुरुष सब पापों से मुक्त हो जाते हैं और जो पापी लोग अपना शरीर-पोषण करने के लिए ही अन्न पकाते हैं वे तो पाप को ही खाते हैं।

इन दोनों भोजनों के बीच में पुनः नहीं खाना चाहिए। ऊपर कहा गया भोजनविधि अग्निहोत्र (यागविशेष या मन्त्र पूर्वक अग्निस्थापन कर सायं प्रातः नियम से किया जाने वाला होम) के समान है। फलतः यह भोजन दिन और रात्रि में ही होने के कारण अग्निहोत्र के समान कहा गया है।

(यहाँ नित्यकृत्यरत्नमाला में उद्धृत प्राचीनों के मतानुसार बौधायन वचन के आध ार पर ऊपर से ज्ञातव्य है कि दिन में पुनः यह भोजननिषेध विवाह के बाद ही लागू होना चाहिए न कि उपनयन हो जाने से द्विजाति बन जाने पर भी)।

किन्तु यह मध्य का भोजननिषेध फल एवं मूल के भक्षण से अन्यत्र के लिए समझना चाहिए क्योंकि इस प्रसंग पर आपस्तम्ब का कहना है कि फल-मूल के अतिरिक्त दिन (तथा रात्रि) में पुनः कुछ भी नहीं खाना चाहिए।

यहाँ छन्दोगपरिशिष्ट में कात्यायन का कहना है कि संभव हो तो दिन के पाँचवे भाग तथा रात में डेढ़ प्रहर के भीतर ही अप्रवासी (अपने घर में रहने वाले) द्विजातियों को नित्य दो बार भोजन कर लेना चाहिए ऐसा ऋषियों ने कहा है।

इस छन्दोगपरिशिष्ट वचन में 'अहन्' एवं 'तमस्विनी' शब्द के उपादान से उक्त मन्वादि वचनों में आये हुए सायं प्रातः शब्दों का अर्थ एकवाक्यता के आधार पर दिन तथा रात्रि कर लेना चाहिए। यहाँ तक प्रकृत ग्रन्थ का हिन्दी अर्थ हुआ।

ऊपर से ज्ञातव्य है कि इस वचन में पठित 'अप्रवासी' पद के उपादान से सूचित होता है कि वचनप्रतिपादित नियम प्रवासियों (परदेशियों) के लिए प्रभावी नहीं होता है।

नित्यकृत्यार्णव में उद्धृत द्वैतपरिशिष्ट एवं स्मृतिसार तथा छन्दोगाह्निक के स्वरस के अनुसार ज्ञातव्य है कि यद्यपि सम्भव हो तो दक्षवचन के आधार से दिन के पाँचवे

भाग में भोजन करना चाहिए। तथापि उसे अदृष्टार्थ होने के कारण ऐसा न होने की स्थिति में सन्ध्याकाल-मध्याह्न-अर्धरात्रि आदि निषिद्ध से अन्य काल में भी वैध कर्म करके प्रातः आदि काल में भी भोजन करना ही चाहिए। अतएव "सायंप्रातर्मनुष्याणाम्" आदि मनुवचन में भी सायं तथा प्रातः पद का उपादान संघटित होता है। यहीं (नित्यकृत्यार्णव में) उद्धृत स्मृतिदीपिका में वामदेवोपाध्याय का विवेचन है कि दिन के मुख्य अन्नाहार या फलाहार के बाद दोनों ही स्थितियों में चिउड़ा आदि का भक्षण निषिद्ध है। क्योंकि प्राणाहुति की सामग्री में फलमूल से अन्य सभी वस्तु तृप्ति साधक हैं। स्त्री और शूद्रों के लिए मध्य भोजन का यह निषेध मान्य नहीं होगा। क्योंकि उक्त मनुवचन में "अग्निहोत्रसमो विधिः" पढ़े जाने से इस अग्निहोत्र के अधिकारियों के लिए ही निषेध का तात्पर्य मन्तव्य होगा। इसी हेतु अविभक्त (अलग न हुआ) छोटे भाई आदि तथा अनुपनीत कुमारों के लिए भी अन्तरा-भोजन का निषेध नहीं होगा। दिन के मुख्य फलाहार या अन्नाहार के पहले पानी पीना निषिद्ध है। हाँ, भोजन के बाद तो पीना ही चाहिए, ऐसा समझने में आता है।

## [ मूलम् ]

हारीतः-

न कार्ष्णायसे न मृत्पात्रे, न भिन्ने नावकीर्णे।

कार्ष्णायसे= लौहपात्रे। भिन्ने = स्फुटिते। अवकीर्णे = शूद्रभोजनादिनाऽपवित्रीकृते।

## [ संस्कृत टीका ]

न कार्ष्णायसे इति। अवकीर्णे = शूद्रभोजनादिनाऽपवित्रीकृते इत्याचारचिन्तामणिः। अवकीर्णे = दुष्टभोजनाद्यपवित्रीकृते इति रत्नाकरः। मृत्पात्रे=शरावादौ। अवकीर्णे = दुर्ब्राह्मणादिभोजनादिना अपवित्रीकृत इति कल्पतरुरिति नित्यकृत्यार्णवः। अवकीर्णे = शूद्रभोजनादिनाऽपवित्रिते इत्येव वीरमित्रोदयोऽपि। न। अश्नीयादिति पूर्वक्रियासम्बन्धः। अन्यद् वचनव्याख्यायां मूले एव स्पष्टम्।

[ हिन्दी टीका ]

लोहे के या मिट्टी के या फूटे हुए पात्र या अवकीर्ण (आचारादर्श, आचार चिन्तामणि एवं वीरमित्रोदय के अनुसार शूद्रभोजन आदि के द्वारा, रत्नाकर निबन्ध के अनुसार दुष्टजन के भोजन आदि के द्वारा, किन्तु कल्पतरु के अनुसर दुर्ब्राह्मण आदि के भोजन आदि के द्वारा अपवित्र किये गए पात्र में अन्न आदि रख कर न खाये ।

[ मूलम् ]

मनुः–

न भिन्नभाण्डे भुञ्जीत न भावप्रतिदूषिते ।

पैठीनसिः–

ताम्र-रजंत-सुवर्ण-शङ्खमुक्ताऽश्म-स्फटिकानाम् ।

न भिन्नदोष इति शेषः ।

[ संस्कृत टीका ]

न भिन्नभाण्डे इति । अत्र 'ताम्र-रजत-सुवर्णानां भिन्नमभिन्नं वेति न दोषः' इति पैठीनसिवचनादेतद्व्यतिरिक्तभिन्नभाण्डे न भोजनं कुर्यात् । यत्र मनो विचिंकित्सति तद् भावदुष्टं, तत्र न भुञ्जीत ।।४।६५।। इति मूल-मनुवचनस्य मन्वर्थमुक्तावली । ताम्रेति । सौवर्णादिपात्रेषु विशेषो व्यासेनाप्युक्तो यथा–

सौवर्णं राजतं ताम्रं पात्रं शुक्तिज-शङ्खजे ।
अश्मजं स्फाटिकञ्चैव न भेदाद्दोषमर्हति ॥ इति

[ टिप्पणी ]

विशेषभोजनपात्राण्याह पैठीनसिः यथा–

सौवर्णे राजते ताम्रे पद्मपत्रपलाशयोः ।
भोजने भोजने चैव त्रिरात्रफलमश्नुते ॥
एकएव तु यो भुङ्क्ते विमले कांस्यभाजने ।
चत्वारि तस्य वर्धन्ते आयुः प्रज्ञा यशो बलम् ॥

एक एव तु यो भुङ्क्ते = यदि तस्मिन्पात्रेऽन्यः कदापि न भुङ्क्ते इत्यस्मिन् वचने ताम्रपात्रं गृहिव्यतिरिक्तविषयम्, गृहस्थस्य तन्निषेधात् । तथा च वृद्ध मनुः–

**ताम्र पात्रे न भुञ्जीत भिन्नकांस्ये मलाविले । इति ।**

कांस्यपात्रन्तु गृहस्थमात्रविषयं, यत्यादेस्तन्निषेधात् । यथाह प्रचेताः–

**ताम्बूलाऽभ्यञ्जनं चैव कांस्यपात्रेऽन्नभोजनम् ।**

**यतिश्च ब्रह्मचारी च विधवा च विवर्जयेत् ।। इति ।**

घृतादन्यद्गव्यं ताम्रपात्रस्थं दुष्टमाह वृहद्धर्मसंहितायां व्यासः–

**गव्यञ्च ताम्रपात्रस्थं मद्यतुल्यं घृतं विना । इति ।**

**[ हिन्दी टिप्पणी ]**

भोजन विशेष पात्र प्रसंग पर पैठीनसि का वचन है कि सोना, चाँदी, ताँबा, पद्मपत्र तथा पलाशपत्र पर एक एक बार के भोजन में तीन रात्रि तक के व्रत करने का फल प्राप्त होता है । जिस कांस्यपात्र में कभी भी दूसरा भोजन न करता हो उस विमलपात्र में भोजन करने से आयु, बुद्धि, यश, तथा बल बढ़ते हैं ।

काँसे का पात्र केवल गृहस्थ के लिए विहित है । क्योंकि संन्यासी आदि के लिए निषेध कहा गया है । जैसा कि प्रचेता का कथन है– "संन्यासी, ब्रह्मचारी और विधवा पान, सुरमा तथा काँसे के पात्र में अन्न का भोजन विशेषतः छोड़ दे ।" ताम्रपात्र में गृहस्थ से इतरजन ही भोजन करे । क्योंकि इन के लिए निषेध है । जैसा वृद्धमनु का वचन है:–

"गृहस्थ न तो ताम्रपात्र, फूटे कांस्यपात्र और नाही मैले पात्र में भोजन करे ।" "घृत से अन्य गव्य पदार्थ–गोविकार (गाय का दूध, दही, मूत्र या गोवर) यदि ताम्रपात्र में रखा जाय तो वह मदिरा समान हो जाता है ।" ऐसा बृहद्धर्मसंहिता में व्यास का वचन है ।

**[ हिन्दी टीका ]**

फूटे पात्र में तथा जिस पात्र में खाने से मन हिचकता हो उसमें भी न खायें । यह मनुवचन का अर्थ हुआ । ताँबा, चाँदी, सोना, शंख , मुक्ता( फल), पत्थर, तथा स्फटिक के पात्रों में फूटापन का दोष नहीं लगता है । यह पैठीनासि वचन का अर्थ हुआ ।

सारांश हुआ कि इन फूटे हुए ताँबे आदि के पात्रों से इतर फूटे पात्रों में नहीं खाना चाहिए ।

[ मूलम् ]

अत्र विष्णुपुराणे–

नासन्दीस्थिते पात्रे ।

आसन्दी = वेत्रादिनिर्मितमुच्चं[1] मासनम् ।

[ संस्कृत टीका ]

नासन्दीति । सम्पूर्णवचनं यथा–

नासन्दीस्थिते पात्रे नादेशे च नरेश्वर ।
नाकाले नातिसङ्कीर्णे नादत्त्वाऽग्रं नरो ग्रसेत् ॥

अदेशे=रथ्यादौ । अकाले = सन्ध्यादौ । अग्रम् = अग्रं ग्रासचतुष्टयमिति प्रसिद्धम् । आसन्दी = मञ्चिकेत्याचारचिन्तामणिः ।

[ हिन्दी टीका ]

बेंत आदि के बने ऊँचे आसन (कुर्सी, टेबुल, खटिया, मचान आदि) पर स्थित पात्र में भोजन न करें । यह मूल वचन का अर्थ है । अग्रिम अवशिष्ट वचन का अर्थ है–गली आदि गन्दी जगह पर, सन्ध्या आदि निषिद्ध समय में, अति सङ्कीर्ण स्थान पर तथा विना चार ग्रास भोजनीय पदार्थ प्राणी को दिये भोजन न करें । ।

[ मूलम् ]

विष्णु :–

न भुवि, न पाणौ । पाणिना यल्लवणं[2] दद्यान्न तदश्नीयात् ।

---

पा० ( १ ) हस्तलिखित पुस्तके ''मुच्च'' इति पाठो नास्ति ।

पा० ( २ ) प्रकाशिताचारादर्शपुस्तके नितरामसम्बद्धो विद्यते पाठः । यथा–''न भुवि पाणौ लवणम् ।'' हस्तलिखितपुस्तकेऽपि ''न भुवि न पाणौ लवणम्'' इत्येवपाठः । वीरमित्रोदये तु यत्तुपाणौ दद्यात् न तदश्नीयात् इति पाठः तथापि सटिप्पण प्रकाशितच्छन्दोगाह्निकानुसारं मूले मया स्थापितोऽस्ति तथा पाठः ।

[ संस्कृत टीका ]

न भुवीति । न । भुवि = भूमौ । न । पाणौ = करे । अश्नीयादिति पूर्वक्रियाऽभिसम्बन्धोऽत्र । पाणिना यल्लवणमिति । अत्र "अत्र प्रकृत्यादित्वादवच्छेदे तृतीया । पाणाविति तदर्थः पर्यवस्यति। 'प्रकृत्यादि-गणाज्जाता तृतीयातु तदात्मताम् । अवच्छेदकताबुद्धि-प्रकारत्वादि शंसति ।' इति हर्युक्तेरि" ति छन्दोगाह्निकस्य मुकुन्द झा कृता सङ्क्षिप्ता टिप्पणी ।

[ हिन्दी टीका ]

भूमि या हथेली पर अन्न रखकर न खाये । इसी तरह हाथ पर किसी का दिया हुआ नमक भी नहीं खाना चाहिए ।

[मूलम्]

वसिष्ठः-

**भार्यया सह[1]नाश्नीयादवीर्यवदपत्यं भवतीति वाजसनेयिके विज्ञायते ।**

ब्राह्मपुराणे-

**ब्राह्मण्या भार्यया सार्धं क्वचिद् भुञ्जीत चाध्वनि ।**
**असवर्ण-स्त्रिया सार्धं भुक्त्वा पतति तत्क्षणात् ॥**

ब्राह्मणी पदं सवर्णोपलक्षणम् ।

[ संस्कृत टीका ]

भार्ययेति । भार्यया सह = पत्न्या साकम् । न । अश्नीयात् = भुञ्जीत । (यतः) अवीर्यवत् = शक्तिहीनम् । अपत्यम् = सन्ततिः । भवतीति । वाजसनेयिके = शुक्लयजुर्वेदे । विज्ञायते । अतएव मनुरपि (४।४३) नाश्नीयाद् भार्यया सार्धं नैनामीक्षेत चाश्नतीम् इति । ब्राह्मण्येति । ब्राह्मण्या=भर्तृसमानवर्णया । भार्यया=पत्न्या। सार्धम् = साकम् । सार्धमिति परस्परसाम्मुख्येन सहोपवेशनरूपमिति नित्यकृत्यार्णवः । क्वचिदध्वनि = आपत्कालीनमार्गे । भुञ्जीत = अश्नीयात् । (किन्तु) असवर्णस्त्रिया =

पा० (२) ह. पुस्तके 'सह' इति पाठो नास्ति (२) नित्यकृत्यार्णवे –'दपत्या भवतीति' एतावन्मात्रं पाठोऽस्ति ।

भर्त्तुरसमानवर्णया भार्यया । सार्धम् । भुक्त्वा = एकस्मिन् पात्रे अशित्वा । पतति= पातित्ययुक्तो भवति ।

अत्र ब्राह्मणीपदम् । सवर्णोपलक्षणम् =भर्त्तृसवर्णायाः बोधकम् । अग्रे असवर्णेत्यभिधानात् उक्त–वचनार्थपरे अङ्गिरसोऽपि वचने यथा–

भार्यया सह योऽश्नीयादुच्छिष्टं वा कदाचन ।
न तस्य दोषं मन्यन्ते नित्यमेव मनीषिणः ॥
उच्छिष्टमितरस्त्रीणां योऽश्नीयाद् ब्राह्मणः क्वचित् ।
प्रायश्चित्ती स विज्ञेयः सङ्कीर्णो मूढचेतनः ॥ इति ॥

अत्र ''ब्राह्मणीह पतिसवर्णा । इतरा = पत्यसवर्णा । तथा च कदाचित्सवर्णायाः पत्नयाः सहभोजने च न दोष'' इत्याचारचिन्तामणिः ।

[ हिन्दी टीका ]

भार्या के साथ आमने–सामने बैठकर एक पात्र में नहीं खाना चाहिए। क्योंकि इससे शक्तिहीन सन्तान उत्पन्न होती है । यह विषय शुक्ल यजुर्वेद से ज्ञात होता है । (इसी हेतु मनु (४/४३) का भी कहना है कि न तो भार्या के साथ खाये और नाही खाती हुई इसे देखें ही ) ।

आपत्ति के समय कभी मार्ग में अपने वर्ण (जाति) की भार्या के साथ खा सकते हैं । किन्तु विजातीय भार्या के साथ आमने–सामने होकर एक पात्र में भोजन करने पर उसी क्षण से वह पतित हो जाता है ।

मूल में आये हुए ब्राह्मणी पद पति के समान जाति वाली का बोधक है, न कि ब्राह्मणी रूप पदार्थ का ही । क्योंकि आगे वचन में असवर्ण पद कहा गया है ।

[ मूलम् ]

आपस्तम्बः–

न नावि भुञ्जीत तथा प्रासादे कृतभूमौ ( तु )[1] भुञ्जीत ।,

प्रासादे[2]= दारुबद्धतल इत्याहुः । कृतभूमौ = मृदादिप्रक्षेपेण[3] सम्पादित–भूमौ । नावि प्रासादे च ।

---

पा० (१) नित्यकृत्यार्णवोद्धृताचारानुसारं मयाऽपि मूले 'तु' इत्यधिकः पाठ प्रक्षिप्तः स्थापितः किन्तु वीरमित्रोदये 'तु भुञ्जीत' इति पाठो नास्ति । परं छन्दोगाह्निके तु कृतभूमौ च न भुञ्जीत इति पाठः । (२) दो । (३) प्रक्षेप इति च पाठः हस्तलिखितपुस्तके (३) नित्यकृत्यार्ण वोद्धृताचारादर्शे प्रक्षेपेण इति पाठो नास्ति ।

. [ संस्कृत टीका ]

न नावीति । अत्र ''आसीन इति शेष '' इति वीरमित्रोदयः । नावि = नौकायाम् । न भुञ्जीत । तथा = एवमेव । प्रासादे = केचन दारुबद्धतले इत्याहुः । अर्थात् दारुणा = त्वरितमेव चेच्छिद्यमानेन बेभिद्यमानेन वा काष्ठेन, केनापि वस्तुना वा । 'काष्ठं दारु' इत्यमर (२/४/१३) कोशस्य रामाश्रमी व्याख्यापि यथा–काष्ठं दारुणि काष्ठा च प्रकर्षे स्थानमात्रके । दिशि दारुहरिद्रायां कालमानप्रभिद्यपि ।। इति हैमः'' इति । एवमेव, संस्कृतशब्दार्थ-कौस्तुभोऽपि यथा–''दारु–(वि०) (दा, दो +रु) चटपट टूट या फूट जानेवाला'' इति । बद्धस्य = विरचितस्य गृहस्य मण्डपस्य वा । तले = अधोदेशे इत्यर्थः । दृष्टार्थोऽयं निषेधः । अथवा,देवानां राज्ञाञ्च गृहे । (हर्म्यादि धनिनां वासः, प्रासादो देवभूभुजामित्यमरः) । कृतभूमौ = मृदादिप्रक्षेपेण सम्पादितभूमौ च । यत्र प्रायः पाकव्यवस्था भवति । न । भुञ्जीत = अश्नीयात् । अत्र 'भुज्जीते' ति क्रियापदयोरुभयस्थलेऽपि एकस्यैव न पदस्य सम्बन्धः । मूले 'तु' पदस्य पाठेऽपि 'तु' पदं चार्थे बोध्यम् । छन्दोगाह्निकानुसारं ''कृतभूमौ च न भुञ्जीत'' इति पाठपक्षे तु न क्वापि व्याख्याकाठिन्यं न वा सुगमसरलार्थबोधे बाधो दृश्यते ।

देवभूभुजां वासस्थले (मन्दिरे) भोजननिषेधोऽन्यत्रापि यथा मूलेएव वक्ष्यमाणब्रह्मपुराणवचन-निचये–

श्मशानाभ्यन्तरगतो देवालयगतोऽपि वा । इति

राजगृहे भोजने दोषमाह यमः –

अधीत्य चतुरो वेदान् साङ्गोपाङ्गन् विशेषतः ।
नरेन्द्रस्य गृहे भुक्त्वा कृमियोनौ प्रजायते ।।
राजाऽन्नं हरते तेजः शूद्रान्नं ब्रह्मवर्चसम् ।। इति ।

एवमेव अप्रजायाः पुत्र्याः अपि न भोक्तव्यम् । यथाऽऽहादित्यपुराणे

विष्णुं जामातरं मन्येत् तस्य कोपं न कारयेत् ।
अप्रजायां तु कन्यायां नाश्नीयात्तस्य वै गृहे ।। इति ।।

[ हिन्दी टीका ]

नाव, देवमन्दिर, राजगृह अथवा चटपट टूट-फूट जाने वाली लकड़ी या ऐसी किसी भी वस्तु से बने घर या मण्डप तथा मिट्टी आदि डाल कर ऊँची बनाई गई भूमि जहाँ प्रायः पाक व्यवस्था होती है (जिसे मैथिली में चिनवार कहते हैं) बैठकर भोजन नहीं करना चाहिए।

ऊपर से आदित्यपुराण के अनुसार ज्ञातव्य है कि व्याही गई कन्या को जब तक कोई सन्तान न हो जाय तब तक कन्या के माता-पिता को जामाता के घर में नहीं खाना चाहिए।

[ मूलम् ]

हारीतः–

**न क्रुद्धो नान्यमना नाभि[1] भाषमाणोऽश्नीयात् न शिशून्निर्भर्त्सयन्[2] नाप्रदाय प्रेक्षमाणेभ्यः।**

यमः –

**अश्नाति यो भृत्यजनस्य मध्ये मिष्ठान्नमेको रसगृध्नुबुद्धिः[3]।**
**दीनैः कटाक्षैरभिवीक्ष्यमाणो[4] व्यक्तं विषं हालहलञ्च[5] भुङ्क्ते॥**

[ संस्कृत ]

न क्रुद्ध इति। क्रुद्धः = कुपितः। अन्यमनाः = अन्यमनस्कः। अभिभाषमाणः = वार्तां विदधत्। अतिभाषमाण इति पाठे तु बहुजल्पन्नित्यथः। शिशून् = बालान्। निर्भर्त्सयन् = विशेषतः अपकारगिरं ब्रुवन् (भर्त्सनं त्वपकारगीरित्यमरः)। प्रेक्ष्यमाणेभ्यः = प्रकर्षेण साभिलाषमीक्षमाणेभ्यः। अप्रदाय=किञ्चिदप्यदत्त्वा। न। अश्नीयात्। स्पष्टप्रतिपत्त्यर्थं सर्वत्र नकार प्रयोगः।

अश्नातीति। भृत्यजनस्य=भरणीयपरिजनस्य सेवकजनस्य वा। मध्ये। यः। रस-गृध्नुबुद्धिः = रसास्वादनलुब्धमतिः। (गृधु अभिकाङ्क्षायाम् दि. प. से.। त्रसि गृधि (३।२।१४०) इति क्नु :। (तथा) दीनैः कटाक्षैः=साभिलाषवक्रदृष्टिभिः। अभिवीक्ष्यमाणः = सर्वतोभावेन प्रेक्ष्यमाणः

पा० (१) नाति। (२) निर् इति क्वचिन्नास्ति। (३) रस गन्ध गृध्नुः (४) क्ष। (५) लं स।

सन् । एक: = एकाकी एव । मिष्टान्नम् = स्वादिष्टं भक्ष्यपदार्थम् । अश्नाति = भुङ्क्ते । स: । व्यक्तम् = प्रकटितम् । विषम् = गरलम् । हालहलम् = समुद्रमथनसमये निस्सृतं.प्रचण्डविषम् । हालाहलमितियावत् । च । (हालहलं हालाहलं वदन्त्यपि हलाहलमिति द्विरूपकोश:)। भुङ्क्ते = भक्षयति इति मन्तव्यम् । विषभक्षणमिवैतद् भक्षणं मानसिकक्लेशकरं सेत्स्यतीति भाव: ।

यद्यप्यत्र "क्ष्वेडस्तु गरलं विषम्-। पुंसि क्लीबे च कालोलकालकूट-हलाहला" इत्यमरकोशात् समानार्थकावेव विषहालाहलशब्दौ प्रतीयेते तथापि सामान्यविशेषभावाद् भेदो बोध्य: ।

[ हिन्दी टीका ]

कुपित हो, अन्यमनस्क हो, बातें करते हुए या स्वयं ही बहुत बोलते हुए, बच्चों को डाँटते-फटकारते हुए, कुछ मिलने की लालच से अत्यन्त अभिलाषा से देखनेवाले को कुछ भी न देकर भोजन नहीं करना चाहिए ।

पालनपोषण करने योग्य परिजन या सेवक जन के बीच में रस (तथा) गन्ध के आस्वादन के प्रलोभन में किसी के द्वारा अभिलाषी दृष्टियों से बार-बार देखेजाने पर भी अकेले ही यदि मिष्टान्न (स्वादिष्ट वस्तु) खा लेता हो तो मानना चाहिए कि वह विष या हालाहल-समुद्रमन्थन के समय निकला हुआ प्रचण्ड विष-ही खाता है ।

ऊपर से ज्ञातव्य है कि अमरकोश के अनुसार विष या हालाहल शब्द एकार्थक हैं तथापि समान्यविशेषभाव रहने के कारण दोनों में भेद समझें ।

सारांश में ऐसी वस्तु के सेवन से न शारीरिक या न मानसिक ही स्वाथ्य लाभ हो सकता है ।

[ मूलम् ]

देवल :-

एकवस्त्रो न भुञ्जीत कपाटमपिधाय च ।

कपाटमपिधाय = द्वारमावृत्य । तथा[1]

स्वग्रामे ग्रामतो[2] वापि सन्निकृष्टे मृते सति ।

पा० (१) 'तथा' इति नास्ति ह.पु. । (२) ग्रामत: इति आचारचिन्तामणि नित्यकृत्यार्णव सम्मत: पाठ: । 'स्वग्रामत' इत्यादिवचनमाचारचिन्तामणि नित्यकृत्यार्णाव वीर मित्रोदयेषु मनुनाम्ना पठितं दृश्यते परं प्रकाशित-मन्वर्थमुक्तावली-सहित-मनुस्मृतौ नोपलभ्यते ।

न भुञ्जीताशनं धीमान् धर्म्यं वै[1] शोककारणात् ।

[ संस्कृत टीका ]

एकवस्त्र इति । एकवस्त्रः = अद्वितीयवसनः । द्वारमावृत्य च न भुञ्जीत । स्वग्रामे इति । अत्र "स्वग्रामे = स्वग्रामीणे । ग्रामतः सन्निकृष्टे = एक ग्रामान्तरे । अधर्म्यम् = अधर्मसाधनमिति वीरमित्रोदयः । एतन्मते 'धर्म्यं वै' इत्यत्र अधर्म्य मिति पाठः । आचारचिन्तामणिस्तु 'स्वग्रामे ग्रामतो वाऽपी' त्यत्र 'स्वग्रामतो ग्रामतो वा' इति पाठं मत्वा "ग्रामत इति सप्तमी" इत्याह ।

एवञ्च स्वग्रामीणस्य स्वग्रामसन्निधिवर्त्तिग्रामस्थिजनस्य वा मरणे सति, धीमान् = मतिमान्नरः । अशनम् = अश्यमानमन्नम् । न । भुञ्जीत । (यतः) शोककारणात् = एतादृशजनमरणप्रयुक्तशोकहेतोः । धर्म्यम् = अनशनमेव धर्मसाधनं भवति । अद्यापि विज्ञातैतादृशजनशवस्य दाहाद्यर्थं निष्क्रमणोत्तरमेव भुञ्जते विवेकिनो जना इति व्यवहारः ।

[ हिन्दी टीका ]

एक वस्त्र धारण कर तथा दरवाजा बन्द करके भी भोजन न करें ।

अपना ग्रामीण अथवा अपनेगाँव से सटे दूसरे गाँव का कोई व्यक्ति मर जाय तो (दाह आदि निमित्त शव निकलने के पहले) बुद्धिमान् जन भोजन न करे । क्योंकि ऐसे पड़ोसी व्यक्ति के मरण से होने वाले शोक के कारण भोजन न करना धर्म का कारण होता है ।

आजकल भी पड़ोसी व्यक्ति के मरण ज्ञान तथा दाह आदि के निमित्त शव निकलने के ज्ञान के बाद ही विवेकी जन भोजन करते हैं —ऐसा व्यवहार है ।

[ मूलम् ]

गौतमः—

न[2] भक्ष्यानुत्सङ्गे भक्षयेत् । न वा[3] रात्रौ प्रेष्याहृतम् ।

प्रेष्याहृतम् = दास्याहृतं दुग्धादि ।

---

पा० ( १ ) अधर्म्यं शोककारणात् इति वीरमि. पाठः । ( २ ) भक्षा । ( ३ ) मिताक्षरावृत्ति-सहिते गौतम-धर्मपुस्तके हस्तलिखित पुस्तके च नास्ति ।

[ संस्कृत टीका ]

न भक्ष्येति । भक्ष्यान् = भोज्यपदार्थान् मोदकादीन् । उत्सङ्गे = क्रोडे कृत्वा । न । भक्ष्येत् । न वा । रात्रौ । प्रेष्याहृतम् = दास्या-सेविकया सेवकेन वा आनीतम् । न भक्षयेदिति पूर्वक्रियाऽभिसम्बन्धः । इदं तु सन्देहस्थल एव मन्तव्यम् ।

[ हिन्दी टीका ]

गोद में रखकर कुछ भी भक्ष्य पदार्थ न खायें और नाहीं रात में नौकरानी या नौकर के द्वारा लाये गए दूध आदि का ही सेवन करें । (यह उत्तर भाग का कहना सन्देहस्थल के लिए ही है)।

[ मूलम् ]

शङ्खः –

नानियुक्तोऽग्रासनं गच्छेत् । न अग्रासनस्थः प्रथममश्नीयात् । नाधिकं दद्यात् । न ग्रतिगृह्णीयात् ।

[ संस्कृत टीका ]

अनियुक्त इति । अनियुक्तः = गृहपतिना अनियोजितः—अननुमत इति यावत् । अग्रासनं न गच्छेत् = न मुख्यमासनमुपविशेत् । अग्रासनस्थः न प्रथममश्नीयात् = मुख्यासनोपविष्टः न सर्वप्रथममद्यात् । अधिकं न दद्यात् = कस्मैचिदपि किमपि बहु वस्तु न प्रयच्छेत् । न प्रतिगृह्णीयात् = न वा आदद्यात् ।

एतेन प्रक्षालिते शुभे आसने उपवेशनमावश्यकम् । अतएव "आसनस्य शुभत्वमखण्डितत्वादि, काष्ठे प्रक्षालितत्वञ्चे" ति नित्यकृत्यरत्नमाला टि० ।

[ हिन्दी टीका ]

गृहपति की अनुमति के विना मुख्य आसन पर न बैठे । मुख्य आसन पर बैठकर सर्वप्रथम भोजन न करे । किसी को कुछ भी अधिक वस्तु न देनी चाहिए और न अधिक लेनी ही चाहिए ।

इससे उपरिष्टात् यह भी ज्ञातव्य है कि पवित्र आसन पर बैठ कर भोजन करे । आसन यदि काठ हो तो वह प्रतिदिन धुल भी जाए ।

[ मूलम् ]

मनुः –

न भुञ्जीतोद्धृतस्नेहं नातिसौहित्यमाचरेत् ।
नातिप्रगे नातिसायं न सायं प्रातराशितः ॥

अतिप्रगे = सूर्योदयसन्निधौ[1] । अतिसायम् = महानिशायाम् । न सायमित्यादि– प्रातर्भोजनेनैव तृप्तः सायं पुनर्भोजनं न कुर्यादित्यर्थः ।

[ संस्कृत टीका ]

न भुञ्जीत इति । अत्र "उद्धृतस्नेहं = पिण्याकादि न भुञ्जीत । अतितृप्तिं वारद्वयेऽपि न कुर्यात् ।

जठरं पूरयेदर्धमन्नैर्भागं जलेन च ।
वायोः सञ्चरणार्थन्तु चतुर्थमवशेषयेत् ॥

इत्यादि विष्णुपुराणवचनात् । सूर्योदयकाले सूर्यास्तसमये भोजनं न कुर्यात्। प्रातराशितोऽतितृप्तः सायं न भुञ्जीते" तिमूलमनु (४।६२) वचनस्य मन्वर्थमुक्तावली । प्रगे = प्रातः काले इत्याचारचिन्तामणिः । अतिप्रगे = अचिरोदित सूर्ये इति वीरमित्रोदयः । सूर्योदयसन्निधौ इति तु ग्रन्थकारः । अतिसायम् = सूर्यास्तमन समये इति वीरमित्रोदयः । महानिशायामिति तु ग्रन्थकारः । प्रातराशितः = प्रातर्भोजनेनैव तृप्त इति ग्रन्थकार वीरमित्रोदयौ । 'प्रातः अतितृप्तः' इति तु मन्वर्थमुक्तावली । सायम् = रात्रौ । न भुञ्जीत = पुनर्भोजनं न कुर्यादित्यर्थः ।

[ हिन्दी टीका ]

जिसका सार भाग निकाल लिया गया हो जैसे कि तिल की खली आदि न खायें । भोजन प्रकरणीय –उद्धृतस्नेह, विलपन, पिण्याकमथितप्रभृतीनि इत्यादि गौतमसूत्र तथा इसकी व्याख्या हरदत्तकृत मिताक्षरा के अनुसार यहाँ आदि पद से ग्राह्य–मक्खन निकाले गए दही और दूध,.नवनीतमल–(जिसे मैथिली में डाढ़ी कहते हैं) आदि हैं । हाँ, इसके अनुसार तक्र (छाछ) खाना चाहिए या नहीं, इस प्रश्न के उत्तर में खाने का व्यवहार ही प्रमाण माना जा सकता । दिन और रात के समय भी अति तृप्ति से भोजन

पा० ( १ ) सन्निधाने इति ह. पु. पाठः । नित्यकृत्यार्णवोद्धृताचारादर्श पाठश्च ।

न करे। (क्योंकि विष्णु पुराण का कहना है कि जठराग्नि का आधा भाग अन्नों से, और एक भाग जल से पूर्ण करके चौथा भाग वायुसञ्चार के लिए खाली छोड़ देना चाहिए)।

'अतिप्रगे' पद की मन्वर्थमुक्तावलीव्याख्या के अनुसार सूर्योदय समय में, वीरमित्रोदय के अनुसार सूर्योदय के कुछ ही बाद, किन्तु ग्रन्थकार के अनुसार 'सूर्योदय के कुछ पहले और कुछ बाद भोजन न करे। इसी तरह 'अतिसायम्' पद की मन्वर्थमुक्तावलीव्याख्या के अनुसार सूर्यास्त के समय, वीरमित्रोदय के अनुसार सूर्य डूबने के समय, किन्तु ग्रन्थकार के अनुसार मध्यरात्रिके समय भोजन नहीं करना चाहिए। यदि दिन के भोजन से ही अतितृप्त या तृप्त हों तो पुनः रात में भोजन न करें।

[ मूलम् ]

बृहस्पति :-

न स्पृशेद् वामहस्तेन भुञ्जानोऽन्नं कदाचन।
न पादौ न शिरो बस्तिं न पदा भाजनं स्पृशेत्॥

बस्तिः = नाभेरधोदेशः।

[ संस्कृत टीका ]

न स्पृशेदिति। भुञ्जानः अशनन्। कदाचन = कदाचिदपि। वामहस्तेन= सव्यकरेण। अन्नम् = भुज्यमानमन्नम्। न वा, पादौ=चरणौ। शिरः = मस्तकम्। बस्तिम् = नाभेरधोदेशम्। न स्पृशेत्। अत्र " शिरोबस्तीति पदमेकं मत्वा शिरोवस्तीति समाहार इत्याचारचिन्तामणिः। पदा=केनापि चरणेन। भाजनम् =भोजनपात्रञ्च। न स्पृशेत्।

[ हिन्दी टीका ]

खाने के समय बायें हाथ से अन्न, दोनों पैर, शिर, या नाभि के निचले स्थान का कभी भी स्पर्श न करें और नाही किसी भी पैर से भोजनपात्र का स्पर्श करे।

[ मूलम् ]

याज्ञवल्क्यः-

न भार्या-दर्शनेऽश्नीयान्नैकवासा न[1] संस्थितः[2]।

भार्यादर्शने = भार्यया दृश्यमानः। पश्यन्नितिकेचित्।

पा० (१) च। (२) च संस्थित इति स्थाने 'कदाच' इति ह.पु. पाठः।

[ संस्कृत टीका ]

न भार्येति । भार्यादर्शने= भार्यया दृश्यमान इत्यर्थः । अतएव "पश्यन्त्यां भार्यायामि" ति कल्पतरुरपि । केचित्तु भार्यां पश्यन्निति व्याचक्षते ।

अत्रास्य (या०स्मृ०आचाराध्याय १३१)वचनस्य मिताक्षराव्याख्या यथा-"न च, भार्यादर्शने = तस्यां पुरतोऽवस्थितायाम्, अश्नीयात् । अवीर्यवदपत्योत्पत्तिभयात् । तथा च श्रुतिः-'जायाया अन्ते नाश्नीयादवीर्यवदपत्यं भवति' इति । अतस्तया सह भोजनं दूरादेव निरस्तम् । नचैकवासाः न संस्थितः अश्नीयादिति सम्बध्यते ।" इति । संस्थितः = उत्थित इति तट्टिप्पणी ।

[ हिन्दी टीका ]

भार्यादर्शन की स्थिति में-अर्थात् ग्रन्थकार तथा कल्पतरु के व्याख्यानुसार भार्या (पत्नी) से दिखे जाते हुए; अन्य व्याख्याता के अनुसार भार्या को देखते हुए, किन्तु मिताक्षरा व्यांख्या के अनुसार, पत्नी के सामने भोजन नहीं करना चाहिए । इसी तरह एक वस्त्र पहन कर और खड़ा होकर भी भोजन न करे ।

पत्नी के सामने भोजन निषेध तात्पर्य के सम्बन्ध में मिताक्षरा व्याख्या का कथन (तर्क) है कि वैसा करने पर "शक्तिहीन सन्तानकी उत्पत्ति हो सकती है । क्योंकि श्रुति का भी कहना है कि पत्नी के सामने भोजन करने से वीर्य (शक्ति) से हीन सन्तान होती हैं । फलितार्थ में पत्नी के साथ भोजन करना सर्वथा खण्डित हो जाता है ।

[ मूलम् ]

ब्रह्मपुराणे-

**अप्येकपङ्क्त्यां[1] नाश्नीयात्सम्बन्धि[2] -स्वजनैः सह ।**
**को हि जानाति किं कस्य प्रच्छन्नं पातकं भवेत् ॥**

भस्म-स्तम्भ-जल-द्वार-मार्गैः पङ्क्तञ्च भेदयंत् ।

को हि जानाति इत्यादिना पातकसन्देहे[3] पङ्क्त्यां न भोक्तव्य-मित्युक्तम् ।

---

पा० (१) "अथैकपङ्क्त्यां नाश्नीयाद् ब्राह्मणः स्वजनैः सह" इत्यादित्यपुराणीयः पाठः । (२) संयतः स्वजनैरपीति ह. पु. पाठः (संयुक्त इति संवृत इति च) छन्दोगाह्निकपाठः । संवृतः स्वजनैरपीति नित्यकृत्यार्णवनित्यकृत्यरत्नमालापाठः । (३) सन्देहेऽपीति नि. कृ. र. मा० पाठः ; संशयेऽपीति ह. पु. पाठः ।

निर्दोषत्वे[४] तु निश्चिते भोक्तव्यमेव भस्मस्तम्भादिना[५] च पङ्क्तिभेदाभिधानेन पातकिनाऽपि सह एकपङ्क्त्या[६] भोजने दोषो नास्तीत्यर्थः।

[ संस्कृत टीका ]

अप्येकेति। प्रच्छन्नम् = गुप्तम् पापम्। भेदयेदिति। स्वीयैकपार्श्वत उभयतो वा हस्तकृतरेखाकरणेनापि पङ्क्तिविभाजनव्यवहारोभ लोके दृश्यते। अन्यत्सर्वं मूले एव स्पष्टम्। कुत्र पङ्क्तिभेदनमावश्यकमित्याह पराशरः–

याजनं योनिसम्बन्धं स्वाध्यायं सहभोजनम्।
सद्यः पतति कुर्वाणः पतितेन न संशयः ॥ इति

बृहस्पतिरपि यथा–

एकपङ्क्त्युपविष्टानां दुष्कृतं यद् दुरात्मनाम्।
सर्वेषां तत्समं तावत् यावत्पङ्क्तिर्न भिद्यते ॥ इति।

[ हिन्दी टीका ]

एक पङ्क्ति (पाँती) में स्वजन और सम्बन्धियों के साथ भोजन न करे, क्योंकि कौन जानता है कि किसके मन में पाप छिपा न हो ? अतः भस्म, खम्भा, जल, दरवाजा या रास्ते से पङ्क्ति भेदन कर देना चाहिए।

(अपने एक या दोनों बगल से हाथ के द्वारा किये गए भूमिरेखा करण से भी पङ्क्तिविभाजन का व्यवहार लोक में देखा जा रहा है।)

मूलकथन पर ग्रन्थकार का विवेचन है कि कौन जानता है इत्यादि कथन का तात्पर्य है कि यदि दूसरे के मन में पाप की आशङ्का हो तभी एक पङ्क्ति में भोजन न करे। किन्तु यदि स्वजन या संबन्धीजन निश्चितरूप से निर्दोष ज्ञात हो तो एक पङ्क्ति में भोजन करना ही चाहिए है।

इसी तरह भस्म, स्तम्भ (खम्भा) आदि से पङ्क्तिभेद करने को कहने का तात्पर्य है कि पापी के साथ एक पङ्क्ति में भोजन करने पर भी कोई दोष नहीं होता है।

---

पा० (४) 'निर्दोषत्वनिश्चये तु' इति नि. कृ. र. मा. पाठः। ह. पुस्तके वाक्यमेवंदं नास्ति। (५) चरहितः, भस्मस्तम्भजलादिनेति च पाठः। (६) भोजने एकपङ्क्तिदोषो नास्तीत्युक्तमि'ति हस्तलिखित पुस्तकपाठः।

ऊपर से पराशर वचन के अनुसार पङ्क्तिभेद प्रसंग पर ज्ञातव्य है किपतित के साथ याजन, योनिसम्बन्ध, स्वाध्याय, तथा सहभोजन करने पर कर्ता व्यक्ति तुरन्त पतित हो जाता है।

इसी तरह बृहस्पति का भी वचन है कि एक पङ्क्ति में बैठे हुए दुरात्माओं का पाप तबतक सभी में समभाग में रहता है जबतक कि पङ्क्तिभेदन न हो जाय।

[ मूलम् ]

महाभारते—

पानीयं पायसं सर्पि[१] र्मधुयुक्तं मधून्यपि।
निरस्य, शेषमेतेषां न प्रदेयं तु कस्यचित्॥

निरस्य = त्यक्त्वा। तेन यदि दैवाच्छेषमवतिष्ठेत् तदा न देयमित्यर्थः। तदाह ब्रह्मपुराणे—

तिलकल्कं[२] दधिक्षीर[३]-जल-क्षौद्रघृतानि च।
न त्यजेदर्धजग्धानि सक्तूँ[४]श्चाथ कदाचन॥

क्षौद्रम् = मधु। अर्धजग्धानि = अर्धभुक्तानि।

[ संस्कृत टीका ]

पानीयमिति। पानीयम् = पीतशेषम्-जलपात्र एवावशिष्टमित्यर्थः। पायसम् = परमान्नम्। (परमान्नन्तु पायसमित्यर्थः)। मधुयुक्तम् = विषम मधुना मिश्रितम्। समभागमिश्रितस्यायुर्वेदानुसारं विषरूपत्वात्। सर्पिः = घृतम्। अत्र ''मधुशेषं मधून्यपि। निरस्यमि'' ति पाठभेदमुल्लिख्य ''निरस्यम् = अत्याज्यमितिकल्पतरुरि'' ति नित्यकृत्यार्णवः। एतेषाम् = पानीयादीनाम्। शेषम् = अवशिष्टभागम्। निरस्य = त्यक्त्वा। कस्यचित् =कस्मैचित्। शेषेऽत्र षष्ठी। न। प्रदेयम् = दातव्यम्। एतेन यदि संयोगात् किञ्चिदवशिष्यते तदा तन्न देयमित्यर्थः।

पा० (१) नित्यकृत्यरत्नमाला टिप्पण्यां 'निरश्यमि' ति विशेप पाठः। परं नित्यकृत्यार्ण वे ''मधुशेपं दार्धीन्यपी'' ति पाठभंदः। (२) कल्कं। (३) जलं क्षीरं दधि क्षौद्र मिति ह. पु. पाठः। जलं क्षीरं दधि-क्षौद्र-घृतानि चे ति नित्यकृत्यार्णव पाठः। (४) श्चैव।

निरस्यमिति पाठे तु शेषम् । निरस्यम् =निश्शेषेण, असु क्षेपणे इति दैवादिकाद् यति अस्यम् =प्रक्षेपणीयं गलबिलादुदरे इति शाब्दिकोऽर्थः सम्पद्यते । तेन तच्छेषं पात्रे न धार्यमिति भावार्थो भवति । नित्यकृत्यरत्नमालाटिप्पण्यनुसारं निरश्यमिति तालव्यमध्यपाठपक्षेऽपि निश्शेषमशनीयमित्येवार्थः । तदाह ब्रह्मपुराणेऽपि तिलकल्कमित्यादिना । तथाहि–तिलकल्कम् = तिलशमलम् । (कल्कोऽस्त्री शमलैनसोरित्यमरः)। 'तिलकल्के' इति पाठे तु तिलाः कल्काश्च पृथक्पृथक्तयैव बोध्याः । दधि-क्षीर-जल-क्षौद्र-घृतानि=दधि-दुग्ध-जल-मधु-घृतानि । अर्धजग्धानि = अर्धभुक्तानि-वीरमित्रोदयानुसारं किञ्चिद्भुक्तानीति यावत् । न । त्यजेत् = अवशेषयेत् ।

## [ हिन्दी टीका ]

जल पात्र में स्थित पीतशेष जल तथा कुछ खा लेने के बाद बची हुई खीर, विषमभाग में शहद से मिला हुआ अमृततुल्य घृत (समभाग में मिले हुए येदोनों आयुर्वेदानुसार विष हो जाते हैं) और मधु (शहद) किसी को भी नहीं दें । अर्थात् प्रथम तो बिना बचाये ये पूरा खा ले़ने चाहिएँ । दैवात् यदि कुछ शेष बच जाय तो उसे किसी को नहीं देना चाहिए ।

वचन में 'निरस्य' के स्थान पर यदि 'निरस्यम्' पाठ हो तो भी अर्थ होगा कि बिना कुछ शेष बचाये ही पूरी का पूरी उक्त वस्तुएँ खा लें । जैसा कि ब्रह्मपुराण का भी कहना है– कुछ भाग खा लेने के बाद बचे तिल तेल की तलछट-काँइट, (तिल) दही, दूध, जलपात्र में स्थित पीतशेष जल, शहद, घृत तथा सत्तू जूठा न छोडें । अर्थात् बिना कुछ छोड़े सबका सब पूरा खा लें ।

## [ मूलम् ]

विष्णुः–

**न गोब्राह्मणो[१]परागे[२]ऽश्नीयान्न राजव्यसने ।**

**प्र[३]वासितश्चाग्निहोत्री यदाग्निहोत्रं [४]कृतं मन्येत तदाऽश्नीयात् ।**

---

पा० (१) निरोधे । (२) 'च' इत्यधिकः पाठः प्रकाशित पुस्तक । (३) प्रवसितः । (४) 'हुतमि'ति प्रकाशित पुस्तके पाठः । कृतमिति तु छन्दोगाह्निके हस्तलिखितपुस्त के च पाठः ।

यदाकृतं मन्येत वैश्वदेवमपि । पर्वणि[5]च यदा पर्व कृतं मन्येत ।

उपरागे=अत्यन्तपीडायाम् ।

न नग्नो नोत्कटो न[6] च भिन्नासनगतः ।

उत्कटः = उत्कटा[7]सन-गतः[8]। तथा,

नाकाशे ।

आकाशोऽत्र हिन्दोला[9]दिरिति हलायुधनिबन्धः तथा,

न बहूनां प्रेक्ष्यमाणानां नैकस्मिन् बहवस्तथा ।
शून्यालये वह्निगृह-देवागारे कथञ्चन ॥

तथा,

शयानः प्रौढ[10] पादस्तु कृत्वा चैवावसक्थिकाम् ।

तथा,

पिबे न्नाञ्जलिना तोयम् [11]( नातिसौहित्यमाचरेत् ) ।

तथा,

न भावदुष्टमश्नीयात् ।

भावदुष्टम्=यत्र मनः प्रसादो न भवति । तथा,

नैको मिष्टं, नोद्धृतस्नेहं, न दिवा धानाः, न रात्रौ [12]तिलसम्बद्धं, न कोविदारवट [13]पिप्पलशणशाकम्, न दधि[14] सक्तून् ।

दधि-सक्तूनित्यपि रात्रावित्यन्वयः ।

[संस्कृत टीका]

न गोब्राह्मणोपरागे इति । गोब्राह्मणोपरागे = गोः ब्राह्मणस्य चात्यन्तपीडायाम् । अत्र ''पारिजाते तु उपरोध इति पठित्वा निरोध इति विवृतमिति लिखितमि''–

पा० (५) 'पर्व यदा कृतम्' पाठोऽपि पूर्ववत् (६) 'च' इति नित्यकृत्यार्णवे छन्दोगाह्निके च नास्ति । (७) क्वचित् 'नः' इति । (८) क्वचित् 'गत': इति नास्ति । (९) 'लका' इति ह. पु. पाठः । (१०) ष्ठ्च' इति, (११) 'नाति' इत्युत्तरचरणञ्च ह. पुस्तके । (१२) न्धम् । (१३) बदर । (१४) न सक्तून् ।

ति नित्यकृत्यार्णवः। राजव्यसने = राज्ञः विपत्तौ निधने वा। (व्यसनं विपदि भ्रंशे इत्यमरः)।

प्रवासित इति। अत्र "अत्रेदं विवक्षितम्। भोजनपूर्वकालविहितं नित्यं नैमित्तिकं वा कर्म प्रयासापाटवादिनाऽन्यकृतमपि निश्चित्य भुञ्जीत। प्रवसितादिपदजातमुपलक्षणम्। आकाङ्क्षालाघवैकवाक्यतानुरोधात्। अतएव अप्रोषिता अप्यनाहिताग्नयोऽग्निहोत्रवैश्वदेवपर्वभ्योऽन्यस्मिन्नप्यावश्यके इष्टदेवतापूजादावन्यकर्त्तृकेऽपि कृते भुञ्जीत इत्याचारः। एवञ्च पतिव्रताया अपि पतिव्यवधौ कालादिना पत्या भुक्तमिति निश्चित्य भोजनम्। अतएव नल-व्यवधानेऽपि दमयन्त्यास्तथैव भोजनमुक्तं महाभारते" इति प्रकृतवचन-मुपक्रम्य श्रीदत्तकृतं छन्दोगाह्निकम्।

एवमेव "व्यवहितेन साहिताग्निना यदाऽग्निहवनं युक्त्या निश्चीयते तदुत्तरं भोक्तव्यम्। 'प्रवसितश्चाग्निहोत्री यदाग्निहोत्रं मन्येत तदाऽश्नीयादि'ति विष्णुवचनात्। यद्यपि दक्षेण पञ्चमभागे भोजनमुक्तं तथापि तद् दृष्टार्थम्। तेनानिषिद्धकाले वैधं कर्म कृत्वा पूर्वाह्णादावपि तत्कार्यम्। एवं श्री-दत्ताह्निकादयोऽपीत्याचारचिन्तामणिः" इति।

एवमेव "अस्यार्थः—भोजनपूर्वकालविहितं नित्यं नैमित्तिकं वा कर्म प्रवासापाटवादावन्यकर्त्तृकमपि कृतमिति निश्चित्य भुञ्जीत। प्रवासितादि-पदमुपलक्षणम् आकाङ्क्षा लाघवैकवाक्यत्वानुरोधात्। अतएवानाहिताग्निरप्य-प्रोषितोऽपि वैश्वदेवाग्निहोत्रपर्वकृत्येभ्योऽन्यस्मिन्नावश्यके इष्टदेवतापूजा-दावन्यद्वारा कृते भुञ्जत इत्याचारः। श्रीदत्ताह्निकादयोप्येवमित्याचार विवेकः" इति च नित्यकृत्यार्णवः।

प्रवासितः = विदेशस्थः। अग्निहोत्री = अग्निहोत्रयागकर्त्ता। यदा = यस्मिन् समये। अग्निहोत्रम् = अग्नये होत्रम् = होमो, यस्मिन् कर्मणीति व्यधिकरणबहुब्रीहिः। एतच्च द्विविधम्-माससाध्यं यावज्जीवनसाध्यञ्च। अधिकं त्वन्यत्र, अग्निहोत्रशब्दप्रकरणे शब्दकल्पद्रुमे च द्रष्टव्यम्। एवञ्च एतन्नामकं यागविशेषं कृतम् = प्रवासापाटवादिनाऽन्यसम्पादितम्। मन्येत = जानीयात्। तदाऽश्नीयात् एवमेवाग्रेऽपि व्याख्या बोध्या।

पर्वणि = पञ्चसु पर्वदिवसेषु। यथा चात्र विष्णु पुराणे–

**चतुर्दश्यष्टमी चैव अमावस्याऽथ पूर्णिमा।**
**पर्वाण्येतानि राजेन्द्र रवि-सङ्क्रान्तिरेव च ॥इ**

न। नग्नः =अवश्यावच्छाद्याङ्गाच्छादकवस्त्ररहितः। न। उत्कटः = उत्सकटासनगतः। (उत्कटम्=गुड़त्वक्। 'तेजपात' इति ख्यातमिति केचित् इत्यमरभरतौ। 'दारचिनि' इति ख्यातमिति राजनिर्घण्ट इति शब्दकल्पद्रुमः।) उत्कुटक इति पाठे तु ऊर्ध्वजानुरित्यर्थः। आकाशे = हिन्दोलादौ।

बहूनामिति। बहुषु साभिलाषं प्रेक्षमाणेषु नाश्नीयात्। एवमेव एकस्मिन् जने साभिलाषं प्रेक्षमाणे बहवोऽपि नाश्नीयुरिति भावः।

शून्यालये = निर्जनगेहे। वह्निगृहे = गार्हपत्याद्यग्न्यागारे। देवागारे = देवमन्दिरे। शयानः = स्वपन्। अवसक्थिकां कृत्वा प्रौढ़पादः = वस्त्रादिद्वारा पृष्ठजानुजङ्घाद्वये दृढबन्धनपूर्वकोपविष्टः। यथा चाह कात्यायनः–

**आसनारूढपादस्तु जानुनोर्जङ्घयोस्तथा।**
**कृतावसक्थिको यस्तु प्रौढपादः स उच्यते ॥इ**

'फाँड बाँधिया बसा' इति भाषा इति शब्दकल्पद्रुमः। उपवेशनसौकर्याय कृतवस्त्रादिवेष्टन इति यावत्। अञ्जलिना = संयुतहस्तद्वयेन। तोयम् = जलम् न पिबेत्। अतिसौहित्यम् = भोजने अतितृप्तिम्। नाचरेत्। नात्यधिकमश्नीयादिति भावः। भावदुष्टम् = यत्र मनःप्रसादो न भवति। एतच्च जातिदुष्टादेरप्युपलक्षणम्। एकः = एकाकी। मिष्टम् = मिष्टान्नम्। उद्धृतस्नेहम् =पिण्याकादि। दिवा। धानाः = भर्जितयवान्। रात्रौ तिलसम्बद्धम् = तिलं तिलमिश्रितं वा वस्तु। कोविदार-वट-पिप्पल-शण- शाकम्= चमरिकवटाश्वत्थशणशाकम्। दधिसक्तून् = रात्रौ दधि, सक्तून् वा नाद्यात्।

**[ हिन्दी टीका ]**

गाय या ब्राह्मण को अत्यन्त पीडा हो गई हो या इनका मार्गनिरोध घेराव कर दिया गया हो तथा राजा के ऊपर विपत्ति आ गई हो या इनका विनाश हुआ हो तो भोजन नहीं करना चाहिए।

विदेशस्थ (प्रवासी) अग्निहोत्रीजन भोजन से पूर्व काल में विहित नित्य या नैमित्तिक कर्म–यथा अग्निहोत्र, पूर्वोक्त वैश्वदेव तथा चतुर्दशी, अष्टमी, अमावास्या, पूर्णिमा एवं सूर्य संक्रान्ति–इन पर्व दिनों में कर्तव्य चतुर्दशी क्रिया आदि का प्रवास या असामर्थ्य आदि कारण वंश स्वयं सम्पादन न कर सकने की स्थिति में अन्य के द्वारा सम्पादन हो जाने का निश्चय कर लेने के बाद भोजन करे ।

यह अर्थ 'प्रवसित:' से लेकर 'पर्व कृतं मन्येत' पर्यन्त मूलवचन का हुआ ।

इन वचनों को उद्धृत कर छन्दोगाह्निक तथा श्रीदत्ताह्निक आदि के उल्लेख के साथ इसी के अनुसार आचारचिन्तामणि और आचार विवेक का विवेचन है कि मूल वचन में पठित 'प्रवसित' आदि पद उपलक्षण (अन्य का भी बोधक) है । अत: इसका अर्थ होगा कि आहिताग्नि, अनाहिताग्नि, प्रवासी या अप्रवासी जो भी होंवे अग्निहोत्र, वैश्वदेव तथा पर्वकृत्यों से अन्य आवश्यक इष्टदेव पूजन आदि कर्म यदि अन्य के द्वारा भी करवाते हैं तब भी कर्म सम्पन्न होने पर भोजन करें, ऐसा आचार (परम्पराऽऽगत व्यवहार) है । इससे यह भी सिद्ध होता है कि पति की अनुपस्थिति में काल आदि के द्वारा ऐसा निश्चय कर लिया गया हो कि 'मेरे पतिदेव भोजन कर चुके होंगे' तो अनन्तर पतिव्रता नारी भोजन करें । इसी हेतु महाभारत में कहा गया है कि नल की अनुपस्थिति में दमयन्ती इसीके अनुसार भोजन करती थीं ।

नग्न होकर, तेजपात या दालचीने के आसनपर बैठकर, या घुटने को ऊपर उठाकर, हिलोडे आदि पर बैठकर मिलने की विशेष अभिलाषा से बहुत व्यक्तियों के द्वारा देखे जाने पर अकेला या किसी एक को ही विशेष अभिलाषा से देखने पर बहुत व्यक्ति भी भोजन न करें । सूने घर, गार्हपत्य आदि तीन में से किसी भी अग्नि की शाला तथा देवमन्दिर में भोजन न करे ।

सोते हुए, पर्यङ्कबन्ध बाँध कर (वस्त्र आदि के द्वारा पीठ, घुटने तथा जाँघों को बाँधकर आसान पर बैठा हुआ–अर्थात् मैथिली गोठ बान्हिकय बैसल भोजन न करे ।

आँजुरी से जल नहीं पिये और नाही अत्यधिक भोजन ही करे । जिसे देख कर मन प्रसन्न न हो या देख कर हिचकिचाहट हो उस वस्तु को न खाये । अकेला मिष्टान्न न खाये और न जिसका सार भाग निकाल लिया गया है तिलखली आदि खाये ।

दिन में भुना हुआ जौ (फरुही), रात में तिलमिश्रित वस्तु, कचनार-बट-पीपल-सनै-या सनपटुआ का साग तथा रातमे दही या सत्तू भी न खाये ।

[ मूलम् ]

यम:–

खट्वाऽऽरूढो न भुञ्जीत न चोत्तानः कदाचन ।

[ संस्कृत टीका ]

खट्वेति । खट्वामासीन उत्तानो वा कदाचिदपि नान्नं भक्षयेदित्यर्थः ।

[ हिन्दी टीका ]

खटिये पर आसीन हो, या चित्त लेटकर कभी भी अन्नभक्षण न करे ।

[ मूलम् ]

ब्रह्मपुराणे–

यस्तु पाणितले भुङ्क्ते यस्तु फूत्कारसंयुतम् ।
प्रसृताङ्गुलिभिर्य श्च[1] तस्य गोमांसवच्च[2] तत् ॥१॥
नाजीर्णे भोजनं कुर्यात्साम्बुर्नाति[3] बुभुक्षितः ।
हस्त्यश्वरथ-यानोष्ट्र-प्रासादस्थो न भक्षयेत् ॥२॥
श्मशानाभ्यन्तरगतो देवालयगतोऽपि वा ।
शयनस्थो न भुञ्जीत न पाणिस्थं न चासने ॥ ३ ॥
न[1] सन्ध्ययोस्तु मध्याह्ने नार्धरात्रे कदाचन ।
नार्द्रवासा नार्द्रशिरा नचायज्ञोपवीतवान् ॥ ४॥
न प्रसारितपादस्तु पादारोपितपाणिमान् ।
नावसक्थिकसंस्थश्च नच पर्यङ्क[2] मास्थितः ॥ ५॥
न वेष्टितशिराश्चापि नासन्दी[3] कृतभाजनः ।
नैकवस्त्रो दुष्टमध्ये सोपानत्कः सपादुकः ॥ ६ ॥
न चर्मोपरि संस्थश्च चर्मवेष्टितपार्श्ववान् ।
अन्नस्य जन्मकालुष्यं दुष्पक्तिञ्च न कुत्सयेत् ॥७॥

पा० (१) स्तु । (२) त्तु । (३) 'स्याच्चा' इति नित्यकृत्यार्णव-वीरमित्रोदय पाठः । (४) सन्ध्ययोर्न्न च इति नित्यकृत्यार्णवपाठः । 'न सन्ध्ययो र्न' इति वीरमित्रोदय-हस्त-लिखित-पुस्तक-पाठः । (२) ङ्किकास्थितः । (3) 'नोत्सङ्ग' इति हस्तलिखितपुस्तक-नित्यकृत्यार्ण व-वीरमित्रोदयपाठः ।

ग्रासशेषं[1] नचाश्नीयात् पीतशेषं पिबेन्न तु[2] ।
शाकमूल-फलेक्ष्वादि दन्तच्छेदैर्न भक्षयेत् ॥ ८ ॥
सञ्चयेन्नान्नमन्नेन विक्षिप्तं पात्रसंस्थितम् ।
बहूनां[3] भुञ्जतां मध्ये नचा[4] श्नीयात् त्वरान्वितः ॥ ९॥
वृथा न विकिरेदन्नं नोच्छिष्टः कुत्रचिद् व्रजेत् ।
न स्पृशेत् स्वशिरो विप्रः स्वेच्छिष्टेनैव[5] पाणिना ॥१० ॥

प्रसृताङ्गुलिभिः = विस्तृताङ्गुलिभिः । यानम् = उपात्तहस्त्यादिव्यतिरिक्तं दोलादि । अर्धरात्रे = आदावन्ते च सार्धमेकैकं प्रहरं विहाय मध्यप्रहरे सैव भोजने महानिशा[6] । चर्मवेष्टितपार्श्ववान् = सन्नाहादिवेष्टितगात्रः । जन्म = निन्दितदेशाद्युत्पत्तिः । कालुष्यम् = मलिनत्वम्[7] दुष्पक्तिम्[8] = दुष्टपाकम् । दन्तच्छेदैः = दन्तैश्छित्त्वा छित्त्वा । मुखप्रविष्टे तु दन्तव्यापारो न विरुद्धः[9] । सञ्चयेदित्यादि = विस्तृतमोदर्नादि[10] अपूपादिना न राशीकुर्यात्[11] ।

[ संस्कृत टीका ]

यस्तु पाणितले इति । पाणितले = वामकरतलेऽन्नं धृत्वेत्यर्थः । फूत्कार-संयुतम् = अन्नोष्णताशमनाय 'फू' 'फू' इति मुखशब्दं कुर्वन्नितिभावः । प्रसृताङ्गुलिभिः = 'विस्तृताङ्गुलिभिरि' त्याचारादर्शः । एव मेवाचारचिन्तामणिरपि परस्परासंलग्नाङ्गुलिभिरिति रत्नाकरः । असङ्कुचिताभिरङ्गुलिभिरिति वीरमित्रोदयः । तत् = तथा भक्षणम् । गोमांसवत् =गोमांसभक्षणसमानमतीव निन्दनीयमिति

पा० (१) शंपन्तु ना । (२) च व। (३) बहूनामश्नतां । (४) नैकोऽश्नीया दिति नित्यकृत्यार्णवपाठः। (५) 'सो इति नित्यकृत्यर्णवाचारचिन्तामणि-पाठः। (६) नित्यकृत्यार्णवे आचारादर्शनाम्नाउद्धृतोऽयं पाठो मयापि संस्थापितः । परं प्रकाशितपुस्तके तु ''रात्र्यादावन्ते च साधकं प्रहरं विहाय मध्यरात्रे महानिशा भोजने इति पाठः (७) (८) हस्तलिखित पुस्तकेतु उभयत्र 'क्तिः' इति 'क' इति च विसर्गान्तः पाठः। (९) 'विरुद्ध इत्यत्र' दुष्टः इति प्रकशित-पुस्तक-पाठः । (१०) 'मोदकादि' इति नित्यकृत्यार्णवोद्धृताचारादर्शपाठः । (११) दित्यर्थः इति हस्तलिखिताचारादर्श-नित्यकृत्यार्णवोद्धृताचारादर्श-सम्मतोऽधिकः पाठः ।

सारः। साम्बुः=भोजनमध्ये बहु वारं जलपाता। साम्बुरित्यत्र 'स्याच्चे'ति पाठं मत्वा "स्याच्च नातिबुभुक्षितः =अतिबुभुक्षयाऽऽत्मपीडा न कार्येत्यर्थ" इति वीरमित्रोदयः। यानम्= उंपात्तहस्त्यादिव्यतिरिक्तं दोलादीत्याचारादर्शः। एवमेव रत्नाकरोऽपि। 'दोलादी'ति वीरमित्रोदयः। 'नौकादी'-त्याचारचिन्तामण्याचारविवेकौ। प्रासादः = राजगृहम्। देवालयस्याग्रे वक्ष्यमाणत्वात्। ('प्रासादो देवभूभुजामि' त्यमरः)। शयनस्थः =शय्यामासीनः। पाणिस्थम् = पाणावन्नपात्रं कृत्वेत्यर्थः। आसने=आस्यते – उपविश्यतेऽस्मिन्नित्यासने = पीठादौ भोजनभाजनं संस्थाप्येत्यर्थः। अवसंस्थिक-संस्थः= उपवेशनसौकर्याय कृतवस्त्रादिवेष्टनः। नासन्दीकृतभाजनः = न वेत्रादि-निर्मितोच्चासनसंस्थापितभोजनपात्रः। क्वचिद् "नोत्सङ्गकृते"-तिपाठान्तरमप्युपलभ्यते। तत्पक्षे स्वक्रोडे भोजनपात्रं विधाय नाश्नीयादित्यर्थः। चर्मवेष्टितपार्श्ववान् = सन्नाहादिवेष्टितगात्रः = कवचेन युद्धोपयोगिशस्त्रादिना च परिवेष्टितशरीर इति यावत्। 'सन्नाहो = वस्त्रेण कटिबन्धनमि'ति तु छन्दोगाह्निकस्य संक्षिप्तटिप्पण्यां म.म. मुकुन्दशर्माणः। ग्रासशेषम्= "न निश्शेषं भुञ्ज्यादि" त्यग्रिमदेवलवचनानुसारं भोजनान्तेऽवश्यमवशेष्यं पात्रस्थितशेष मित्यर्थः। तथैवाग्रे ग्रन्थकारेणापि "ग्रासशेषं न चाश्नीयादिति पात्रस्थशेषपरमि" तिव्याख्यातत्वात्। पीतशेषम् = जलपात्र एवावशि꣡ष्टमिति रत्नाकर इति नित्यकृत्यार्णवः। अतएव एवं स्थले लघुजलपात्रं व्यवहरन्ति विवेकिनो लोकाः। अथवा पीतशेषं तोयं किञ्चिद् भूमौ निपात्य न दोषः। तदाह मार्कण्डेयः–

**पात्राभावे जलाभावे पीतशेषं द्विजः पिबेत्।**
**भूमौ किञ्चिन्निपात्याऽथ पीत्वा विप्रो न दोषभाक्॥ इति।**

न विरुद्ध इति। एवमेव रत्नाकराचारविवेकावपि। अत्र "दन्तच्छेदः = बहिर्दन्तच्छेदः, मुखाभ्यन्तरे तद् विधानादि" त्याचारचिन्तामणिः। सञ्चयेदित्यादि। विस्तृतमोदकाद्यपूपादिना न राशीकुर्यादित्यर्थ इत्याचाररत्नाकरावि" ति

नित्यकृत्याणर्वः । ''अन्नेन = पूपादिना, पात्रे विकीर्णमन्नं न राशीकुर्यादि'' ति वीरमित्रोदयः । विकिरेत् = इतस्ततः प्रक्षिपेत् । बहूनां भुञ्जतामित्यत्र विप्राणामिति शेषः । न चाश्नीयात्त्वरान्वितः = नैकोऽपि जनः त्वरितं भुक्त्वा पात्रं परित्यजेत्, परित्यज्य वाऽन्यत्र गच्छेत् । विप्रपदं भोक्तृपरम् । स्वोच्छिष्टेनैव पाणिना = स्वोच्छिष्टे पाणौ सतीत्यर्थः । अत्र प्रकृत्यादित्वादवच्छेदे तृतीया ।

प्रकृत्यादि-गणाज्जाता तृतीया तु तदात्मताम् ।
अवच्छेदकताबुद्धिप्रकारत्वादि शंसति ॥

इति हर्युक्ते : ।

[ हिन्दी टीका ]

जो (बाईं) हथेली पर अन्न रखकर, या अन्न की गर्मी हटाने के उद्देश्य से ''फू'' ''फू'' कर के या अंगुलियाँ फैलाकर खाता है, उसका यह खाना गोमांसभक्षण के जैसे अतीव निन्दनीय है ॥ १ ॥

अजीर्णावस्था में भोजन न करे । भोजन के बीच में बारबार पानी न पिये । जोर की भूख से आत्मपीड़ा न करे । हाथी, घोड़ा, रथ, दोला या नौका आदि यान, ऊँट पर तथा राजघर में भोजन न करे ॥२॥

श्मशान या देवालय में, बिस्तरे पर या पीढ़ा आदि पर तथा हाथ में अन्न पात्र रखकर भोजन नहीं करना चाहिए ॥ ३ ॥

प्रातःसन्ध्या, सायंसन्ध्या, मध्याह्न तथा मध्यरात्रि–रात के आदि एवम् अन्त के डेढ़ डेढ़ प्रहर को छोड़कर बिचले प्रहर वाली महानिशा–के समय कभी भी न खाये । गीले वस्त्र, गीले शिर, तथा विना जनेऊ (द्विजाति के लिए जनेऊ का होना नियमित) के भोजन न करे ॥ ४ ॥

पैर फैलाकर, पैर पर हाथ रखकर पर्यङ्कबन्धन बाँधकर (अर्थात् घुटने, पीठ तथा हाथों को किसी वस्त्र आदि से बाँधकर) तथा पलंग या पलंगड़ी पर बैठकर भोजन न करे ॥५॥

पगड़ी बाँध कर, कुर्सी आदि उच्च आसन पर या अपनी गोद में भोजन पात्र रखकर, एक वस्त्र लगा कर, दुष्टों के बीच में होकर तथा जूता या खड़ाऊँ पहन कर भोजन न करे ॥६॥

न चमड़े के ऊपर बैठकर और नाहीं कवच तथा युद्धोपयोगी अस्त्र शस्त्र लगा कर या कपडे से कमर खाँधक अर्थात् फाँड बाँधकर भोजन करे। बुरे स्थान में उत्पत्ति, मलिनता, खराव रसोई आदि कह कर अन्न की निन्दा न करे ।।७।।

भोजन के अन्त में अवश्य छोड़े जाने वाले पा(प) त्रशेष को नही खाये । कौर का अन्न पुनः न खाये । एक बार पी लेने के बाद जलपात्र में बचा पानी पुनः न पिये । (इसी हेतु ऐसे स्थल में गिलास से जल पीने का व्यवहार विवेकी जन रखते हैं)। हाँ, यदि दूसरा पात्र या जल न हो तो मार्कण्डेय वचन के अनुसार उस जलपात्र से थोड़ा सा जल पृथिवी पर गिराकर शेप जल पिया जा सकता है । इस तरह करने पर कोई दोष नहीं होता ।

एवं शाक, मूल, फल, ईख आदि को दाँतों से काट काट कर नहीं खाना चाहिए। (किन्तु मुंह के भीतर टुकड़ा आनेपर विहित होने के कारण दाँत से चबाना दोषवह नहीं ) ।। ८ ।।

भोजनपात्र में बिखरे हुए भात आदि अन्न या लड्डू आदि को पूआ आदि दूसरे अन्न से इकट्ठा नहीं करना चाहिए, और नाही भोजन करते हुए बहुत से ब्राह्मणों के बीच कोई एक भी व्यक्ति जल्द भोजन कर ले ।।९।।

व्यर्थ ही सिद्धान्न बिखेरे नहीं । जूठा मुंह होकर कहीं भी इधर-उधर धूमे नहीं । भोजनकर्त्ता अपना हाथ जूठा हो सो शिर का स्पर्श न करे ।

## [ मूलम् ]

मार्कण्डेयपुराणे—

**उपघातादृते दोषं नान्नस्योदीरयेद् बुधः ।**

उपघातः = अशौचम् ।

## [ संस्कृत टीका ]

उपघातेति । बुधः = ज्ञानी जनः । अन्नस्य = भुज्यमानान्नस्य । अत्र "उपघातः = अशौचमि".त्याचारादर्शः । एवमेवाचारचिन्तामणि-नित्य-कृत्यरत्नमाला-टिप्पण्यौ । "उपघातोऽत्र श्वकाकादि-स्पर्श" इति रत्नाकरः । "उपघातः = श्वकाकादिस्पर्श-रजस्वलादि-दर्शनादिरि" ति वीरमित्रोदयः । तथा चैतस्माद्दोषात् । ऋते = बिना । दोषम् = अलवणानम्लत्वादिदोषमन्यम् । न । उदीरयेत् = कथयेत् । एवञ्चालवणानम्लत्वादिदोषाननुक्त्वैव तानितानीप्सितवस्तूनि ग्राह्याणीति भावः ।

[ हिन्दी टीका ]

ज्ञानी जन खाये जाने वाले अन्न आदि के सम्बन्ध में कुत्ता, कौए आदि के स्पर्श तथा रजस्वला स्त्री के द्वारा देखा जाना या छूआ जाना आदि निमित्त से होने वाले अशौच (अपवित्रता) के अलावे नमक की कमी या खटाई की कमी आदि को न कहे। फलतः इन कमी वाले दोषों के सम्बन्ध में व्याख्यानमाला न झाड़ते हुए उन उन अभीप्सित वस्तुओं का उपभोग करें।

[ मूलम् ]

अङ्गिराः –

उपनीतं यदा चान्नं भोजने समुपस्थितम्।
आपीतरसमुच्छिष्टं न दद्यान्नैव भोजयेत्॥

उपनीतम् = अन्यस्मै इति शैषः।

[ संस्कृत टीका ]

उपनीतमिति। यदा उपनीतम् = अन्यस्मै (अन्यस्य कृते) आनीतम्। भोजने = स्वभोजनार्थम्। उपस्थितम् = उपस्थापितम्। आपीतरसम् = उद्धृतसारभागं वस्तु दधिदुग्धादि। उच्छिष्टञ्च वस्तु। न दद्यात् नैव। भोजयेत् = भक्षयेत्।

[ हिन्दी टीका ]

दूसरे के लिए परोसे गये किन्तु अन्य या अपने लिए लाये गये उस अन्न का भोजन नहीं करना चाहिए। जिसका सार भाग निकाल लिया गया हो, ऐसे दूध दही आदि तथा जूठी वस्तु न किसी को दें और नाहीं स्वयं ही खायें।

[ मूलम् ]

शङ्खलिखितौ–

न तिष्ठँश्च खादेन्न च हसन्न जल्पन्ना[१]वलोकयन्।

इतस्तत इति शेषः।

[ संस्कृत टीका ]

न तिष्ठँश्चेति। तिष्ठन् = उत्तिष्ठन्। हसन् = हास्यं कुर्वन्, उच्चै र्हसन्

---

पा० (१) 'न वि' इति ह. लि. पु. पाठः।

वा । जल्पन्= व्यक्तं भाषमाणः । मौनभोजनस्य प्रशस्तत्वात् । अवलोकयन् = इतस्ततः पश्यँश्च । न । खादेत् ।

[ हिन्दी टीका ]

खड़ा होकर, मजाक करता हुआ या जोर से हंसता हुआ, व्यक्त वाणी बोलता हुआ (क्योंकि मौन भोजन उत्तम माना गया है) तथा इधर-उधर देखता हुआ भी भोजन न करे ।

[ मूलम् ]

देवलः-

न भुञ्जीताघृतं नित्यं गृहस्थो भोजनद्वयम्[१] ।
पवित्रमथ हृद्यञ्च[२] सर्पिराहुरघापहम् ॥

[ संस्कृत टीका ]

न भुञ्जीतेति । गृहस्थः = गृही । नित्यम् = प्रतिदिनम् । भोजनद्वयम् = दिनरात्रिभेदेनोभयं भोजनम् । अघृतम् = घृतरहितम् । न । भुञ्जीत = अश्नीयात् । (यतः) सर्पिः = घृतम् । पवित्रम् = पूतम् । हृद्यम् = अभीष्टम् । (अभीष्टेऽभीप्सितं हृद्यमित्यमरः) । वृष्यमिति पाठे तु पुष्टिकरमित्यर्थः । अघापहम् = पापनाशकञ्च । आहुः-मुनय इति शेषः । "आयु वैं घृतमि" ति श्रुत्या तु आयुर्जनकमपि बोध्यम् ।

[ हिन्दी टीका ]

गृहस्थ जन नित्य ही दिन और रात दोनों समय का भोजन बिना घृत का न करे । क्योंकि घृत पवित्र, प्रिय (अभीष्ट) और पापनाशक होता है, ऐसा मुनिलोग कहते हैं । (वेदवचन के अनुसार तो घृत आयु को बढ़ाने वाला भी है) ।

[ मूलम् ]

विष्णुः -

नोच्छिष्टो घृत[३] मादद्यान्न चन्द्रार्कतारका[४] निरीक्षेत, न मूर्धानं स्पृशेन्न ब्रह्म कीर्त्तयेत् ।

---

पा० (१) भोजनं स्वयम् । (२) वृष्यञ्च । (३) मद्यादिति वी. मि. पाठः । (४) कानि ।

तथा,

**न निश्शेषं भुञ्ज्यात्[१], अन्यत्र दधि-मधु-सर्पिः- पयः- सक्तु-फल- तिलोदकेभ्यः।**

**[ संस्कृत टीका ]**

नोच्छिष्ट इति। उच्छिष्टः = उच्छिष्टमुखः। घृतम् = प्रथमतः सर्पिः। न। आदद्यात् = गृह्णीयात्। उच्छिष्टतायामुपात्तं घृतं नाद्यादित्यर्थः। तथा च स्मृतिसारेऽपि "प्राणाहुतौ घृताभावे पश्चाद्घृतं न भुञ्जीत" इति। मूर्धानम् = शिरः। ब्रह्म कीर्त्तयेत् = वेदं पठेत्। स्मृतिसारेऽपि यथा—

**ताम्रपात्रे पयः पानं नोच्छिष्टे घृतभोजनम्।**
**दुग्धे च लवणं दद्यात् सद्यो गोमांसभक्षणम्॥ इति।**

अत्र "नोच्छिष्टो घृतमादद्यात्= पञ्चग्रासानन्तरं गव्यघृतं न गृह्णीयात्। प्राणाहुत्यविनियुक्तपवित्रस्य जठरभरणार्थग्रहणानौचित्यात्। महिषी-सर्पिषस्तादृशपवित्रत्वविरहेण ग्रहणेऽप्यदोषात् आज्यपदेन घृतपदेन च गव्यस्यैवान्यत्राप्यवगमात्। 'आज्यस्यार्थे सर्पिरि'ति मैत्रायणवचनाद् गव्य-घृतस्यैव निःशेष-भक्षणोपदेशात्। शिष्टाचारानुसारात्। एवञ्चानुच्छिष्ट-पुटकादिना भोजनमध्ये ग्रहणमपि निगृहीतमेवेति स्मृतिदीपिके" ति नित्यकृत्यार्णवः। नखच्युत-घृततैल-भक्षणे दोषमाह वृद्धवसिष्ठः—

**घृतं वा यदि वा तैलं विप्रो नाद्याद् नखच्युतम्।**
**यमस्तदशुचि प्राह तुल्यं गोमांसभक्षणम्॥ इति।**

निश्शेषमिति। निश्शेषम् = अशेषम्। पलम् = मांसम्। (स्याच्चामिषे पलमित्यमरः) भोज्यवस्तुविशेषयोः सम्मिश्रणेन भोजने निषेधमाह बृहद्धर्मसंहितायां विष्णुः—

**न क्षीरे लवणं दद्यान्न चाम्ने गुड़मेव च।**
**क्षीरं तथाऽऽमिषं कृत्वा न भुञ्जीत कदाचन॥ इति**

आमिषं मांसं पठन्तीति कृत्यसारसमुच्चयः।

---

(१) निश्शेपभुक्स्यात् इति ह. पु. पाठः।

[ हिन्दी टीका ]

जूठा मुंह होने पर पहली बार घृत लेकर खाये। (फलितार्थ में भोजन के पहले परोसा हुआ घृत खा रहे हों या खा चुके हों तो दुवारा लेने में दोष नहीं)। खाने के समय में चन्द्रमा, सूर्य तथा ताराओं को न देखें, न शिर का स्पर्श करें और न वेद का पठन करें। तथा,

बिना पात्रशेष बचाये निश्शेष भोजन न करे। किन्तु दही, शहद, घृत, दूध, सत्तू, मांस, तिल, तथा जल के सम्बन्ध में यह नहीं है। अर्थात् इनका भक्षण तो निश्शेष ही करे, कुछ भी बचावें नहीं।

पूर्वोक्त घृत के प्रसंग पर नित्यकृत्यार्णव में उद्धृत स्मृतिदीपिका का विवेचन ऊपर से ज्ञातव्य हैं कि पञ्च ग्रास के बाद पहली बार गोघृत का ग्रहण नहीं करना चाहिए। क्योंकि प्राणाहुति के समय पवित्र (इस गो-) घृत का उपयोग न होने पर उदरभरण के लिए खाना अनुचित है। वचन में पवित्र पद का उपादान होने से भैंस के घृत को वैसा पवित्र न होने के कारण खाते समय भी इसे ग्रहण करने पर कोई दोष नहीं। आज्य या घृत पद से अन्यत्र भी गाय का ही लिया जाता है। फलतः निश्शेष भक्षण का उपदेश भी गोघृत के सम्बन्ध में ही समझना चाहिए। शिष्टाचार भी ऐसा ही है। इससे यह भी स्वतः समझा गया कि भोजन के मध्य में बिना जूठे वर्तन से परोसा गया घृत भी वर्जनीय है।''

ऊपर से निम्नलिखित भी ज्ञातव्य है :-

स्मृतिसार के अनुसार ''ताँबे के पात्र में दूध या पानी पीना, जूठा होने (भोजन के मध्य में) घी खाना, दूध में नमक देकर खाना साक्षात् गोमांस भक्षण के समान है।'' वस्तुतः ''ताम्रपात्रे न भुञ्जीत'' इस वृद्ध मनु वचन के अनुसार गृहस्थों के लिए ऐसे ताम्रपात्र ही भोजन प्रसंग में वर्जित हैं।

वृद्धवसिष्ठ का वचन है-नह के द्वारा गिरे हुए (नखच्युत) अर्थात् हाथ से परोसा गया घृत या तेल न खाये। क्योंकि यम ने उसे अपवित्र कहा है। फलतः उसका भक्षण गोमांसभक्षण के तुल्य है।

व्यास का कथन है-दूध में नमक न मिलावें। आम के (मधुर) रस में गुड़ नहीं मिलाना चाहिए। इसी तरह दूध तथा मांस एक जगह मिलाकर कभी भी न खाये।

[ मूलम् ]

बौधायनः-

**सर्वभक्ष्यापूपकन्द-मूल-फल-मांसानि नावद्येत्।**

भक्ष्यत्वेनैव प्राप्तावपूपादीनां पृथगुपादानं दोषाधिक्यार्थम् ।

[ संस्कृत टीका ]

सर्वभक्ष्येति । अत्र ''सर्वभक्ष्यग्रहणादेवापूपादिप्राप्तौ तद्ग्रहणं दोषातिशयार्थमि'' मित्येव वीरमित्रोदयोऽपि । बौधायनसूत्रविवरणकारः श्री-गोविन्दस्वामी तु ''सर्वभक्ष्योदाहरणत्वेनापूपादिग्रहणमि'' त्याह । दन्तैर्नावद्येत्= दन्तैः खण्डयित्वा न खादेदित्यर्थः ।

[ हिन्दी टीका ]

सभी प्रकार के भक्ष्य पदार्थ तथा विशेषतः पूआ, कन्द, मूल, फल, एवं मांस को दाँतों से टुकड़ा टुकड़ा करके नहीं खाना चाहिए ।

यद्यपि मूलवचन में भक्ष्य पद के उल्लेख अपूप (पूआ) आदि लिया ही जाता तो पुनः इनका कहा जाना इन्हें इस तरह खाने में अधिक दोष होने की बात को दिखाने के उद्देश्य से है ।

[ मूलम् ]

लघुहारीत :–

पयः पानं[१] पुनर्दानं सामिषं[२] पयसा निशि ।
दन्तच्छेदनमुष्णञ्च सप्त सक्तुषु वर्जयेत् ।।

[ संस्कृत टीका ]

पयःपानमिति । पयः पानम् = सक्तुभक्षणानन्तरं दुग्धपानम् । पृथक्पानमिति पाठपक्षे तु एकेन पात्रेण सक्तुपानानन्तरं पुनः किञ्चित् पात्रान्तरेण विलम्व्य तत्पानमित्यर्थः । पुनर्दानम् =पूर्वं सक्तून् पीत्वा पुनस्तदैव तदादानम् । सामिषम् = मांसेन सह । पयसा = दुग्धेन साकम् । सहार्थे तृतीया । आचारचिन्तामणौ तु 'मांसेन पयसा' इति पाठं मत्वा ''मांसेन पयसा वा सहाशनमित्यर्थः'' इति व्याख्यातम् । निशि = रात्रौ । दन्तच्छेदनम् = अल्पजलदानेन कठिनीकृतानां सक्तूनां दन्तैः खण्डयित्वा भक्षणम् । अतएवात्र प्रायः दन्तच्छेदनम् = तृणखण्डिकया दन्तवेधः । तथा च सुश्रुते–'सक्तूनामाशु जीर्येत

पा० (१) पृथक्पानं । (२) मांसेन ।

मृदुत्वादवलेहिके' ति । एवञ्च तथैव भोक्तव्यमिति नित्यकृत्यरत्नमाला-टिप्पणी । परन्तु प्लुतोदाहरणप्रसङ्गे सक्तून् पिब देवदत्त इति सिद्धान्तकौमुदीप्रयोगदर्शनेन पेयपदार्थतया तत्पानमपि विहितं समायाति । उष्णम् = उष्णसक्तुभक्षणम् । एतानि सप्त । सक्तुषु = सक्तुभक्षण-विधौ । वर्जयेत् = त्यजेत् ।

**न त्यजेदर्धजग्धानि सक्तूँश्चाथ कदाचन ।**

इति पुरोदीरितब्रह्मपुराण-वचनेन

**नाशेषं पुरुषोऽश्नीयादन्यत्र जगतीपते ।**
**मन्थाम्बु[1] दधिसर्पिर्भ्यः सक्तुभ्यश्च विवेकवान् ॥**

इति विष्णु(ब्रह्म)पुराणवचनेन च किञ्चिद्भक्षणानन्तरमुच्छिष्ट-सक्तुपरित्यागोऽपि त्याज्यः ।

अत्र "मन्थः=शक्तवः सर्पिषाभ्यक्ताः शीतवारि-परिप्लुताः । नातिसान्द्रा नचात्यच्छा मन्थ इत्यभिधीयते । इति वकोक्त" इति नित्यकृत्यार्णवः । अत्र वीरमित्रोदयस्तु 'मन्थाम्बु' इत्यत्र मध्वन्नमिति पाठं मत्वा "अन्यत्रेत्यस्य मध्वन्नदधिसर्पिर्भ्यः सक्तुभ्यश्चेत्युभयत्राप्यन्वय" इत्याह ।

सक्तुभोजनक्रमः आयुर्वेदे यथा-

**नोदकान्तरितान्, न द्विर्न निशायां न केवलान् ।**
**न भुक्त्वा न रदैश्छित्वा सक्तूनद्यान्न वा बहून् ॥ इति ॥**

**[ हिन्दी टीका ]**

(१) सत्तू खाने के बाद दूध पीना, या एक बार सत्तू खाने के बाद कुछ विलम्ब कर पुनः सत्तू का सेवन करना, (२) एक बार सत्तू खाने के बाद उसी समय पुनः सत्तू खाना, (३, ४) मांस या दूध के साथ सत्तू खाना, (५) रात में खाना, (६) गुलठी या मुठरा बनाकर खाना, फलतः तृणखण्ड (खडिका) से दाँत साफ करना, तथा (७) गरम सत्तू खाना–ये सात क्रियाएँ सत्तू खाने या पीने की विधि में वर्जनीय है । यह मूल वचन का अर्थ हुआ ।

---

पा० (१) मध्वन्न ।

पूर्वोक्त ब्रह्मपुराणवचन के अनुसार जूठा करके सत्तू नहीं छोड़ना चाहिए।

यद्यपि शास्त्रीय वचनों के आधार पर सत्तू खाना प्रतीत होता है किन्तु सिद्धान्तकौमुदी के उदाहरणप्रयोग से पीना भी प्रचलित है।

सुश्रुत ग्रन्थ के अनुसार सत्तू अवलेह बना कर खाना चाहिए। अन्य वचनानुसार यह अवलेह (चाटने योग्य) यदि घृत तथा ठंढे पानी से किया गया हो तो यह मन्थ कहलाता है।

आयुर्वेद के अनुसार सत्तू भोजन में ये निषेध भी हैं। दो जगह का पानी मिलाना, दोबार खाना, रात में खाना, नमक चीनी आदि कुछ भी न मिलाकर केवल सत्तू ही चखाना (फाँकना) भोजन के बाद खाना, दाँतों से काट कर खाना तथा बहुत सत्तू खाना वर्जित है।

## [ मूलम् ]

आपस्तम्बः –

**सोत्तराच्छादनश्चैव यज्ञोपवीती भुञ्जीत। कृत्स्नं ग्रासं ग्रसेत् साङ्गुष्ठम्। न च मुखशब्दं कुर्यात्। न पाणिमवधुनुयात्॥**

एवञ्चात्र गृहीत[१] ग्रासकृत्स्नग्रसनविधानाद् "ग्रासशेषं न चाश्नीयादि"ति पात्रस्थशेषपरम्। "न पिण्डशेषं पात्र्यामुत्सृजेदि" ति बौधायनेनोक्तं ग्रसितुं गृहीतस्य दैवाच्छेष-स्थितौ।

## [ संस्कृत टीका ]

आपस्तम्ब इति। अत्रादितः 'पुष्टिकामाधिकारे' इति शेषः। सोत्तराच्छादनः = सोपरिवस्त्र एव भुञ्जीत, नोत्तरीयवासोव्यतिरेकेण। भोजनकाले सूत्रादिना कार्यमिति कपर्दिभाष्यमिति कल्पतरुरिति नित्यकृत्यार्णवः। कृत्स्नम् = सकलं न तु कवलार्धं भुक्त्वा कवलार्धं त्यजेदित्यर्थः। साङ्गुष्ठम् = साङ्गुष्ठैः सर्वाङ्गुलीभिरित्यर्थः न मुखशब्दं कुर्यात् = भोजनकाले मौनस्य विधानात्। शीत्कारफूत्कारादिध्वनिं न विदध्यात्। एवञ्च = तथा च। अत्र = प्रकृतस्थले। गृहीतग्रासकृत्स्नग्रसन विधानात् "कृत्स्नं ग्रासं ग्रसेदि" ति वचनांशेनेति भावः। "ग्रासशेषं नाश्नीयादि" ति पूर्वोक्तं ब्रह्मपुराणीयं वचनं

---

पा० (१) 'गृहीत' इति पदं ह. पु. नास्ति।

भोजनान्ते पात्रस्थितावशेषपरं बोध्यम् । बौधायनेन प्रोक्तं '' न पिण्डिशेषं पात्र्यामुत्सृजेदि'' ति वचनन्तु ग्रसितुम् = निगलितुम् । गृहीतग्रासस्य । दैवात् = संयोगात् । शेषस्थितौ सावकाशं मन्तव्यम् । न पिण्डेत्यादि वचनार्थस्तु –पिण्डशेषम् = कवलशेषम् । अशितुं गृहीतस्य ग्रासस्य शेषमिति यावत् । पात्र्याम् = भोजनपात्रे । न । उत्सृजेत् = त्यजेत् । भुक्तावशिष्टस्य ग्रासस्याभोज्यत्वात् । तस्य पात्र्यामुत्सर्जने पुनरादानसम्भवाच्च । अतो यावद् ग्रसितुं शक्नोति तावदेवाददीतेति गम्यते । अत्र ''पिण्डशेषम् = अशितुं गृहीत्वा नास्य शेषम्, पात्र्यां भोजनस्येति कल्परुरत्नाकरावि''ति नित्यकृत्यार्णवः ।

[ हिन्दी टीका ]

देह के ऊपर उत्तरीय वस्त्र चद्दर या अंगोछा आदि रखकर ही तथा यज्ञोपवीत (सव्यभाव से) धारण कर भोजन करे । अंगूठा सहित सभी अंगुलियों से ग्रास का पूरा भाग खा लेना चाहिए । ''सी'' ''सी'' ''फू'' ''फू'' आदि कुछ भी मुखशब्द न करता हुआ, और नाहीं हाथ कँपाता हुआ भोजन करे । यह मूलवचन का अर्थ हुआ ।

''कृत्स्नं ग्रासं ग्रसेत्'' इस मूलवचन से ग्रास के अखिल अंश को खा लेने का विधान होने पर '' ग्रासशेष नहीं खाना चाहिए '' यह जो ब्रह्मपुराणीय निषेधवचन है उसे भोजनान्तर में भोजनपात्र में बचाये गए (पा(प) त्र शेष) अन्न के सम्बन्ध में समझना चाहिए ।

उक्त निषेध प्रसंग पर बौधायन का जो कहना है कि खाने के लिए लिये गए ग्रास का शेष भाग भोजन पात्र में न रखें इसका तात्पर्य भोजन हेतु लिये गए ग्रास से दैवात्–संयोगात् बचे अन्न को त्याग देने से है । (क्योंकि खाने के बाद ग्रास का बचा अन्न अभोज्य है । उसे भोजन पात्र में रख देने पर पुनः ग्रहण कर लिया जा सकता है । फलतः जितना खा सके उतना ही ग्रास लेना चाहिए) ।

[ मूलम् ]

विष्णुपुराणे–

अश्नीयात्तन्मना भूत्वा पूर्वन्तु मधुरं रसम् ।
लवणाम्लौ तथा मध्ये कटु-तिक्तादिकाँस्ततः ॥
प्राग्द्रवं पुरुषोऽश्नीयात् मध्ये च कठिनाशनः ।
पुनरन्ते द्रवाशी च बलारोग्ये न मुञ्चति ॥

[ संस्कृत टीका ]

अशनीयादिति । पुरुषः=भोक्ता जनः । तन्मनाः =भुज्यमानान्नगतध्यानः । भूत्वा । तदुक्तमादित्यपुराणे 'अन्नं विष्णुः स्वयं प्राहे 'त्यनुवृत्तौ–

**प्राणार्थं मां सदा ध्यायेत् स मां सम्पूजयेत्सदा ।**

**अनिन्दँश्चैतदद्यात्तु दृष्ट्वा हृष्येत् प्रसीदेच्च ॥ इति ॥**

पूर्वन्तु = सर्वप्रथमन्तु । मधुरं रसम् = घृतमध्वादि । अतएवात्र– अतएव 'अशनीयात्तन्मना भूत्वा पूर्वन्तु मधुरं रसम् ।' इति वचने मधुरं घृतादीति व्याख्यातम् । आदिपदेन मधुसंग्रह इति स्मृतिदीपिके'' ति नित्यकृत्यार्णवः । तथा मध्ये । लवणाम्लौ = लवणरसशालि, अम्लरसशालि च वस्तु । ततः । कटु–तिक्तादीन् । अशनीयात् । प्राक्=प्रथमम् । द्रवम् = तरलं वस्तु । मध्ये च । कठिनाशनः = कठोरवस्तुभक्षणशीलः । अन्ते = सर्वान्ते । पुनः । द्रवाशी = द्रवीभूत–दध्यादिवस्तुभक्षकः । बलारोग्ये = शक्तिं नैरुज्यञ्च । न । मुञ्चति = जहाति । एवञ्च द्रवं मधुरञ्च पूर्वं, कठिनं लवणमम्लञ्च मध्ये, ततः कटुतिक्तादि, अन्ते च पुनः द्रवं वस्तु भक्षयेत् ।

अत्र ''आयुर्वेदे ( भावप्रकाशे )–

**घृतपूर्वं समश्नीयात्कठिनं प्राक् ततो मृदु ।**

**अन्ते पुनर्द्रवाशी तु बलारोग्ये न मुञ्चति ॥ इति ॥**

तथा,

**गुरु पिष्टमयं द्रव्यं तुण्डलान् पृथुकान्यपि ।**

**न जातु भुक्तवान् खादेन्मात्रां खादेद् बुभुक्षितः ॥ इति ।**

मात्राम् = अल्पमि'' ति नित्यकृत्यरत्नमाला ।

इदन्तूपरिष्टाज्ज्ञातव्यम्–

**हस्तदत्तानि चान्नानि प्रत्यक्षं लवणं तथा ।**

**मृत्तिकाभक्षणञ्चैव गोमांसाशनवत्स्मृतम् ॥ इति ।**

किन्तु प्रत्यक्षमपि लवणं हस्तदत्तमेव निषिद्धं, यथाह पैठीनसिः –

**लेह्यं पेयञ्च विविधं हस्तदत्तं न भक्षयेत् ।**

रात्रौ दीपनिर्वाणे किं कर्तव्यमित्याह कात्यायनः–

नृणां भोजनकाले तु यदा दीपो विनश्यति ।
पाणिभ्यां पात्रमादाय भास्करं मनसा स्मेरत् ॥
पुनश्च दीपिकां कृत्वा तच्छेषं भोजयेन्नरः ।
पुनरन्नं न भोक्तव्यं भुक्त्वा पापैर्विलिप्यते ॥ इति ।

पुनरन्नमिति । गृहीत्वेतिशेषः । पात्रस्थन्तु भोक्तव्यं, तच्छेषं भोजयेन्नर इत्यभिधानादि'' ति वीरमित्रोदयः ।

[ हिन्दी टीका ]

भोक्ताजंन भक्ष्य वस्तु के ऊपर ध्यान रखकर सर्वप्रथम घृत या मघु आदि से मिश्रित (मीठी) वस्तु, बीच में नमकीन तथा खट्टी, तथा अन्त में चरपरा (कडुबी) तथा तिक्त (तीता) वस्तु खाये ।

प्रथमतः पनीला पिघला, बीच में कड़ा पदार्थ, तथा अन्त में पुनः पिघला कोमल पदार्थ खाने वाला अपनी शक्ति और आरोग्य से हीन नहीं होता ।

सारांश में, प्रारम्भ में घी मधु आदि से मधु मिश्रित तरल पदार्थ, बीच में कठोर, नमकीन तथा खट्टा, इसके बाद चरपरा तथा तीता आदि पदार्थ एवं सर्वान्त में पुनः तरल पदार्थ का भक्षण करें ।

नित्यकृत्यरत्नमाला में उद्धृत आयुर्वेद भावप्रकाश के अनुसार भी ऊपर से ज्ञातव्य है कि घृत भक्षण के बाद कठोर पदार्थ, इसके बाद कोमल पदार्थ, अन्त में पुनः तरल पदार्थ खाने से शक्ति और आरोग्य में हानि नहीं होती ।

तथा दिन और रात में एक-एक बार भोजन कर लेने के बाद गरिष्ठ (गुरुपाकी) आँटे से बनाया गया समानं, चावल (केवल भूना या भीगा हुआ) तथा चिउड़ा भी कभी भी न खाये । यदि भूखा हो तो भी उक्त सामान अल्पमात्रा में खावे ।

वीरमित्रोदय में उद्धृत वचनानुसार ऊपर से ये निम्नलिखित ज्ञातव्य हैं कि हाथ से हाथ में दिये गए अन्न इसी तरह नमक, तथा मृत्तिका का भक्षण गोमांसभक्षण के समान हैं ।

हाथ से हाथ में दिये गए नमक जैसे ही साग, सब्जी, घृत, तेल, लेह्य (चाटने योग्य वस्तु), पेय (पीने योग्य पदार्थ) का भी भक्षण नहीं करना चाहिए ।

रात में भोजन के समय दीप यदि बुझ (विनष्ट) हो जाय तो दोनों हाथों से भोजन पात्र पकड़ कर भास्कर कां ध्यान करे और दीप जला देने पर पात्रस्थ शेष अन्न का भोजनकरले किन्तु पुनः परोसन लेकर न खाये । यदि खाये तो पापभागी होता है ।

**[ मूलम् ]**

ब्रह्मपुराणे–

**कुर्यात् क्षीरान्तमाहारं न च पश्चात्पिबेदधि ।**
**जठरं पूरयेदर्धमन्नैर्भागं जलेन च ।**
**वायोः सञ्चरणार्थाय चतुर्थमवशेषयेत् ।**

अधि = अधिकम् । दधीति पाठो लोकविरुद्धः ।

**[ संस्कृत टीका ]**

कुर्यादिति । आहारम् = भोजनम् । क्षीरान्तम् = दुग्धान्तम् । कुर्यात् । (किन्तु) पश्चात् = कटुतिक्तादिभोजनानन्तरम् । अधि = अधिकम् । न । पिबेत् । अतएवात्र–"अधि = अधिकम् । तेन क्षीरमाहारान्ते एव पेयम् । किन्त्वल्पमित्यर्थः" इत्याचारचिन्तामणिरपि । परं शङ्करमिश्रकृतंछन्दोगाह्निकन्तु "अधि = अधिकं पानीयं शेषे न पिबेदित्यर्थ" इत्याह । केचिदत्र "पिबेद्दधीति संयुक्तं द्वयं पठन्ति । परं सम्पद्यमानोऽयं दधीति पाठो लोकविरुद्धः । व्यञ्जनादिभोजनोत्तरं दधिभक्षणस्य तक्रभक्षणस्य वा लोकव्यवहार-प्रचलितत्वत् "दधिक्षीरघृतैर्भुक्त्वा प्रभूतैर्व्यञ्जनैस्तथा" इत्यभिधास्यमान-वृद्धशातातपवचनेनार्थक्रमानुसारं घृतव्यञ्जनदधिदुग्धभोजनस्य शास्त्रसिद्धत्वाच्च ।

दध्यादिभक्षणोत्तरमनुपानरूपेण शीतलजलं पेयम् । तथा च भट्टमल्लः–

**अनुपानं हिमजलं यवगोधूमनिर्मिते ।**
**दध्नि, मद्ये, विषे, द्राक्षे, पिष्टे, पिष्टमयेऽपि च ॥ इति ।**

जठरमिति । अर्धं जठरम् = जठराग्नेरर्धभागम् । अन्नैः । भागम् = तृतीयभागम् । जलेन । च । पूरयेत् । (किन्तु) चतुर्थं भागम् । वायोः =

प्राणापानादिदेहस्थवायूनाम् । सञ्चलनार्थाय = इतस्ततः सञ्चलनार्थम् । अवशेषयेत् = रिक्तमेव परित्यजेत् ।

भोजने विशेष-नियमा आह्निककारिकासु-

**वामहस्ते जलं धृत्वा मणिबन्धे निधाय च ।**
**भुज्यमानः पिबन् वारि नोच्छिष्टं मनुरब्रवीत् ॥**
**यः पुनर्भोजनं कुर्वन्नशनन्तं संस्पृशेद्द्विजः ।**
**ततस्तेन न भोक्तव्यं भुक्त्वा चान्द्रायणं चरेत् ॥**

इति कृत्यसारसमुच्चयपरिशिष्टः ।

**[ हिन्दी टीका ]**

भोजन के अन्त में ही दूध पीना चाहिए, वह भी अधिक नहीं, किन्तु अल्प मात्रा में । (यह अर्थ आचारचिन्तामणि की व्याख्या के अनुसार है) । किन्तु म० म० शङ्कर मिश्र कृत छन्दोगाह्निकोद्धार की व्याख्या के अनुसार अर्थ है कि भोजनान्त में अधिक पानी नहीं पीना चाहिए ।

यहाँ कितने लोग संयुक्त दो दकार पढ़ते हुए 'पिबेद्दधि' ऐसा पाठ मानते हैं । इनके अनुसार अर्थ होगा कि भोजन के अन्त (अर्थात् दूध पीने के पूर्व) में दही का खाना या तक्र पीना वर्जनीय है । किन्तु ऐसा पाठ मानना लोकव्यवहार विरुद्ध है । क्योंकि व्यञ्जन आदि के भोजन के बाद दही खाना या तक्र पीना लोकव्यवहार में प्रचलित है । (आगे कहे जाने वाले वृद्ध शातातप के वचनानुसार घृत, व्यञ्जन भोजन के क्रमशः दधि एवं दुग्ध भक्षण शास्त्रानुकूल भी है) ।

भट्टमल्ल के वचनानुसार ऊपर से ज्ञातव्य है कि दही, मदिरा, विष, दाख, खास आँटे से बना सामान, या आँटे का बना पूआ पूड़ी आदि खाने के बाद अनुपान रूप में शीतल जल का पान भी कर लें ।

मूलवचन के अर्थ में ज्ञातव्य है कि पेट का दो भाग अन्न से, तीसरा भाग जल से भर दें, किन्तु चौथा भाग तो प्राण अपान आदि वायुओं के सञ्चारनिमित्त खाली छोड़ देना चाहिए ।

आह्निककारिकाओं में कहे गए भोजन प्रसंगी कुछ नियम ऊपर से ज्ञातव्य हैं कि मनु के कथनानुसार भोजन के समय बायें हाथ से जलपात्र लेकर तथा दाहिने हाथ के मणिबन्ध के ऊपर रखकर जल पीने से वह जल जूठा नहीं होता है ।

जो कोई भोजन करता हुआ भोजन करते हुए किसी दूसरे द्विज को छूता है तो उन दोनों को ही भोजन नहीं करना चाहिए। करें तो चान्द्रायणव्रत (या इसके लिए विहित प्रायश्चित्त) करें।

[ मूलम् ]

शातातप:[१] –

विद्यमानेन हस्तेन ब्राह्मणो ज्ञानदुर्बलः ।
तोयं पिबति वक्त्रेण श्वाऽसौ जायेत नान्यथा ॥१॥
उद्धृत्य वामहस्तेन यस्तोयं पिबति द्विजः ।
सुरापानेन तत्तुल्यं मनुराह प्रजापतिः ॥२॥

उद्धृत्य गृहीत्वेत्यर्थः।

हस्तं प्रक्षाल्य गण्डूषं यः पिबेदविचक्षणः[२]।
स देवाँश्च पितॄंश्चैव आत्मानं चैव घातयेत्[३] ॥ ३॥

[ संस्कृत टीका ]

विद्यमानेनेति। ज्ञानदुर्बलः = ज्ञानहीनः। ब्राह्मणः = विप्रः। विद्यमानेन हस्तेन–अपीत्वेति शेषः। वक्त्रेण=केवलेन मुखेनेत्यर्थः। अत्र "वक्त्रेणेति हस्तेनानुत्तोल्ये त्यर्थः" इत्याचारचिन्तामणिः। मुखे हस्तेन पेयजलमसंयोज्येत्येतद् भावार्थः। तोयं पिबति। असौ। श्वा = कुक्कुरः। जायेत = अग्रे जन्मनि उत्पद्येत। नान्यथा = उक्तविपरीतं न स्यादिति भावः ॥१॥

उद्धृत्येति। यः। द्विजः = द्विजातिः – जलपातेति यावत्। वामहस्तेन=अत्र "वामहस्तेन केवलेनेत्यर्थः। 'सावधारणं सर्वं वाक्यम्' इति न्यायादि" ति नित्यकृत्यरत्नमाला। उद्धृत्य=गृहीत्वा। तोयम् = जलम्। पिबति। तत् = तस्य तज्जलपानम्। सुरापानेन = मदिरापानेन। तुल्यम् = समानम्। (इति) प्रजापतिः मनुराह ॥ २ ॥

हस्तं प्रक्षाल्येति। यः। अविचक्षणः = अज्ञानी। हस्तं प्रक्षाल्य प्रक्षालनोत्तरम्। गण्डूषम् = भोजनान्ते द्विराचमनरूपेण कर्तव्यं प्रत्यपोशानम्।

पा० (१) ब्रह्मपुराणे। (२) त्पापमोहितः। (३) स दैवे चैव पित्र्ये च आत्मानं चैव सादयेत्।

पिबति = करोति । स देवान् पितॄन् आत्मानञ्च । घातयेत् = वञ्चयेत् । एतेन इदमपोशानं देवपित्रात्मनां सन्तर्पकं भवतीति गम्यते । अत्र ''तेन हस्तम् प्रक्षाल्यैव प्रत्यपोशानं ग्राह्यमित्यर्थः'' इत्याचारचिन्तामणिरपि ॥

[ हिन्दी टीका ]

जो ज्ञानहीन ब्राह्मण हाथ के रहने पर भी मुँह से (पानी में मुँह डाल कर) पानी पीता है वह अगले जन्म में अवश्य ही कुत्ता होता है ॥१॥

जो द्विज या जल पीनेवाला व्यक्ति अपने केवल वायें हाथ से जल लेकर पीता है; उसका यह पीना मदिरापान के समान है, ऐसा प्रजापति मनुजी कहते हैं ॥ २॥

जो ज्ञानहीन द्विज भोजन के बाद आचमन करने के रूप से ''ॐ अमृतापिधान मसि स्वाहा'' मन्त्रपठन के साथ कर्त्तव्य प्रत्यपोशान हाथ धोकर करता है वह देव, पितृ तथा आत्मघाती होता है ऐसा प्रजापति मनुजी का कहना है ॥३॥

इसी हेतु आचारचिन्तामणि की भी व्याख्या है कि बिना जूठा हाथ धोये ही प्रत्य पोशान का ग्रहण करना चाहिए । उक्तवचन से सिद्ध होता है कि यह प्रत्यपोशान ग्रहण देव, पितर तथा आत्मा को भी तृप्ति करने वाला है ।

[ मूलम् ]

बौधायनः—

भुञ्जानेषु तु विप्रेषु यस्तु पात्रं परित्यजेत् ।
भोजने विघ्नकर्ताऽसौ ब्रह्महा स[1] तथोच्यते ॥

पात्रत्यागो देशान्तरगमनात् । न त्वेतद् बलाद् भोजनकाले पात्र धारणाक्षेपः । अथवा, ''नापजहीतापजहीत वे'' त्यापस्तम्बेन पात्रधारणा- धारणयो र्विकल्प- विधानाद् यदा पात्रधारणपूर्वकं भोजनमारब्धं तदैव[2] बोध्यम् ।

[ संस्कृत टीका ]

भुञ्जानेषु=भोजनं कुर्वाणेषु । विप्रेषु = ब्राह्मणेषु । यः = अविवेकी जनः । पात्रं परित्यजेत् = देशान्तरगमनेन भोजनं विमुञ्चेत् । असौ । भोजने विघ्नकर्त्ता = प्रत्यूहकारकः । तथा । ब्रह्महा=ब्रह्मघाती । उच्यते मुनिभिरिति शेषः ।

---

पा० ( १ ) च, ( २ ) तदेदं, इत्युभयमपि ह. पु. ।

प्रकृते, पात्रत्यागः–देशान्तरगमनात् । एवमेव रत्नाकरोऽपि । अन्यस्थान–गमनाद् भोजनपात्रस्य त्याग इत्यर्थः । न तु । एतद्बलाद् = प्रकृतवचन–सामर्थ्यात् । भोजनकाले । पात्रधारणाक्षेपः =वामहस्तेन भोजनपात्रधारणस्य आशङ्का विधेया । अथवा, ".नापजहीत = सव्येन पाणिना पात्रं न विमुञ्चेत् । अथवाऽपजहीत । अयञ्च व्यवस्थितो विकल्पः । यदि प्रथमं पात्रधारणम् उपक्रान्तं तदा धारणमेव, यदि न तदा अधारणमेवे 'ति कपर्दीति कल्पतरुरि' 'ति वीरमित्रोदयः । एवञ्च "नापजहीते" त्यापस्तम्बवचनेन यदा वामहस्तेन भोजनपात्रधारण–पूर्वकं भोजनमारब्धं तदैव भोजनकाले पात्रधारणं बोध्यं, नतु सर्वदैवेति भावः ।

### [ हिन्दी टीका ]

भोजन करते ब्राह्मणों के बीच से जो अपने भोजनपात्र का त्याग (अन्यत्र चले जाने के कारण) कर देता है, वह उस भोजन में विध्नकर्ता होने के साथ ही ब्रह्मघाती भी कहा जाता है । यह मूल वचन का अर्थ हुआ ।

यहाँ भोजनपात्र के त्याग का तात्पर्य दूसरे स्थान पर चले जाना समझना चाहिए । न कि उक्त वचन के बल से भोजनंकाल में बायें हाथ से भोजनपात्र पकडे रहने के विध ान की आशङ्का करनी चाहिए ।

अथवा "बायें हाथ से भोजनपात्र के पकड़े रहे या न रहे" इस आपस्तम्बवचन के अनुसार दोनो (भोजनपात्र पकडे रहना न रहना) प्रकार का विधान विकल्प रूप से इस तरह व्यवस्थित माना जाता है कि यदि भोजन के प्रारम्भ में भोजनपात्र का धारण कर लिया गया हो तो भोजनान्त तक धारण ही करना चाहिए । यदि नहीं तो धारण नहीं ही करें । (यह व्यख्या उक्त वचन के व्याख्याकार कपर्दी की है, ऐसा कल्पतरु का कहना है)

अब सारांश में उक्त आपस्तम्ब वचन से भोजनपात्र का धारण करना या धारण न करना दोनों ही विकल्प से विहित होने के कारण जब बायें हाथ से भोजनपात्र पकड़कर भोजन शुरू किया हो तभी भोजन काल में पात्रधारण समझना चाहिए, न कि सभी समय में ।

[ मूलम् ]

वृद्धशातातपः—

दधि-क्षीर-घृतै र्भुक्त्वा[१] प्रभूतैर्व्यञ्जनैस्तथा ।

उष्णोदकैर्धान्यचूर्णैः करौ श्मश्रूणि[२] शोधयेत् ॥

[ संस्कृत टीका ]

दधिक्षीरेति । प्रभूतैः = प्रचुरैः (प्रभूतं प्रचुरं प्राज्यमित्यमरः) । व्यञ्जनैः = तेमनैः । तथा दधिदुग्धघृतैः सह । भुक्त्वा वस्तुतः अर्थक्रमानुसारं घृत-व्यञ्जन-दधि-दुग्ध-भक्षणं क्रमिकं बोध्यम् । उष्णोदकैः । धान्यचूर्णैश्च । करौ = हस्तौ । श्मश्रूणि = मुखलोमानि च । शोधयेत् =संस्कुर्यात्, परिष्कुर्यादिति यावत् ।

[ हिन्दी टीका ]

प्रचुरव्यञ्जन, इसी तरह घी, दही तथा दूध के साथ खाने के बाद गरम जल तथा धानके चूर्ण से दोनो हाथ और दाढ़ी मूछ साफ कर लें ।

[ मूलम् ]

देवलः—

भुक्त्वाऽऽचामेद्[३] यथोक्तेन विधानेन समाहितः ।

शोधयेन्मुख-हस्तौ च मृदद्भिर्घषर्णैरपि[४] ॥

आचमन-मुखादिशोधनयोरर्थात्पाठक्रमबाधः ।

[ संस्कृत टीका ]

भुक्त्वेति । समाहितः = अनन्यमना भोक्ता । भुक्त्वा = भोजनोत्तरम् । मृदद्भिर्घषणैरपि = जलसहितमृत्तिकाभिः सम्मर्दनैरपि । मुखं हस्तौ च । शोधयेत् =शुद्धिं विदध्यात् । (तथा) यथोक्तेन = आचमनप्रकरणोक्तेन । विधानेन = नियमेन । आचामेत् = उपस्पृशेत् ।

पा० (१) र्वाऽपि । (२) श्मश्रून् । (३) चान्नं । (४) घर्षणेन च ।

यद्यपि वचने पाठ-क्रमानुसारमाचमनोत्तरं मुखादिशोधनं प्रतीयते तथापि पाठक्रमादर्थक्रमो बलीयानिति नियमानुसारम्, अर्थात् =अर्थक्रमानुरोधात् पूर्वं मुखदिशोधनं पश्चादाचमनमिति स्थितिः सम्पद्यते ।

[ हिन्दी टीका ]

भोक्ता अनन्यमनस्क हो जलसहित मिट्टी से रगड़कर भी मुंह और हाथों को शुद्ध कर ले । बाद विधानानुसार द्विराचमन करे ।

यद्यपि मूलवचन के पाठानुसार पहले आचमन तब मुखादिशोधन करना प्रतीत होता है, किन्तु 'पाठक्रम से अर्थक्रम बलवान् है' इस मीमांसाशास्त्रीय निर्णय के अनुसार अर्थ क्रमके अनुरोध से प्रथम मुखादि शोधन और पश्चात् आचमन होना समझें ।

[ मूलम् ]

**बौधायनः—**

**नातिसुहितोऽमृतापिधानमसीत्युपरिष्टादपः पीत्वा आचान्तः पुनराचम्य[१] दक्षिण[२] पादाङ्गुष्ठके पाणिं[३] निःस्रावयेत्[४]—**

**'अङ्गुष्ठमात्रः[५]' पुरुषो ह्यङ्गुष्ठञ्च[६] समाश्रितः ।**

**ईशः सर्वस्य जगतः प्रभुः प्रीणाति[७] विश्वभुगि[८]' ति ।**

सुहितः = तृप्तः । हस्तद्वयेनावनेजनं ब्रह्मपुराणा न्मतान्तरमिति । तथा,

**मांस-मत्स्य-तिल-मधु-संसृष्ट[९]म्प्राश्याप[१०] उपस्पृश्याग्निमभिस्पृशेत् ।**

[ संस्कृत टीका ]

नातिसुहित इति । अतिसुहितः = अतितृप्तः । न, अश्नीयादिति पूर्वक्रिययाऽन्वयः । एतेनात्यशनं वर्जयेदिति भावः । उक्तञ्च मनुनाऽपि—

न भुञ्जीतोद्धृतस्नेहं नातिसौहित्यमाचरेत् ॥ इति ।

अतो मिताशनमुत्तममिति सारांशः ।

---

पाठ० (१) हृदयदेशमभिस्पृशति—प्राणानां ग्रन्थिरसि रुद्रो मा विशान्तकस्तेनान्नेनाप्यायस्व'' इत्यधिकः पाठः इदानीन्तन प्रकाशित सविवरण बौधायनधर्मसूत्रग्रन्थे वीरमित्रोदये च । (२) णे । (३) णी । (४) यति । क्वचित्तु पादाङ्गुष्ठे स्रावयति इति नि० कृ० पाठः । (५) त्रः । (६) 'अ' नि. कृत्यार्णव ह. पुस्तकयोः पाठः । (७) 'तु' इति ह. पु. वीरमि. । (८) मन्त्रेण इत्यधिकः पाठः नित्यकृत्यार्णवे । (९) संसृष्टप्राशने । (१०) मुप ।

"अमृतापिधानमसि" = अमृतस्य–अन्नस्य, अन्नममृतञ्चेतिश्रुतेः । अपिधानम् = उपरिप्रच्छादनम् । उदकं तत्त्वमसीति मन्त्रार्थः ।

अतएवात्र "हे पीयमान जल, त्वममृतम् = अविनश्वरम् । अपिधानम् = आच्छादनमसि" इति तै० आ० ना० उ० सायणभाष्यम् "हे जल, त्वम् अमृतापिधानमसि = अमृतस्य–पञ्चमहायज्ञावशिष्टस्य भुक्तान्नस्य, अपिधानम्–आच्छादनम्, असि–भवसि " इति ब्राह्मणसर्वस्वे हलायुधेन व्याख्यातमपि । एवञ्चानेन स्वाहान्तमन्त्रेण, उपरिष्टान् = भोजनोपरान्तम् । अपः पीत्वा = आचम्य । अनन्तरं पुनराचम्य । दक्षिणपादाङ्गुष्ठे । अङ्गुष्ठमूले इति बोध्यम् । पाणिं निस्स्रावयेत् = अधोनिर्दिष्टमङ्गुष्ठमात्र इति मन्त्रं पठन् दक्षिणपाणिना जलं प्रक्षिपेदित्यर्थः ।

अङ्गुष्ठेति । अङ्गुष्ठं प्रमाणमस्येति अङ्गुष्ठमात्रः "प्रमाणे द्वयसच् दघ्नच् मात्रचः" (पा० सू० ५।२।३७) इति मात्रच् । पुरुषः=पुरि–देहे, शेते इति पुरुषः । आह च कृष्णद्वैपायनोऽपि सावित्र्युपाख्याने–"अङ्गुष्ठमात्रं पुरुषं विचकर्ष यमो बलात्" इति । तत्परिमाणस्तदाश्रयश्चासावीश्वरः । जगतः=जङ्गमस्य । सर्वशब्दात् स्थावरस्य च । प्रभुः = शास्ता । विश्वभुक् = प्रभूतं प्रियतमं विश्वं भुनक्ति, भुङ्क्ते वा इति विश्वभुक् । प्रीणाति = तर्पयति । लेटि प्रयोगस्य पाठे तु 'तर्पयतु' इत्यर्थः । अतएवात्र–"क्षुधाऽऽदिजनित–चित्त–विक्षेपशान्तेरूर्ध्वं भोक्तुर्जीवस्य परमेश्वर रूपत्वानुसन्धाने हेतुभूतं मन्त्रं दर्शयति अङ्गुष्ठमात्र इति । हृदयमध्यगत आकाशः स्वाङ्गुष्ठपरिमितः । तत्र वर्तमाना बुद्धिरपि तावती । तयाऽवच्छिन्नो जीवरूपः पुरुषोऽप्यङ्गुष्ठमात्रः । स च स्वकीयया ज्ञानक्रियाशक्त्याऽङ्गुष्ठं समाश्रितः । चकारान्मस्तकञ्चाश्रितः, आपादमस्तकव्यापीत्यर्थः । स च उपाधिसम्बन्धमन्तरेण स्वकीयेन वास्तवेन रूपेण सर्वस्य जगतः, ईशः=नियन्ता । अतएव विश्वभुक् = सर्वं जगद् भुङ्क्ते तादृशः प्रभुरीश्वरः, प्रीणाति = अनेन भोजनेन प्रीतो भवतु"–इति तै० आ० उ० सायणभाष्यम् ।

"पुरुषः प्रीणातु । पुरि=देहे, शेते इति पुरुषः परमात्मा उच्यते । प्रीणातु = प्रीतो भवतु । किं भूतः ? अङ्गुष्ठमात्रः = अङ्गुष्ठप्रमाणः । परिमाणं

सूक्षत्वाभिप्रायमेतत् । पुनः किंभूतः ? सर्वस्य जगतः ईशः=ईश्वरः । सर्वस्यैव जगतः आत्माधिकारत्वात् । किंभूतः ? विश्वभुक् = विश्वस्य भोक्ता। भोक्तृत्वञ्च पालकत्वं संहारकत्वं वा । अयमेव स्वरूपः पुरुषः देहमभिव्याप्य स्थितः, अनेन हस्तनिःस्रावणजलेन प्रीणात्वित्याशंसावाक्यार्थः'' इति ब्राह्मणसर्वस्वे हलायुधेन व्याख्यातमपि ।

ब्रह्मपुराणेति ।

**विप्रस्त्वेवमुपस्पृश्य पादाङ्गुष्ठे च दक्षिणे ।**
**हस्ताभ्यां मन्त्रवद्दद्याद् विधिवच्चावनेजनम् ॥**

इति ब्रह्मपुराणानुसारं हस्ताभ्यामिति द्विवचनाद् द्वाभ्यामेव हस्ताभ्यामवनेजनजल-प्रक्षेपणं मतान्तरं बोध्यम् ।

मांसेति । संसृष्टशब्दः प्रत्येकमभिसम्बध्यते । 'द्वन्द्वान्ते द्वन्द्वादौ वा श्रूयमाणं पदं प्रत्येकमभिसम्बध्यते' इति नियमात् । यावद्भिः परमाणुभिः मिश्रिते ओदनादौ तद्रसोपलब्धिर्भवति तावद्भिस्संसृष्टस्य प्राशनेऽयं विशेषः ।

ननु मांससंसृष्टोपादानादेव मत्स्यसंसृष्टस्या प्युपादानसिद्धेः कुतः पृथगुपादानमिति चेन्न । मत्स्यगन्धोपलब्धावपि एतद्वैशिष्ट्यस्य बोधनार्थत्वात् ।

प्राश्य = भुक्त्वा । उपस्पृश्य = आचम्य । अग्निम्= अग्निज्वलनम् । अभिस्पृशेत् = सम्यक्तया स्पृशेत् । एवञ्चान्यत्रापेक्षया मांसादिसंसृष्टा-(मिश्रिता) न्न-प्राशने शुद्धाचमनं कृत्वाऽप्यग्नि-ज्वलनं स्प्रष्टव्यमि-त्यत्र विशेषो बोध्यः । अतएव-''मध्वादिभक्षणानन्तरमाचान्तस्याप्यग्निस्पर्शः शुद्ध्यर्थमेवे''त्याचारचिन्तामणिः । एवमेव, ''मांसादिसंसृष्टान्न-प्राशने शुद्धाचमनं कृत्वाऽग्निः स्प्रष्टव्य'' इति वीरमित्रोदयश्च ।

एताभ्यामुद्धरणाभ्यां केवलमांसादिभक्षणे मांसादिसंसृष्टान्नप्राशने च निष्पद्यमानोऽयं नियमो वेदितव्यः ।

**[ हिन्दी टीका ]**

अतितृप्त होकर भोजन नहीं करना चाहिए । अर्थात् अल्पभोजन करना उत्तम है। भोजन समाप्त करने पर ''ओं अमृतापिधानमसि स्वाहा'' इस मन्त्र से आचमन कर अनन्तर पुनः आचमन कर दाहिने पैर के अंगूठे की जड में-

अङ्गुष्ठमात्रः पुरुषो ह्यङ्गुष्ठं च समाश्रितः।
ईशः सर्वस्य जगतः प्रभुः प्रीणति विश्वभुक्॥

इस मन्त्रको पढ़कर दाहिने हाथ से जल प्रक्षेप करें।

पहले मन्त्र का अर्थ है ''हे जल, अन्नरूप अमृत का अविनाशी प्रच्छादन (ऊपर से ढकनेवाला) तुम ही हो अतः तदर्थ आचमन द्वारा तुझे हवन कर रहा हूँ।''

दूसरे मन्त्र का अर्थ है–''हृदय के मध्य में अंगूठे के बराबर के आकाश में अवस्थित यह उपाधिरहित जीवरूप ईश्वर जो समस्त स्थावर जङ्गम स्वरूप जगत् के नियन्ता, भोक्ता तथा संहारक है वह वस्तुतः देहव्यापी पूर्वकृत भोजन तथा इस हस्त निःस्रावित जल से प्रमुदित हों।''

इस प्रसंग पर ब्रह्मपुराण का जो कहना है कि ब्राह्मण (भोक्ता) इस तरह आचमन कर दोनों हाथों से पूर्वोक्त मन्त्र पढ़ते हुए पैर के दाहिने अंगूठे पर विधिपूर्वक अवनेजनजल छिड़के, यह अन्य मत समझना चहिए। तथा

मांस, मत्स्य, तिल तथा मधु (शहद) या इनसे मिश्रित अन्न खाने पर आचमन कर अग्निज्वाला का स्पर्श करे। उक्त विशेष विधान अन्य भोजनस्थल की अपेक्षा यहाँ शुद्धि हेतु अधिक समझना चाहिए।

यहाँ एक आशंका हो सकती है कि मांस या मांससंसृष्ट (मिश्रित) कहने से ही मत्स्य या मत्स्यसंसृष्ट का भी बोध हो ही जाता तो फिर इसे अलग से कहने की क्या आवश्यकता? इसका उत्तर यह है कि मत्स्यगन्ध की उपलब्धि में भी यह विशेषता दिखाने हेतु ही मत्स्य पद का उपादान किया गया है।

[मूलम्]

ब्रह्मपुराणे–

सम्मार्ज्य बाहू जानू च गोप्रदानफलं लभेत्।
भुक्त्वा नैव प्रतिष्ठेत नचाप्यार्द्रेण पाणिना[1]॥
आचान्तोऽप्यशुचिस्तावद् यावद् पात्रमनुद्धृतम्।
उद्धृतेऽप्यशुचिस्तावद् यावन्नोन्मृज्यते मही॥

---

पा० (१) वाससा।

[ संस्कृत टीका ]

सम्मार्ज्येति । बाहू जानू च । सम्मार्ज्य = जलेन प्रक्षाल्य । 'भोजने कृते' इति शेषः । गोप्रदानफलं लभेत् । अनेनार्थवादेनास्य अवश्यकर्तव्यतासिद्धिः । भुक्त्वा=भोजनं विधाय । उच्छिष्टमुख इति यावत् । नैव प्रतिष्ठेत = कस्मैचित् स्थानान्तराय नैव प्रस्थानं कुर्यात् । नचापि । आर्द्रेण पाणिना प्रक्षालनोत्तरं क्लिन्ने हस्ते सतीत्यर्थः । अत्र प्रकृत्यादित्वादवच्छेदे तृतीया । 'वाससा' इति पाठपक्षेऽपि क्लिन्ने वस्त्रे सतीत्यर्थः । अत्रापि प्रतिष्ठेतेति पूर्वक्रियाऽन्वयः । एवमेव, आचान्तोऽपि = भुक्त्वा कृताचमनोऽपि । तावत् । अशुचिः =अपवित्रस्तिष्ठति । यावत् । पात्रम् = उच्छिष्टं भोजनपात्रम् । अनुद्धृतम्=भोजनस्थानान्न दूरीकृतम् । उद्धृतेऽपि = दूरीकृतेऽपि । तावदशुचिः यावत् । मही=भोजनस्थानम् । न । उन्मृज्यते=गोमयोदकोपलेपनादिभिः परिष्क्रियते, संशोध्यते इति यावत् ।

[ टिप्पणी ]

अत्रेदमुपरिष्टाद् ज्ञातव्यम् भोजनोत्तरं विधेय-हस्तप्रक्षालनानन्तरं गण्डूषसंख्यामाहाश्वलायनः—

**कुर्याद् द्वादश गण्डूषान् पुरीषोत्सर्जने द्विजः ।**
**मूत्रोत्सर्गे तु चतुरो भोजनान्ते तु षोडश ॥** इति ।

गण्डूषाद्युत्तरमाचरणीयशुद्धाचमनानन्तरं ताम्बूलं भक्षणीयम्—

**भूयोऽप्याचम्य कर्तव्यं ततस्ताम्बूलभक्षणम् ।**

इति मार्कण्डेयपुराणात् । अत्र ताम्बूलभक्षणमुपलक्षणम् । तेन हरीतक्यादिभिरपि मुखशुद्धिविधानमित्याचारविवेकः । पर्णपत्रे त्याज्यभागानाह वसिष्ठः—

**पर्णमूले भवेद्व्याधिः पर्णाग्रे पापसम्भवः ।**
**चूर्णपर्णं हरेदायुः शिरा बुद्धिविनाशिनी ॥**
**तस्मादग्रञ्च मूलञ्च शिराञ्चैव विशेषत : ।**
**चूर्णपर्णं वर्जयित्वा ताम्बूलं खादयेद् बुधः ॥** इति ।

कीदृशं ताम्बूलं वर्जनीयमित्यपि स एव–

**पूगञ्च शकलीकृत्य द्रवं संमृज्य पर्णकम् ।**
**पिच्छिलं चूर्णसंयुक्तं ताम्बूलं खादयेत् सुधीः ॥**
**रसनिष्ठीवनं पूर्वं द्विवारन्तु ततः पिबेत् ।** इति ।

अत्र चूर्णपदं खदिरसारादेरप्युपलक्षकम् । ताम्बूलरसस्य पूर्वं द्विः निष्ठीवनं ततः पानं कर्तव्यमित्यर्थः । विद्याकामेनाभक्षणीयमाहाश्वलायनः–

**विद्याकामोऽनिशं रात्रौ ताम्बूलन्तु न भक्षयेत् । इति ।**

यद्यपि देवपितृकर्मसु लोकव्यवहारे च व्यवहरणीयत्वेन स्वभावतस्त्रि-दोषशामकत्वेन मुखसौन्दर्यादिविधायकत्वेन च ताम्बूलसेवनं समुचितं प्रतिभाति, यथाचाह सुश्रुते नित्यकृत्यरत्नमालोद्धृते–

**''कर्पूर-जाति-कल्लोल-लवङ्ग-कटुकाह्वयैः ।**
**सचूर्णपूगैः सहितं पत्रं ताम्बूलजं शुभम् ॥**
**मुखवैशद्य-सौगन्ध्य-कान्ति-सौष्ठव-कारकम् ।**
**हनु-दन्त-स्वरमल-जिह्वेन्द्रिय-विशोधनम् ॥**
**प्रसेकशमनं हृद्यं गलामयविनाशनम् ।**
**पथ्यं सुप्तोत्थिते भुक्ते खाते वान्ते च मानवे ॥ इति**

ताम्बूलोपकरणत्वेन कस्तूर्यपि देयेति श्राद्धपल्लवकृतः । अन्ये तु शुष्कमांसत्वात्सा न भक्ष्येति वदन्तीत्यपि सैव रत्नमाला ।

तथापि अतिसेवने दोषमाह स एव–

**पाण्डुत्वं दन्तदौर्बल्यमक्षिरोगं बलक्षयम् ।**
**करोति मुखरोगाँश्च ताम्बूलमतिसेवनात् ॥ इति ।**

ताम्बूलं यत्यादिभिर्न भक्षणीयमित्याह वसिष्ठः –

**यतिश्च ब्रह्मचारी च विधवा च रजस्वला ।**
**प्रत्येकं मांसतस्तुल्यं मेलनं सुरया समम् ॥ इति ।**

क्रमुकादीनां प्रत्येकभक्षणं मांसभक्षणतुल्यं समुदितभक्षणं सुरापानसममित्यर्थः।

[ हिन्दी टिप्पणी ]

यहाँ ऊपर से ज्ञातव्य है कि भोजन के उत्तर हाथ धो लेने के बाद कुल्लों की संख्या प्रसंग पर आश्वलायन का कहना है कि मलत्याग के बाद १२, पेशाव के बाद ४ तथा भोजन के बाद १६ बार कुल्ला करना चाहिए।

पुनः यह भी ज्ञातव्य है कि उक्त कुल्ले आदि के बाद शुद्धाचमन के अनन्तर मुख शुद्धि के लिए मार्कण्डेयपुराण के वचन के अनुसार पान खाना चाहिए।

यहाँ आचारविवेक का विवेचन है कि वचनपठित ताम्बूल पद अन्य का भी उपलक्षक है। अतः हरडे, सोंफ, सुपारी आदि से भी मुखशुद्धि का विधान माना जाता है।

पान का त्याज्य भाग वसिष्ठ ने यों कहा है–पान की जड़ में व्याधि और अग्रिम भाग में पाप का निवास होता है। कूटा हुआ या पीसा हुआ या कूट पीस कर आँटा कर डाला हुआ पान आयुहारक और इसके बीच की शिरा बुद्धिविनाशिनी होती है। अतः इन भागों को तथा कूटे पीसे हुए पत्ते को त्यागते हुए ज्ञानी जन पान खाये। किन्तु बिना द्विज या देवता को समर्पणं किये भी पान नहीं खाना चाहिए।

'किस तरह खाना चाहिए'-इस संबन्ध में स्मृतिमञ्जरी का मत है– पानी से धो देने के बाद चूना, कत्था और सुपारी का टूकड़ा डालकर सरस ताम्बूल पत्र का खाने में उपयोग सुधीजन करे। हाँ, यह भी ध्यान में रखा जाय कि पान का रस (पीक) पहले दो बार बाहर फेकने के बाद ही निगला जाय।

आश्वलायनवचन के अनुसार–विद्यार्थी (ब्रह्मचारी) को सामान्यतः दिन-रात में खास कर रात में तो पान नहीं ही खाना चाहिए।

यद्यपि देव-पितृ-पूजन कर्मो में तथा लोकस्वागतादि व्यवहार में अवश्य व्यवहारणीय होने, स्वभावतः त्रिदोषशामक होने और मुखसौन्दर्य आदि के विधायक होने के कारण ताम्बूल (पान) का सेवन समुचित प्रतीत होता है जैसा कि सुश्रुत (आयुर्वेद) में भी कहा गया है कि कर्पूर, जायफल, शीतलचीनी, लवंग, अदरख, या लहसुन, चूना (खैर) और सुपारी डाला हुआ ताम्बूलपत्र शुभ (स्वास्थ्यकारी) है।

उक्त प्रकार का ताम्बूलपत्र मुख की विशदता (स्वच्छता) सुगन्धि, कान्ति और सुन्दरता को प्रदान करता है। टुड्ढी, दाँत और स्वर के मलों को दूर करते हुए जीभ को साफ करता है। मुंह से पानी छूटना या नाक से पानी गिरने को शमन करते हुए गले के रोग का नाशक होता है। हृदय को रुचने वाला होता है। सोकर उठने के बाद, खाने के बाद एवं खाने के बाद वमन हो जाने पर इसका सेवन लाभदायक होता है।

श्राद्धपल्लवकार का कहना है कि ताम्बूल का उपकरण होने के कारण उसमें कस्तूरी भी देनी चाहिए। किन्तु अन्य कितने लोगों का तर्क है कि कस्तूरी एक तरह से सूखा मांस है। अत: यह भक्ष्य ही नहीं है।

इतना गुण होने पर भी इसके अति सेवन में व्यासने ही दोष में कहा हैं—अति सेवन से पान पाण्डुरोग, दाँतों की दुर्बलता, आँख का रोग, बल का क्षय तथा मुंह का रोग उत्पन्न करता है।

वसिष्ठ वचन के अनुसार संन्यासी, ब्रह्मचारी, विधवा तथा रजस्वला इन चारों को सुपारी आदि में एक एक का खाना मांस खाने के समान और पूरा मिला हुआ पान खाना मदिरा पान के समान है। इति।

[हिन्दी टीका]

हाथ पैर धोकर भोजन करने पर गोदान का फल मिलता है। (इस प्रशंसा वाक्य से इसकी अवश्यकर्तव्यता सिद्ध होती है। जूठा मुँह होकर कहीं की भी यात्रा न करें और नाहीं मुँह हाथ धो लेने के बाद भी इनका जल सूखने तक भी यात्रा न करें। इसी तर हभोजन के बाद आचमन कर लेने पर भी वह भोक्ता तब तक अपवित्र माना जाता है जतबतक कि भोजन स्थान से भोजनपात्र हटा न दिया जाय। हटा देने पर भी वह पुनः तब तक अपवित्र ही माना जांयगा जबतक कि भेजन स्थान को गोवर मिट्टी जल आदि से साफ सुथरा न कर दिया जाय।

[मूलम्]

दक्षः—

भुक्त्वा च सुखमास्थाय तदन्नं परिणामयेत्।
इतिहासपुराणाद्यैः षष्ठसप्तमकौ नयेत्॥
अष्टमे लोकयात्रा च[१] बहिःसन्ध्या ततः पुनः।

[संस्कृत टीका]

भुक्त्वा चेति। भुक्त्वा = भोजनं कृत्वा। सुखमास्थाय = अन्नपरिणामानुकूलां सुखपूर्विकामवस्थितिं कृत्वा। तदन्नम् = मुक्ताऽन्नम्। परिणामयेत् = पाचयेत्।

पा० (१) तु।

इतिहासपुराणाद्यैः = तच्छ्रवणादिभिः। दिनस्य षष्ठसप्तमौ समयभागौ। नयेत् = यापयेत्। तत्र वाचकः ब्राह्मण एव भवेत्। यथाऽऽह भविष्यपुराणे–

ब्राह्मणं वाचकं विद्यान्नान्यवर्णजमादरात्।
श्रुत्वाऽन्यवर्णजाद् राजन् वाचका नरकं व्रजेत्॥ इति।

अधिकं तत्रैव द्रष्टव्यम्। अष्टमे = अष्टधाविभक्तदिनमानस्याष्टमेऽन्तिमे भागे। लोकयात्रा=सुहृद्दर्शनादिरूपा लोकयात्रा, परिभ्रमणमिति यावत्। कर्तव्या। ततः = तदनन्तरम्। पुनः सन्ध्या = सायंसन्ध्या। यथा च तत्समयविधाने व्यासः–

सूर्येऽस्तशिखरं प्राप्ते पादशौच-क्रियाऽन्वितः।
सायं सन्ध्यामुपासीत कुशपाणिः समाहितः॥ इति।

बहिः=ग्रामाद् बहिरनुष्ठेया। अत्र विशेषमाहात्रिः–

सन्ध्यात्रयन्तु कर्तव्यं द्विजेनात्मविशुद्धये।
उभे सन्ध्ये तु कर्तव्ये ब्राह्मणैश्च गृहेष्वपि॥ इति।

[ हिन्दी टीका ]

भोजन के बाद अन्न पच जाने के अनुकूल आरामी स्थिति में रहे, जिससे वह खाया हुआ अन्न पच जाये। अनन्तर इतिहास (रामायण-महाभारत आदि), पुराण (स्कन्दपुराण, पद्मपुराण) आदि के पठन एवं श्रवण आदि से दिन का छठा तथा सातवाँ भाग बितावें। आठ़ भागों में विभक्त दिनमान के अन्तिम-आठवें-भाग में परिभ्रमण-जिसमें मित्र दर्शन आदि भी सम्मिलित किया जा सकता है, करें। इसके बाद गाँव के बाहर जाकर सायं सन्ध्या का उपासन करें।

सायं सन्ध्या समय के संबन्ध में ऊपर से व्यास का कथन ज्ञातव्य है कि सूर्य जब अस्तशिखर पर आ जायँ तो पैर धोकर और हाथ में कुशा लेकर अनन्यमनस्क हो। सायंकालिक सन्ध्या करें।

यहीं अत्रि का कुछ विशेष कथन है कि द्विज अपनीआत्मा की विशेष शुद्धि के लिए तीनों ही सन्धाएँ करें किन्तु विशेष परिस्थिति में ब्राह्मण (द्विज) प्रात:कालिक एवं सायंकालिक सन्ध्या घर में भी कर सकते हैं।

[ मूलम् ]

याज्ञवल्क्य:-

उपास्य पश्चिमां सन्ध्यां हुत्वाऽग्नींस्तानुपास्य च ।
भृत्यैः परिवृतो भुक्त्वा नातितृप्तोऽथ संविशेत् ॥

[ संस्कृत टीका ]

उपास्येति । पश्चिमां सन्ध्याम् =सूर्यास्तमनसमये बहिः सायङ्कालिकीं सन्ध्याम् । उपास्य=अनुष्ठाय । अग्नीन् = आहवनीयादीन् । हुत्वा । उपास्य च = आराध्य च । भृत्यैः = भरणीयपरिचारकद्विजबालैः स्ववासिन्यादिभिश्च । परिवृतः = सहितः । भुक्त्वा । नातितृप्तः = आकण्ठभोजनविरहितः । चकारात् – आयव्ययादिगृहचिन्तां निर्वर्त्य । संविशेत् = स्वप्यात् । चकारो वैश्वदेवादेरपि समुच्चयार्थ इति वीरमित्रोदयः । अत्र नित्य-कृत्यरत्नमालाटिप्पणी तु–" अथ भोजनांत्तरकृत्ये वैद्यके (पथ्यापथ्यविवेके)-

ततः पदशतं गत्वा वामपार्श्वेन संविशेत् ।
वामपार्श्वाश्रयं पित्तं पित्तादग्निः प्रजायते ॥
ततस्तेनैव पार्श्वेन भुक्तवान् संविशेन्नरः ।
द्वात्रिंशन्मात्रा वामे तु दक्षिणे पञ्चविंशतिः ॥
मध्ये द्वादशमात्रा तु शयीत नृपतिस्ततः । इति ।
मध्ये-उत्तानेन । ·मात्राऽत्र श्वासकालः पलं वा ।

मदनपालः-

भुक्त्वोपविशतस्तुन्दिर्बलमुत्तानशायिनः ।
आयुर्वामकटिस्थस्य मृत्युर्धावति धावतः ॥

तथा-

'सद्योमांसं नवं चान्नं बाला स्त्री क्षीरभोजनम् ।
घृतमुष्णोदकस्नानं सद्यः प्राणकराणि षट् ॥

पूतिमांसं स्त्रियो वृद्धा बालार्कस्तरुणं दधि ।

प्रभाते मैथुनं निद्रा सद्यःप्राणहराणि षट् ।इत्ति ।

अत्र सुश्रुते 'सर्वर्त्तुषु दिवास्वापोऽन्यत्र ग्रीष्मात्' इत्यादि बहूक्तं तत्रैव द्रष्टव्यम् । स्मृतिः–

आसनं वसनं शय्या जायाऽपत्यं कमण्डलुः ।

आत्मनः शुचिरेतानि न परेषां कदाचन ॥ इति ।

अनुमतिं विनेतिशेषः । अन्यथाऽऽतिथ्यानुपपत्तेः । जायाऽतिरिक्त एतत् । योग्यताबलादि'' त्याह ।

[हिन्दी टीका]

सूर्यास्त के समय बाहर में सायं कालिक सन्ध्योपासन के बाद अग्नि होत्र कर के और उन अग्नियों के पूजन के अनन्तर अपने से पालनीय परिचारक द्विजबालक एवं सुवासिनी आदि के सहित भोजन करे । अनन्तर आय-व्यय की चिन्ता का समाधान सोच लेने के बाद सो जाना चाहिए ।

नित्यकृत्यरत्नमाला टिप्पणी में उद्धृत विभिन्न वचनों के आधार जो संस्कृत टीका में उल्लिखित हैं उनके उपरिष्टात् ज्ञातव्य है कि वैद्यक (पथ्यापथ्य) के अनुसार भोजन के बाद सौ डेग चलकर बाईं करवट से सोना चाहिए । क्योंकि बाईं भाग में पित्त का निवास है और इसे दबने पर जठराग्नि उद्दीप्त होती है ।

३२ सेकेंड या आँख की फ्लकके गिरने तक बाईं करवट से लेट कर २५ सेकेंड तक दायें करवट बदल लेनी चाहिए । अनन्तर १२ सेकेंड तक उत्तान होकर लेटने के बाद बाईं करवट में सो जाना चाहिए ।

निघण्टु निर्माता आचार्य मदनपाल का विवेचन है कि भोजन के बाद देर तक बैठनेवाले की तोंद बढ़ जाती है, उत्तान होकर सोने वाले का बल बढ़ता है । बाईं करवट से सोने वाले की आयु बढ़ती है तो दौड़नेवाले के पीछे-पीछे उसकी मृत्यु दौड़ती रहती है ।

ताजा मांस,नया पका हुआ अन्न, बाला स्त्री [१२ वर्ष के बाद अर्थात् रजोधर्म-प्रादुर्भाव के पश्चात् १३ से १५ वर्ष की संभोग्या नारी, क्योंकि ''बालेति गीयते नारी यावद्वर्षाणि षोडश'' तथा, ''वत्सराद् द्वादशादूर्ध्वं याति पञ्चाशतः क्षयम्'' आयुर्वेदवचन हैं ] दुग्धपान, घृतभोजन तथा गरम पानी से स्नान ये छह चीजें

सदयः प्राणशक्ति प्रदान करने वाली हैं। अर्थात् इनके सेवन से प्राणों में तुरन्त नया ओज पैदा होता है।

इसीतरह पुराना मांस, जिससे सड़ी गन्ध आ रही हो, वृद्धा स्त्री (४५, या ५० वर्षों से ऊपर की या निवृत्तरजस्का नारी [क्यों कि ६० वर्ष की पूर्णायु मान लेने से १५ वर्ष तक बाला, इसी हेतु संस्कृतशब्दार्थ कौस्तुभ के अनुसार भी 'बाला-वह युवती जो १६ वर्ष से कम उम्र की हों', ३० वर्ष तक युवती, ४५ वर्ष तक प्रौढा तथा ४५ वर्ष के बाद अथवा ''याति पञ्चाशतः क्षयम्'' इस नियमवचन के अनुसार ५० वर्ष के बाद मासिक धर्म बन्द होने के स्वाभाविक समय के बाद वृद्धा (नारी) मानी जाती है], कन्याराशिगत सूर्य की तेज घूप, ज्यादे दिन का दही, प्रभात (प्रातः) का मैथुन तथा इस काल की निद्रा ये छह चीजें सद्यः प्राणहारिणी हैं।

'ग्रीष्म से अन्य सभी ऋतुओं में दिन का सोना वर्जनीय है' इत्यादि बहुत सी बातें सुश्रुत में कही गई हैं जो वहीं से द्रष्टव्य हैं।

स्मृति का कहना है कि आसान, वस्त्र, शय्या, जाया (या पति) सन्तान और जलपात्र ये छह चीजें अपने लिए ही पवित्र मानी जाती हैं, कभी भी दूसरों के लिए नहीं।

इस वचन की व्याख्या करते समय 'दोनों की अनुमति के विना' इतना ऊपर से जोड़ देना चाहिए। अन्यथा अतिथि का आतिथ्य सत्कार नहीं हो सकता है। अर्थात् गृहपति तथा अतिथि की सहमति उक्त वस्तुओं के उपयोग संबन्ध में न हो तो गृहपति के द्वारा आतिथ्य सत्कार होना संभव नहीं होगा। किन्तु वचनपठित जाया (पत्नी) से अतिरिक्त स्थल के लिए यह नियम औचित्य के आधार पर माना जायगा। अर्थात् दोनों की अनुमति (सहमति) होने पर भी शास्त्र एवं लोक मार्यादा की कसौटी के आधार से कोई भी पत्नी पत्नीत्व व्यवहार निमित्त न दूसरे को दी जा सकती हे और नही लीजा सकती है। (फलतः भारत के प्राचीन इतिहास ग्रन्थ महाभारत के अनुसार अपवाद रूप में भले ही वर्णित महाराज युधिष्ठिर के द्वारा अपनी अर्धाङ्गिनी को जूए में दाव पर लगाना या लगाकर हार जाना सदैव के लिए असमाधेय प्रश्न चिह्न बना रहेगा।

## [मूलम्]

दक्षः—

प्रदोषपश्चिमौ यामौ[१] वेदाभ्यासेन[२] तौ नयेत्।
यामद्वये[३] शयानश्च[४] ब्रह्मभूयाय कल्पते॥

---

पा० (१) वेद्य इति ह. पु.। (२) भ्यासरतो भवेत्। भ्यासरतिर्भवेत्। (३) द्वयं। (४) शयानो हि।

[ संस्कृत टीका ]

प्रदोषेति । प्रदोषपश्चिमौ यामौ = प्रदोष-सम्बन्धि-प्रथम-प्रहरं-रात्र्यन्तसम्बन्धिचरमप्रहरञ्च । वेदाभ्यासेम = अध्येतव्यशास्त्राणामावृत्या । अत्र वेदपदमुपलक्षणमध्येतव्य-शास्त्राणाम् नयेत् =यापयेत् । यामद्वये = रात्रेः मध्यप्रहरद्वये । तस्य महानिशात्वेनानध्यायत्वात् । शयानः = स्वपन् । ब्रह्मभूयाय=ब्रह्मत्वप्राप्तये । कल्पते = योग्यो भवति । अतएवाधुनिका वैज्ञानिका अपि षड्होराशयनमावश्यकं वर्णयन्ति ।

प्रदोषसमयश्च मैथिलमते भानोरस्तमनादूर्ध्वं दण्डत्रयपर्यन्तं भवति । परं गौडमते दण्डद्वयरूपोऽङ्गीक्रियते इत्युक्तमधस्ताद् ब्राह्ममुहूर्त्ते धर्मादिचिन्तनप्रकरणे ।

[ हिन्दी टीका ]

रात्रि के प्रदोषवाले प्रथम प्रहर तथा अन्तिम प्रहर का समय अध्येतव्य शास्त्र के अभ्यसन से बितावें किन्तु बीचवाले दोनों प्रहर का समय महानिशा का समय होने के कारण अनध्याय (अध्ययन का अयोग्य) होता है । अतः इस समय सो जाना चाहिए । फलतः इस समय का सोना ब्रह्मत्वप्राप्ति का साधन माना जाता है । (इसीलिए आज कल के वैज्ञानिक भी इन छह घंटों का सोना आवश्यक बताते हैं) ।

(हाँ, मैथिल निवन्धों के अनुसार सूर्यास्त के बाद तीन दण्ड अर्थात् १ घंटा १२ मिनट किन्तु गौड निबन्धों के अनुसार दो दण्ड अर्थात् ४८ मिनट का प्रदोष समय माना जाता है । यह बात 'ब्राह्ममुहूर्त्ते धर्मादिचिन्तनम्' प्रकरण में पहले भी कही गई है )।

[ मूलम् ]

ध्रुवं प्रकृत्य ब्रह्मपुराणे–

यदह्ना कुरुते पापं दृष्ट्वा तं निशि मुच्यते ।
यावत्यश्चेह ताराश्च शिशुमाराश्रिता दिवि ॥
तावन्त्येव तु वर्षाणि जीवत्यभ्यधिकानि तु ।

अभ्यधिकानि–शतात् ।

[ संस्कृत टीका ]

ध्रुवमिति । ध्रुवनामकं लघु नक्षत्रमित्यर्थः । अह्ना=दिवसेन । यत् । पापम् = पातकम् । कुरुते = जनो विंदधाति, अर्जयतीति भावः । निशि = रात्रौ । तत्

ध्रुवनक्षत्रम् । दृष्ट्वा । मुच्यते = तस्मात्पापान्मुक्तो भवति । इह दिवि = ध्रुवसमीपस्थे आकाशे । शिशुमाराश्रिता यावत्यस्तारा: = अत्र ''शिशुमारो-ग्राहविशेषः । तदाकारश्चतुर्दश तारा ध्रुवसमीपस्थाः'' इत्याचारादर्शफक्किकाव्याख्यायां म० म० रघुनाथ शर्माणः । तावन्त्येव = चतुर्दशैव । अभ्यधिकानि = शताधिकानि । वर्षाणि = हायनानि जीवति = प्राणान् धारयति ।

अथ रात्रिभोजने वर्ज्यवस्तून्युक्तानि वैद्यके-

**न रात्रौ दधि भुञ्जीत न च निर्लवणन्तथा ।**
**नामुद्गसूपं नाक्षौद्रं नचाप्यघृतशर्करम् ॥ इति ॥**

एवं भोजन समये निषेध-विशेषो यथा कूर्मपुराणे-

**यो भुङ्क्ते वेष्टितशिरा यश्च भुङ्क्ते विदिङ्मुखः ।**
**सोपानत्कश्च यो भुङ्क्ते सर्वं विद्यात्तदासुरम् ॥ इति ॥**

सदैव भोजनान्ते द्वौ बली देयौ । तन्मन्त्रोपि यथा तत्रैव-

**श्वानौ द्वौ श्यावशबलौ वैवस्वतकुलोद्भवौ ।**
**ताभ्यां पिण्डं प्रयच्छामि स्यातामेतावहिंसकौ । इति**

**[ हिन्दी टीका ]**

ध्रुवतारा का उपादान कर ब्रह्मपुराण में कहा गया है कि रात में ध्रुव तारा को देखने से दिन भर के किये गये पाप से मुक्त हो जाता है और ११४ वर्ष तक जिन्दा रहता है।

ऊपर से ज्ञातव्य है कि आयुर्वेद के अनुसार रात में दही न खायें । इसीतरह बिना लवण, बिना शहद, बिना घृत तथा विना शक्कर का रात्रिभोजन न हो किन्तु दाल मूंग की होनी चाहिए ।

कूर्म पुराण के अनुसार पगड़ी बाँध कर, ईशान आदि किसी कोण की ओर मुँह करके, या जूता पहन कर किया जानेवाला भोजन आसुरी भोजन होता है ।

भोजन के अन्त में सैदव ''श्वानौ द्वौ'' इत्यादि मन्त्र पढ़ कर दो बलियाँ दें । इससे यम के यहाँ के कुत्ते मृत प्राणी को काटते नहीं हैं ।

**इति भोजनविधिः**

# शयनविधिः

## [ मूलम् ]

अथ शयन-विधिः[1] विष्णुपुराणे—

कृतपादादिशौचस्तु भुक्त्वा सायं ततो गृही ।
गच्छेदस्फुटितां[2] शय्यामेकदारुमयीं नृप ॥ १॥
नाविशालां न वा भग्नां नासमां मलिनां न च ।
न च जन्तुमयीं शय्या[3]मधितिष्ठेदनास्तृताम् ॥[4]२॥
प्राच्यां दिशि शिरः शस्तं याम्यायामथवा नृप ।
सदैव स्वपतः पुंसो विपरीतं तु रोगदम् ॥ ३॥

## [ संस्कृत टीका ]

कृतपादादीति । कृतपादादिशौचः = सम्पादितपादप्रक्षालनादिशौचः । सु-प्रक्षालित चरणोऽप्यनार्द्रपाद·इति यावत् । सायम् =सार्धप्रहराभ्यन्तरे निशि । भुक्त्वा = सपरिवार इति शेषः । गृही=गृहस्थः । ततः = तदनन्तरम् । अस्फुटिताम् = अशीर्णाम् अत्रुटितामिति यावत् । एकदारुमयीम् = एककाष्ठनिर्मिताम् । एतेनानेकदारुनिर्मिता शय्या प्रतिषिध्यते । शय्याम् = खट्वापर्यङ्कादिशय्याम् । गच्छेद् = गत्वा शयीत ॥१ ॥

नाविशालाम् = असङ्कुचिताम् । न वा । भग्नाम् । नासमाम् = किन्तु समामेव समरूपेणास्तृताम् । नच । मलिनाम् = मलयुताम् । नच । जन्तुमयीम् = मत्कुणादिकीटसहिताम् । अनास्तृताम् = अप्रसारिताम् । शय्याम् । अधि तिष्ठेत् = शयनार्थमाश्रयेत् । अधि शीङ्स्थाऽऽसां कर्म (१।४।४६) इति कर्मसंज्ञा ।.अधिः सप्तम्यर्थस्याधारस्यद्योतकः । शय्यायां तिष्ठेदित्यर्थः ।।२।।

सदैव स्वपतः पुंसः = अप्रवासिनः शयानस्य । प्राच्यां दिशि=पूर्वदिशि । अथवा । याम्यायाम् = दक्षिणदिशि । शिरः = शिरःकरणम् । शस्तम् =

---

पा० (१) "अथ शयनम्" इति ह. पु. । (२) गच्छेच्छय्यामस्फुटितामपि । (३) शय्यां त्व । (४) दनर्चिताम् इति ह. पु. ।

प्रशस्तम् । विपरीतन्तु = पश्चिमदिशि, उत्तरदिशि वा शिरः करणम् । रोगदम् = रोगोत्पादकं भवतीति विज्ञेयम् । दिग्भेदेन फलभेदो यथाऽऽह गर्गः–

**स्वगृहे प्राक्शिराः शेते आयुष्यं दक्षिणाशिराः ।**

**प्रत्यक्शिराः प्रवासे तु न कदाचिदुदक् शिराः ॥ इति ॥**

मार्कण्डेयोऽपि यथा–

**प्राक्शिराः शयने विद्याद्धनमायुश्च दक्षिणे ।**

**पश्चिमे प्रबलां चिन्तां हानिं मृत्युं तथोत्तरे ॥ इति ॥**

अतएव 'पश्चिमोत्तरशायी च हन्ति पुण्यं पुराकृतम्' इति प्रसिद्धिरपि ॥३॥

शयनात्पूर्वम् पठनीयमन्त्रः–

**ॐ नर्मदायै नमः प्रातर्नर्मदायै नमो निशि ।**

**नमोऽस्तु नर्मदे तुभ्यं त्राहि मां विषसर्पतः॥ इति ।**

**ॐ आदिचौर-कफल्लस्य ब्रह्मदत्तवरस्य च ।**

**ये स्मरन्ति कफल्लस्य तेषां चौरभयं कुतः ॥ इति ॥**

**तिस्रो भार्याः कफल्लस्य दाहिनी मोहिनी सती ।**

**तासां स्मरणमात्रेण चौरो गच्छति निष्फलः ॥ इति च।**

**[ हिन्दी टीका ]**

सायं काल अच्छी तरह हाथ पैर धोकर भोजन के बाद शयनार्थ ऐसी खाट पलंग आदि शय्या पर जायँ जो कटी-फटी, छोटी, टूटी, ऊबर-खावर (उच्चावच), मैली, खटमल आदि जन्तुवाली तथा विना बिछी हुई न हो ।

अपने घर में सदैव सोने वाले को चाहिए कि पूर्व या दक्षिण तरफ अपना शिर करके सोये । इसके विपरीत होना अर्थात् पश्चिम या उत्तर तरफ शिर के सोना रोग जनक है ।

ऊपर से गर्गवचनानुसार यद्यपि प्रवास के समय पश्चिम शिर से सोना विहित माना गया है किन्तु उत्तर शिर से सोना तो सर्वथा हानिकर बतलाया गया है ।

सोने के पहले संस्कृत टीका में उल्लिखित प्रथम मन्त्र 'ॐ नर्मदायै नमः' से 'विषसर्पतः' पर्यन्त विषैले सर्प से बचने के लिए तो दूसरा मन्त्र 'ॐ आदिचौर' से

लेकर 'चौरभयं कुतः' पर्यन्त एवं तीसरा मन्त्र 'तिस्रो भार्याः पूरा श्लोक चौरभय से बचने के लिए अवश्य पढ़ लेने चाहिएँ।

[मूलम्]

नन्दिपुराणे—

नमो नन्दीश्वरायेति यः प्रोच्य[1] स्वपते नरः[2]।
तस्य कूमाण्डराजेभ्यो न भविष्यति वै भयम् ॥

[संस्कृत टीका]

नमो नन्दीति। यो नरः। नमो नन्दीश्वराय = (द्विजः ॐकारपूर्वं परं शूद्रः एतत्स्थाने 'नमो' पदं संयोज्य)। इति मन्त्रं त्रिः, सप्तवारं वा। प्रोच्य = जपित्वा। स्वपते = शेते। अत्र स्वपितीति वक्तव्ये 'स्वपते' इत्यार्षः प्रयोगः। तस्य = नरस्य कृते। वै = निश्चयेन। कूमाण्डराजेभ्यः = कूमाण्डः गणदेवताविशेष इति हेमचन्द्रः। कूष्माण्डाऽकारत्वाद् शिवगणोऽतस्तन्नाम्नाऽऽख्यायते इति शब्दकल्पद्रुमः। तद्राजेभ्य इत्यर्थः। भयम् = भीतिः। न। भविष्यति।

अत्र नन्दिपुराण-गोभिल-महाभारतस्था अग्रिमाः पठनीया मन्त्रा यथा—

ॐ अगस्तिर्माधवश्चैव मुचुकुन्दो महामुनिः।
कपिलो मुनिरास्तीकः पञ्चैते सुखशायिनः ॥१॥
असितं चार्त्तिमन्तञ्च सुनीतं (थं) चापि यः स्मरेत्।
दिवा वा यदि वा रात्रौ नास्य सर्पभयं भवेत् ॥२॥
यो जरत्कारुणा जातो जारकारो[3] महायशाः।
आस्तीकः सर्पसत्रे वः पन्नगान् यो ह्यरक्षयत् ॥३॥
तं स्मरन्तं महाभागा न मां हिंसितुमर्हथ।
सर्पापसर्प भद्रन्ते दूरं[4] गच्छ महाविष ॥४॥
जनमेजयस्य यज्ञान्ते आस्तीकवचनं स्मर।

पा० (१) प्रोक्त्वा सुप्यते। (२) यश्चोक्त्वा सुप्यते नर इति संक्षिप्ताचारादर्शोक्त-शयन-विधिः।
(३) जरत्कारो (४) गच्छ सर्प! सनान्तरम्।

**आस्तीकेति वचः श्रुत्वा यः सर्पो न निवर्तते ।**

**शतधा भिद्यते मूर्धा[१] 'शिंशवृक्षफलं[२] यथा ॥५॥**

अत्र ''शिंशवृक्षः 'तिउरा' इति मिथिलाभाषायां प्रसिद्धः पुष्प-विशेषः'' इति नि. कृ. र. मा. टि. ।.

अत्र स्वपनसमये विशेषमाह गोभिलः–

**स्नातकः संवेशन-वेलायां वैणवं दण्डमुपनिदधाति शयनसमीपे सर्वां रात्रिं निश्चलं स्वस्त्ययनार्थमि ति ।**

**[ हिन्दी टीका ]**

जो मनुष्य ''नमो नन्दीश्वराय'' (द्विज हो तो आदि में ॐ कार तथा अनुपनीत बालक, महिला तथा शूद्र होतो एक और 'नमो' पद जोड़कर) यह मन्त्र ३ या ७ बार जप कर के सोता है, उसे कूष्माण्डराज प्रभृति (मणदेवता विशेष या कूष्माण्ड-कुम्हडे-के आकारवाले शिवगण के प्रधानों) से निश्चय ही कोई भय नहीं होगा ।

ऊपर से ज्ञातव्य है कि आह्निकपुस्तकों में उद्धृत तथा संस्कृतटीका में उल्लिखित ''ॐ अगस्तिर्माधवश्चैव'' से लेकर ''शिंशवृक्षफलं यथा'' पर्यन्त ५ श्लोकों का भी पाठ कर अपने इष्टदेव का स्मरण एवं प्रणाम कर सो जावे ।

इस शयन प्रसंग पर गोभिल का वचन है कि स्नातक (वह ब्राह्मण जिसने ब्रह्मचर्याश्रम के कर्म को पूरा करके गृहस्थाश्रम को लौटने के लिए अङ्गभूत स्नानविशेष कर लिया हो या वह ब्राह्मण जिसने किसी धार्मिक अनुष्ठान के लिए भिक्षावृत्ति अपनाई हो) सोने के समय बाँस का डंडा बिस्तर के पास रखे जिससे रात भर निश्चल कल्याण हो।

वस्तुतः देखा जाय तो वचन में कहे गए ''स्नातक'' पद सोने वाले का बोधक है । अतः किसी भी सोने वाले को चाहिए कि वह सोते समय अपने पास में कोई एक रक्षक दण्डा अवश्य रख ले ।

---

पा० (१) मूर्ध्नि । (२) शिरीषस्य फलं ।

[ मूलम् ]

अत्र हारीतः–

**नाश्मपीठोपधाने न तिर्यगुदक्प्रत्यक्शिराः न नग्नो नाशुचिर्नचासने नोच्छिष्टो न[1] प्रगे।**

प्रगे = प्रातःकाले।

[ संस्कृत टीका ]

अत्रेति। अत्र = शयनविधौ। नाश्मपीठोपधाने = न पाषाणपीठोपवर्हे। तिर्यक्षु = दिशां कोणे। उत्तरस्यां दिशि, प्रतीचि=पश्चिमायां वा दिशि। आसने = यत्रोपविश्यते। उच्छिष्टः = उच्छिष्टमुखः। इतः पूर्वतनं वचनं यथा "न सन्धिवेलायां शयीत नान्यपूर्वे" इति। एवञ्च 'शयीत' इति क्रियापदस्यात्रापि सम्बन्धः। अन्यपूर्वे = पूर्वमन्येन भुक्ते शयने इत्यर्थः। परवर्त्तिवचनमपि यथा–"नोच्चैर्निशायां भाषेत" इति।

[ हिन्दी टीका ]

पत्थर के टुकड़े को तकिया बनाकर, उत्तर या पश्चिम दिशा की ओर शिर रखकर, नग्न होकर, अपवित्र शरीर होकर, पूजा आदि के समय उपयोग में आनेवाले आसन पर बैठ कर, तथा प्रातः काल में नहीं सोना चाहिए। यह मूलोक्त वचन का अर्थ हुआ।

हारीत के ही इससे पूर्व तथा परवर्त्ती वचनानुसार ऊपर से ज्ञातव्य है कि दिन और रात या रात और दिन की सन्धिबिला में एवं दूसरे से सोये गए बिस्तरे पर भी नहीं सोना चाहिए। इसी तरह रात में जोर से बोलना भी नहीं चाहिए।

[ मूलम् ]

अत्र शङ्खलिखितौ–

**न विशीर्णायां खट्वायां नान्यवर्णोपसेवितायामनभ्युक्ष्य, न भूत-यक्ष- ग्रहायतनेषु, न श्मशान-बल्मीक-महावृक्ष-च्छायासु न पर्वणि रभसोत्सवे वा।**

---

पा० ( १ ) 'न च' इति ह. पु.।

[ संस्कृत टीका ]

न विशीर्णायामिति । विशीर्णायाम् = छिन्नभिन्नायाम् । (अथ च) अनभ्युक्ष्य = जलेनासिक्त्वा । अन्यवर्णोपसेवितायाम् = अन्यजातीयजनोपभुक्तायाम् । खट्वायाम् = पर्यङ्कादौ । न । शयीतेति शेषः । एवमेव, पर्वणि = प्रतिपत्पञ्चदश्योः सन्धिसमये । रभसोत्सवे = हर्षव्यञ्जक-पुत्रजन्माद्युत्सव-समये च । न शयीतेत्यर्थः ।

[ हिन्दी टीका ]

टूटे-फूटे तथा जल से बिना सेचन किये हुए ही अन्य जाति के लोगों के द्वारा सोये गए खटिया पलंग आदि पर नहीं सोना चाहिए । इसी तरह प्रतिपत् तथा पञ्चदशी (पूर्णिभा तथा अमावस्या) तिथियों के सन्धिसमय और पुत्र जन्म आदि के उपलक्ष्यमें किये जा रहे हर्षोत्सवों के समय में भी नहीं सोना चाहिए ।

[ मूलम् ]

उशनाः—

न तैलेनाभ्यक्तशिराः स्वपेत् ।

[ संस्कृत टीका ]

न तैलेनेति । तैलेन = सार्षपादिस्नेहेन । अभ्यक्तशिराः = मर्दितमस्तकः । न। स्वपेत् = शयीत ।

[ हिन्दी टीका ]

माथे में सरसो आदि के तोलों से मर्दन (मालिश) कर न सोये ।

[ मूलम् ]

पैठीनसिः —

नादीक्षितः कृष्णचर्मणि स्वप्यात्[१] ।

[ संस्कृत टीका ]

नादीक्षित इति । अदीक्षितः = अप्राप्तदीक्षः । कृष्णचर्मणि = कृष्णसारमृगचर्मणि । न । स्वप्यात् = शयीत ।

---

पा० ( १ ) सुप्यात् ।

[ हिन्दी टीका ]

जिसने उपनयन आदि यज्ञ में दीक्षा न ली हो, वह कृष्णसार मृग के चर्म (छाले) पर नहीं सोये ।

[ मूलम् ]

विष्णुः—

नार्द्रपादः[१] स्वप्यान्नोत्तरापराशिरा, न नग्नो, नानुवंशं, नाकाशे, न पालाशे शयने, न पञ्चदारुकृते[२], न गजभग्नकृते, न विद्युद्दग्धकृते, न भिन्ने, नाग्निप्लुष्टे, न घटसिक्तद्रुमजे[३], न श्मशान[४]-शून्यालय-देवता-गृहेषु, न चपल मध्ये, न धान्य[५]-गो-गुरु-हुताश-सुराणामुपरि, नोच्छिष्टो[६], न दिवा, न सन्ध्यायां, न भस्मनि, देशे च नाशु चौ[७], नार्द्रे[८], नच पर्वततमस्तके ।

अनुवंशम् = गृहमूर्धन्यकाष्ठदैर्घ्यानुगतः[९] ।

[ संस्कृत टीका ]

नार्द्रपाद इति । आर्द्रपादः = क्लिन्नचरणः । हस्तलिखित-पुस्तके तु आर्द्रपाणिरिति पाठः । उत्तरापराशिराः = उत्तरापरस्याम् = ऐशान्याम् शिरः—मस्तकं यस्येति तथा । नग्नः = अवश्यावच्छादकवस्त्ररहितः । अनुवंशम् = गृहमूर्धन्यकाष्ठ दैर्घ्यानुगतः । हस्तलेखानुसानुसारं काष्ठादीति पाठः । आकाशे = अनावृतदेशे । पालाशे = पलाशसंज्ञककाष्ठ निर्मिते । शयने = खट्वा पर्यङ्कादौ । (एवमेव) पञ्चदारुकृते = पञ्चजातीयकाष्ठ-निर्मिते शयने । गजभग्नकृते = हस्तित्रोटितकाष्ठ रचिते शयने । कृत्ताविति पाठपक्षे गजस्यैव भग्नचर्मणीत्यर्थः । विद्युद्दग्धकृते = विद्युदादग्धकाष्ठेन रचितेऽपि । भिन्ने = भेदिते, त्रुटिते इति यावत् । अग्निप्लुष्टे = अग्निदग्धे । "प्रुष्टप्लुष्टोषिता दग्धे"

पा० (१) पणिः (२) कचित् कृत्तौ इति पाठः । (३) नारिमध्ये इत्यधिकपाठः । (४) क्वचिद् न श्मशाने न शून्यालये न देवतायनेषु इति पृथगेव पाठः । (५) क्वचिद् धान्येति पाठोनार्हितः । (६) नोच्छिष्टे । (७) पाठोऽयं नास्ति । (८) नार्द्रे इति ह. पु. पाठः । परं प्रकाशित-पुस्तकेतु" नार्हितः" इति पाठः । (९) काष्ठादि इति सर्वं हस्तलिखितपुस्तकानुसारम् ।

इत्यमरः (३ । १ । ९९)। घटसिक्तद्रुमजे = घटजलपोषितवृक्ष -सम्बन्धि काष्ठेन निर्मितेऽपि शयने इत्यर्थः । श्मशान-शून्यालय-देवतागृहेषु शवशयनस्थाने, पूर्वतोऽपि निर्जन-गेहे, प्रतिमाधिष्ठितदेवमन्दिरे च । चपलमध्ये = चपलाः-दुर्व्यसनिनस्तेषां मध्ये । धान्य-गो-गुरु-हुताश-सुराणामुपरि । "अत्र गवादिशब्देन तच्छाला उच्यन्ते, धान्यवत्साक्षात्तदुपरि शयनासंभवादि"ति वैजयन्ती व्याख्या । परं तत्र शयने गवादिसुरक्षापि सम्भवबहिर्भूता भवेदतः तदुपरि मञ्चादिं निर्माय तदुपरि शयनं निषिद्धं मन्तव्यम् । उच्छिष्टः =उच्छिष्टमुखः । उच्छिष्टे इति पाठे तु । उच्छिष्ट स्थल इत्यर्थः । दिवा=दिवसे । सन्ध्यायाम् = दिनरात्र्योः सन्धिसमये, पारिभाषितसन्ध्याद्वयसमये वा । भस्मनि = भस्म-बहुलस्थले । अशुचौ= मूत्रविष्ठाद्युपहतस्थाने । आर्द्रे= आर्द्रस्थाने । पर्वतमस्तके = पर्वत-शिखरे । च । न स्वप्यादिति सम्बन्धः । प्रतिपदं प्रयुक्तानां 'न' पदानां तत्र सर्वत्रैवान्वयः करणीयः ।

दिवाभोजनोत्तरं शयन निषेधः आयुर्वेदे-

दिवास्वापं न कुर्वीत यतोऽसौ स्यात्कफावहः ।
ग्रीष्मवर्ज्येषु कालेषु दिवास्वापो निषिध्यते ॥
भोजनान्ते दिवास्वापाद् वात-पित्त-कफोद्भवः ॥ इति ।

अधिकनिद्रानिषेधो वामनपुराणे-

न स्वप्नेन जयेन्निद्रां न कामेन स्त्रियं जयेत् ।
नेन्धनैर्जयेद्वह्निं न मद्येन तृषां जयेत् ॥ इति ॥

कामेन स्त्रीवासनाजय इव पुरुषवासनाजयोऽपि दुर्घट एव । अतएव केनापि संस्कृत-कविना स्वपद्यमाध्यमेन कापि कामिनी तटस्थतया पृच्छ्यते-

कथय कलावति केयं तव नयनतरङ्गिणीरीतिः ।
अज्ञास्तरन्ति पारं विज्ञा विज्ञाय मज्जन्ति ॥ इति ।

अत्र निद्रालक्षणं योगसूत्रे-

अभावप्रत्ययालम्बनावृत्तिर्निद्रा इति ।

वैद्यके तु 'हृदयं चेतनास्थानं तस्मिन् तमसावृते सर्वे प्राणिनः स्वपन्ति' इत्युक्तम्। तथा च सुश्रुतम्–

हृदयं चेतनास्थानमुक्तं सुश्रुत देहिनाम्।
तमोऽभिभूते तस्मिंस्तु निद्राऽऽविशति देहिनाम्॥
निद्राहेतुस्तमः, सत्त्वं बोधने हेतुरुच्यते।
स्वभाव एव वा हेतुर्गरीयान् परिकीर्त्यते॥ इति।

अत्र स्वप्नहेतुमाह वैद्यके–

सर्वेन्द्रियव्युपरतौ मनोऽनुपरतं यदा।
विषयेभ्यस्तदा स्वप्नं नानारूपं प्रपश्यति॥ इति।

इति नित्यकृत्यरत्नमाला टिप्पणी।

[ हिन्दी टीका ]

भींगा पैर या भींगा हाथ, ईशान कोण की ओर शिर करके, नग्न हो, घर में लगाए गए सबसे बड़े काठ आदि की लम्बाई के आमने-सामने, अनावृत (बिना छप्परवाले प्रदेश), पलाशलकड़ी या पाँच जाति की लकड़ी या हाथी के द्वारा तोड़ी गई लकड़ी, विद्युत्, (विजली) से दग्ध लकड़ी या अग्नि से दग्ध लकड़ी या घड़े से पटाकर बढ़ाए गए वृक्ष की लकड़ी से बनी या टूटे फूटे खटिया पलङ्ग आदि पर, इसी तरह हाथी के चमड़े पर, धान आदि अन्न के ऊपर, गाय, गुरु तथा देवमूर्त्ति के ऊपर बनाये गए मचान आदि पर, स्वयं जूठा मुँह हो या जूठे स्थान पर, दिन, दिन और रात की सन्धि वेला य़ा परिभाषित प्रातः सन्ध्या एवं सायं सन्ध्या के समय, भस्म बहुल स्थान, मूत्र विष्ठा आदि से अपवित्र स्थान, भींगे स्थान और पर्वत शिखर पर न सोवें। यह मूल वचन का अर्थ हुआ।

ऊपर से आयुर्वेद के अनुसार दिवा भोजन के बाद शयननिषेध यों कहा गया ज्ञातव्य है कि ग्रीष्मऋतु से अन्य समय में दिन का सोना वर्जनीय है क्योंकि इससे कफ की उत्पत्ति होती है। किन्तु भोजन के पहले दिन का सोना पत्थर (कठोर से कठोर भी खाई हुई वस्तु) को भी पचा देता है। भोजन के बाद दिन का सोना तो वस्तुतः कफ, पित्त एवं वायु तीनों का ही जन्म देने वाला है।

अधिक निद्रा सेवन का निषेध वामनपुराण में यों किया गया है –अधिक सोने से निद्रा पर विजय हासिल नहीं कर सकते और नाही अधिक काम सम्भोग से स्त्री (की

कामवासना) को वश में कर सकते हैं। इसी तरह अधिक लकड़ी डालने से आग को न कमजोर कर सकते और नाहीं मद्यपान से प्यास को ही बुझा सकते हैं।

उक्त स्त्रीवासना के जैसे पुरुषवासना की दुर्जेयता संबन्ध में किसी संस्कृत कविका कवि ता के माध्यम से कहना है कि हे कामिनि, (काम कला कुशले) तुम्हीं कहो कि तुम्हारी इन नयन नदियों की कौन सी रीति है कि इसकी गहराई के अनजान लोग सीधे पार कर जाते हैं किन्तु जानकार लोग सभी कुछ जानकर भी गोता खाते रहते हैं।

यहाँ नित्यकृत्यरत्नमाला में उद्धृत लेखानुसार पातञ्जलयोगसूत्र के आधार पर निद्रा का स्वरूप (लक्षण) है–"अभाव के ज्ञान का अवलम्बन (ग्रहण) करने वाली वृत्ति निद्रा कहलाती है"। यह सूत्रार्थ हुआ। इसकी व्याख्या में विशेषतः ज्ञातव्य है कि इस ग्रन्थ के पहले पाद में चित्त की वृत्तियों के भेद एवं लक्षण बतलाते हुए सूत्रकारने निद्रा को भी चित्त की चौथी वृत्ति विशेष के अन्तर्गत माना है।

फलतः जिस समय मनुष्य को किसी भी विषय का ज्ञान नहीं रहता, केवल मात्र ज्ञान के अभाव की ही प्रतीति रहती है, वह ज्ञान के अभाव का ज्ञान जिस चित्त वृत्ति के आश्रित रहता है, वह निद्रावृत्ति है।

दूसरे दर्शनकार निद्रा को वृत्ति नहीं मानते, सुषुप्ति अवस्था मानते हैं, अतः लक्ष्य कराने के लिए 'निद्रा भी वृत्ति है', सूत्र में वृत्ति पद का प्रयोग किया गया है। फलतः अन्य दर्शनकारों की भाँति इनकी मान्यता में निद्रा वृत्तियों का अभाव रूप अवस्था विशेष नहीं है। फलतः निद्रा भी चित्त की वृत्ति विशेष है, तभी तो मनुष्य गाढ़ निद्रा से उठकर कहता है कि मुझे आज ऐसी गाढ़ निद्रा आई जिसमें किसी बात की कोई खवर नहीं रही। इस स्मृतिवृत्ति से यह सिद्ध होता है कि निद्रा भी एक वृत्ति है, नहीं तो जगने पर उसकी स्मृति कैसे होती?

आयुर्वेद (सुश्रुत) में तो कहा गया है हृदय चेतना (ज्ञान) का आधार स्थान है। अतः इसे तमोगुण से आवृत हो जाने पर सभी प्राणी सो जाते हैं। फलतः निद्रा का कारण है तमोगुण तो जगने का कारण सत्त्वगुण है। अथवा प्राणियों का स्वभाव ही सबसे बड़ा कारण माना जाता है।

स्वप्न होने का कारण आयुर्वेद में कहा गया है कि विषयों से जब सभी इन्द्रियाँ व्यापारविरत (क्रियाशून्य) रहती हैं किन्तु मन क्रियाशील रहता है, ऐसी स्थिति में प्राणी नाना प्रकार का स्वप्न देखता है।

इसी स्वप्न तथा निद्रा के अवलम्बन को चित्त की स्थिरता का साधन कहते हुए सूत्रकार ने पुनः सूत्र प्रणयन किया–

"स्वप्ननिद्राऽवलम्बनं वा" (योग० सू० १।३८)।

❀ इति शयनविधिः ❀

# दारोपगमः

[ मूलम् ]

अथ[1] दारोपगमः तत्रापस्तम्बः–

सदा निशायां दारान् प्रत्यलङ्कुर्वीत ।

[ संस्कृत टीका ]

तत्रेति । तत्र = दारोपगमप्रसङ्गे । सदा = भार्यायाः सकामत्वेऽनिषिद्धसमये च । निशायाम् = रात्रौ । दारान् प्रति = भार्यां प्रति । अलङ्कुर्वीत=अलङ्कुर्यात् । दारान् प्रतीति वचनादुपगमनार्थमलङ्करणम् । तेन भार्याया अशक्त्यादिना उपगमनायोग्यत्वे नायं नियमः । एवमेव तुल्यन्यायात्पुरुषोऽप्यलङ्कृतोऽनुलिप्तः प्रबुद्धकामो भवेत् । अतएव "अलङ्कृतोऽनुलिप्तः प्रमुदितः प्रवृद्धकामः प्रवृद्धकामां मुदितां ......प्रियामुपेयादि" ति छन्दोगाह्निकं छन्दोगाह्निकोद्धारश्च ।

[ हिन्दी टीका ]

सदा ( भार्या यदि सकामा हो तो अनिषिद्ध समय में ) उपगमनार्थ पत्नी को अलङ्कृत करें । इसी तरह इस समय पति को भी सकाम तथा अलङ्कृत रहना चाहिए ।

[ मूलम् ]

विष्णुपुराणे–

स्नातः सुगन्धिधृक् प्रीतो नाध्मातः क्षुधितोऽपि वा ।
सकामः सानुरागश्च व्यवायं पुरुषो व्रजेत् ॥

व्यवायः = मैथुनम् ।

[ संस्कृत टीका ]

स्नात इति । स्नातः = कृतस्नानः, शुचितासम्पन्न इति यावत् । सुगन्धिधृक् = सुष्ठु गन्धोऽस्येति विग्रहे "गन्धस्येत्" (५।४।१३५) इति समासान्त इकारः । इष्टगन्धः सुगन्धिः स्यादित्यमरः (१।५।११) । सुगन्धेः – इष्टगन्ध-

---

पा० ( १ ) 'अथ स्त्रीगमनम्' इति ह. पु. पाठः ।

स्य माल्यस्य द्रवद्रव्यस्य वा धारकः । प्रीतः = प्रमुदितः । नाध्मातः विकृतेन वायुना जलेन वा पूरितोदरो न भवेत्, विकृतजलवायुरोगरहित इति यावत् । अत्र आध्मान । न० । आ ध्या+ल्युट) पेट का फूलना । 'जलंधर रोग'' इति संकृतशब्दार्थ-कौस्तुभः ) न क्षुधितः नवा बुभुक्षितः । सकामः = कामकामनाशाली । सानुरागः =रतिमान् । पुरुषः । व्यवायम् = मैथुनम् व्रजेत् = प्राप्नुयात् ।

[ हिन्दी टीका ]

स्नान के बाद सुगन्धित माला या इत्र आदि लगा कर, प्रसन्नचित्त हो, किन्तु अपच आदि के कारण पेट फूलने की बीमारी या जलंधर जलोदर बीमारी से पीड़ित न हो, साथ ही भूखा भी न हो, तथा कामवासनाशाली एवं रति के इच्छुक पुरुष पत्नी के साथ मैथुन करे ।

[ मूलम् ]

बृहस्पति :–

ऋतुकालाभिगमनं कुर्यात्पर्वाणि वर्जयेत् ।
स्त्रियाः शुक्रेऽधिके स्त्री स्यात् पुमान् पुंसोऽधिके भवेत् ॥
तस्माच्छुक्रविवृद्ध्यर्थं वृष्यं स्निग्धञ्च भक्षयेत् ।
लघ्वाहारां[१] स्त्रियं कुर्यादेवं संजनयेत् सुतम् ॥
ऋतुकालाभिगमनं पुंसा कार्यं प्रयत्नतः ।
सदैव वा पर्ववर्जं स्त्रीणामपि[२] मतं हि तत् ॥

नानास्मृतिसंवादादृतुकालाभिगमने उभय नियमः । ऋतौ गच्छेदेव, ऋतावेव गच्छेदिति[३] च । सदैवेति । अनृतावपीत्यर्थः । पर्ववर्जमिति । पर्वपदं निषिद्धकालोपलक्षणम् । ''स्त्रीणामभिमतं हितत्'' इति निर्देशात् स्त्रियाः सकामत्वे तद्रक्षणार्थमनृतावपि गमनम् । नो चेदृतावेवेति व्यवस्थितो विकल्पः ।

पा० (१) लेह्याहारामिति प्रकाशितपुस्तकपाठः । परं लघ्वाहारमिति ह० पु० पाठः । (२) मभिमतं ।
(३) गच्छेत् इति पर्यन्तमेव ह० पु० पाठः ।

[ संस्कृत टीका ]

ऋतुकालेति । ऋतुकालाभिगनम् = ऋतुर्नाम–शोणितदर्शनोपलक्षितो गर्भधारणयोग्यः स्त्रीणामवस्थाविशेषः । तदुपलक्षितः काल ऋतुकालः। तस्मिन् ऋतुकाले । अभिगमनम् = पत्न्यां गमनम् । कुर्यात् । (किन्तु तत्र) पर्वाणि = अष्टमी, चतुर्दशी, पञ्चदशी तिथि रविसङ्क्रान्तीः । वर्जयेत् = त्यजेत् । स्त्रियाः शुक्रे=स्त्रीरजसि । अधिके । स्त्री स्यात् = 'युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु' इति मनु (३।४८) रीत्या युग्मरात्रौ पुत्रोत्पत्तिसम्भावनायामपि पुरुषाकृति; कन्या उत्पद्येत । पुसः= पुरुषस्य शुक्रे = वीर्ये । अधिके । पुमान् = स्त्र्याकृतिः पुरुषः । भवेत् । अतएव "यदा युग्मायामपि रात्रौ शोणिताधिक्यं स्त्र्येव पुरुषाकृतिः । अयुग्मायामपि शुक्राधिक्ये पुमानेव भवति स्त्र्याकृतिः । कालस्य निमित्तत्वात् । शुक्रशोणितयोश्चोपादानकारणत्वेन प्राबल्यात् । तस्मात् क्षामा कर्तव्यश" इति 'एवं यच्छन् स्त्रियं क्षामामि' ति याज्ञवल्क्य (आचारा ८०) वचनव्याख्यायां मिताक्षरापि ।

तस्मात् । शुक्रविवृद्ध्यर्थम् = पुरुषवीर्यस्य विशेषेण वर्धनार्थम् । वृष्यम् = पुष्टिकरम् । स्निग्धञ्च = स्नेहशालिदुग्धघृतादिकम् । भक्षयेत् । लध्वाहाराम् = कृतलघुभोजनाम् । लेह्याहारामिति पाठपक्षे तु = कृतक्कथितादिभोजनाम् । स्त्रियम्=पत्नीम् । कुर्यात् । एवंरीत्या । सुतं सञ्जनयेत् = स्त्रियामुपगमनेन पुत्रमुत्पादयेत् (अतएव) पुंसा = पुरुषेण । प्रयत्नतः = अप्रमादतः । ऋतुकालाभिगमनं कार्यम् ! नानास्मृतीति । नानास्मृतिसंवादात् = अनेक- धर्मशास्त्रवचनार्थानामैक्यात् । नानास्मृतिपर्यालोचनादिति यावत् । ऋतुकालभिगमने = ऋतुसमये दारोपगम सम्बन्धे । "ऋतौ गच्छेदेव " इति, "ऋतावेव गच्छेदि"ति चोभंय विधो नियमो निष्पद्यते । अस्य विशेषविवरणं ग्रन्थकारेणैव 'व्यवस्थितो विकल्प' इत्यन्तेन स्पष्टीकृतमास्ते । एवञ्च ऋतौ गच्छेदेवेति कर्तव्यता नियम्यते । ऋतावेव गच्छेदिति कालो नियम्यते । वा = अथवा । सदैव = ऋतुकाले अनृतावपि च । पर्ववर्जम् । पर्वपदमत्र निषिद्धकालोपलक्षणम् । "ऋतावुपेयात् सर्वत्र वा प्रतिषिद्धवर्जम् " इति गौतम (५।१-२) वाक्यैकवाक्यत्वात् । तत् = पुंकर्तृकोपगमनम्, अविरुद्धमिति

शेषः । हि=यतः । स्त्रीणाम् = सामान्यतः पत्नीनाम् । मतम् = अभि मतं भवति ।

**यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन् ।**

**स्वदारनिरतश्चैव स्त्रियो रक्ष्या यतः स्मृताः ॥**

इति (आचाराध्याय-८१) याज्ञवल्क्योक्तेश्च ।

व्यवस्थित इति । व्यवस्थितो विकल्पः = पर्यवसितो विकल्पः । अतएव "ऋतावुपेयात्सर्वत्र वा प्रतिषिद्धवर्जम् (५।१-२) इति सूत्रद्वयं नियमपरमेव । ऋतावुपेयादेव । अनृतावपि स्त्रीकामनायां सत्यां प्रतिषिद्धवर्जमुपेयादेवेत्यलमति-प्रसङ्गेने''ति यथाकामी भवेद्वाऽपीति याज्ञवल्क्यवचन-(आचार ३।८१) व्याख्यायां मिताक्षराऽपि । अतएव च, तस्माद्विधित्रयमिदम्—ऋतावुपेयादेव, अन्यभार्यां नोपगच्छेत्, अनृतावपि भार्याप्रीतये गच्छेदिति । अत्र च गौतमः—ऋतावुपेयादनृतौ च पर्ववर्जम् (गौ०स्मृ० ५।१)। याज्ञवल्क्योऽप्याह (आचाराध्याय ३।६१)

**यथाकामी भवेद्वाऽपि स्त्रीणां वरमनुस्मरन् ॥ इति ।**

पर्ववर्जमिति ऋतावनृतौ चोभयत्र सम्बध्यते । इति

**ऋतुकालाभिगामी स्यात् स्वदारनिरतः सदा ।**

**पर्ववर्जं व्रजेच्चैनां तद्व्रतो रतिकाम्यया ।**

इति मनुवचन (३। ४५) व्याख्यायां मन्वर्थमुक्तावली ।

**[ हिन्दी टीका ]**

गर्भधारणयोग्य समय को ऋतुकाल कहते हैं । इस समय अपनी पत्नी में उपगमन (मैथुन) करना चाहिए किन्तु अष्टमी, चतुर्दशी, अभावास्या एवं पूर्णिमा तिथि तथा रवि सङ्क्रान्ति का समय न हो ।

स्त्री का रज अधिक (प्रबल) होने पर युग्मरात्रि में भी पुरुष की आकृति वाली कन्या तथा इसी तरह पुरुष का शुक्रअधिक होने पर अयुग्मरात्रि में भी स्त्री की आकृति वाले पुत्र का जन्म होता है । (क्योंकि कालरूप निमित्त कारण की अपेक्षा शुक्र-शोणित रूप उपादान (समवायि) कारण प्रबल होता है । अतः शुक्र की विशेष वृद्धि के लिए पुरुष शुक्रवृद्धिकारी औषध आदि का सेवन तथा दूध दही घृत आदि

स्निग्ध पदार्थ युक्त भोजन करें। वहीं स्त्री को अल्पाहार अथवा अवलेह्य (चाटने योग्य) पदार्थ के आहार से कमजोर कर दें। अनन्तर (विहित समय में) पुत्र का उत्पादन करें। अतः प्रयत्न पूर्वक अनिषिद्ध ऋतु काल अथवा ऋतु भिन्न समय में भी पुरुष स्त्री (पत्नी) का अभिगमन करे। क्योंकि यह अभिगमन स्त्रियों की मानसिक भावना के अनुरूप अभिमत माना जाता है।

यहाँ प्रकृत ग्रन्थकारने ''सदैव वा पर्ववर्यं स्त्रीणामभिमतं हि तत्'' इस वृहस्पतिवचन तथा अन्य स्मृतिवचनों के पर्यालोचन से विवेचन किया है कि ऋतुकालिक स्त्रीअभिगमन के सम्बन्ध में २ नियम सिद्ध होते हैं। (१म) ऋतुकाल में स्त्री गमन करना ही चाहिए। (२य) ऋतुकाल में ही यह अभिगमन हो। इसे और स्पष्ट करते हुए उन्हें ने कहा है कि स्त्री यदि सकामा (कामुकी, मैथुनेच्छाशालिनी) हो तो उसके शीलरक्षणार्थ ऋतुभिन्न समय में भी अभिगमन करना चाहिए। यदि ऐसी स्थिति न हो तो केवल ऋतुकाल में ही पुरुष पत्नी-उपगमन करे। इस तरह उक्त दोनों नियमों का विकल्प पर्यवसित (निष्पन्न) हो जाता है। किन्तु एतदर्थ शास्त्रप्रतिपादित प्रतिषिद्ध समय तो ऋतुकाल या ऋतुभिन्न काल में भी सर्वथा वर्जनीय है।

ऊपर से ज्ञातव्य है कि यही भाव ''यथाकामी भवेद्वाऽपि'' याज्ञवल्क्यवचन (आ० ३।८१) के मिताक्षराव्याख्याकार ने भी स्पष्ट शब्दों में अभिव्यक्त किया है।

इसी तरह ''ऋतुकालाभिगामी स्यात्'' इत्यादि मनुवचन (३।४२) के व्याख्याकार कुल्लूकभट्टने तीन नियमविधान दिखाये हैं—यथा (१) ऋतुकाल में स्त्रीगमन करना ही चाहिए। (२) पराई भार्या के साथ उपगमन (मैथुन) वर्जनीय है। (३) ऋतुभिन्न समय में भी पत्नी की प्रसन्नता के लिए उपगमन करे।

## [ मूलम् ]

यमः—

> ऋतु[1] स्नातां तु यो भार्यां सन्निधौ नोपगच्छति।
> घोरायां ब्रह्महत्यायां पच्यते[2] नात्र संशयः॥
> भार्यामृतुमुखे यस्तु सन्निधौ नोपगच्छति।
> पितरस्तस्य तन्मासं तस्मिन् रेतसि शेरते॥

पा० (१) ऋतौ। (२) युज्यते। पतते। पत्यते इति ह. पु. पाठः। 'पितृभिः सह मज्जति'॥

[ संस्कृत टीका ]

ऋतुस्नातामिति। ऋतुस्नाताम् = मासिकरजोधर्मे जाते चतुर्थदिवसे कृतस्नानाम्। यथा चोक्तं भारद्वाजेन, मनुना च–

प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातकी ।
तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति ॥
भर्तुः स्पृश्या चतुर्थेऽह्नि स्नानेन स्त्री रजस्वला ।
पञ्चमेऽहनि योग्या स्याद् दैवे पित्र्ये च कर्मणि ॥ इति ।

अत्र ''प्रथमेऽहनि =रजोयोगारम्भदिने। चाण्डालीति चाण्डालीवदस्पृश्या, नतु वस्तुगत्या चाण्डाली'' ति कृत्यसारसमुच्चयः। अत्र 'भर्तुः स्पृश्ये'त्यनेन स्पर्शयोग्यैव भवति न तूपगम्यापि 'तासामाद्याश्चतस्रस्तु निन्दितैकादशी तथा इत्यादिमनुवचनेन प्रतिषिद्धत्वात्।

भार्याम् = पत्नीम्। सन्निधौ–आनुकूल्यार्थं शयित्वेति शेषः। नोपगच्छति = न संविशति। सः। घोरायाम् = भयानकायाम्। ब्रह्महत्यायाम् = ब्रह्महत्याजनितयातनायाम्। पच्यते = युज्यते। अत्र संशयः न कार्यः।

ऋतुमुखे = ऋतुमुख्यभागे-ऋतुकाले इतियावत्। ''अयमैन्द्रीमुखं पश्य रक्तश्चुम्बति चन्द्रमाः'' इत्यादौ मुख्यारम्भे मुख्यभागार्थे मुखशब्दस्य शक्तत्वात् अतएव 'मुखन्तु वदने मुख्यारम्भे द्वाराऽभ्युपाययोः' इति यादवोपि। तस्य=ऋतौ भार्यामनुपगच्छतो जनस्य। तस्मिन् रेतसि = व्यर्थीभूते तस्मिन्नेव शोणिते शुक्रे च। शेरते = निवसन्ति। एतेन तथाऽऽचरणे निन्दाऽर्थवादो दर्शितः।

अथ रजस्वलावर्जितकर्माण्याह लिङ्गपुराणे–

स्नानं शौचं तथा गानं रोदनं हासनं तथा ॥
दिवास्वापं विशेषेण तथा वै दन्तधावनम् ।
मैथुनं मानसं वाऽपि वाचिकं देवताऽर्चनम् ॥
वर्जयेत् सर्वयत्नेन नमस्कारं रजस्वला ॥ इति ।

[ हिन्दी टीका ]

रजस्वला हो जाने पर चौथे दिन के स्नान [ जैसा कि भारद्वाज ने कहा है, पहले दिन चाण्डाली की जैसी (विकृत रक्त के साथ दूषित कीटाणुओं के निस्सरण होते रहने के कारण) नारी अस्पृश्या रहती है। किन्तु चौथे दिन स्नान के बाद शुद्धा हो पाती है और वह भी अपने पतिदेव से स्पर्शयोग्या ही नकि उपगम्या भी। क्योंकि इस चौथी रात को उपगमन के लिए मनु आदि ने निन्दित कहा है। फलतः देवपितृ (आदि) कर्म के योग्य तो पाँचवे दिन से होती है] के बाद अनिषिद्ध रात्रि में जो पति पत्नी के पास शयन, तथा उपगमन नहीं करता वह ब्रह्महत्या से होने वाली भयानक नरकयातना भोगता है, इसमें कोई सन्देह नहीं। दूसरी बात, उनके मृतपितरों को उस महीने भर उनके उस शुक्र शोणित में निवास करना पड़ता है। उक्त निन्दार्थवाद से अभिगमन आवश्यक समझाया गया है।

ऊपर से रजस्वला के वर्जनीय कर्म के संबन्ध में लिङ्गपुराण के अनुसार ज्ञातव्य है कि स्नान, शौच (केश आदि का सँवारना) गाना, रोना, हँसना, इधर-उधर जाना या सवारी करना, अंजन लगाना, जूआ खेलना, चन्दन (सुन्धित द्रव्य) लगाना, विशेषतः दिन का सोना, लकड़ी से दतउन करना, मन से भी मैथुन की इच्छा करना बोल कर देव पूजन तथा नमस्कार (प्रणाम) करना तो सर्वविध प्रयत्न से रजस्वला स्त्री छोड़ दे।

[ मूलम् ]

देवलः—

**यस्तु[1] दारान् ऋतुस्नातान् स्वस्थः सन्नोपसर्पति।**
**भ्रूणहत्यामवाप्नोति गर्भं प्राप्य विनाश्य सः[2] ॥**

स्वस्थः=रोगादि-रहितः।

[ संस्कृत टीका ]

यस्त्विति। यः =पतिः। स्वस्थः = रोगादिरहितः सन्। ऋतुस्नाताम् = चतुर्थदिवसे ऋतुप्रयुक्तकृतस्नानान्। दारान् = भार्याम्। दारशब्दो नित्यपुल्लिङ्गबहुवचनान्तः। (पुंभूम्निदाराः इत्यमरः)। न। उपसर्पति =अभिरमयति। सः। गर्भं प्राप्य = स्त्रीशोणिते स्वशुक्रसंयोगेन मांसपिण्डमुत्पाद्य। (अनन्तरम्) विनाश्य = भ्रंशयित्वा। भ्रूणहत्याम् = गर्भस्थशिशुहननम् = एतज्जन्यं दुरितमिति भावः। अवाप्नोति = प्राप्नोति।

पा० (१) यः स्व। (२) विनाशकः। इति ह. पु. पाठः।

[ हिन्दी टीका ]

जो पति रोगादिरहित होकर भी चौथे दिन स्नान कर लेने के बाद ऋतु के समय पत्नी के साथ उपगमन नहीं करता है वह शुक्र-शोणित के संयोग से होने वाले मांसपिण्ड का उत्पादन अनन्तर विनाश कर भ्रूणहत्या—गर्भस्थ सन्तान को मारने—के पाप का भागी बनता है ।

[ टिप्पणी ]

यौगपद्येन भार्यासु ऋतुमतीषु सतीषु कर्तव्यमाह स एव देवलः-

**यौगपद्येन तीर्थानां विवाहक्रमशो व्रजेत् ।**

**रक्षणार्थमपुत्रां वा ग्रहणक्रमशोऽपि वा ॥ इति ।**

तीर्थम् = ऋतुः । अन्यासु पुत्रवतीषु मध्ये ऋतुयौगपद्येऽपि अपुत्रामेव प्रथमतो व्रजेत्, ऋतुग्रहणक्रमेण वेति एतदर्थः ।

एकादश्यां श्राद्धे स्त्रियाम् ऋतुमत्याञ्चोपायः स्मृतौ—

**एकादशीदिने यत्र भार्या ऋतुमती भवेत् ।**

**एकादशीव्रतं कुर्यात् पिण्डाऽघ्राणञ्च श्राद्धकृत् ॥**

**अर्धरात्रे व्यतीते तु ऋतुं दद्यान्न दोषभाक् । इति ।**

आद्यरजोदर्शनतः प्राक् स्त्रीसंगनिषेधो यथा भविष्ये—

**रजोदर्शनतः पूर्वं न स्त्रीसंसर्गमाचरेत् ।**

**संसर्गं यदि कुर्वीत नरकं प्रतिपद्यते ॥ इति ।**

''व्रते प्रारब्धे स्त्रिया रजोयोगे अन्यद्वारा पूजां कारयेत् । तथा च मात्स्ये—यदात्वशुद्धा तदाऽन्येन कारयेत्'' इति कृत्यसारसमुच्चयः ।

रजोयोगेन श्राद्धप्रतिरोधे रजोयोगात्पञ्चमे दिने श्राद्धं स्त्रिया कर्तव्यम्, दैवे कर्मणि पित्र्ये च पञ्चमेऽहनि शुध्यति' इति भारद्वाजवचनात् ।

रतिकाले तदन्यकालेऽपि स्वस्त्रीमुखं शुद्धमेवाहतुः मनुविष्णू—

**नित्यमास्यं शुचि स्त्रीणां शकुनिः फलपातने ।**

**प्रसवे च शुचिर्वत्सः श्वा मृगग्रहणे शुचिः ॥ इति ।**

स्त्रीणाम् =स्वस्त्रीणामितिकृत्यसारसमुच्चयः ।

[ हिन्दी टिप्पणी ]

पुत्रवती तथा उससे अन्य भार्याएँ यदि एक ही समय ऋतुमती हो जायँ तो देवलवचनानुसार प्रथम अपुत्रा के साथ या ऋतुग्रहण क्रम से संगमन करें ।

एकादशी तिथि में श्राद्ध उपस्थित हो गया हो और उधर स्त्री ऋतुमती हो गई हो तो स्मृतिवचनानुसार उपाय यह है कि एकादशीव्रत करते हुए श्राद्ध में प्रदत्त पिण्ड का आघ्राण (सूँघना) मात्र करके आधी रात बीत जाने पर स्त्रीसंग करे तो किसी तरह का दोषभागी नहीं होगा ।

सर्वप्रथम रजोदर्शन के पहले स्त्रीप्रसंग का निषेध भविष्य पुराण में यों है कि आदिम रजोदर्शन के पहले यदि स्त्रीसंसर्ग करे तो वह नरकगामी होता है । कृत्यसार समुच्चय में उद्धृत मत्स्यपुराण के कथनानुसार व्रत का आरम्भ कर लेने पर यदि स्त्री रजस्वला हो जाती है तो वह दूसरे शुद्ध व्यक्ति के द्वारा पूजन करावे ।

ऋतुमती होने के कारण यदि श्राद्धक्रिया की रुकावट हुई हो तो भारद्वाज वचनानुसार रजोदर्शन के पाँचवे दिन में वह स्त्री पितृश्राद्ध करे ।

अपनी पत्नी आदि के मुंह की शुद्धता के संबन्ध में मनु और विष्णु का वचन है– रति या उससे भिन्न काल में भी अपनी पत्नी का मुंह, फल गिराते समय कौआ आदि पक्षियों का मुंह, गोस्तन पान करते समय बछड़े का मुंह और मृग आदि शिकार पकड़ते समय कुत्ते का मुंह पवित्र माना जाता है ।

[ मूलम् ]

बौधायनः–

त्रीणि वर्षाण्यृतुमतीं यो भार्यां नोपगच्छति ।
स तुल्यं भ्रूणहत्याया दोषमृच्छत्यसंशयम् ॥
ऋतौ नोपैति यो भार्यामनृतौ यश्च गच्छति ।
तुल्यमाहुस्तयोर्दोषमयोनौ यश्च सिञ्चति[1] ॥

[ संस्कृत टीका ]

त्रीणीति । पतिविषये किञ्चिदुच्यते त्रीणीत्यादिना । यः = पतिः । ऋतुमतीं भार्याम् । त्रीणि वर्षाणि = वर्षत्रयपर्यन्तम् । "कालाध्वनोरत्यन्त-

पा० (१) 'गच्छति' इति ह. पु. ।

संयोगे'' इति द्वितीया । न । उपगच्छति = संगच्छते, भुङ्क्ते । सः । भ्रूण-हत्यायाः = गर्भस्थशिशुहिंसायाः । दोषम् = पापम् । असंशयम् = निस्सन्देहम् । ऋच्छति = प्राप्नोति । यथा गर्भप्रध्वंसने भ्रूणहत्या भवति, तथा तत्प्रागभाव सम्पादनेऽपि अविशेषादित्यभिप्रायः । ऋत्वतिक्रमनिन्दैषा ।

ऋताविति । यः । ऋतौ भार्यां नोपैति । यः । अनृतौ = ऋतुभिन्न-समये। भार्यां गच्छति । तयोः ऋतौ भार्यागमनाभावे, ऋतुभिन्न-समये भार्या गमने च, एवमाचरतोः पत्योर्वा । तुल्यम् = भ्रूणहत्यासमानम् । दोषम् । आहुः = बौधायनादिमुनय इति शेषः । (एवमेव) यश्च अयोनौ = योनिभिन्नस्थाने । सिञ्चति = रेतः पातयति, अत्रापि भ्रूणहत्या, एवञ्च सर्वविधानां त्रयाणामपि पतीनां समानो दोषः, पुत्रोपत्तिविपरीताचरणात् ।

अत्र प्रकृतवचनमुपक्रम्य छन्दोगाह्निकं यथा—अनृतावपि सकामामुपेयात् । 'सकामामनमृतावपी'ति विष्णुपुराणोक्तेः । 'ऋतौ नोपैति ..........यश्च सिञ्चति' इति बौधायनीयमनृतावुपगमनदोषाभिधानमकामाविषयम् । अयोनौ = योन्यतिरंक्तदेशे, तत्राप्यास्यन्त्वत्यन्तं निषिद्धमि'' ति ।

एवमेव शङ्करमिश्रकृतश्छन्दोगाह्निकोद्धारोऽपि—''अनृतावपि कामुकी-मुपेयात्, 'सकामामनृतावपी'ति विष्णु-वचनात् । नच 'ऋतौ नोपैति यश्च सिञ्चति' इतिबौधायनविरोधस्तस्याकामाविषयत्वात् । 'ऋतावुपेयात्सर्वत्र वा प्रतिषिद्धवर्जमि'ति गौतमवचनाच्च सकामायामनृतावपि गमनं प्राप्तमि'' ति ।

एतदनन्तरं पत्नीविषयेऽप्यनेनैवोच्यते मूलग्रन्थे—

**भर्त्तुः प्रतिनिवेशेन या भार्या स्कन्दयेदृतुम् ।**
**तां ग्राममध्ये विख्याप्य भ्रूणघ्नीं निर्धमेद् गृहात् ॥ इतिं ।**

प्रतिनिवेशः = प्रतिकूलता, अनिच्छा वा । । स्कन्दयेत् = गमयेत्, शोषयेद्वा, भर्त्तुर्द्वेषाद् रजः औषधादिभिश्शोषयन्तीमित्यर्थः । ग्राममध्ये = जनसन्निधौ । निर्धमेत् = त्यजेत् । ऋत्वतिक्रमे भर्त्तुर्यथा भ्रूणहत्यादोषस्तथाऽस्याः पत्न्या अपीति निन्दैषा ।

ऋतुगमनाद्यतिक्रमे प्रायश्चित्तमप्यत्रैव—

ऋतुस्नातां न चेद् गच्छेन्नियतां धर्मचारिणीम् ।
नियमातिक्रमे तस्य प्राणायामशतं स्मृतम् ॥ इति ।

नियमातिक्रमः =ऋतुगमनातिक्रमः, ऋत्वतिक्रमो वा ।

[ हिन्दी टीका ]

पति के विषय में यहाँ कहा जाता है कि जो पति तीन वर्षों तक ऋतुमती भार्या के साथ संगमन नहीं करता वह निस्सन्देह भ्रूणहत्या (गर्भस्थ शिशुहिंसा) का पापभागी है। अभिप्राय है कि जैसे गर्भस्थशिशुहिंसा है, वैसे ही गर्भ ही न होने देना भी अविशेषात् भ्रूणहत्या होगा । ऋतु अतिक्रम में यह निन्दा कही गई है ।

ऋतु समय में स्त्री-संगमन न करना, ऋतुभिन्न समय में स्त्री-संगमन करना या योनि से भिन्न स्थान में वीर्यपात करना ये तीनों ही भ्रूणहत्या के समान हैं, ऐसा बौधायन मुनि लोग कहते हैं ।

यहाँ इस प्रकृत वचन को उपक्रम (उल्लेख) कर प्रकृत ग्रन्थकार ने छन्दोगाह्निक ग्रन्थ में विवेचन किया है क़ि "सकामामनृतावपि" इस विष्णुपुराण वचन के अनुसार ऋतुभिन्न समय में भी यदि पत्नी कामुकी (मैथुनेच्छावाली) हो तो उसके साथ संगमन (रमण) करना चाहिए ।

अब यदि "अनृतौ यश्च गच्छति" (ऋतुभिन्न समय में पत्नीगमन करने पर पुरुष पापी होता है) इस बौध्यायन वचन का विरोध हो जाता है तो इस (बौधायनवचन) का तात्पर्य कामुकी न होने पर भी पत्नी के साथ रमण करने पर दोषभागी होने की स्थिति से मान लेने के बाद स्वतः समाधान हो जायगा । ऐसा ही शङ्करमिश्रकृत छन्दोगाह्निक का भी कथन है ।

किन्तु "अयोनौ यश्च सिञ्चति" इस वचनांश को उद्धृत कर पुनः प्रकृत ग्रन्थकार का विवेचन है कि उक्त वचन के अनुसार योनि से अतिरिक्त स्थान में मैथुन करना निषिद्ध है ही, परन्तु मुखमैथुन तो अत्यन्त निषिद्ध है । (सुना जाता है कि इसका प्रचुर प्रचलन प्राश्चात्य देशों में है क्योंकि वहाँ की स्त्रियाँ मयूरी के जैसे पातित वीर्यों का पान कर लेना प्रायः पौष्टिकता की दृष्टि से अधिक उपयुक्त मानती होंगी ।)

इसके बाद प्रकृत स्मृति(सूत्र)कार के वचनों के अनुसार पत्नी के सम्बन्ध में भी ऊपर से ज्ञातव्य है कि जो पत्नी पति के प्रति प्रतिकूलता या अनिच्छा से औषध आदि के द्वारा अपने रज (शोणित) को सुखा लेती है तो उसे लोगों के बीच भ्रूणघ्नी

(गर्भहत्या करने वाली) का प्रचार कर त्याग देना चाहिए। (अर्थात् ऋतु के अतिक्रमण में पति के जैसे पत्नी के लिए भी भ्रूण हत्या के समान दोष कहा गया है। ।।१।।

ऋतु-गमन आदि के अतिक्रमण में वहीं प्रायश्चित्त भी कहा गया है। नियम से रहने वाली धर्मचारिणी ऋतु स्नाता पत्नी के साथ जो पति संगमन नहीं करता उसे ऋतुगमन के अतिक्रमण या ऋतुओं के अतिक्रमण हो जाने पर प्रायश्चित्त के रूप में सौ बार प्राणायाम कर लेना चाहिए।।२।।

यदि प्राचीन समय में—जबकि जनसंख्या-वृद्धि की आवश्यकता थी—दाम्पत्य जीवन में ब्रह्मचर्य परिपोषित स्वस्थ समययापन हेतु एक पतिपक्ष से ही आध्यात्मिक विज्ञान प्रदर्शित प्राणायाममार्ग अपनाकर उभयपक्ष का कार्यनिर्वाह कर लिया जाता था तो देश के वर्तमान परिवेश में आज के रक्तबीजी सन्तान प्रवाह को रोकने के लिए भी आधुनिक विज्ञान प्रदत्त भौतिक साधन को अपना लेने में क्या झिझक या झंझट।

[ मूलम् ]

मनुः—

नोपगच्छेत्प्रमत्तोऽपि स्त्रियमार्तवदर्शने।
समानशयने चैव न शयीत तया सह ॥
रजसाऽभिप्लुतां नारीं नरस्याभ्युपगच्छतः।
प्रज्ञा[1] यशो बलं वीर्यं विनाशमुपगच्छति ॥

[ संस्कृत टीका ]

नोपगच्छेदिति। प्रमत्तोऽपि=कामार्त्तोऽपि। आर्तवदर्शने = ऋतुसम्बन्धि-रजोदर्शनतो निषिद्धदिनत्रये दिनचतुष्टये वा। न। उपगच्छेत् = संविशेत्। समानशयने = एकशय्यायाम्। च। तया=रजस्वलया। सह। नैव। शयीत = स्वप्यात्।

रजसेति। हि=यतः। रजसाऽभिप्लुताम् = रजस्वलाम्। नारीम् =स्त्रियम्। उपगच्छतः संविशतः। नरस्य। प्रज्ञा = प्रतिभा, विवेको वा। यशः = कीर्त्तिः।

पा० (१) 'प्रज्ञा तेजो बलं चक्षुरायुश्चैव प्रहीयते' इति मन्वर्थमुक्तावली-सम्मतः पाठः।

बलम् = शंक्तिः । वीर्यम् = तेजः ।। (च) विनाशमुपगच्छति = विनश्यति । तस्मात् तां नोपगच्छेदिति भावः । अतएवाग्रे मनुरेव–

**तां विवर्जयतस्तस्य रजसा समभिप्लुताम् ।**
**प्रज्ञा तेजो बलं[१] चक्षुरायुश्चैव प्रवर्धते ।। इति ।**

अत्र "तत्र प्रथमे दिवसे ऋतुमत्यां मैथुनगमनमनायुष्यं पुंसां भवति । यश्चतत्राधीयते गर्भः स प्रसवमानो विमुच्यते । द्वितीयेऽप्येवं, सूतिकागृहे वा । तृतीयेऽप्येवमसम्पूर्णाङ्गोल्पायुर्वा भवति । नच प्रवर्धमाने रक्ते बीजं प्रविष्टं गुणकरं भवति । यथा नद्यां प्रतिस्रोतः प्लावि द्रव्यं प्रक्षिप्तं प्रतिनिवर्तते, नोर्ध्वं गच्छति, तद्वदेव द्रष्टव्यमि"ति शब्दकल्पद्रुमः ।

## [ हिन्दी टीका ]

कामार्त (कामवेग से पीड़ित) होने पर भी रजोदर्शन के बाद वर्जित तीन (या चार) तक न स्त्री गमन करे और नाही उसके साथ एक शय्या पर सोवे ।।१।।

जो पुरुष रजस्वला स्त्री में गमन करता है, उसकी प्रतिभा या विवेक, कीर्त्ति, बल और तेज सभी नष्ट हो जाते हैं ।।२।।

इसी तरह अग्रिम मनुवचनानुसार ज्ञातव्य है कि जो मनुष्य ।रजस्वला स्त्री को नहीं छूता है. उसकी प्रतिभा या विवेक, तेज, बल, नेत्रशक्ति और अपनी परमायु में वृद्धि होती है ।

प्रकृत प्रसंग पर शब्दकल्पद्रुम का पर्यालोचित लेख है कि ऋतुमती होने पर पहले दिन का मैथुन पुरुष की आयु का नाशक होता है । इस दिन रात में जिस गर्भ का आधान होता है वह जन्म लेते ही प्राणरहित हो जाता है । दूसरे दिन की भी यही स्थिति होती है या सूतिकागृह में प्राणरहित हो जाता है । तीसरे दिन में भी प्रथमतः यही स्थिति होती है या शिशु पूरे अंगवाला नहीं होता या अल्पायु होता है । इन तीन दिनों में प्रविष्ट बीज गुणकारी नहीं होता जैसे कि नदी में प्रवाह के अभिमुख फेका गया और तैरने वाला द्रव्य लौट जाता है नकि (वेग से आते हुए) प्रवाह के अभिमुख जाता है, इसी तरह यहाँ भी समझना चाहिए ।

---

पा० (१) "प्रज्ञा लक्ष्मी र्यशश्चक्षुरि" ति वीरमित्रोदय पाठः ।

[ मूलम् ]

याज्ञवल्क्यः –

स्वस्थ[1] इन्दौ सकृत् पुत्रं लक्षण्यं जनयेत् पुमान्।

तथा,

षोडशर्त्तुनिशाः स्त्रीणाम्।

[ संस्कृत टीका ]

स्वस्थ इन्दाविति । मूलग्रन्थे पौर्वापर्येणावस्थितयोर्वचनयोरनयोः यथा-क्रममवस्थापनपूर्वकं मिताक्षराकारकृता व्याख्यापि प्रदर्श्यते । षोडशेति । सम्पूर्ण वचनमत्र यथा–

स्त्रीणां तस्मिन् युग्मासु संविशेत्।

ब्रह्मचार्येव पर्वाण्याद्याश्चतस्रस्तु वर्जयेत् ॥ इति ॥

स्त्रीणां गर्भधारणयोग्यावस्थोपलक्षितः काल ऋतुः। स च रजोदर्शन-दिवसादारभ्य षोडशाहोरात्रस्तस्मिन् = ऋतौ, युग्मासु=समासु रात्रिषु । रात्रिग्रहणाद्दिवस-प्रतिषेधः। संविशेत् = गच्छेत्पुत्रार्थम्। 'युग्मासु' इति बहुवचनं समुच्चयार्थम्। अतश्चैकस्मिन्नपि ऋतौ अप्रतिषिद्धासु युग्मासु सर्वासु रात्रिषु गच्छेत् । एवं गच्छन् ब्रह्मचार्येव भवति । अतो यत्र श्राद्धादौ चोदितं तत्र गच्छतोऽपि न ब्रह्मचर्यस्खलनदोषोऽस्ति । किञ्च पर्वाण्याद्याश्चतस्रस्तु वर्जयेत् । 'पर्वाणि' इति बहुवचनादाद्यर्थावगमादष्टमीचतुर्दश्योर्ग्रहणम् । (४।१५५)

अमावास्यामष्टमीञ्च पौर्णमासीं चतुर्दशीम्।

ब्रह्मचारी भवेन्नित्यमप्यृतौ स्नातको द्विजः ॥ इति

अतोऽमावास्यादीनि रजोदर्शनादारभ्य चतस्रो रात्रीश्च वर्जयेत्।

सुस्थ इन्दाविति । समस्त वचनं यथा–

एवं गच्छन् स्त्रियं क्षामां मघां मूलं च वर्जयेत्।

सुस्थ इन्दौ सकृत्पुत्रं लक्षण्यं जनयेत् पुमान् ॥ (आचा. ८०)

पा० (१) सुस्थे । शस्ते ।

किञ्च, एवमुक्तप्रकारेणं, स्त्रियं गच्छन् क्षामां गच्छेत् । क्षामता च तस्मिन्काले रजस्वलाव्रतेनैव भवति । अथ चेन्न भवति तदा कर्तव्या क्षामता, पुत्रोत्पत्यर्थमल्पाऽस्निग्धभोजनादिना । 'पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियः' इति वचनात् इति ।

(इतोऽधिकमत्रत्यकथनं बृहस्पतिवचनव्याख्याऽवसरे प्रदर्शितमस्ति । अतस्तत एव द्रष्टव्यम् ।)

"मघामूलनक्षत्रे वर्जयेत् । चन्द्रे चैकादशादि शुभस्थाने । चकारात् पुंनक्षत्रे शुभयोगलग्नादिसम्पात्तौ । सकृदेकस्यां रात्रौ, न द्विस्त्रिर्वा । ततो लक्षणैर्युक्तं पुत्रं जनयति । पुमान् = अप्रतिहतपुंस्त्वः" इति च मिताक्षराव्याख्या ।

अत्र " स्वस्थ इन्दौ=स्वानुकूले चन्द्रे । सकृदिति श्रवणात् प्रत्यर्तु प्रथमगमनस्यैव पुत्रोत्पत्तियोग्यत्वमपरस्तु केवलं कामार्थमित्याहुरि" ति म. म. रघुनाथ कृताऽऽचारादर्शफक्किकाव्याख्या ।

अत्र प्रकृत-प्रसंगे छन्दोगाह्निकं यथा-"रात्रेः प्रथमे प्रहरे चतुर्थे प्रहरे वा .. .......पुत्रकामस्तुस्निग्धाहारादिसंवर्धितबलो लघ्वाहारादिकृतक्षामां युग्मास्वेव रात्रिषु पुन्नामक-हस्त-पुष्यादिनक्षत्रेषु चन्द्रतारादिशुद्धौ स्थिरलग्ने शुभाधिष्ठिते शुभनिरीक्षिते एकस्यां रात्रौ सकृदेवोपेयात् । ...अत्र चैकस्मिन्नृतौ एकस्यामेव रात्रौ प्रथमगमनमेव गर्भहेतुः । अतस्तत्रैव गर्भाधानमिति वृद्धाः । सम्यगा-धानहेतुतया चोत्तानित-करणान्येव प्रयोज्यानि, न तिर्यक्करणादीनि, पुरुषायितन्त्वत्यन्तं विरुद्धम् । नपुंसकोत्पत्तिहेतुतया वैद्यकोक्तत्वात् । आद्ये ऋतुगमने गृह्योक्त-विधिना गर्भाधानं कर्तव्यमि" ति ।

एवमेव छन्दोगाह्निकोद्धारोऽपि यथा-"प्रथमप्रहरे चतुर्थप्रहरे वा रात्रावेकस्यां सकृदेव ऋतुस्नातां गृह्यविधिना परिणीतां भार्यामुपेयात् । .......तत्रैकस्मिन्नृतौ प्रथमगमनमेव हेतुस्तत्रैव लग्नाद्यादर इति वृद्धाः । अत्र च सम्यगा-धानहेतुतयोत्तानीकरणमेव प्रयोज्यम् । तिर्यक्करणमासितकरणञ्च नाधानहेतुः । पुरुषायितं तु नपुंसकोत्पत्तिहेतुत्वादतिनिषिद्धमि" ति ।

## [ हिन्दी टीका ]

'षोडशर्तुनिशाः स्त्रीणाम्' आदि सम्पूर्ण वचन (आचाराध्याय ७९) का मिताक्षरा सम्मत अर्थ है कि गर्भ धारण के योग्य समय को ऋतु कहते हैं। वह रजोदर्शनदिवस से १६ अहोरात्र होते हैं। इनमें से अप्रतिषिद्ध युग्म (सम-६।८।१० आदि) रात्रियों में ही पुत्रोत्पत्ति के लिए स्त्रीसंभोग करना चाहिए। यहाँ मूल वचन में रात्रि पद के उपादान से दिन का संभोग वर्जनीय तथा 'युग्मासु' पदमें बहुवचन के उपादान से एक भी ऋतु के समय अप्रतिषिद्ध सभी युग्मरात्रियों में गमन करना शास्त्रप्रेरित समझना चाहिए। इस प्रकार स्त्रीगमनकरने वाला ब्रह्मचारी ही रहता है। (अतः जहाँ श्राद्ध आदि में ब्रह्मचर्य पालनीय माना गया है वहाँ ऐसे स्त्रीगमन से ब्रह्मचर्य स्खलन का दोष नहीं होता)। किन्तु अमावास्या, अष्टमी, पौर्णमासी और चतुर्दशी तिथियों में तथा रजोदर्शन से चार रात्रियों में गमन न करे ॥ १ ॥

'स्वस्थ इन्दौ' आदि सम्पूर्ण पद्य (आचाराध्याय ८०) का अर्थ है–उक्तप्रकार से स्त्रीगमन तो करें किन्तु पत्नी को दुर्बला बना दें। यह दुर्बलता प्रथम तो रजस्वलाव्रत के पालन से ही आ जाती है। यदि ऐसा नहीं हुआ हो तो पुत्रोत्पत्ति के निमित्त अल्प और अस्निग्ध भोजन आदि के द्वारा दुबली कर दें। क्योंकि स्मृतिवचन है–

**पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियः।**

अर्थात् पुरुषके शुक्राधिक्य पर लड़के की एवं स्त्री के शुक्राधिक्य पर लड़की की उत्पति होती है।

हाँ, मघा और मूल नक्षत्र को छोड़कर ग्याहरवें आदि शुभस्थान में चन्द्रमा स्थित होने तथा पुंसंज्ञक हस्तपुष्यादि नक्षत्र शुभयोग लग्नादि की उपस्थिति में जो पौरुष (पुंस्त्व) सम्पन्न पुरुष उक्त दुबली स्त्री के निकट एक रात् में एक ही बार न कि दो या तीन बार भी गमन करता है वह शुभ लक्षणों से युक्त पुत्र उत्पन्न करता है।

यहाँ आचारादर्श फक्किका की व्याख्या के अनुसार मूलवचन में 'सकृत्' पद के उपादान का तात्पर्य है कि प्रत्येक ऋतु के प्रथम गमन में ही पुत्रोत्पत्ति योग्यता होती है। अन्य गमन तो केवल काम वासना पूर्त्ति निमित्त होता है, ऐसा वृद्ध जन कहते हैं।

यहाँ, प्रकृत प्रसंग पर अन्य स्मृतिवचनों के आधार से छन्दोगाह्निक तथा छन्दोगाह्निकोद्धार का विशेषतः कहना है कि पुत्रकाम जन रात्रि के प्रथम या चतुर्थ प्रहर में समरात्रियों की किसी अनिषिद्ध एक रात्रि में पुंनामक हस्त पुष्य आदि नक्षत्र चन्द्र तारा आदि की शुद्धि तथा स्थिर लग्न .........होने पर ऋतुस्नाता व गृह्यविधि से विवाहिता पत्नी में एक ही बार उपगमन करे जिसमें गृह्यविधि से गर्भाधान हो।

एकऋतु में प्रथम गमन ही गर्भ का हेतु होता है। अतः वहीं लग्न आदि का आदर तथा गर्भाधान भी हो– ऐसा वृद्धजनों का कहना है।

भली भाँति गर्भाधान हेतु पत्नी के उत्तानीकरण (चित्त करके लेटाने) का ही प्रयोग करना चाहिए। तिर्यक् मुद्रा (स्थिति) में सम्पन्न उपगमन से गर्भाधान हो नहीं पाता है। विपरीत मैथुन (जिसमे पुरुष ही उत्तान लेटा हो) तो अत्यन्त निषिद्ध है क्योंकि आयुर्वेद के कथनानुसार इससे नपुंसक सन्तान की उत्पत्ति होती है।

[ मूलम् ]

मनुः–

तासामाद्याश्चतस्रस्तु निन्दितैकादशी च[१] या।
त्रयोदशी च शेषास्तु प्रशस्ता दश रात्रयः॥
युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु॥

[ संस्कृत टीका ]

तासामाद्येति। इतः पूर्वतनं वचनं यथा–

ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोडश स्मृताः।
चतुर्भिरितरैः सार्धमहोभिः सद्विगर्हितैः॥ इति।

एतेन षोडशरात्रिकालपर्यन्तमेव गर्भाशयद्वारं विवृतं तिष्ठतीति। एवञ्च, तासाम् = उक्त षोडशरात्रीणाम्। आद्याश्चतस्रस्तु = रजोदर्शनात्प्रभृति आदिमाश्चतस्रः रात्रयः। या च एकादशी, या च त्रयोदशी रात्रिः सर्वाऽपि निन्दिताऽस्ति। शेषास्तु = अवशिष्टास्तु। दश रात्रयः। प्रशस्ताः = प्रशंसनीयाः सन्ति।

तथा चाह गर्भाधानस्य शुभाशुभदिनानि बृहज्जोतिषसारेऽपि–

रात्रौ चतुर्थ्यां पुत्रः स्यादल्पायुर्धनवर्जितः।
पञ्चम्यां पुत्रिणी नारी षष्ठ्यां पुत्राः सुमध्यमाः॥ १॥

---

पा० (१) 'तथा' ह. पु.।

सप्तम्यामप्रजा योषिदष्टम्यामीश्वरः पुमान् ।
नवम्यां सुभगा नारी दशम्यां प्रवरः सुतः ॥ २ ॥
एकादश्यामधर्म्या च द्वादश्यां पुरुषोत्तमः ।
त्रयोदश्यां सुता पापा वर्णसङ्करकारिणी ॥ ३ ॥
धर्मज्ञश्च कृतज्ञश्च आत्मवेदी दृढव्रतः ।
प्रजायते चतुर्दश्यां पञ्चदश्यां पतिव्रता ॥
आश्रयः सर्वभूतानां षोडश्यां जायते पुमान् ॥ ४॥ इति ।

युग्मास्विति । युग्मासु = पूर्वोक्तास्वपि दशसु मध्ये षष्ठ्यष्टम्याद्यासु समरात्रिषु गमने । पुत्राः । अयुग्मासु पञ्चमीसप्तम्यादिविषमरात्रिषु गमने । स्त्रियः = दुहितरः । जायन्ते = उत्पद्यन्ते । अतएव,

तस्माद् युग्मासु पुत्रार्थी संविशेदार्त्तवे स्त्रियम् ।

इत्युत्तरार्धः ।

[ टिप्पणी ]

अत्रेदमवधेयम् । पुत्रकन्योत्पत्तौ बृहस्पतिवचनवद् मनुरपि कारणान्तरमाह–यथा

पुमान् पुंसोऽधिके शुक्रे स्त्री भवत्यधिके स्त्रियः ।
समेऽपुमान् पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्ययः ॥ इति।

"एवं गच्छन् स्त्रियं क्षामामि"ति (आचाराध्याय ८०) वचनमिदमुपक्रम्य व्याख्यायां मिताक्षराकारेण यद् विवेचितं तद् बृहस्पतिवचनव्याख्यावसरे प्रदर्शितं द्रष्टव्यम् ।

दारोपगम-प्रसङ्गे कृत्यसारसमुच्चयपरिशिष्टे गङ्गाधर-मिश्रेणैवं निकृष्टोऽर्थः प्रदर्शितो यथा–यदि च स्त्री रजोवती तदा (विशेषस्थितौ) चतुर्थरात्रौ वा षष्ठाष्टमदशम-द्वादशचतुर्दशषोडशान्यतमरात्रौ स्वयं वीर्यवर्धकभोज्यं घृतम-धुयुक्तं दुग्धं पीत्वा, स्त्रियं तु लघ्वाहारादिना स्वापेक्षयाऽल्पबलां विधाय ताम्बूलरागरञ्जितमुखो मनोहारिसुगन्धलेपचन्दनादिचर्चितः सुरम्ये वाससी परिधाय चारुचटुलकथया तां वशीकृत्य पूर्वशिरस्कां सौम्यावनतां खट्वादिकां

शय्यां तया सहासीत । तत्र दक्षिणभागे स्त्री उत्तरभागे स्वामी स्वपेत्, येन पुरुषस्य वामभागे स्त्री भवेत् ।...........समायां रात्रौ चेत्पुरुषस्य वीर्याधिक्यं तदा पुंलक्षणयुक्तः पुत्रः । विषमायां चेत् स्त्रियो रजोऽधिकत्वं तदा कन्या स्त्री- लक्षणयुक्ता वाच्या । यदि विषमायां रात्रौ पुरुषस्य वीर्याधिक्यं तदा स्त्र्याकृतिकः पुरुषः । यदा समायां स्त्रियो रजोऽधिकत्वं तदा पुरुषाकृतिः कन्या स्तनकेशहीना जायते ।

अथ स्त्रिया गर्भाशये वामभागपतितं वीर्यं कन्यां जनयति । दक्षिणभागपति- तं सत्पुरुषमित्यपि युक्तियुक्तः प्रकारो बहूनामनुभवसिद्धोऽस्त्यतएव पूर्वपश्चिमायतां शय्यां सौम्यावनतां, दक्षिणोत्तरान्तु पूर्वावनतां यत्नेन कारयेत् । तत्र सम्भोगे वीर्यच्युतिसमये स्त्रिया मनसि यस्य स्मृतिर्वा ध्यानं जायते तत्सदृशमेवापत्यमुत्पद्यते । तथोक्तं बृहत्संहितायाम्—

**जात्यं मनोभवसुखं सुमगस्य सर्व—**
**माभासमात्रमितरस्य मनोवियोगात् ।**
**चित्तेन भावयति दूरगताऽपि यं स्त्री**
**गर्भं विभर्ति सदृशं पुरुषस्य तस्य ॥१॥**

अतएव गोपाला अपि गोमैथुनसमये तस्याः पुरतः रक्त-पाटल-कृष्ण प्रभृतिवर्णवद्गोजातिः संरक्ष्यते, येन सुन्दराकृतिर्वत्स उत्पद्यते इति चिरकालगतो ोऽस्त्यस्मिन् देशे । अतएव पा श्चात्यदेशे तु विहारभवने आदर्शचरितानां पुंसां चित्राणि संरक्ष्यन्ते , येनाधानावसरे स्त्रिया ध्यानं चित्रगतमहाजनविषये पतेदिती''ति ।

उपरिष्टादिदमपि ज्ञातव्यम् । 'चतुर्थेऽ हनि स्नातायां युग्मासु गर्भाध ानरूपतो ब्रह्म गर्भं संदधाति' इति हारीतवचनानुसारं, 'स्नातां चतुर्थे दिवसे रात्रौ गच्छेद् विचक्षणः' इति महाभारतवचनानुसारञ्च चतुर्थरात्रावुपगमनविधानेऽपि 'तासामाद्याश्चतस्रस्तु' इति, 'आद्याश्चतस्रस्तु वर्जयेत्' इति मनुयाज्ञवल्क्याभ्यां कृतचतुर्थरात्रिगमननिषेधोऽपत्यगताल्पायुष्ट्वादिदोषख्यापनार्थः, सति सम्भवे त्याज्यत्व-विधानार्थो वा बोध्यः इति ।

अत्र प्रदर्शिता टिप्पण्यपि यथा—

अथ प्रजोत्पादने स्त्रीपुरुषयोग्यविचारे सुश्रुते भगवान् धन्वन्तरिः—"अथास्मै पञ्चविंशतिवर्षाय द्वादशवर्षां पत्नीमावहेत्। पित्र्यधर्मार्थकामप्रजाः प्राप्स्यतीति ॥ किञ्च—

तद्वर्षाद् द्वादशात्काले वर्तमानमसृक् पुनः ।
जरापक्वशरीराणां याति पञ्चाशता क्षयम् ॥
ऊनषोडशवर्षायामप्राप्तः पञ्चविंशतिम् ।
यद्याधत्ते पुमान् गर्भं कुक्षिस्थः स विपद्यते ॥
जातो वा न चिरं जीवेद् जीवेद्वा दुर्बलेन्द्रियः ।
तस्मादत्यन्तबालायां गर्भाधानं न कारयेत् ॥

अतिवृद्धायां दीर्घरोगिण्यामन्येन वा विकारेणोपसृष्टायां गर्भाधानं नैव कुर्वीत । पुरुषस्याप्येवंविधस्य त एव दोषाः सम्भवन्ति" इति ।

[ हिन्दी टिप्पणी ]

पुत्र और कन्या की उत्पत्ति प्रसंग पर अभी मनु के द्वारा कहा गया समय रूप कारण ही नहीं । अपितु—

**स्त्रियाः शुक्रेऽधिके स्त्रीस्यात्पुमान् पुंसोऽधिके भवेत् ।**

इत्यादि रूपसे पूर्वोक्त बृहस्पतिवचन के जैसे मनुने भी अन्य कारणों का निर्देश यों किया है—पुरुष का अधिक वीर्य हो तो कन्या का जन्म होता है । इस कथन से यहाँ यह भी दिखा दिया गया है कि वीर्यवर्धक भोजन से अपने वीर्य में अधिकता और अल्पाहार आदि के द्वारा भार्या को बलहीन कर युग्म रात्रियों में पुत्रार्थी स्त्रीगमन करे । दोनों के वीर्य सम होने पर नपुंसक अथवा यमज (जौंआ) पुत्र और कन्या सन्तान की उत्पत्ति होती है । यदि दोनों के वीर्य साररहित या अल्प हों तो गर्भ ही नहीं होता ।

इसी तरह " एवं गच्छन् स्त्रियं क्षामाम्" इस याज्ञवल्क्य वचन की व्याख्या प्रसंग पर उक्त "पुमान् पुंसोऽधिके शुक्रे" इस मनु वचन को उपक्रम कर मिताक्षराकार ने जो प्रतिपादन किया है वह बृहस्पति वचन की उक्त व्याख्या में देखें ।

दारोपगम प्रसंग पर कृत्यसारसमुच्चय के परिशिष्ट में गङ्गाधार मिश्र ने सारांश रूप से लिखा है कि यदि स्त्री रजोवती हो तो (विशेष स्थिति में) चौथी रात अथवा छठी, आठवीं, दशमी, बारहवीं, चौदहवीं रात्रियों की किसी भी रात्रि में स्वयं बलवीर्य वधक भोजन कर तथा घृत व मधु (शहद) से युक्त दूध पीकर और लघु आहार आदि

के द्वारा अपनी अपेक्षा स्त्री को बलहीन बना कर, पान की लालिमा से रञ्जित मुंह मनोहरी सुगन्ध लेप चन्दन आदि से विभूषित हो दर्शनीय दो वस्त्र लगाकर सुन्दर चाटुकारी (चुपडी) कथा से स्त्री को अपने वश में कर इनके साथ खटिये आदि शय्या पर सोवे यदि इन खटियों आदि पर पूरब शिर कर के सोना हो तो खटियों को उत्तर तरफ से कुछ झुकी हुई कर दें। उस खटिये पर दाहिने भाग में पत्नी हो और उत्तर भाग में पति। अर्थात् सम्भोग समय में पुरुष के बायें भाग में स्त्री हो।

सम रात्रि के सहवास में यदि पुरुष का वीर्याधिक्य हो तो पुरुष के लक्षणों से युक्त पुत्र होगा और विषम रात्रि में यदि स्त्री के रजाका आधिक्य हो तो स्त्री के लक्षणों से युक्त कन्या होगी। यदि विषय रात्रियों में पुरुष का वीर्याधिक्य होगा तो स्त्री के आकार के पुरुष की, और यदि समरात्रियों में रज का आधिक्य होगा तो पुरुष के आकार की कन्या (स्तनकेशहीना) की उत्पत्ति होगी।

हाँ, स्त्री के गर्भाशय में वाम भाग में पतित (गिरा हुआ) वीर्य कन्या का तथा दाहिने भाग में गिरने पर पुत्र का जन्म देता है, ऐसा भी बहुतों का अनुभव सिद्ध युक्तियुक्त प्रकार है। अतएव पूरब से पच्छिम में बिछी हुई शय्या हो तो उत्तर दिशा की ओर झुकी हुई (अवनत) तथा यदि दक्षिण से उत्तर शय्या हो तो यत्न से पूरव की ओर झुकी हुई बना दें ताकि स्त्री के गर्भाशय में दक्षिण भाग में वीर्यपतन हो सके।

इस सम्भोग में वीर्यपात के समय स्त्री के मन में जिस का स्मरण या ध्यान आ जाता है, उसके समान ही सन्तान उत्पन्न होती है। जैसा कि बृहत्संहिता में कहा गया है—दूर में भी रहने वाली स्त्री हृदय से जिस की भावना करती है उसके समान ही वह गर्भ धारण करती है।

अतएव गोपालक गण भी गाय के मैथुन समय में उसके आगे लाल, पिलौहाँ लाल, या गुलाबी, या काले रंग आदिवाले कितने साढ़ का रख देते हैं जिससे सुन्दर आकृति का बछड़ा जन्म ले, ऐसा बहुत पुराना व्यवहार इस देश में है। इसीलिए पश्चमी देश में तो विहारभवन (कामिनी के लिए कक्ष) में आदर्श चरितवाले पुरुषों के चित्र लगा दिये गये रहते हैं जिससे गर्भाधान के समय उस स्त्री (कामिनी) का ध्यान चित्रगत महान् आदर्श व्यक्ति के ऊपर पड़े।

यद्यपि "चतुर्थ दिन में स्त्री को स्नान कर लेने के बाद युग्म रात्रियों में गर्भाधान रूप से ब्रह्मगर्भ को धारण करावे" इस हारीत कथन तथा ऋतुस्नान के बाद चौथे दिन रात्रि में बुद्धिमान् जन स्त्रीगमन करे इस महाभारत कथनानुसार चौथी रात में स्त्री प्रसंग का विधान होने पर भी 'तासामाद्याश्चतस्रस्तु' (आद्याश्चतस्रस्तु वर्जयेत् याज्ञ०स्मृ०आचारा० ७९ वचन तथा) इस मनु वचन के द्वारा जो चौथी रात में स्त्रीप्रसंग का निषेध किया गया

है वह उस भावी सन्तान की होनेवाली अल्प आयु दोष दिखाने तथा यथा संभव चौथी रात को त्याग कर देने के उद्देश्य से है।

उक्त कृत्यसार समुच्चय परिशिष्ट की टिप्पणी में प्रजोंत्पादन प्रसंग एवं स्त्री पुरुष योग्य विचार प्रसंग पर सुश्रुत (धन्वन्तरि) के वचनानुसार ज्ञातव्य है कि २५ वर्ष के वर (पति) के लिए १२ वर्ष क़ी पत्नी हो। (अर्थात पत्नी की अपेक्षा पति की आयु दुगुनी से भी अधिक हो) जिससे पितृकर्म तथा अन्य धर्म अर्थ व काम (त्रिवर्ग) की सिद्धि के लिए अपेक्षित सन्तान की प्राप्ति हो सके। दूसरी बात, पत्नी के उस १२ वें वर्ष के बाद के काल में उत्पन्न और वर्तमान रजोधर्म पुनः पुनः (मास-मास में) चलता रहेगा। किन्तु वृद्धावस्था आने पर ५० वें वर्ष के बाद इसका क्षय हो जाता है। लेकिन ध्यान रहना चाहिए कि १६वें वर्ष के बाद कम आयुवाली स्त्री में २५ वर्षसे कम आयुवाले पुरुष के द्वारा यदि गर्भाधान किया जाता है तो वह गर्भस्थ गर्भ में ही नष्ट हो जायगा। अथवा ज्यादे दिन तक जियेगा नहीं। यदि जीवित भी रह जाता है तो उसकी इन्द्रियाँ सदैव दूर्बल रहेंगी। इसी प्रकार अतिवृद्धा अथवा दीर्घरोगिणी अथवा अन्य विकार से आक्रान्ता में गर्भाधान नहीं करना चाहिए। इस तरह के पुरुष के लिए भी वे ही दोष हो सकते हैं। इति।

## [ हिन्दी टीका ]

मूलवचन से पूर्व मनुवचन का अर्थ है कि प्रथम चार अहोरात्र सहित सोलह अहोरात्र स्त्रियों का स्वाभाविक रूप से ऋतुकाल (गर्मधारणयोग्य काल) होते हैं। उन सोलह रात्रियों में रजोदर्शन के बाद प्रथम चार रात्रि, ग्यारहवीं और तेरहवीं रात्रि निन्दित हैं। शेष दस रात्रियाँ पुत्रार्थ स्त्रीगमन के लिए श्रेष्ठ हैं। इस वचन से सिद्ध है कि उक्त सोलह रात्रियों में ही गर्भाशय का द्वार खुला हुआ रहता है।

मूल वचन का अर्थ है कि इन दस रात्रियों में भी छठी, आठवीं आदि सम रात्रियों में स्त्रीगमन करने से पुत्र और पाँचवीं, सावतीं, नवमी आदि विषम रात्रियों में गमन करने से कन्या की उत्पत्ति होती है। अतः पुत्रार्थी पुरुष को ऋतु काल की अनिन्दित सम (युग्म) रात्रियों में स्त्रीसम्भोग करना चाहिए।

इन सोलह रात्रियों में भी चौथी रात्रि से शुभाशुभ दिन रात्रि बृहज्ज्योतिषसार से यों ऊपर से ज्ञातव्य है–चौथी रात्रि में स्त्रीसंग करने से अल्पायु और धनवर्जित पुत्र होता है। ५वीं रात्रि को कन्या, छठी रात्रि को मध्मायु पुत्री, पुत्र, ७ वीं रात्रि को सन्तति नहीं होगी। ८ वीं रात्रि को सर्वसामर्थ्यशाली पुत्र होगा। ९ वीं रात्रि में सुभगा (नारी) सुहागिन पुत्री, १० वीं रात्रि में गुणवान पुत्र, ११वीं रात्रि में अधर्मिणी पुत्री तथा १२ वीं रात्रि को पुरुषों में श्रेष्ठ पुत्र होंगे। १३ वीं रात्रि में वर्णसंकरकारिणी पापकर्मकर्मिणी

कन्या । १४वीं रात्रि को धर्मज्ञ, कृतज्ञ, आत्मज्ञानी एवं दृढता से नियमपालक पुत्र होगा । १५ वीं रात्रि को पतिव्रता पुत्री तथा १६ वीं रात्रि को सभी प्राणियों का आश्रय देने वाला पुत्र होगा, ऐसा जानना चाहिए ।

## [ मूलम् ]

**आपस्तम्बः–**

स्त्रीवाससैव सन्निपातः स्यात् । यावत्सन्निपातञ्च सहशय्या । ततो नाना । उदकोपस्पर्शनम् । अपि वा लेपान् प्रक्षाल्याचम्य प्रोक्षणमङ्गानाम् । स्त्रीवासः=स्त्रीसम्भोगार्थं वासः । सन्निपातः= अभिगमः[1]। नाना = भिन्ना शय्येत्यन्वयः । उदकोपस्पर्शनम् =स्नानम् । एतच्च ऋतुगमने । अपि वेत्यादि पक्षान्तरमनृतौ । तथा च वृद्धशातातपः–

**ऋतौ तु गर्भं शङ्कित्वा[2] स्नानं मैथुनिनः स्मृतम् ।**
**अनृतौ तु सदा कार्यं शौचं मूत्रपुरीषवत् ॥ इति ।**

गौतमः–

**न मिथुनीभूय[3] शौचं प्रति विलम्बेत[4] ।**

शौचमत्र लेपप्रक्षालनाचमनमात्रम् । ऋतुगमने च स्नानन्तु पूर्वोक्त-कर्माधिकारापादकं न तु चाण्डालादिस्पर्शवदृतुगमनेनाप्रायत्यं जन्यते । यच्च[5] स्नानेनापनीयेत । येन वा रात्रावपि स्नानं स्यात् । अतः स्नानं प्रातरेवेति वृद्धाः।

## [ संस्कृत टीका ]

स्त्रीवाससैवेति । स्त्रीवाससा=स्त्रीसम्भोगार्थं सुरक्षितेन वस्त्रेण । एव परम्परासम्बधे षष्ठी । सन्निपातः=अभिगमः-सम्भोग इति यावत् । यावत्सन्निपातञ्च= यावन्मैथुनञ्च । सहशय्या=एकशय्या । अत्र छन्दोगाह्निकं यथा, "यत्तुव्याख्यानं स्त्रीपरिधानवास्तेन धृतमेव । स्त्रीवस्त्रं सम्भोगकाले स्त्रीपुंसाभ्यां परिधर्तव्यमिति । तन्मन्दम् । तथापि परम्परासम्बन्धान्नान्यधृतं वासो विभृयादि' ति गौतमस्मृतिविरोधाच्च । अतएव स्त्रीसम्भोगार्थं वासः स्त्रीवास इति कल्पतरौ लिखितमिति" । एवमेव छन्दोगाह्निकोद्धारोऽपि ।

---

पा० (१) सम्भोगः । (२) ऋतौ तु गर्भशङ्कित्वात् स्नान मेव विधीयते । (३) मैथुनीभूत । मिथुनी भूत्वा सम्भोगः । (४) विलम्बयेत् । (५) तच्च इति ह. पु. ।

[ हिन्दी टीका ]

ऋतुस्नान के बाद चौथे दिन रात्रिमें बुद्धिमान्जन स्त्रीगमन करें इस महाभारत कथनानुसार चौथीरात में सभीप्रिसंग का विधानहोने पर भी 'तासानाद्याश्चतस्रस्तु' (आद्याश्चतस्र स्तु वर्जयेत् याज्ञ० स्मृ० आचारा० 79 वचन तथा) इस मनु वचन के द्वारा जो चौथी रात में स्त्री प्रसंग का निषेध किया गया है वह उस भावी सुन्तान की होनेवाली अंल्पआयु दोषदिखाने तथा यथा संभव चौथी रात कं त्याग कर देने के उद्देश्य से हैं ।

उक्त कृत्यसार समुच्चय परिशिष्ट की टिप्प्णी में प्रनोत्पादन प्रसंग एवं स्त्रीपुरुषयोग्य विचार प्रसंग पर सुश्रुत (धन्वन्तरि) के वचनानुसार ज्ञातव्य है कि २५ वर्ष के वर( पति के लिए १२ वर्ष की पत्नी हो । अर्थात् पत्नी की अपेखा पति की आयु दुगूनी से भी अधक हो) जिससे पितृकर्म तथा अन्य धर्म अर्थ वकाम (त्रिवर्ग) की सिद्धि कं लिए अपेक्षित सन्तान की प्राप्ति हो सके । दूसरी बात, पत्नी के उस १२वे वर्ष के बाद कं काल में उत्पन्न और वर्तमान रजोधर्म पुनः पुनः (मास-मास में) चलता रहेगा । किन्तु वृद्धावस्था आनेपर ५० वें वर्ष के बाद इसका क्षय हो जाता है । लेकिन ध्यान रहना चाहिए कि १६वें वर्ष से कम आयुवाली स्त्री में २५ वप्र से कम आयुवाले पुरुष के द्वारा यदि गर्भाधान किया जाता है तो वह गर्भस्थ गर्भ में ही नष्ट हो जायगा । अथवा ज्यादे दिन तक जीयेगा नहीं । यदि जीवित भी रह जाता है तो उसकी इन्द्रिया सदैव दुर्बल रहेंगी । इसी प्रकार अतिवृद्धा अथवा दीर्घरोगिणी अथवा अन्य विकार से आक्रान्ता में गर्भाधान नहीं ही करना चाहिए । इस तरह के पुरुष के लिए भी वे ही दोष हो सकते हैं । इति ।

नाना = भिन्ना शय्या आश्रयणीयेति तात्पर्यम् । अतएव ''मिथुनीभूय न तया सह सर्वां रात्रिं शयीत'' इति पुनरापस्तम्बः । लेपान् = वीर्यस्य रजसो वेति भावः । प्रोक्षणम् = वारिविन्दुभिः सेचनम् ।

ऋताविति । ऋतौ = ऋतुसमये स्त्रीसङ्गे सति । गर्भम् शुक्रशोणित-संयोगेनोत्पत्स्यमानं मांसपिण्डम् । शङ्कित्वा=आशङ्क्य । मैथुनिनः= कृतमैथुनस्य । स्नानम् । स्मृतम् = मुनिभिः कथितम् । अनृतौ=ऋतुभिन्नसमये सञ्जातस्त्रीसङ्गे तु । सदा । मूत्र-पुरीषवत् = एतदुत्सर्गानन्तरं विधेयशौचवत् । शौचम् = शुद्धिः । कार्यम् । अत्र ''वाचनिकस्नाने गर्भशङ्कित्वहेतोः क्वोपभोग इति चिन्त्यमिति'' त्याचारादर्शफक्किका व्याख्या ।

मिथुनीभूय = स्त्रियमुपगम्य । शौचं प्रति = विधेयशुद्धिं प्रति । न । विलम्बेत = विलम्बं कुर्यात् । सद्य एव कुर्यादिति भावः ।

अत्र छन्दोगाह्निकोद्धारो यथा—"मैथुनानन्तरञ्च शौचं त्वरया विधेयम् । न मिथुनीभूय शौचम्प्रति विलम्बेदिति गौतमवचनात् । शौचञ्च मृत्तोयाभ्यां लेपं प्रक्षाल्य ऋतौ स्नानमनृतौ तु प्रोक्षणमङ्गानामाचमनञ्च पुंसामिति । स्त्रियास्तु ऋतावनृतौ च लेपादिक्षालनोत्तरमाचमनमात्रम् नतु स्नानप्रोक्षणे" इति ।

अतएव "गौतमः—न मिथुनीभूय शौचं विलम्बयेत् । तत्र पूर्वं मृत्तोयाभ्यां लेपं प्रक्षाल्य ऋतौ स्नानम् । अनृतौ तु प्रोक्षणमङ्गानामाचमनञ्चेति । ऋतौ स्नानम् । स्त्रियास्तु अनृतावृतौ च लेपादिक्षालनोत्तरमाचमनं न स्नानप्रोक्षणे" इति छन्दोगाह्निकमपि ।

अत्र वृद्धनाम्ना प्रदर्शितमते । अत्र शौचम् =शुद्धिसाधनम् । लेपप्रक्षालनाचमनमात्रम् = एदुभयमेव विधेयम् । पूर्वोक्तकर्माधिकारापादकम् = सन्ध्योपासनं-तर्पण-देवपूजनाधिकारसम्पादकम् । अप्रायत्यम् = अपवित्रता । जन्यते = उत्पद्यते । यच्च = अप्रायत्यम् । वृद्धाः = प्राचीनाः । धर्मशास्त्रनिबन्धार इति शेषः ।

अत्र श्रीदत्तोपाध्यायविवेचिते वृद्धमते कथितं स्नानमुपक्रम्य "स्नानञ्च कर्माधिकारसिध्यर्थं, न तु ऋतुगमने चाण्डालवदप्रायत्यं भवति" इत्यादिनाऽऽरभ्य वृद्धाः पर्यन्तमुपन्यस्य 'इतिश्रीदत्तस्तन्ने' त्युक्त्वा 'न मिथुनीभूय शौचं प्रति विलम्बेते' ति वक्ष्यमाणगौतमवचनविरोधादिति हेतुमाह वीरमित्रोदयस्तन्न मनोहरम् । गौतमवचनघटकशौचपदार्थस्य लेपप्रक्षालनाचमनमात्रस्यैव प्रकृतेऽङ्गीकारात् । एतयोराचरणे विलम्बकरणस्य वृद्धमतेऽप्यनभिमतत्वात् । 'द्वावेतावशुची स्यातामि'त्यग्रिमवृद्धशातातपवचन-व्याख्यायां 'शुचिः= स्नानप्रोक्षणे विनाऽपि, नतु लेपप्रक्षालनाचमनयोर्निवृत्तिरित्याहुरि'ति श्रीदत्तकथनवत् वीरमित्रोदयेनापि— 'शुचित्वं स्नानप्रोक्षणव्यतिरेकेणापि लेपप्रक्षालनाचमनमात्रादि'ति लेखनेन तस्यैवाङ्गीकाराच्च जनसाधारणस्वास्थ्यदृष्ट्याप्येतन्मतस्य व्यावहारिक- त्वाच्चेत्यलम् ।

## [ हिन्दी टीका ]

स्त्रीसम्भोग के लिए अलग से रखे गये वस्त्र का धारण करके ही स्त्रीगमन करे। अर्थात् उस वस्त्र से स्त्रीप्रसंग ही हो, न कि उसे धो देने के बाद पहन कर ब्रह्मयज्ञादि कर्म भी करे। स्त्रीप्रसंग पर्यन्त दम्पति की एकशय्या रहनी चाहिए। अनन्तर दोनों की शय्या भिन्न-भिन्न (अलग-अलग) होनी चाहिए। हाँ, ऋतुकाल में अभिगमन होने पर अनन्तर स्त्री सम्भोगी पुरुष स्नान करे किन्तु यदि ऋतुकाल न हो तो शुक्रशोणित का प्रक्षालन और आचमन कर अपने-अपने अंगो का जल की छीटों से सेचन कर लेने से दोनों ही शुद्ध हो जाते हैं।

इस प्रसङ्ग पर वृद्धशातातप का भी कहना है कि ऋतु के समय स्त्रीसम्भोग करने पर गर्भ होने की आशङ्का है अतः मैथुन करने वाले पुरुष को स्नान करना चाहिए, ऐसा मुनियों ने कहा है। ऋतु भिन्न समय में सम्भोग करने पर मलमूत्रोत्सर्ग के जैसे शौच (शुद्धि) करना चाहिए।

यहाँ आचारादर्श फक्किका व्याख्याकार म. म. रघुनाथ का विवेचन है कि जबकि ऋतुके समय अभिगमन के बाद स्नान प्रकृतवचन से ही प्राप्त है तो फिर गर्भ की आशाङ्का को हेतु रूप से कथन विवेचको द्वारा चिन्तनीय है।

यहाँ छन्दोगाह्निक के लेखानुसार ऊपर से ज्ञातव्य है कि मैथुन के बाद जल्द ही शौच (शुद्धि) कर लें। क्यांकि "न मिथुनीभूय" आदि गौतम का विधिवचन है। प्रकृत में पुरुषो के लिए शौच शब्द का तात्पर्यार्थ है-मिट्टी और पानी से लेप का प्रक्षालन कर ऋतुकाल होने पर स्नान किन्तु ऋतु भिन्न समय में मिट्टी और पानी से लेप का प्रक्षांलन तथा अपने अङ्गो का जलकण से सेचन कर पुरुष आचमन करें।

यहीं स्त्रियों के लिए ऋतु या ऋतुभिन्न समय में भी मिट्टी और पानी से लेप आदि का प्रक्षालन कर लेने के बाद आचमन मात्र कर लेना विहित है, न कि पुरुषों के जैसे स्नान या प्रोक्षण (अङ्गो पर जलकण सेचन) भी आवश्यक है।

ऐसा ही भाव श्रीदत्तकृत छन्दोगाह्निक का भी है।

मैथुन के बाद शौच करने में विलम्ब (आलस्य) नहीं करना चाहिए।

यहाँ वृद्धों (प्राचीन निबन्धकारों) का विवेचन है कि इस मैथुन प्रसङ्ग पर गौतमवचन में पठित शौच पद का अर्थ शुक्र या शोणित के लेप का प्रक्षालन (जल से साफ कर देना) और आचमन मात्र है। ऋतु काल में स्त्री सम्भोग प्रसंग पर जो स्नान कहा गया है वह पूर्वोक्त सन्ध्योपासन तर्पण देव पूजन आदि कर्मो (के करने) में अधिकार सिद्धि के लिए है। ऋतुगमन से तो चाण्डाल आदि के स्पर्श होने वाली जैसी

अपवित्रता उत्पंन्न होती नहीं जिसे स्नान के द्वारा हटाया जाय या इस कारण रात्रि में भी स्नान किया जाय। अतः स्नान तो प्रातः काल ही हो।

यहाँ ऊपर से ज्ञातव्य है कि श्रीदत्त प्रदर्शित वृद्धमत को उपक्रम कर वीर मित्रोदयकारने यह मत इसलिए अमान्य माना है कि ''मैथुन के बाद शौच (शुद्धि करण) में विलम्ब न किया जाय'' इस गौतमवचन का विरोध हो जाता है। किन्तु यह वीरमित्रोदय का खण्डन युक्तियुक्त नहीं। क्यों कि यहाँ गौतम वचन में पठित शौच पद का अर्थ लेप (लगे वीर्य या शोणित) का प्रक्षालन तथा आचमन मात्र है। इसमें विलम्ब न करना तो सर्वमत सम्मत ही है।

दूसरी बात, अग्रिम ''द्वावेतावशुची स्याताम्'' इत्यादि वृद्धशातातपवचन की व्याख्या में शौच शब्द का अर्थ प्राचीन निबन्ध प्रतिपादित लेपप्रक्षालन और आचमन मात्र स्वीकारा है उसी तरह वीरमित्रोदयकारने भी स्पष्ट शब्दों में यही अर्थ लिखा है।

## [ मूलम् ]

वृद्धशातातपः –

द्वावेतावशुची स्यातां दम्पती शयनं गतौ[1] ।
शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ॥

शुचिः = स्नानप्रोक्षणे विनाऽपि, न तु लेपक्षालनाचमनयोर्निवृत्तिरित्याहुः।

## [ संस्कृत टीका ]

द्वावेतावेति। एतौ द्वौ। दम्पती = जायापती। शयनं गतौ= शयने मैथुनं प्राप्तौ। अशुची = अपवित्रौ। स्याताम्। (किन्त्वत्र) शयनात् = शय्यातः। उत्थिता = उत्थाय निर्गता सती। नारी = भार्या। शुचिः = मृत्तोयाभ्यां लेप-प्रक्षालनमाचमनञ्च विधाय पवित्रा स्यात्। (परन्तु) पुमान् = पुरुषः। अशुचिः = अपवित्रः। स्यात्। अतोऽस्य कृते ऋतावनृतौ च क्रमशः स्नानप्रोक्षणे अप्यावश्यके इति ध्वनितम्। शुचिशब्दार्थो मूल एव स्पष्टीकृतोऽस्ति। अतएवात्र ''शुचित्वं स्नानप्रोक्षण-व्यतिरेकेणापि लेपप्रक्षालनाचमनमात्रादिति वीरमित्रोदयोऽपि।

---

पा० (१) स्थितौ।

अत्रेदमवधेयम् – ऋतुकालिकाभिगमनोत्तरं पुरुषस्य कृते विधेय-स्नानसम्बन्धे द्विविधं मतमुपलभ्यते । यथा–मैथुनानन्तरं ''न मिथुनीभूय शौचं प्रति विलम्बेदि'' ति गौतमवचनानुसारं रात्रावपि स्नानमावश्यकमिति नवीनाः । परमत्रोक्त गौतमवचनमुपक्रम्य ''शौचमत्र लेपक्षालनाचमनमात्रमिति व्याख्याय च..........'' अतः स्नानं प्रातरेवेतिवृद्धाः'' इति द्वितीयं मतं मतिमतां समक्षमुपस्थितं भवति । किन्त्वत्र विश्लेषणे ''वृद्धानां वचनं ग्राह्यमि''ति सरण्या जन-साधारण–स्वास्थ्य–संरक्षण–दृष्ट्यापि द्वितीयं मतमधिकं व्यावहारिकं प्रतीयते ।

## [ हिन्दी टीका ]

ये दोनों – पतिपत्नी –मैथुन के बाद अपवित्र हो जाते हैं । किन्तु पत्नी तो ऋतु काल या ऋतुभिन्न काल में भी शय्या से उठ कर बाहर आ जाने पर मिट्टी और पानी (या साबुन) से लेप प्रक्षालन तथा आचमन कर लेने से ही शुद्ध हो जाती है । यहीं पुरुष को अपनी अपवित्रता हटाने हेतु ऋतु काल के गमन में सद्यः स्नान करना चहिए । ऋतुभिन्न काल के गमन में लेपप्रक्षालन, आचमन और जल कणों से अङ्गो का सेचन करे ।

अब यहाँ ऊपर से विचारणीय है कि ऋतुकाल में अभिगमन के बाद पुरुषों के लिए कर्तव्य स्नान के संबन्ध में दो तरह के मत देखे गए हैं । पहला मत नवीनों (नवीन निबन्धकारों) का है कि मैथुन के बाद 'न मिथुनी भूय' इत्यादि गौतमवचन के अनुसार पुरु को रात्रि में भी सद्य स्नान करना चाहिए, किन्तु वृद्ध (प्राचीन) निबन्धकारों का द्वितीय मत है कि उक्त गौतमवचन में पठित शौच पद का अर्थ लेपप्रक्षालन और आचमन मात्र है अतः मैथुन के बाद किया जाने वाला स्नान भी प्रातः काल ही हो । उपस्थित इन दोनों मतों में विश्लेषण करने पर 'वृद्धों का वचन ग्राह्य है, इस नीति के अनुसार तथा जन साधारण के स्वास्थ्य संरक्षण की दृष्टि के अनुसार भी प्रातःकालिक स्नान वाला वृद्धमत (द्वितीय मत) ही अधिक व्यावहारिक प्रतीत होता है । अधिक विज्ञ सुजन ही विवेचन करें ।

## [ मूलम् ]

विष्णुपुराणे–

नाऽस्नातां तु स्त्रियं गच्छेन्नातुरां न रजस्वलाम् ।
नानिष्टां[1] न[2] प्रकुपितां नाप्रशस्तां न गुर्विणीम् ॥

नादक्षिणां नान्यकामां नाकामां नान्ययोषितम् ।
क्षुत्क्षामामतिभुक्तां च[3] स्वयञ्चैभिर्गुणैर्युतः ॥
नान्ययोनावयोनौ वा नोपभुक्तौषध[6]स्तथा ।
देवद्विजगुरूणाञ्च व्यवायी नाश्रमे भवेत्[7] ॥
चैत्य-चत्वर-सीरेषु[8] नैव[9] नैव चतुष्पथे ।
नैव श्मशानोपवने सलिलेषु महीपते ॥
प्रोक्तपर्वस्वशेषेषु नैव भूपाल सन्ध्ययोः ।
गच्छेद् व्यवायं मतिमान् न[10] मूत्रोच्चारपीडितः ॥

प्रोक्तपर्वसु =

चर्तुदश्यष्टमी चैव अमावास्याथ पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविसङ्क्रान्तिरेव च ॥

इति श्लोकोक्तेषु ।

[ संस्कृत टीका ]

नास्नातामिति । अस्नाताम् = रजोदर्शनात् तृतीयरात्रिपर्यन्तमकृतस्नानामित्यर्थः । स्त्रियम् = पत्नीम् । स्त्रियमित्यस्य 'न' इत्यस्य गच्छेदित्यस्य च सर्वत्र द्वितीयान्तेन सह सम्बन्धः । आतुराम् = मैथुनसंवर्धनीयरोगवतीम् ।

[ टिप्पणी ]

गुर्विण्या आचरणीय आचारः शब्दकल्पद्रुमे यथा–

आर्तवस्नानदिवसात् त्र्यहं सा ब्रह्मचारिणी ।
शयीत दर्भशय्यायां पश्येदपि पतिं न च ॥
करे शरावे पर्णे वा हविष्यं त्र्यहमाचरेत् ।
ततश्चतुर्थे द्विवसे स्नात्वा सद्वसनादिभिः ।
भूषिता सुमनाः पश्येद् भर्त्तारं समलङ्कृतम् ॥
पूर्वं पश्येदृतुस्नाता यादृशं नरमङ्गना ।

तादृशं जनयेत्पुत्रं ततः पश्येत्पतिं प्रियम् ॥
अज्ञानाद्वा प्रमादाद्वा लौल्याद्वा दैवतं न या ।
सा चेत्कुर्यान्निषिद्धानि गर्भदोषाँस्तदाऽऽप्नुयात् ॥
एतस्या रोदनाद् गर्भो भवेद् विकृतलोचनः ।
नखच्छेदेन कुनखी कुष्ठी त्वभ्यङ्गतो भवेत् ॥
अनुलेपात् तथा स्नानाद् दुःखशीलोऽञ्जनाददृक् ।
स्वापशीलो दिवास्वापाच्चञ्चलः स्यात्प्रधावनात् ॥
अत्युच्चशब्दश्रवणाद् वधिरः खलु जायते ।
तालु-दन्तोष्ठजिह्वासु श्यावो हननतो भवेत् ॥
प्रलापी भूरिकथनान्मत्तस्तु परिश्रमात् ॥
खलतिर्भूमिखननादुन्मत्तो वातसेवनात् ।
शाकाहाराल्लोमपूर्णः श्वित्री दुग्धस्य सेवनात् ॥
सूरणाच्चर्मरोगी स्यान्नेत्रस्त्रावी कटूषणात् ।
अतिश्रमादङ्गहीनो गर्भे बालोऽभिजायते ॥

अथ गुर्विणीपतिनियमः–

न गच्छेत्परदेशं तु न व्रजेत्प्राणसंशये ।
न कुर्यात्पिण्डदानन्तु पित्रे जातु गयां विना ॥
गुरुदेवार्चनं नित्यं मङ्गलाचारतत्परः ।
एवं कुर्वन् लभेत्पुत्रं चिरजीविनमुत्तमम् ॥ इति ।

[ हिन्दी टिप्पणी ]

कृत्यसारसमुच्चयपरिशिष्ट में उद्धृत शब्दकल्पद्रुम के अनुसार गर्भवती स्त्री के द्वारा ऋतु कालारम्भसमय से ही आचरणीय आचार इस प्रकार हैं–

ऋतुस्नानदिवस (चौथे दिवस) के पहले तीन रात्रियों तक वह ब्रह्मचारिणी रहे। कुश की या सामान्य चटाई पर सोवे, अपने पति की ओर देखे भी नहीं, साथ ही मिट्टी के वर्तन या पत्तलपर हविष्यान्न का भोजन करे। चौथे दिन में स्नान के बाद

अच्छे-अच्छे वस्त्रों आदि से भूषिता और प्रसन्न-चित्ता होकर अच्छी तरह विभूषित अपने पति देव की देखे। क्योंकि ऋतुस्नाता नारी सब से पहले जिस तरह के पुरुष को देखेगी उसी तरह के पुत्र का जंन्म देती है। अतः पहले अपने प्रिय पति को देखना चाहिए। उचित तो यह है कि वह किसी देव का दर्शन करे। किन्तु अज्ञान, प्रमाद (असाव-धानी) या चञ्चलता वश ऐसा नहीं कर पाती है और निम्नलिखित निषिद्ध कर्मों का आचरण करती है तों ये गर्भगत दोष उत्पन्न हो जायेंगे यथा– गर्भवती के ज्यादे समय रोते रहने पर आँख का रोगी, अपने नहों से तृणच्छेदन करने या मिट्टी को कुदेरते रहने पर नह का रोगी, मालिश कराते रहने पर कुष्ठी, अनुलेपन (किसी तरल वस्तु की तह चढाना, सुगन्धित वस्तुओं का शरीर में लगाना, या उवटन करना) तथा स्नान (जलावगाहन या देव प्रतिमा को विधि पूर्वक नहलाने की क्रिया) से दुःखशील, और आँख में अञ्जन लग ते रहने से अन्धा पुत्र उत्पन्न होता है। इसी तरह दिन में सोते रहने से अधिक निद्रालु, जोर से दौड़ते रहने पर चञ्चल, जोर के धमा के आदि अति उच्च शब्द के श्रवण से बहरा पुत्र होता है।

तालु, दाँत, ओठ और जीभ पर ज्यादा आघात (कूचते रहने) करने पर भूरे रंग का पुत्र होता है। अधिक बोलते रहने पर प्रलापी (अंट संट बोलने वाला), अधिक श्रम करने पर पागल, नह से भूमिको कुदेरते रहने पर गंजा, अधिक हवा के सेवन से पागल, अधिक शाक (पत्तीफूल आदि को चबाकर खानेपर लोमपूर्ण (रोयें वाला), अधिक दुग्ध सेवन करने पर कोढी, जन्मकन्द या ओल के अधिक सेवन से चर्मरोगी, कटु वस्तु के सेवन करते रहने पर नेत्र स्रावी (आखों से आँसू गिरते रहने वाला) और अत्याधिक श्रम करने से अङ्गहीन बालक गर्भ में उत्पन्न होता है।

इसी तरह गर्भवती के पति के लिए भी ये कुछ नियम संक्षेप में हैं– पत्नी को गर्भवती देख उसका पतिदेव परदेश न जाये और न प्राणविनाश के संशय स्थल पर जाये। साथ ही अस्तूरे से माथे का बाल न बनवाये तथा न शव (मुर्दा) उठावे या शव यात्रा में जावे। इसके अलावे न तीर्थयात्रा करे और नहीं गयाश्राद्ध को छोड़कर पितरों के निमित्त पिण्डदान ही करे। किन्तु नित्य ही गुरु और देवों का अर्चन करते हुए माङ्गलिक आचार के आचरणमें तत्पर रहे तो उत्तम और चिरजीवी पुत्र का लाभ करता है ॥ इति।

[ संस्कृत टीका क्रमशः ]

न रजस्वलाम् = रजसोऽधिकत्वे चतुर्थदिवसादावपि रजोवतीम्। अनिष्टाम् = अनिष्टकारिणीम्। एतेन वन्ध्या, वर्णज्येष्ठा, वयोज्येष्ठा, व्याधियुक्ता, अङ्गहीना, असती, वेश्या, योनिदोषयुक्ता, गुरुपत्नी, भिक्षुकी, कपट-

व्रतधारिणी, वृद्धा प्रभृतयोऽपि अनिष्टतया ग्राह्याः । आविष्टामिति पाठे तु भूत-प्रेतादिबाधारहितामित्यर्थः । नोपविष्टामिति पाठे तु उपविष्टा पदमुत्थिताया अप्युपलक्षणम् । प्रकुपिताम् = अधिकक्रुद्धाम् । अप्रशस्ताम् =

**असपिण्डा च या मातुरसगोत्रा च या पितुः ।**
**सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने ॥**

इति मनु (३।५) प्रोक्ताभिर्भिन्नाम् । गर्भिणीम् = गर्भवतीम् अदक्षिणाम् = अननुकूलाम् । उत्साहहीनामक्रूरां वा । 'दक्षतिरु त्साहार्थ' इति स्कन्दस्वामी' इति, 'अक्रूरः पेशलो दक्षः दक्षिणः क्षमिणां वरः' इति निघण्टुरि'तिच शब्दकल्पद्रुमः । अन्यकामांम् = पतिभिन्नपुरुषकामुकीम् । अकामाम् = कामकामनाविरहिताम् । अन्ययोषितम् = परपत्नीम् । क्षुत्क्षामाम् = क्षुधया क्षीणाम् । अतिभुक्ताम् = कृतातिभोजनाम् । एवंविधां पूर्वोक्तां स्त्रियं न गच्छेदिति भावः ।

स्वयञ्च = पतिरपि । एभिः = यथासम्भवैः पूर्वोक्तैः । गुणैः स्नानादिभिः । युतः = उपेतः सन् पत्नीमुपगच्छेदिति भावः । (एवम्) अन्ययोनौ=परस्त्रीयोनौ वा मानुषीतरगोमहिष्यादियोनौ । अयोनौ = योनीतर-वदनादौ । उपभुक्तौषधः = औषधसेवनशीलः । देवद्विजगुरूणाम् । आश्रमे = निवसतिस्थाने-देवमन्दिरे यज्ञादिस्थले, विद्यालये वेति भावः । चैत्यचत्वरसीरेषु = चैत्यः-ग्रामादि प्रसिद्धिहेतुर्महावृक्षः, चत्वरम् = नानाजनावस्थानदेशः, सीरः-सूर्यः (हल-तिग्मकरौ सीरौ इति रभसः) । दृश्यमाने सूर्ये सतीत्यर्थः । व्यवायी=मैथुनी । भवेत् । चतुष्पथे = शृङ्गाटके । प्रथम 'नैवे' तिस्थाने 'गोष्ठे' इति पाठे तु गोशालायामित्यर्थः । नैवेत्यत्र एवेति कथनेन सर्वथा निषेधः सूच्यते । हे भूपाल श्मशानोपवने = प्रेतभूमे : कृत्रिमवाटिकायाम् । सलिलेषु = जलेषु । सन्ध्ययोः = प्रातः सायं सन्ध्या समये । मूत्रोच्चार-पीडितः=मलमूत्रोत्सर्गवेगी । मतिमान् = बुद्धिमान् जनः । व्यवायं=मैथुनम् । अशेषेषु = निखिलेषु । श्लोकोक्तेषु = विष्णुपुराणीयेषु इति शेषः । न । गच्छेत् = कुर्यात् ।

एतदग्रिमवचनं यथा-

तैल-स्त्री-मांससम्भोगी पर्वस्वेतेषु वै पुमान् ।

विण्मूत्रभोजनं नाम प्रयाति नरकं मृतः ॥ इति ।

अत्र "अत्र तैलं तिलभवं, तेन सार्षपादितैले पक्वतैले च न दोष इति व्रतपद्धतौ रुद्रधर इति एकोद्दिष्टादिश्राद्धनिर्णयप्रकरणे कृत्यसारसमुच्चयः ।

[ हिन्दी टीका ]

उस स्त्री के साथ सम्भोग न करे जिसने राजोदर्शन के बाद चौथे दिन में स्नान न कर लिया हो, एवं सम्भोग के कारण जिसका रोग बढ़ना सम्भावित रहे । साथ ही चौथे दिन के स्नान करने के बाद भी यदि रक्तस्राव अधिक हो रहा हो तो भी वर्जनीय है । अनिष्टकारिणी के साथ भी सम्भोग वर्जित रखें । (यद्यपि सामान्यतः परस्त्री मात्र त्याज्य है फिर भी अनिष्टकारिणियों में विशेष रूप से ये स्त्रियाँ परित्याज्य हैं –वन्ध्या, वर्णज्येष्ठा (जातिश्रेष्ठा), वयोज्येष्ठा (आयु से बड़ी), व्याधियुक्ता, अङ्गहीना, बुरे आचरणवाली कुलटा आदि, वेश्या, योनिगत दोषवाली, गुरुपत्नी, भिक्षुकी, कपट-व्रतधारिणी, वृद्धा आदि) । अधिक क्रोध में आई हुई, अप्रशस्ता (जो कन्या माता की असपिण्डा–मनु (५।६०) वचन के अनुसार सात पीढी तक और गौतम धर्म सूत्र (४।३) के "ऊर्ध्वं सप्तमात् पितृबन्धुभ्यो मातृबन्धुभ्यः पञ्चमात्" इस वचनानुसार पाँच पीढ़ी तक, मातामह आदि के वंश में जन्मी न हो–तथा पितामह की चौहवीं पीढ़ी तक होने वाली सगोत्रा और पिता की सगोत्रा, सपिण्डा या समान प्रवरा न हो तथैव चाचा आदि की सन्तति न हो वही द्विजातियों के पत्नीत्वसम्पादक विवाह तथा मैथुनसाध्य पुत्रोत्पादन आदि कर्म में प्रशस्ता है) गर्भवती, अननुकूला या उत्साहहीना या अक्रूरा, पतिभिन्न पुरुष को चाहने वाली, कामवासना से हीना, क्षुधा से क्षीणा दुर्बला) तथा जिसने बहुत खा लिया हो, ऐसी स्त्री के साथ सम्भोग न करे । इसी तरह पुरुष स्वयं भी यदि उक्त गुणों से युक्त हो स्त्रीके साथ उपगमन न करे । दूसरे की स्त्री में, योनिभिन्न मुख आदि स्थानों में, देवता, द्विज (ब्राह्मण, क्षत्रिय तथा वैश्य) के आश्रम–देवमन्दिर, यज्ञशाला तथा पाठशाला या गोशाला में एवं रोग शान्ति के लिए दवा खाई हो तो मैथुन का त्याग कर दे ।

गाँव आदि के प्रसिद्ध वृक्ष के नीचे, जहाँ बहुत से व्यक्ति बैठते हों । सूर्य के रहते हुए (दिन में), चौवटिया, श्मशान के उपवन, तथा जल में, चतुर्दशी, अष्टमी, अमावास्या, पूर्णिमा तिथि, सूर्यसंक्रान्ति के दिन (क्योंकि इन पर्व के समयों में तैल स्त्री तथा मांस के सम्भोगी जन को मरने के बाद विण्मूत्र भोजन नामक नरक में जाना पड़ता है, प्रातः सायं सन्ध्या समय में एवं मूत्रोत्सर्ग व मलोत्सर्ग के लिए वेगी बुद्धिमान जन मैथुन का त्याग कर ही दे ।

**[ मूलम् ]**

वसिष्ठः–

**मलिनवाससा सह न संवसेत्, न रजस्वलया, नायोग्यया ।**

संवासोऽत्र मैथुनम् । अयोग्या = अप्राप्तयौवना ।

**[ संस्कृत टीका ]**

मलिनवाससेति । मलिनवाससा = अपवित्रवस्त्रधारिण्या । रजस्वलया = रजोदर्शनतस्तृतीयचतुर्थदिनयोरभ्यन्तरं रजोवत्या । अयोग्यया = अप्राप्तयौवनया । न । संवसेत् = मिथुनीभूयात् ।

**[ हिन्दी टीका ]**

गन्दा वस्त्र लगाई हुई, रजोदर्शन के तीन या चार दिनों के भीतर रजस्वला, तथा जवानी न पाई हुई स्त्री के साथ संभोग न करे ।

**[ मूलम् ]**

वामनपुराणे–

**बुधे च[1] योषां न समाचरेत्तथा । पूर्णासु योषित् परिवर्जनीया ।**

तथा, योषिन्मघाकृत्तिकोत्तरासु ।

अत्र याज्ञवल्क्यः–'मघां पौष्णञ्च[2] वर्जयेत् ।'

**[ संस्कृत टीका ]**

बुधे चेति । बुधे = बुधवासरे । योषाम् = पत्नीम् । न । तथा समाचरेत् = अभि[illegible]त् । [illegible] ।

''बुधवार–वर्जित–ज्येष्ठा–मूलाऽश्लेषा–मघा–रेवत्यश्विनी कृत्तिकोत्तरत्रय–वर्जमुपेयादि''ति छन्दोगाह्निकम् । पौष्णम् =रेवतीम् ।

**[ हिन्दी टीका ]**

बुधवार; पञ्चमी दशमी अमावास्या व पूर्णिमा तिथि तथा मघा रेवती कृत्तिका, उत्तरफल्गुनी, उत्तरभाद्र तथा उत्तराषाढ (अन्य वचनानुसार ज्येष्ठा, मूल अश्लेषा व अश्विनी, नक्षत्रों में स्त्री संभोग नहीं करे ।)

---

पा० (१) पु । (२) मूलञ्च ।

## [ मूलम् ]

विष्णु :–

न श्राद्धं दत्त्वा[१], न भुक्त्वा, नामन्त्रितः श्राद्धे, न व्रती, न दीक्षितो, न देवतायन-श्मशान-शून्यालयेषु, न वृक्षमूले, न दिवा, न सन्ध्ययोः, न मलिनां,[२] नाभ्यक्तां, नाभ्यक्तः, न रोगार्त्तः, न रोगार्त्तां,

**न हीनाङ्गीं नाधिकाङ्गीं तथैव च वयोऽधिकाम् ।**
**नोपेयाद् गुर्विणीं नारीं दीर्घमायुर्जिजीविषुः ॥**

दीर्घमायुर्जिजीविषुः = दीर्घजीवनकामः ।

### [संस्कृत टीका]

न श्राद्धमिति । दीर्घायुष्ट्वकामः एवंविधो भूत्वा वा तथाविधां नारीं नाभिरमयेदित्याह न श्राद्धमित्यादिना । न श्राद्धम् । दत्वा = कृत्वा । न । भुक्त्वा = श्राद्धीयान्नमिति शेषः । श्राद्धे । आमन्त्रितः – निमन्त्रितः, कृतनिमन्त्रणो वा । व्रती=श्राद्धपूर्वदिनकर्तव्यैकभुक्तादिशाली, एकादश्यादिव्रती वा । अथवा यागे ऋत्विजां प्रेरकः – आचार्य (आदेष्टा त्वध्वरे व्रती इत्यमरः)। दीक्षितः = सोमवति यज्ञे (अग्निष्टोमादौ) व्रती दीक्षित उच्यते (यथा चामरः 'ससोमवति दीक्षित' इति)। यद्वा दीक्षा सञ्जाताऽस्येति तारकादित्वादितचि दीक्षित इति । अत्र वीरमित्रोदयस्तु–दीक्षाख्यसंस्कारवान् अवभृथेष्टिं यावत् । तत्रादीक्षोन्मोचनात् । अवभृथ-शब्दार्थे–'यज्ञावशेषे स्नानं यत् तदेवावभृथं विदुः' इति त्रिकाण्डशेषः । मलिनाम् = रजस्वलाम् मलिनवस्त्रधराञ्च । अभ्यक्ताम् = तैलादिकृतदेहमर्दनाम् । अभ्यक्तो वा । रोगार्त्तः = रोगपीडितः । रोगार्ताम्। अत्र ''सरोगकर्त्तृकोपगमन-निषेधः रोगिणीकर्मकोपगमननिषेधश्च रोगस्य संवर्धनीयत्वे सतीति कल्पतरुरि''तिच्छन्दोगाह्निकम् ।

---

पा० (१) न श्राद्धेभुक्त्वा, न श्राद्धंकृत्वा, नश्राद्धनिमन्त्रितः न कृत निमन्त्रणः इति, नदेवतायतने, न श्मशाने न शून्यालये इति, च छन्दोगाह्निकच्छन्दोगाह्निकोद्धार-पाठः । (२) नमलिनां, न मलिनवाससीं मलिनवस्त्रधराम् इत्यन्यत्र पाठः ।

[ टिप्पणी ]

गुर्विण्याः प्रसवविलम्बे उपाय उक्तः कृत्यसारसमुच्चय-परिशिष्ट-टिप्पण्यामुद्धृते शान्तिस्वस्त्ययनकल्पद्रुमे–

अपामार्गस्य मूलञ्च समुत्पाट्य शुभे दिने ।
अश्वलोम्ना तु संवेष्ट्य शिरसा बन्धनात्ततः ।
क्षणमात्रेण सा नारी सुखेनैव प्रसूयते ।
श्वेतपुनर्नवामूलचूर्णं योनौ प्रवेशयेत् ।
क्षणात्प्रसूते सा नारी गर्भेणातिप्रपीडिता ।
सबीजं तिन्तिडीवृक्षमुत्पाट्य च प्रयत्नतः ।
केशेषु ग्रथितं.... नासाग्रे तत्प्रलम्बयेत् ।
घ्रात्वा तद् गर्भिणी सम्यक् शीघ्रमेव प्रसूयते ।

ह्रीँ ह्रीँ ह्रीँ ह्रीँ श्री कूकीति मन्त्रमश्वत्थपत्रे लिखित्वा तत्पत्रं प्रक्षाल्य तज्जलं गर्भिण्यै पानार्थं दातव्यं, तेन सुखेन प्रसवो भवती 'ति ।।

प्रसङ्गाद् बालानां क्रन्दनशान्तिस्तत्रैव–

सिद्धि ऊलेट नरसिंह विकटेश ' ओं नरसिंह नरसिंह । ओं ह्रीं क्षौँ इति मन्त्रं हरिद्रया भूर्जे संलिख्यबालकानां शिरसि कण्ठे बाहौ वा धारयेत् । तेन बालकस्य क्रन्दनोपशमो भवतीति ।

अकालगर्भ-वेदनाशान्तिरत्रैव–

''ऊँ ठं ह्रीं अमुक्या गर्भं रक्ष रक्ष स्वाहा'' इति मन्त्रेण जलोपरि अष्टोत्तरशतधा जप्त्वा दद्यात् । अनेन जलपानेन गर्भवेदनाशान्तिर्भवतीति निश्चितम् ।

अथ गर्भपातनिवारणोपायोऽपि तत्रैव–

समभागं सितायुक्तं शालितण्डुलचूर्णितम् ।
उदुम्बरशिखाक्राथं पीता गर्भं न मुञ्चति ।। इति ।

## [ टिप्पणी हिन्दी ]

गर्भवती के प्रसव में विलम्ब होने पर सुखपूर्वक प्रसव निमित्त उपाय शान्ति स्वस्त्ययनकल्पद्रुम में यों कहेगए हैं:—

(अ) शुभ दिन में उखाड़े गए या उखाड़कर चिरचिरी (अपामार्ग) पौधे की जड़ को घोड़े के रोम से लपेटकर यदि गर्भवती के सिर पर बँध दिया जाय तो शीघ्र ही सुखपूर्वक प्रसव हो जाता है।

(आ) अथवा सफेद पुनर्नवा की जड़ के चूर्ण को योनि में प्रवेश करा दिया जाय तो गर्भ से अतिप्रपीडिता भी शीघ्र प्रसव से त्राण पा जाती है।

(इ) अथवा सावधानी से उखाड़े गए बीज सहित छोटे से इमली पौधे को बालो में उलझा कर नासिका के अग्रभाग तक लम्बित कर दिया जाय तो इसके सूँघने से सद्यः प्रसव हो जाता है।

(ई) अथवा "ह्रीँ ह्रीँ ह्रीँ श्री कूकी" इस मन्त्र को पीपल के पत्ते पर लिखकर इसे जल से धोकर किसी पात्र में रखलें। इस जल को पिलाने से शीघ्र प्रसव हो जाता है।

नवजात शिशु यदि क्रन्दन (अधिक रोना) कर रहा हो तो इसका भी उपाय वहीं यों कहा गया है:—

(अ) "सिद्धिऊलेट नरसिंह विकटेश। ओं नरसिंह नरसिंह। ओं ह्रीँ क्षौ" इस मन्त्र को हल्दीरस से भोजपत्र पर लिखकर सिर, कण्ठ या बाँह पर बाँध दिया जाय तो क्रन्दन का शमन हो जाता है।

यदि अकालगर्भवेदना हो गई हो तो—

(अ) "आँ ठं ह्रीँ अमुक्या (नारी का षष्ठ्यन्त नाम लिख दिया जाय) गर्भं रक्ष-रक्ष स्वाहा" इस मन्त्र को जलपात्रस्थित जल के ऊपर १०८ बार पढ़ने के बाद उस जल को पिला देने से निश्चित ही वेदना शान्त हो जाती है।

गर्भपात निवारण का भी उपाय यह है कि—गूलर वृक्ष के ऊपरी डाल के डण्ठल सहित पत्तों का क्वाथ बनाकर इसके साथ समभाग में चीनी से मिश्रित अगहनी चावल के चूर्ण को मिला कर पिला दिया जाय तो गर्भपात नहीं हो पाता है।

## [ संस्कृत टीका क्रमागता ]

हीनाङ्गीम् = केनाप्यङ्गेन विकलाम्। अधिकाङ्गीम्। वयोऽधिकाम् =स्वापेक्षयाऽधिकायुषीम्। गुर्विणीम् = गर्भवतीञ्च। नारीम्। न। उपेयात् = संवसेत्।

अत्र गर्भिण्युपगमनिषेधः षष्ठाष्टममासयोरेवेति गौडा इति च्छन्दोगाह्निकम्। 'दीर्घमायुर्जिजीविषुरि' त्यनेन पुत्रकामस्य लौकिक-रतिरूपफलकामस्य वा कृते हीनांग्यादिभिः सह सम्भोगे क्षत्यभावो ध्वन्यते।

[ हिन्दी टीका ]

दीर्घ जीवन चाहने वाला व्यक्ति श्राद्धकर्म कर, श्राद्ध का अन्न खाकर, श्राद्ध में निमन्त्रित होकर या निमन्त्रण देकर, श्राद्ध के पूर्व दिन एकभुक्त आदि नियमव्रत तथा एकादशी आदि व्रत कर अथवा यज्ञ में ऋत्विजों का प्रेरक (आचार्य यज्ञसमाप्ति तक) दीक्षित, अग्निष्टोम आदि यज्ञ में सोमरसपान करने वाला यजमान, या दीक्षा नाम का संस्कार वाला यजमान जिसने अपने बालों को मुण्डित करवा दिया है अवभृथ (यज्ञान्त में होने वाले) स्नानपर्यन्त, देवमन्दिर, श्मशान, शून्य (बहुतदिनों से व्यवहार में न लाये गए) घर, वृक्ष की जड़, दिन तथा प्रातः-सायं सन्ध्यासमयों में स्त्री सम्भोग न करे। रजस्वला या जिसने गन्दा कपड़ा लगाया हो, अभ्यक्त (तेल आदि से जिसने शरीर का मालिश करवाया हो ऐसी स्त्री के साथ अथवा स्वयं के ही शरीर में तेल आदि का मर्दन करवाया हो तो स्त्री सहवास न करे। किसी रोगी पुरुष के उपगमन अथवा किसी रोगिणी नारी के साथ किये गये उपगमन से यदि किसी का भी रोग बढ़ जाना सम्भावित हो तो यह उपगमंन छोड दिया जाय। अङ्गहीना, अधिक अङ्गवाली, अपनी आयु से अधिकं आयु वाली नारी तथा गर्भवती के साथ भी सम्भोग न करे।

यहाँ छन्दोगाह्निक के अनुसार ऊपर से ज्ञातव्य है कि गौड़ निबन्धों के अनुसार छठे या आठवें महीने में ही गर्भवती नारी के साथ सम्भोग निषेध विहित है। हाँ, मूल में दीर्घमायुर्जिजीविषुः। (दीर्घ जीवन चाहने वाला व्यक्ति) पद के उपादान से प्रतीत होता है कि पुत्र के अथवा लौकिक रतिफल (आनन्द) के इच्छुक व्यक्तियों के लिए इन हीनाङ्गी आदि अङ्गनाओं के साथ सम्भोग करने में कोई क्षति (निषेध) नहीं।

[ मूलम् ]

वसिष्ठः–

अपिच काठके प्रवचने विज्ञायते–'अद्य श्वो वा विजनिष्यमाणाः पतिभिः सह शयीरन्' इति स्त्रीणामिन्द्रदत्तो वरः॥ इति।

## [ संस्कृत टीका ]

अपिचेति । अपिच = अन्यच्च । काठके = कठनामा मुनिः—वैशम्पायन-शिष्यः, (कठो मुनौ तदाख्यातवेदाध्येतृज्ञयोः स्वरे-इति हेमचन्द्रः)। तत्प्रोक्ते, प्रवचने = वेदे-यजुर्वेदस्य शाखाविशेषे । विज्ञायते । किमित्याह अद्येति । अद्य श्वो वा । विजनिष्यमाणाः – आसन्नप्रसवा इत्यर्थः । इदन्तु सकामपरम्, न तु विधिवाक्यम् । पतिभिः सह = स्वस्वभर्तृभिः साकम् । शयीरन् = अभिरमेयुः, इति । स्त्रीणाम् = पत्नीनाम् । इन्द्रदत्तः = देवेन्द्रप्रदत्तः । वरः =आशीर्वचनम्, देवेभ्यः प्राप्यमाणं मनोऽभिलषितम् । ('तपोभिरिष्यते यस्तु देवेभ्यः स वरो मतः' इति भरतः) । एवमेव स्त्रीणामिन्द्रदत्तोऽपरोऽप्यस्ति वरः । अनृतौ नियमप्रतिपादकस्य "यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन्" इति याज्ञवल्क्यवचन(आचाराध्याय ८१)व्याख्या मिताक्षरा यथा—स्त्रीणां वरमिन्द्रदत्तमनुस्मरन् 'भवतीनां कामविहन्ता पातकी स्यात्' इति । यथा—"ता अब्रुवन् वरं वृणीमहा[1] ऋत्वियात्प्रजां विन्दामहै काममा विजनितोः सम्भवामेति, तस्मादृत्वियात् स्त्रियः प्रजां विन्दन्ते काममा विजनितोः सम्भवन्ति वारे वृतꣳह्यासाम् इति । ता अब्रुवन् वरं वृणीम' इत्यादिः तैत्तिरीये " इति दारोपगमप्रकरणे वीरमित्रोदयः ।

## [ हिन्दी टीका ]

वैशम्पायन के शिष्य कठ ऋषि के द्वारा कहे गए वेद (यजुर्वेद के शाखा विशेष या उपनिषद्) से जाना जाता है कि—"आसन्नप्रसवा (आज या कल प्रसव करने वाली) नारी अपने-अपने पति के साथ रमण करे, यह वरदान स्त्री को इन्द्र का दिया हुआ है।"

ऊपर से यह भी ज्ञातव्य है कि इसी तरह स्त्रियों को इन्द्र का दिया हुआ अन्य वरदान है—जो कि तैत्तिरीय वेद में सुना जाता है और जिसका उल्लेख याज्ञवल्क्य (आचारा० ८१) वचन की व्याख्या में मिताक्षराकार ने किया है। सारांश में वरदान यह है:—"तुम्हारे काम को पूरा (तृप्त) न करने वाला पातकी होवे।"

---

पा० (१) वृणीमहै ।

वेदवचन का अर्थ है–''उन स्त्रियों ने कहा –हम दिये गए वर को स्वीकार करती हैं और ऋतु से हमें प्रजा हो, एवं प्रजा होने तक काम की चेष्टा रहे। इसी कारण स्त्री ऋतु से ही प्रजा प्राप्त करती है और सन्तान होने तक इनमें काम चेष्टा रहती है। यही स्त्रियों का वरदान है।''

विशेष–यहाँ म. म. पाण्डुरंगवामनकृत हिस्ट्री औफ धर्मशास्त्र के अनूदित हिन्दी संस्करण से.''निद्रा'' प्रसंग पर प्रथम खण्ड में उद्धृत प्रासङ्गिक एक इतिहास नीचे दिया जा रहा है–

रात्रि में सोने के विषय में चर्चा करते समय स्मृतियों एवं निबन्धों ने पति पत्नी के सम्भोग के विषय में प्रभूत चर्चा कर रखी है। संभोग के उचित कालों के विषय में हमने कुछ नियमों की चर्चा पहले भी कर दी है। (अध्याय ६ गर्भाधान)। गौतम (५।१२ एवं ९। २८-२९) और आपस्तम्ब धर्मसूत्र (२।१।१।१६-२३) का कहना है कि गृहस्थ को उचित दिनों में या वर्जित दिनों को छोड़ कर कभी भी जब पत्नी की इच्छा हो उसके पास जाना चाहिए। दिन में या जब पत्नी बीमार हो सम्भोग नहीं करना चाहिए। जब पत्नी ऋतुमती हो तब उससे दूर रहना चाहिए, यहाँ तक कि आलिंगन भी नहीं करना चाहिए। आपस्तम्बधर्म सूत्र (२।१।१।१९), वशिष्ठधर्म सूत्र (१२।२४) एवं याज्ञवल्क्य (१।८१) ने इन्द्र द्वारा स्त्रियों को दिये गये वरदान की कथा लिखी है जो तैत्तरीयसंहिता (२।५।१) में वर्णित है। जब इन्द्र ने त्वष्टा के पुत्र विश्वरूप को मार डाला तो सभी लोगों ने उसे 'ब्रह्महा' (ब्राह्मण की हत्या करने वाला) कहना आरम्भ कर दिया। इन्द्र अपने पाप (ब्रह्महत्या के पाप) को बाँटने के लिए भागीदारों को विश्व में खोजने लगा। उसके पाप का एक तिहाई भाग पृथिवी ने लिया। उसे वरदान मिला कि यदि उसमें गड्ढा हो जाय तो वह वर्ष भीतर भर जाएगा। एक तिहाई वृक्ष ने लिया। उन्हें वरदान मिला कि जब वे काट, तोड़ या छाँट लिये जाएँ पुनः अंकुरित हो उठेंगे। उनमें जो स्राव निकलता है वह ब्रह्महत्या का ही भाग है अतः लाल स्राव या झाग नहीं खाना चाहिए। एक तिहाई भाग स्त्रियों ने ग्रहण किया और उन्हें वरदान मिला कि वे मासिक धर्म के प्रथम सोलह दिन में ही गर्भ धारण करेगी और बच्चा उत्पन्न तक वे सम्भोग कर सकती है। स्त्रियों में ब्रह्महत्या प्रतिमास रजोधर्म के रूप में प्रकट होती है। विष्णु धर्मसूत्र (६९) ने सभी नियम एक साथ दिये हैं जिनमें कुछ ये हैं। श्राद्ध में निमन्त्रित होने, श्राद्ध-भोजन करने, श्राद्धभोजन खिलाने या सोम यज्ञ के

आरम्भिक कृत्य कर चुकने पर मैथुन नहीं करना चाहिए । मन्दिर, श्मशान, खाली मकान, वृक्ष की जड़, एवं दिन या सायंकाल में सम्भोग नहीं करना चाहिए । इतना ही नहीं, अपनी से बड़ी अवस्थावाली नारी, गर्भवती या अधिक या कम अंगों वाली नारी के साथ भी सम्भोग नहीं करना चाहिए । देखिये विष्णु पु० (३।११।११०-१२३) । उपर्युक्त नियमों में बहुत से प्रजननविषयक या स्वास्थ्यसम्बन्धी हैं, इनमें कुछ तो धार्मिक एवं अन्धविश्वासपूर्ण हैं । गौतम (९।२६), आपस्तम्बधर्मसूत्र (२।१।१।२१-२३) एवं (२।१।२।१), मनु (४।४ एवं ५।१४४) के कथनानुसार सम्भोग के उपरान्त पति-पत्नी को स्नान करना चाहिए या कम से कम हाथ मुंह धोकर तथा आचमन करके शरीर पर जल छिड़ककर पृथक्- पृथक् विस्तरों पर सोना चाहिए ।

# ग्रन्थान्तोपसंहारः

## [ मूलम् ]

समूलवचनाभोगो मीमांसान्यायनिर्मलः ।
श्रीदत्तेन सतामेष आचारे[1] दर्पणः कृतः ॥
दुरुक्तमपि सूक्तं मे मन्वादिवचनाश्रितम् ।
अपि चर्मोदकं तीर्थं सलिलान्तर्गतं शुचि ॥

❁ इत्युपाध्यायश्रीदत्तकृत आचारादर्शः समाप्तः[2] ।❁

## [ संस्कृत टीका ]

समूलेति । समूलवचनाभोगः=मूलेन–प्रमाणेन सहितानीति समूलानि । ग्रन्थकारेणानेन स्वीये सर्वस्मिन्नपि निबन्धग्रन्थे राजादिलिखित-राजाद्यलिखितादिरूपेण वचनेषु समूलत्वनिर्मूलत्वयोः स्थिरीकृतत्वात् । अमुमेवाभिप्रायमभिप्रेत्य प्रसिद्धटीकाकारेण मल्लिनाथेनापि ''नामूलं लिख्यते किञ्चिदि''त्युल्लिख्य स्वकीयकथने प्रामाण्यं प्रतिपादितम् । वचनानि=मन्वादिवचांसि । तेषाम्, आभोगः = विस्तारो यत्र सः । अथवा, तथा भूतैः वचनैः, एवंभूतानि वचनान्याधारीकृत्येति यावत् । स्वविवेचनानामाभोगो यत्रेत्यर्थः । मीमांसान्यायनिर्मलः=मीमांसान्यायेन–जैमिनिप्रणीत-

---

पा० (१) ले० पु० आचारादर्शकः । (२) ले० पु० शुभमस्तु । समाप्तश्चायंग्रन्थः ।

कर्मकाण्डनिरूपक-पूर्वमीमांसादर्शनेन । अथवा गौतमादिप्रणीतन्यायदर्शनेन च । एतद्विषयकं विवेचनमेतद्ग्रन्थस्यादिमभागीय "ब्राह्मेमुहूर्त्ते बुध्येत" इति टीकाकर्त्तृकृतायां मनुव्याख्यायां प्रपञ्चितमास्ते । निर्मलः = परिष्कृतः, पक्षे धूल्यादिमलरहितश्च । एषः = अग्रे दृश्यमानः । श्रीदत्तेन = महामहोपाध्याय-श्रीदत्तोपाध्यायेन । सताम् = साधूनाम् । आचारे = आचरणे । सदाचार इति यावत् । यथा च सदाचारलक्षणम् ।

कालिकापुराणे (८६ तमेऽध्याये)—

**साधवः क्षीणदोषाश्च सच्छब्दः साधुवाचकः ।**
**तेषामाचरणं यत्तु सदाचारः स उच्यते ॥ इति ॥**

दर्पणः = आदर्शरूपः आचारदर्पणापरपर्याय आचारादर्शनामा ग्रन्थः प्राचीनमिथिलाक्षरलेख पुस्तके तु "आचारादर्शकः" इत्येवात्र पाठः । कृतः = विरचितः । आदर्श इवात्र सर्वेषां दैनन्दिनाचरणीय सदाचाराणां छायावद्दर्शनादिदं ग्रन्थनाम । यथा लोके लोकाः निर्मलादर्शगतं विस्पष्टं मुखप्रतिविम्बमितरप्रतिविम्बं वा पश्यन्ति तथैव विज्ञाः प्रतिपादित सदाचारतत्त्वं तदितरतत्त्वञ्च ज्ञास्यन्ति । यथाचादर्श दर्शनेन मङ्गलमपि जायते तथैवैतस्य ज्ञानेऽपि श्रेयः सम्पत्स्यते इति भावः । यदि च ग्रन्थ विषयस्यावाप्तज्ञानमाचरणे परिवर्त्यते तदेदं नाभ्युदयस्यैव साधकं भवेदपितु प्रेयः श्रेयसोरपि निश्चप्रचं निष्पादकं स्यादिति सुवर्णे सुगन्धिरिति लोककथनं चरितार्थं भवेत् ।

दुरुक्तमपीति । चर्मोदकमपि = चर्मपात्रे स्थितं जलमपि । तीर्थ सलिलान्तर्गतम् = गङ्गादितीर्थजलप्रवाहान्तःप्रविष्टमिव । दुरुक्तमपि = व्याख्यारूपेण खण्डनमण्डनाद्याकारकविवेचनादिरूपेण का पुनःपुनरुक्तमपि । मन्वादिवचनाश्रितम् = मन्वादि प्रतिपादित प्रमाणस्वरूपपवित्रतमवचनानुसृतम् (सत्) मे =मम । सूक्तम् = शोभनोक्तिः । शुचि = प्रमाणं पवित्रञ्चास्ते । प्रथमश्लोके निर्मलपदेन ग्रन्थे द्वितीयश्लोके सूक्तपदेन च स्वप्रतिपादनेऽपि दुर्जनोपहासनिरासः विद्वज्जनग्राह्यत्वञ्च सूचितम् ।

इत्युपाध्याय इति । उपाध्यायादिप्रसङ्गे प्राक्कथनमवलोकनीयम् ।



## टीकाकर्त्तुः श्रीदिगम्बरझा-शर्मणो वंशपरिचयः

१

विद्या यत्र व्यसनं, सेव्या येनामरद्विजातिथयः ।
सन्तोषो यस्य धनं तन्मम कुलमुज्ज्वलं जयति ॥

२

जनकाभिधभूपाललालिता जनकपुराख्या
नगरी विश्वस्मिन् प्रथते बहुविदिताभिख्या ।
ततः पूर्वदिश्यनतिदूरगे ग्रामे जातः
झोपनामको भुवनो गणकवरो निष्णातः ॥

३

नयपाल-क्षितिपाल-सकाशादाप्तग्रामः
जातोऽसौ नानाविधयशःस्तोमविश्रामः ।
तन्नाम्नाऽद्यापि ख्यातो भुवि पञ्जीबन्धः
मन्ये सोऽयं तत्ख्यातेः कौलिकोऽनुबन्धः ॥

४

तदात्मजः प्रथमः शिवदत्तो गणको जातः
विद्यायशसा भूयसा च सन्तोषिततातः ।
जनकोपार्जितभूसम्पत्तिं दृढामकार्षीत्
किञ्च स महीनाथपुरधरणीं स्वकुलेऽहार्षीत् ॥

५

तदवरजो देवीदत्तः शिवपदानुरक्तः ।
मन्त्रमवाप शिवादनन्यभावेनासक्तः ॥

६

शिवदत्ततनूजन्मा प्रथमो बाबूनाथः ।
मनसा वचसा कर्मणा च धृतलक्ष्मीनाथः ॥

गोवर्धनो द्वितीयो गोविन्दश्च तृतीयः
दत्तोपपदो हृदाराधि लोकेन कृती यः ॥

७

बाबूनाथस्य सुतो भैयेझा नामको जातः
प्रथमस्ततोऽनुजातः सूर्यमणिस्तस्य चावरजः ।
श्रीमान् मुनीन्द्रनामा सर्वेऽपीमे यशोवित्ताः
तेषु च भैयेशर्मा ब्रह्मोत्तरभूमिमधिचक्रे ॥

८

माँचीग्रामेऽयोध्यानगरे च प्राप्तभूसम्पत् ।
नयपालमन्त्रिमुख्यस्यादरमासादयामास ॥

९

अस्यैव सुतां विज्ञो बच्चा झा नामको वव्रे ।
यद् वैदुष्ययशोभिर्व्याप्तमिदं भारतं वर्षम् ॥

१०

भैये शर्मा सुकृती शारदपूजामुपाक्रमत ।
तत्कुलजा इतरेऽपि विदधति तां भक्तिभावेन ॥

११

भैयेशर्मसुतोऽभूद् रुद्रमणिर्नाम, तेनाप्तम् ।
काशिक-संस्कृत-विद्यापरीक्षणे राजतं पदकम् ॥

१२

गणित-फलितभागद्वयविभक्ततताशालिनीं विशदाम् ।
ज्यौतिषविद्यामखिलां योऽध्यापि पदाश्रिताँश्छात्रान् ।

१३

तत एवाऽहं जातस्तनया चैकाऽजनिष्ट पुरा ।
तस्यास्तनयौ गुणिनौ धरणीमेतामलङ्कुरुतः ॥

१४

तातो मम स्वयं स्वं जीवनसमयं विदन्निकटे ।
मामुपनीयाध्ययने न्ययोजयत्स्वस्वसुः सदने ॥

१५

तत्र नवानीग्रामे गुरुचरणानां प्रसादेन ।
व्याकरणे साहित्ये चाचार्यपदं मयाऽवापि ॥

१६

अधिवाराणसि नव्यन्यायाचार्यत्वमासाद्य ।
साहित्यालङ्कारो देवगृहस्थानतोऽभूवम् ॥

१७

सोऽहं समाप्तविद्याध्ययनो नयपालदेशस्थे ।
संस्कृतविद्यासद्मनि दांगे छात्रानपाठयं बहुशः ॥

१८

स्वग्रामे च ततोऽहं कतिचन शरदः समध्याप्य ।
आर्थिककष्टकदर्थितचित्ततया दूरदेशमितः ॥

१९

जयपुर राज्यावयवे विद्यासद्मन्यनेकशश्छात्रान् ।
आ-सेवासमयमध्यापयं 'तलावग्राम' नामके ॥

अनन्तरं दरभङ्गा संस्कृत विश्वविद्यालये सम्मानितप्राध्यापकपदेन १० वर्षं यावदध्याप्यानध्याप्य सेवाविरतः सम्प्रतिस्वग्रामे एव समयं यापयन्नस्मि ।

# टीकाकर्तुः जीवनवृत्तम्

| | |
|---|---|
| नाम | प० श्री दिगम्बर झा |
| पितृनाम | ज्यौ० स्व० रुद्रमणि झा |
| पितामहनाम | विशिष्ट ज्यौ० स्व० भैये झा। |
| जन्म तिथि | १५ अगस्त १९२४ ई० |
| स्थान संकेत | सुग्राम महिनाथपुर निकास<br>पो० महिनाथपुर, अंचल-बासोपट्टी<br>जिला -मधुवनी । |
| शैक्षिक योग्यता | (१) व्याकरणाचार्य, साहित्याचार्य -बिहार संस्कृत एशोसियेशन, पटना, बिहार। |

अध्ययन स्थान—शारदा भवन संस्कृत विद्यालय नवानी (मधुवनी) बिहार,

*नवानी में गुरु*

स्व० जगदीश झा, विद्यालय प्रधानाचार्य
स्व० यदुपति मिश्र; स्व० ईश्वरनाथ मिश्र;
स्व० षष्ठीनाथ मिश्र

(२) नव्यन्यायाचार्य–क्विंस कॉलेज, वाराणसी।
अध्ययन—रानी चन्द्रावती महाविद्यालय, कचौड़ी गली, वाराणसी।

*वाराणसी में गुरु*

स्व० उग्रानन्द झा
अल्पकालिक गुरु स्व० आनन्द झा

(३) हिन्दी साहित्यालंकार- हिन्दी विद्यापीठ, देवघर।

(४) एम० ए० प्रथमवर्ष का अध्ययन-मिथिला रिसर्च इन्स्टीच्युट, दरभंगा

*मिथिला रिसर्च इन्स्टीच्युट दरभंगा में गुरु –*

( अ ) डा० उमेश मिश्र, डायरेक्टर

( आ ) स्व० अनन्तलाल ठाकुर दर्शन प्राध्यापक

( इ ) स्व० सदानन्द झा लक्ष्मीपुर निवासी

( मधुवनी ) से आकस्मिक पढ़ा।

*वृत्तान्त–*

( १ ) उपप्राचार्य-प्राचार्य

जनता महाविद्यालय, विजौडी-दाङ नेपाल में

सम्प्रति यहाँ महेन्द्र संस्कृत विश्वविद्यालय बन गया है। यहाँ इनका फुल साइज में फोटो विभाग द्वारा टाँगी गयी है।

( क्रमशः ) उपप्राचार्य–प्राचार्य – १९५३ ई० से ६० ई० तक।

( २ ) प्रधानाध्यापक

रामस्वरूप रामसागर संस्कृतोच्च विद्यालय, महिनाथपुर ( निजग्राम में ) सन् १९६१ से ६३ तक।

( ३ ) उपप्रचार्य-प्राचार्य क्रमशः

विजयसागर ब्रह्मचर्याश्रम संस्कृत महाविद्यालय, तालावगांव वाया लालसोट, जि० जयपुर ( राजस्थान ); १९६३ ई० से १५ अगस्त १९८४ ई० तक ( यहीं सेवानिवृत्त )।

( ४ ) सम्मानित प्राध्यापक

कामेश्वर सिंर दरभंगा संस्कृत वि० विद्यालय दरभंगा; १९८६ से ९४ तक और १९९९ में–

( ५ ) अध्यक्ष–अखिल भारतीय मैथिल महासभा, दरभंगा–१९८८ ई०। उक्त महासभा में प्रत्येक वर्ष आमन्त्रण एवं उपस्थिति।

( ६ ) अभ्यागत प्राध्यापक –श्री सत्यनाराण संस्कृत महाविद्यालय छतौनी ( मधुवनी ) २८.७.०३ से सेवायोगदान में

कार्यानुभव –( १ ) दर्शन, धर्मशास्त्र, कर्मकाण्ड, व्याकरण, साहित्य विषयों के अध्यापन एवं प्राश्निक सेवायुत ।

( २ ) सामाजिक धर्मकर्म में द्वन्द्वात्मक या विकट उलझित मामलों का गरिमापूर्ण शास्त्रसम्मति के अन्तर्गत निष्पादन में सक्षम एवं सुयश प्राप्त ।

( ३ ) निरत अध्ययनोन्मुखी आस्तिक शीलस्वभाव सम्पंन्न प्रतिभा में विलसित विद्वान के रूप में क्रियाशील क्षण-क्षण विद्याव्यवसाय में समर्पित । इष्ट, देवी सरस्वती के भाजक । ज्ञानदेव महादेव एवं पार्वती के भक्त । पार्वती मंदिर निर्माण अपने कोष से - पार्वती स्थापना माघशुक्ल अष्टमी वर्ष-२००२ ई० ( अपने गाँव में ) ।

लेखन कार्य ( १ ) अप्यस्ति कुशलो लोको वेदश्च ( लोकवेद कुशल अछि ) १५० पृष्ठात्मक निबन्ध डा० उमेश मिश्र ज़ी, डायरेक्टर, मिथिला रिसर्च इन्स्टीच्युट, दरभंगा को १९५२ ई० में सादर समर्पित ।

( २ ) लोकविशेषः दृष्टिविशेषः निबन्ध दिल्ली की संस्कृत पत्रिका में प्रक्काशित ( अधिक विवरण लेना है ) ।

( ३ ) श्रीदत्तोपाध्यायप्रणीताचारादर्श की टिप्पणी सहित संस्कृत हिन्दी टीका ग्रन्थ सम्प्रति का. सिं. द. सं. वि. वि. द्वारा प्रकाशनाधीन कार्य आसन्न में निष्पादन योग्य ।

( ४ ) मिथिला और कालिदास—शोधग्रन्थ लगभग ७०० सात सौ पेज में पाण्डुलिपि पूर्ण है जिसके प्रकाशनानुदान हेतु रा. सं. संस्थान न. दिल्ली से पत्राचार जारी ।

## पुस्तक परिचय

'मिथिला और कालिदास' सन्दर्भ में पार्वती खण्ड और जानकी खण्ड दो खण्ड बनाये गये हैं। मिथिला की विशेषता का वर्णन करते हुए कुमारसम्भव एवं शिवपुराण के पार्वती खण्ड पर विवेचन किया गया है। जानकी खण्ड में मेघदूत तथा वाल्मीकि आदि के ग्रन्थों के आधार पर जनकपुर का वर्णन किया गया है। जिसमें मुख्यतः महाकवि कालिदास के मैथिलत्व का भी विवेचन किया है। प्रथम परिशिष्ट में जनकपुर समीपवर्ती महिनाथपुर भाग रखा गया है। द्वितीय परिशिष्ट भाग में कुछ विद्वानों का परिचय लिखा गयां है।

(५) The Best Citizan of India award 1999 इनको प्राप्त International Publishing House New Delhi द्वारा प्रदत्त।

(६) का. सिं. द. सं. वि. वि., दरभंगा द्वारा संस्कृत दिवस वर्ष......को ५००रु0 पाग-चादर, प्रमाणपत्र तथा एक वैग से सम्मानित।

(७) Asian Passific में जीवनी वृत्तान्त मुद्रित एवं प्रकाशित। AWhos' Who Asian Passific Who's Who -1998-99 ; एवं Asian/American Passific Who's who-1999.

### म० म० रघुनाथप्रणीता
### आचारादर्श-फक्किकाटीका
## सम्पादकीय निवेदन

म०म० श्रीदत्तोपाध्यायकृत 'आचारादर्श' ग्रन्थ पर म० म० रघुनाथ द्वारा एक संक्षिप्त किन्तु सारगर्भित टीका 'आचारादर्श-फक्किका' नाम की है। यह टीका २२ पत्रों में मिथिलाक्षर में लिखित है तथा का० सिं० द० सं० वि० वि०, दरभंगा के केन्द्रीय पुस्तकालय में उपलब्ध है। इसका मुद्रण विश्वविद्यालय द्वारा १९८४ ई० में 'छन्दोगाह्निकोद्धार:' तथा 'छन्दोगाह्निकम्' ग्रन्थों के साथ एक ही जिल्द में अन्तिम १० पृष्ठों में कराया गया है। 'छन्दोगाह्निक' ग्रन्थ श्री दत्तोपाध्याय की प्रसिद्ध कृति है और 'छन्दोगाह्निकोद्धार' उसकी टीका है जिसके प्रणेता म० म० शङ्कर मिश्र हैं।

सम्पादकीय भ्रमवश उपर्युक्त दोनों पुस्तकों के बाद अन्तिम 10 पृष्ठों में 'फक्किकाटीका' के स्थान पर 'छन्दोगाह्निकटीका' का उल्लेख करते हुए अन्त की पुष्पिका में भी "इति महामहोपाध्याय श्री रघुनाथ विरचितेयं छन्दोगाह्निक टीका समाप्तेति" भ्रमवशात् अंकित करते हुए इसका प्रकाशन किया गया है।

वस्तुत: यह 'छन्दोगाह्निक' टीका न होकर 'आचारादर्श' की ही टीका है तथा 'आचारादर्श' का ही प्रतीक पकड़ कर लिखी गई है। स्वयं टीकाकार ही ग्रन्थ के प्रारंभ में स्पष्ट रूप से कहता है–

"व्याख्याति रघुनाथोऽयमाचारादर्श-फक्किका:"

अत: जिज्ञासु सुधीवृन्द इसे आचारादर्श-टीका के रूप में ही अवलोकित करें।

इस भ्रम एवं प्रमांद के निवारणार्थ तथा जिज्ञासु पाठकों के उपकार के लिए इस ग्रन्थ के अन्त में परिशिष्ट रूप में यह 'आचारादर्श-फक्किका टीका' प्रकाशित की जा रही है।

प्रकृत टीका-ग्रन्थ में भी बहुत पश्चात् दृष्ट इस फक्किका टीका के उद्धरण यथास्थान यत्र-तत्र अवलोकनीय हैं।

–सम्पादक

# म० म० रघुनाथप्रणीता
# आचारादर्श-फक्किकाटीका
## ॐ नमोमहागणेशाय

श्रीगोविन्दपदद्वन्द्वमरविन्दमनोहरम् ।
अनन्तरायमारब्धनिर्वाहाय विभाव्यते ॥१॥

नारायण-महास्मार्त्त-महाचार्य्य-मुखश्रुताः ।
व्याख्याति रघुनाथोऽयमाचारादर्शफक्किकाः ॥ २ ॥

धर्मार्थचिन्तनं तद्धेतुक्रियाचिन्तनम् । यदुक्तम् हेतुक्रियानिमित्तमानिति । तदप्येवं सुशकमेव दुःशकमित्यपीति मनुवचनादिति कण्ठोपवीतप्रतिपादक रहितादित्येव मनुवचनात् । अन्यो हि तद्विरोधे निगमपरिशिष्टबहुवचनमन्यार्थमपि स्यादिति भावः । कडारा इति कडाराष्कर्मधारय इति सूत्रे कडारपिं इत्यादिकर्म-धारये कडारादिपदपूर्वनिपातबोधके बहुवचनं यथाद्यर्थकमित्यर्थः । शुद्धिमभीप्सतेतीति । नच विनिगमनाविरहाद्धर्म्मविशेषोऽशुद्धिविरोधी । शुद्धिरिति नादृष्टार्थताभङ्गस्तथापीति वाच्यम् । तस्यैव शौचत्वाददृष्टार्थतावा-दिभिस्तुतिन्नादृष्टार्थत्वस्येष्टव्यत्वात् । गेहाच्चेति विष्णुपुराणे कुड्यादेरित्यर्थः । व्यर्थत्वाच्चेति ब्रह्मपुराणे प्रोञ्छनस्य पूर्वम्विहितत्वात् । कथमन्यथानुवादकमित्युक्तमिति भावः । विशेषाभावादिति दक्षस्मृतौ तत्पूर्वमेकमात्राप्रक्रमादिति भावः । चतुराश्रमादन्यत्रेति, अनुपनीतस्त्र्यादावित्यर्थः। कल्पनाप्रसङ्गादिति फलभूमाबोधकश्रुत्यन्तरस्येत्यादिबोधः । पूर्वमास्यमुपर्य्योष्ठमिति केचित् । पुनः पुनरिति श्रवणाच्चक्षुषोः श्रोत्रयोः पुनः स्पर्श इति व्याख्यानमपास्येति तदभिप्रायेणेति । धरणीमिति हस्तस्पर्शनिरोध श्चरणस्पर्शस्याचमनानुकूलत्वात् । अकृत्वा पादयोरिति तदशौचपक्षे । जान्वोर्ज्ज-ङ्घयोर्वीकृतावसक्थिकः उपवेशनसौकर्य्याय कृतवस्त्रादिवेष्टन इत्यर्थः । जले तिष्ठन्नाचम्येति योजनात् । अन्तरेव शुद्धः जलमध्यकृत्यकर्ममात्राधिकारी

त्यर्थः । एवमग्रेऽपि । अग्न्युदकमग्निपर्युक्षणार्थमुदकम् । न कुर्वीतेत्यत्र हेतुः वृथायत इति शेषः । शूद्रेति स हि आचान्तृभिंन्न एवाभिधित्सितोऽन्यथा तस्याचमनमेव न स्याद्द्विजासव्यत्वादिति भावः । दृष्ट्यैक्यात् धूल्यादिनिरासरूपस्य दृष्टप्रयोजनस्य प्रथमं जातत्वादित्यर्थः । दृष्टभेदात् मुखे जलप्रोञ्छनस्य द्वितीयाचमनेऽपि कर्त्तव्यत्वादित्यर्थः । अदृष्टार्थत्वेऽपि तस्य जातत्वात्, पुनष्क्न्तेनेत्यत आह-आचान्तस्येति । रसवर्ज्जं रसश्चेन्नोपलभ्यत इत्यर्थः ।

भूमिपतिता इति.लयन्तीत्यस्य पदद्वयत्वादिति भावः । भूमिगैस्ते समा इति रोमद्वयंक्लेदनासमर्थ्य एव । व्याख्यानमशुद्धिरिति । अत्र नैमित्तिकाचमनपक्षे मूलभूतश्रुत्यन्तरकल्पनामयादिदमेव शुद्धिम् । प्रयतोपीति प्रथमाचमनेन किञ्चित्प्रायत्यवानपि पुनराचमेदित्यर्थकम् । चर्मारं रजकमित्यादौ त्वयाऽपि तदर्थकत्वाङ्गीकारादिति समादरः । प्रयश्चे ...रिवेषणाद्यर्थम् । निधाय त्यक्त्वेत्यर्थः । उपस्पृश्यत गृहीत्वैव तत्संयोगादित्यग्रे दर्शनात्, इत्याभाति । इयमाचमनमात्रेण शुद्धिर्द्रव्यं स्थापयित्वा मूत्रपुरीषकरणे शरीरसम्बन्धिन्येव द्रव्ये यदि तत्करणन्तदा स्नानपर्यन्तमग्रे उक्तम् । तत्संयोगात्तु उपस्पृश्येत्यत्रान्वेति । पक्वान्नं तदपीत्यर्थः । इदञ्च घृतपक्वाद्यभिप्रायकम् पृथकाद्यभिप्रायवंवा ओदनादेरन्यत्रानयनाप्रसङ्गात् । एवञ्चासंकुचितमित्यपि तावदभिप्रायमेवेति ध्येयम् । निक्षिप्येति पादौ प्रक्षाल्येत्यत्रान्वेति । आचमनन्तु गृहीत्वैव तत्संयोगात्त्वनिध ायैवेत्यादिदर्शनादित्याभाति । कालार्थः संयोग इति संयोगः सान्निध्यप्रतिपादनं कालार्थः । तत्पूर्वकालत्वं तस्य बोधयितुम् नत्वङ्गत्वमित्यर्थः, आरम्भणीययावदिति भावः । उक्तवार्क्षेयमुक्तवृक्षोद्भवम् । सामर्थ्यात् दन्तलग्नापसरणरूपप्रयोजनसामर्थ्यात् । सामान्यशास्त्रं मुखे पर्युषित इत्यादि तस्यानुग्रहः असङ्कुचितं यावत्कर्माणि प्रत्यवायत्ववोधकम् ।

ननु विहितालाभेऽप्रयतेनापि क्रियतामित्याशङ्क्याह सर्वशक्तीति-सर्वैरङ्गै-रुपेतो यजेतेत्यादिना प्रायत्यमन्तराकृतमपि कर्म निष्फलमनिष्कर्षादित्यर्थः। अत एव तस्योदयप्राक् कृत्यत्वात्तद्धोमीतरविषयमित्यर्थ इत्याहुः सौवीरेति वणिक्प्रसिद्धवस्तुविशेषाञ्जनादौ । छालगेयो यमोऽपि-द्वितीयेह्नि

तृतीयदिन–भागाधिकारे नमस्येदिति – ब्राह्मणस्य राजविषयमित्याहुः। वस्तुतो यथायोग्यमन्वयः । साधूपरिगृहीतं तीर्थजलम् । देवखातोऽमनुष्यकर्तृकः । खात आकस्मिक इत्यप्यर्थमाहुः । गुणफलतास्नाने गुणाङ्गम् स्नाने नद्यादि तन्निबन्द्धनफलम् बन्द्ध इत्यर्थः। साधिकारफलमिति तत्फलकामनाभिलाषम्विना न तत्फलसिद्धिः । गुणफले तु नैवमिति भाव इत्याहुः । उपाकर्म श्रावणीविहितमध्यायोपाकर्मनामकङ्कर्म उत्सर्गाः । पौष्यां पुष्याद्युक्ततिथ्यन्तरे वा विहितकर्मविशेषः । सङ्क्रान्तिदिन एव या किञ्चिदवशिष्टा जाता। पुण्यकालो रात्रावपि । दिने च स्नानमकस्मान्न जातम् तदभिप्रायेण सङ्क्रान्तीति, विवाहादावपि रात्रीये यत्र दवान्न दिवास्नानम् तदभिप्रायेणैतत् । वस्तुत आदिपदग्राह्यविवाहाद्यभिप्रायकमेवेदम् । अतएवात्यये पूरकपिण्डदानम्, देशविशेषे दाहपूर्वकालीनश्राद्धञ्चादिपदस्वरसादेव प्रतिप्रसूयत इत्येके । जन्मर्क्षगतचन्द्रे ज्योतिश्शास्त्रेण दृष्टार्थं स्नानमुक्तम् । नैक्त्यं नैर्मल्यम् । हरिहरमतेऽपि शिरोनैर्मल्ये स्नानस्यापि जले निषेधः, वामनपुराणस्वरसात् । चत्वरोपद्वारयोरित्युद्धतोदकविषयम्, तत्स्थानगतमन्यजलविषयम्वा । एकवस्त्रता–निषेधादिति स्नानस्याप्यादिग्राह्यत्वादिति भावः । अनयोः कल्पयोराद्यः साधुः

**"स्नानं तर्पणपर्य्यन्तङ्कुर्यादेकेन वाससा"** इति,

प्रतिप्रसवातिरिक्तविषयत्वात् निषेधस्य । नच पुरुषार्थत्वादेव द्विवस्त्रनियमः। तथाऽपि प्रथमपक्षपर्यवसानात् एकेन वाससेति स्वरसान्नार्द्रमेकमित्यादेरपि तत्कालान्यकाल एव द्विवस्त्रत्वस्य पुरुषार्थत्वाच्चेत्याहुः। शिष्टाचारः प्रायेण द्वितीयवक्ष्यमाणस्यैव । न समुद्रेति स्वयमागतो मिथेव स्नायादिति भावः । निपानकर्त्तुरिति परस्वत्वापदनिषेधेनिपानस्वामिन इति ब्रूयात्, निषेध प्रयोजकरूपस्यैवोपन्यासौचित्यादिति भावः ।

निबद्धासु अप्सु त्रीनिति मृत्पिण्डेप्यन्वयि तेन तत्रापि न पञ्चपिण्डोद्धारः किन्तु त्रिपिण्डोद्धार इति भावः । अप्रतिष्ठितत्वेनेति अनुत्सृष्टौ तु मूत्रवदिति निषेधादिति भावः। प्रथमवेगिका इति शुष्कनद्यभिप्रायकम् । प्रथमवेगस्यापवित्रद्रव्यसम्बलनसम्भवाद्दृष्टार्थोयं निषेधः । नापवदेत न निन्देत । असङ्ख्यातमिति लक्षादिसंख्यानियमेन यत्रारम्भस्तदभिप्रायकमित्यप्याहुः ।

स्नानवर्णिकयोः स्नानीयद्रव्यवर्णिकयोः । वर्णिका उद्वर्त्तनद्रव्यम् । त्रयोदश्यामित्यादि वाक्यम् स्नानविशेषाभिप्रायकम् । नतु नित्यादिविषयकम् । अतएवोक्तं विशेषत इतीत्याभाति । भगे ऋतुमैथुनेऽन्यत्र स्नानाभावात् । एवमग्रेऽपि । अजीर्णावस्थायामिति-"न स्नानमाचरेद भुक्त्वा सुजीर्णेऽन्न" इत्यादिना च स्नानमात्रस्यैवार्थ इत्यजीर्णे निषेधादित्यर्थमाहुस्तच्चिन्त्यम् । प्रथमस्य चाण्डालादिस्पर्शनिमित्तकातिरिक्त विषयत्वव्यवस्थापनात् । उद्गारस्य च तत्समशीलत्वात् । द्वितीयस्य मध्याह्नस्नानपरतायाः स्पष्टत्वादिति ।

पर्युषित इति-अभ्युदित इत्यस्योभ्यान्वयादिति भावः । केचित्तु अभ्युदित इति भिन्नमेव स्वप्ने सति सूर्योदय इत्यर्थकमाहुः । द्वन्द्वद्वय इति शवस्पृष्टपर्यन्तमेकद्वन्द्वेन युगपदुपस्थितेषु सर्वेषु सन्निध्यबिशेषात्तत्पदं सर्वोपस्थापकं स्यात्। अतएव द्वन्द्वात्पूर इत्यादि व्युत्पत्तिर्युगपदुपस्थितेस्तत्र वीजत्वात् । एकद्वन्द्वे च शवस्पृष्टिरेव सन्निहितः । कुन्दकेतकीतत्कुसुमानि इत्यादौ- कुन्दश्च केतकी च तत्कुसुमञ्चेति विगृह्य एकद्वन्द्वे तत्पदेन केतकीमात्रोपस्थिते कुन्दकेतक्यौ च तत्कुसुमञ्चेत्येकद्वन्द्वेन द्वन्द्वान्तरविग्रहे तत्पदेनोभ्योपस्थितेः । वस्तुतस्तत्पदस्य बुद्धिस्थोपस्थापकता बुद्धिस्था च युगपद्वा क्रमेण वेत्यत्र द्वन्द्वादेरप्रयोजकतैव । किन्तुउपस्थिति-साम्येप्येकमात्रतात्पर्यग्रहादेकबोधः उभयतात्पर्यग्रहे चोभयबोधः। कुन्दकेतकीतत्कुसुमानीत्यत्र द्वन्द्वद्वयमेकद्वन्द्वो वेत्यस्यापि उभयत्र तत्पदतात्पर्यं कल्प्यमेकत्र वेत्येवार्थः । पदोपस्थितौ पदार्थोपस्थितौ वा विशेषाभावादिति तात्पर्यकल्पनागौरवमेव द्वन्द्वद्वयकल्पनागौरवमित्यवधारणीयम् । तत्पदेन-पतितादिस्पर्शिनोऽपि ग्राह्याः । वादिनाञ्चउपस्पृश्येति देवलवचनं तृतीये प्राप्तविषयकमेव । अशुचिस्पृष्टे तु-तत्कालाविद्यमानाशुचिस्पर्शे, तथा विशेषणीभूताशुचिस्पर्शाभिधायकं गौतमवचनमिति बोध्यम् ।

इदन्तु विचार्य्यते-एकद्वन्द्वे ऽपि शवस्पर्शे कथं स्नानप्राप्तिः । तत्राहुः उदक्या च शवश्च स्पृष्टिश्च इति विग्रहात् स्पृष्टिश्चार्थात् शवस्पृष्टिः । वस्तुतस्तुशवस्पर्शे स्नानस्यांनेनाप्राप्तावपि न दोषः । च्यवनवाक्ये शवं स्पृष्ट्वेति श्रवणादेव तल्लाभसम्भवात् ।

एकां शाखामिति–एकावयविसम्बन्धीत्यर्थः। तेननानाकाष्ठघटितनौकादौ न दोषः। प्राप्तमेव प्रक्षाल्याशुचिलिप्तमिति देवलवचनादिति शेषः।

विविक्त इति–आचान्त एव जातविरेचनः। सूयिका-प्रसवकारयित्री। मैथुने वमने तथेति। अनयोर्विशेषपरत्वमुक्तमेव। अपविद्धः पातित्यम् विनापि निन्द्यकर्माचरणेन ज्ञातिबहिष्कृतः। देवीराप इत्यादिभिरिति कामकृतेऽपरथाऽमन्त्रकस्नानस्यैव बोधनात्।

अयोनिपशुदिवेतिप्रत्येकं मैथुनगमनान्वयि। ब्राह्मणानुमतेति-जलोद्धृतजलाभावे ब्राह्मणानुमत्या निश्यप्यनुगर्त्तं स्नायादित्यर्थमाहुः। प्रातःस्नानादीति–क्रियाङ्गस्नानस्य पृथगुपादानात्तदन्यनित्यस्नानमित्यर्थः। आदिपदात्तर्पणादि। जपादीति–मध्याह्नजपादीत्यर्थः। प्रातर्ज्जपस्य प्रातःस्नानेनाप्यधिकारात्। ननु मलकर्षणस्य तीर्थाभावे उष्णोदकादिविधि रयुक्तः। तीर्थे तस्य निषेधादत आह–मलकर्षमभ्यङ्गेतिस्नानादीत्यन्तम्। अत्र क्रियास्नान इत्यत्र षट्सु मध्ये क्रियास्नाने काम्ये गुणफलम्वा प्रसङ्गेन तन्त्रेण वा, तयोः क्रियाङ्गत्वानपायात्। अहरहःस्नाने तदुभ्यभिन्नोद्धृतोदकादिक्रियास्नाने। कात्यायनादीति यद्यपि नद्यादावित्युक्रमाद्गुणपुलस्नान एव तेन धर्मा उक्ता न तद्भिन्ने तथाऽपि नद्यादावित्यादिपदार्थङ्कात्यायनादीत्यादि पदार्थम्वा आदाय सङ्गतिः। एवञ्चेन्न व्यख्यायते तदा क्रियास्नान एवेत्यहरहः स्नाने चेति पुनरुक्तं स्यादेकप्रतिपादकत्वात्।

यद्वक्ष्यत्यहरहः स्नानादभिन्नमिति। अयमेव च भेदो विवक्षित इत्यपि वक्ष्यति फलार्थितयाकथितमिति ध्येयम्। स्नानत्वोक्तिफलमार्थिको ध र्मातिदेशः स्यादिति शङ्कते–नचातिदेश इति। स्नानम्बोक्तिर्नैतावद्गमयतीत्यभिप्रेत्याह–सर्वेषामिति विशेषोद्देशेनेति। क्वचिदेव तथासति धर्मोक्तिरुचिता, परत्रार्थिकातिदेशादेव सिद्धेरिति भावः। नन्वतिदेशेन साधारणधर्मसम्बन्ध सिद्धावपि यत्र विशिष्य धर्मसम्बन्धविधिस्तत्र केनचिदगुणेन पुसम्बन्धं बोधयितुमिति शङ्कते। न चेत् सामान्यतो धर्मस्य प्रतिपादनाद् गुणस्य चाप्रतिपादनान्नैव मित्याह–तदभावादिति। नैमित्तिके–ग्रहोपरागाद्यतिरिक्ते। तक्षसूत्रे–गृहरथादावारेभगन इत्यादिके विचारके। क्रियाङ्गस्नोनेपीति। अत्र क्रियाङ्गत्वम्

यद्व्यतिरेकेणाशुचिस्पर्शाद्यप्रयतस्य क्रियाप्रतिबन्धः स्नानेपीदं नैमित्तिकमेव । तथा च नैमित्तिके धर्माभाव इत्यनेन पौनरुक्त्यम्, तथाऽपि कृतक्रियस्याशुचिस्पर्श-निमित्तकम्, नैमित्तिकत्वेनोक्तमकृतक्रियस्य तदेव क्रियाङ्गत्वेनोक्तमिति । अतएव क्रियाङ्गस्नाने धर्माविहितेत्युक्तम् । वक्ष्यति च निमज्जनमात्रे कृतेऽपि क्रियाङ्गस्य पृथगनुष्ठानमिति क्रियाङ्गस्नाने धर्माभाव इदानीमुच्यत इति विरोध इत्यपास्तम् । अस्मिन् स्थले क्रियाङ्गपदेन नैमित्तिकस्यैवोक्तेः । अतएवेति-क्रियाङ्गस्नाने धर्मसम्बन्धादेवेत्यर्थः । न भट्टनय इति, अहरहः स्नानेऽपि पापक्षयफलकामनाभिलापस्याङ्गत्वात्समानार्थकयोस्तन्त्रेण सिद्धिरित्यर्थः ।

भिन्न-भिन्नफलकामनाभिलाषाङ्गकत्वे कथं समानाङ्गकता कथम्वा तन्त्रसिद्धिरिति तु चिन्तनीयम् । इदमुपलक्षणम् । गुरुमते नित्यस्य निष्फलत्वेन कामनाभिलोपाङ्गराहित्येऽपि अधिकाङ्गकेन क्रियाङ्गेनास्य प्रासङ्गिकी सिद्धिरिति बोध्यम् । श्रुतमात्रमिति न धर्मा इति भावः । वाङ्मात्रैः न मानसैरित्यर्थः । त्रिषु विधायकमास्ताम् । अत आंह-फलेति । तस्यैव विधेयत्वादिति भावः । श्रौतक्रमेति-पाठिकक्रमेत्यर्थः ।

आचमनेति-अप्रायत्ये कर्माकरणात् । क्रमविरोधस्तत्र सद्य इति भावः । परिसङ्ख्यापत्तेरिति-लक्षणापत्तेरित्यर्थः । वस्तुतो यज्ञोपवीतवस्त्रादेः प्राप्तत्वात् यज्ञपवीतीत्यादिना वस्त्रविधाने परिसङ्ख्यारागप्राप्तसकलपञ्चनख-भक्षणे पञ्चवत् । नचैवं नियम एव याजनाध्यापनादिवदिति वाच्यम् । तत्र हि ब्राह्मणधर्म्मार्ज्जनत्वेनोपस्थितेषु सर्वेषु उपायविशेषसम्बन्धे बोधितेऽपरोप्यवच्छेदस्योत्तरकालेऽनुमानगम्यत्वात् । परिसङ्ख्यायाञ्च भक्षणे पञ्चसम्बन्धविधौ वा वस्त्रविधौ वा नान्यव्यवच्छेदोऽनुमातुं शक्यः मिलितैकपिण्डभक्षणसम्भवाद्युपधारणाविरोधाच्चेति अपरव्यवच्छेदःशाब्द एव लक्षणयेत्यत एवात्र पदार्थत्याग इत्याहुः । अत्र हि तर्पणपर्यन्तमित्यादिनाऽर्थतो द्वितीयवासोनिषेधादस्मिन्कल्पे तत्र भवतीत्यभिप्रेत्य लक्षणायाऽपि उत्तरीय-विधौ न दोष इत्याभाति । एवमनियतेति-एवम्बद्धशिखीति क्रत्वर्थमिति योजना । अनियतकेशवेषाः न भवेदित्यर्थकास्मिन्वाक्ये शेषः । लिङ्गात् प्रकाशनसामर्थ्यात् ।

कपिञ्जलेति–कपिञ्जलानित्यत्र सर्वोपादानाशक्यत्वाच्चतुष्पञ्चार्थत्वेऽनध्यवसायादननुष्ठानप्रवृत्तौ प्रथमोपस्थिततत्वात् त्रित्वमर्थो यथेत्यर्थः। प्रणवो भूरिति तत्र व्याहृतीनामेकमन्त्रत्वोक्तेः। अन्यथा गायत्री च तृतीयकेति तृतीयत्वानुपपत्तेरिति भावः। कृष्णतिलानिति प्रशंसा। नाभ्यधोभागोरस्थिपदवाच्यः। स्नाने भोजने च भोजनाचमने कुमन्त्रान्वय इति चिन्त्यम्। निमज्जनानन्तरम्–निमज्जनोत्तरप्राणायामानन्तरम्।

आचम्येति–त्रिराचम्यं शनैरसूनित्यनन्तरं योज्यम्। तेन मार्ज्जनप्राच्यत्वबोधकताऽस्य स्यात् यद्यपि तथाप्युपस्थानप्राच्यत्वलाभ एव। अतएव इत्यग्रे मार्ज्जनादित्यप्ययुक्तम्। तथाऽपि ऋष्यन्तरसम्वादादथोपतिष्ठेदित्यस्य मार्ज्जनानन्तरमुपतिष्ठेदित्यर्थात्तत्प्राच्यत्वलाभः। योगियाज्ञवल्क्योक्तो मन्त्रान्वयः। स्थानान्तर्गते सन्ध्यान्तर्गते वा प्राणायामानन्तराचमनेऽपि प्रयोगे नास्ति इति तु चिन्त्यम्। न च कल्पान्तरे तदिह तु कातीयक्रम एवेति वाच्यम्। सन्ध्यायाम्–द्रुपदाऽन्तश्चरस्यादेरनन्वयापत्तेः। उद्धृतैरनुद्धृतैरित्युपक्रम्य मन्त्राभिधानादग्रेहेतूदमन्त्रवदिति श्रवणाच्च जलाशयसमीपे उद्धृतोदकेऽपि मन्त्रो न गृह इति व्यवस्थेति केचित्। वस्तुतो मन्त्रोऽनुद्धृतविषय एवेति तत्त्वम्। मूलेति–नानास्थानान्वयित्वस्यैव मूलत्वोक्तिफलत्वादिति भावः। सर्वाधिकारेति अत्र केचित्–"पुराणम्पञ्चमो वेद" इति श्रवणात् सूतादेस्तपोविशेषशालित्वात्तदध्ययनस्याधुनिकाध्ययाप्रमाणत्वात्त्यागार्थकनमः पदे प्राप्तेऽपि मन्त्रजन्यादृष्टसिद्धिः। कथं शूद्रस्य श्राद्धादावित्याकाङ्क्षायामपि तम्प्रति पौराणिकाप्रतिपादनाद् "अमन्त्रास्य तु विप्रा मन्त्रेण गृह्यत" इत्येव प्रतिपादनात्तस्य चाद्यश्राद्धप्रकरणीयस्यापि आकाङ्क्षाबलात् तत्कृतश्राद्धमात्रबोधकत्वाद् ब्राह्मणान्तरितपुराणश्रवणस्यापि सम्प्रति निषेधाच्छूद्रः सुखमपाप्नुयादित्यादि सहस्रभाष्ये यथायोग्यम्पाठश्रवणयोरन्वयाभिधानाच्च न शूद्रस्य पुराणमन्त्रपाठोपीत्याहुः।

नाङ्गेभ्य इति पाणिस्नानवस्त्राभ्याम् आश्रमस्वरसात्। मिलितनिषेधे एकैकस्पृश्यतापत्तेराह तैलञ्चेति–प्रत्येकनिषेध एवेति भावः। भ्रान्त एकलोपेऽपरस्याङ्गिम्मान–एतत्सन्ध्यात्रयमित्यादिना मिलिताधिकार इति।

मित्यभिप्रेत्य शङ्कते नन्वेवमिति यदाह–केवलेति, कालव्याप्ताविति । अत्रापि शतसहस्रान्यतरनियम एवेत्याहुः । न्यायागतम् एवं ज्ञात्वा तुइति वाक्यात् पूर्वज्ञानं गम्यते । अन्तरितपूर्वज्ञाने प्रयोगपूर्वमपि ज्ञानमपेक्षितं न स्यादिति युक्तिसहितवाक्यगम्यमित्यर्थः । ब्राह्मणान्तर्भावेन प्रकारान्तरम्–शाखाभ्यन्तरविषयकमित्यर्थः । ऋष्यादिप्रतिपादकेनानुक्तऋष्यादिकानामपि शाखान्तरीय तन्मन्त्रोक्तऋष्यादिकं ग्राह्यमाल्क(?) ां कारणादिमत निरसितुमाह इदञ्चेति, ऋष्यादिनियमे ह्याकाङ्क्षाऽवश्यम्भावः । न च तस्य मन्त्रस्य सर्वशाखायां ऋष्यादिनियमे मानमिति भावः ।

अन्तर्गर्भिणमित्यत्र–गर्भगर्भ अन्तर्गर्भिभिन्नमित्यर्थ इति मैथिलाः । गौडास्तु एवमन्तर्गर्भिमात्रनिषेधापत्तिरन्यत्र नञान्वयात् । किञ्च नपुंसकस्यैवं रूपेऽसाधुत्वापत्त्यामन्वर्थामेनप्रत्ययमिन्नान्त एवायं गर्भवाची गर्भिणशब्दः अन्तस्थश्चासौगर्भिणश्चेति तथा च तन्मात्रनिषेध इत्याहुः । भुक्तशेषं यदि कदाचिदाचान्तव्याधिकञ्जलं करे समायति तदा यथोचितं पीत्वा अधिकं त्यजेदित्यर्थः । असङ्ख्यातमिति लक्षादिनियमारब्धजपविधयमिति केचित् । प्राक्कालीनप्रोक्षणात् स्नानाशक्तौ सन्ध्याधिकारजनकपावित्र्यार्थमित्यर्थः ।

अतएव–आचारादेव । सार्द्धयेति–अत्रापि एकफक्किकया ऊर्द्ध्वमपरया त्वर्घः इदन्तु पर्यवसितकथनम्, अघ इति प्रथमोक्तमपि पश्चादेव कार्य्यमित्याहुः । प्राक् प्राणानायग्य सम्प्रोक्ष्येत्यांदौ । अच्छिङ्गानामापोहिष्ठेत्यादि जलमन्त्राणाम् । आयतासपक्षे तेन प्राप्तानुवाद एव स्यात् । अन्यथा विध्यन्तरमेवेति गौरवमिति भावः ।

पार्ष्णिः–चरणपार्ष्णिः । अतएव उपलक्षणत्वात् क्रमाविवक्षात एव । शतादर्वागिति–अनेन शतस्यैव परमावधेः कथनादिति भावः । व्रतादृते विशेषविहिनार्द्रवासस्कच्छविशेषम्विना । नीवीमध्ये दैवाद्यदि धृता इत्यर्थः । वहिष्कच्छावन्द्धः । कच्छद्वयस्यान्तभागेयाः देहासम्बन्धयोः स्थापनम् । वामहस्तेन तिलेति, अत्र केचिद्वामकरप्रकोष्ठे तिलान् धृत्वा दक्षिणेन गृहीत्वा तर्पणमाहुः । " मध्योद्ध्वांङ्गुलिकरः शङ्कु " रिति मध्यमाङ्गुलित्रयमूदर्ध्वं यस्य तादृशः कर इत्यर्थः ।

तृप्यतामिति वाक्यस्य–तृप्यतामिति सेक्तव्यमिति योगियाज्ञवल्क्योक्तवाक्यस्य। जीवत्पितृकेणापीति–अङ्गहीनकाम्यस्य फलाजनकत्वात् जीवत्पितृकस्य च तिलतर्पणनिषेधाद्यमतर्पणस्य च तम्प्रत्युक्तत्वात्तम्प्रति न तिलानामङ्गत्वमिति गम्यते। मन्त्रान्तकालः, कर्मकालः अथि समाजादित्यर्थः, स्तोत्रशब्दवत्, विष्ण्वादिस्तोत्ररूपः शब्दो यथाऽदृष्टार्थ इत्यर्थमाहुः।

एकवारम् एकैकवारम्प्रथमपठितमन्त्रस्य मातामह–जलदानेनापरस्य जलदानम्प्रति व्यवधानात्, एतदीयद्वितीयाञ्जलौ न प्रथमाञ्जलिव्यवधायकः, स्वाङ्गत्वादित्याहुः। देवर्षीति–ऋषीन्देवानिति सामान्यतः ऋषितर्पणस्योक्तेरित्यर्थः। नन्वेतावता ऋषयस्तृप्यन्तामित्येवायाति। नतु विशिष्येत्यत आह–अतएवेति। पुराणोक्तत्वात्प्रामाणिकैरत्रापि लिखनाद्ग्राह्यमित्यर्थः। इदन्तु चिन्त्यम्। यदि–पद्मपुराणस्वरसादेतत्कर्त्तव्यता, तदामनुश्य–तर्पणोत्तरमुचिता। ननु पूर्वमिति कल्पेदेवा यथा इत्यादिना एक एवाञ्जलिः ।तथा सनकश्चेत्यादिनाऽपि। द्वौ द्वौ तु सनकादय इति चेदादरणीयम्, तदाकातीयतर्पण इत्याहुः। वाक्यैरिति–अस्मिन्कल्पे मन्त्रानुक्ते: करणाकाङ्क्षायाम् वाक्येनापि तत्पुराणान्मन्त्राकाङ्क्षाविरहान्न मन्त्रान्वय इति भावमाहुः। अद्भ्य इति पाठं व्याचष्टे–मिलितयोरिति–अत्र हेतुः अद्भ्य इति, पृथगिति, वस्तुतः अद्भ्य इति पाठः।

आशयस्तु–पूजा ब्रांह्मवैष्णवेत्यादिकात्यायनोक्ता। अभ्यङ्गक्षमा चन्दनादिलिखितायास्तदक्षमत्वादिति भावः। लिङ्गेपीत्युपलक्षणम्। शालग्रामेपीत्याहुः। व्रात्यवैश्यः चतुर्विंशवर्षेऽपि यस्योपनयनं न जातः सः। सूर्यपूजायान्नमस्कारस्तवादिरूपायामित्यर्थमाहुः। अक्वथितमग्निपक्वपरम्।

अग्रमुद्धृत्येति–यदा कृतवैश्वदेवस्यातिथिरागतस्तदाविशेषविधिबलादग्रोद्धारे कृते तदनन्तरमतिथिदानम् नैवेद्यञ्च, तद्विषयमेतत्। तदा तु नैवम्–तदा वैश्वदेवानामग्रोद्धारस्य वैश्वदेवाङ्गत्वात्, तत्काल एव कर्त्तुमुचितत्वान्न तन्नैवेद्यम्। अत एवोद्धृत्य घृताक्तमित्याद्युक्तोद्धरणकालपूर्वमुद्धरणानौचित्यान्न भूस्वाम्यन्नस्य पूर्वमेव दानम्।

नचैवम्''तद्भूस्वामिनस्तस्य हरन्ति पितरो बला'' दिति वाक्यबलादासनार्घादिहरणापत्तिः। तत्प्रयोगान्तरितदानप्रागभावस्यापि तद्विरोधि

त्वादित्याहुः। अधिरूढं यत्र स्वयमधिरूढो भवेदित्यर्थः। मलिनत्वमिति–मलिनेन वस्त्रादिना सम्बन्धाद्यन्मलिनितम् । मनुष्यसंयुतम् परिधानानभिप्रायेऽपि यन्मनुष्याङ्गोपरिस्थमित्यर्थः । नरसिंहमूर्तौ वा । तथा च–सामान्यतो विष्णुपूजायामपि भुक्तरससम्भृतम् अत्यम्लपुष्पपरनिर्मितम् । प्रतिरूपकं सदृशम्–पित्तलादि। जीवजातं जीवाज्जातम् करतूर्य्यादि। जलदेव–नमस्कारो ब्राह्मवैष्णवेत्याद्युक्तः। सर्वशाखाप्रत्ययम्–सर्वासु शाखासु प्रत्ययो यस्येत्यर्थः। मणिको जलपात्रविशेषः। परान्नम्–परदत्तमोदनादि, परश्च मातुलादन्य परिभाषितः। स्फ्यः खादिरखर्गः। कुर्य्याद् व्यजनादिनेति पाठ एतत्सम्मत इत्याहुः । स्त्रीलिङ्गेति लिङ्गशब्दस्य पुल्लिङ्गत्वादिति भावः । ग्रासो मयूराण्डप्रमाणः। मुखे सङ्कोचविकाशाभ्यां विना यावन्मातीति वा प्राहुः। अतएवेति–स्तुतिमात्रत्वस्यानन्यगतिकल्प्यत्वा- दित्यर्थः । तस्यापीति–ब्रह्मादिबलेरप्रामाणिकत्वे किमालम्व्य स्तुतिः स्यादित्यर्थः। असते ते वाचन्धेनुमुपासीतेत्यादौ धेनुत्वेन वेति भावः। बाधकाभावान्न स्तुतिमात्रतेत्यभिप्रेत्याह असम्भव इति ।वाक्यभेद इति । मण्डलस्तुतिरेको वाक्यार्थो बलिदानविधिरपर इति । वाक्यार्थभेदाद्वाक्यभेद इत्यर्थः । सूक्तवाक्यादिवदिति यथा सूक्तवाक्येन प्रस्तरं प्रहरतीत्यत्राग्नीन्द्रादिप्रकाशकनानामन्त्रैः कुशमुष्टीत्यर्थके ततद्देवताप्रकाशनसामर्थ्यात्तत्तद्देश्यकवतो शमुष्टित्यांगः पृथगेव वाक्यार्थागौरवस्य प्रामाणिकत्वात्तथेत्यर्थः । नानादेवातोद्देश्यककएककुशमुष्टित्याग एव सर्वैर्मन्त्रैः कथन्नेति चिन्त्यम्।

दधिसक्तूनित्यत्र प्रत्येकमपि निशि निषेध इत्याहुः। शिशुमारो–ग्राहविशेषः। तदाकारश्चतुर्दशतारा ध्रुवसमीपस्थाः। स्वस्थ इन्दौ स्वानुकूलचन्द्रे। सकृदिति श्रवणात्प्रत्यर्तुप्रथमगमनस्यैव पुत्रोत्पति–योग्यत्वमपरन्तु केवलं कामार्थमित्याहुः। युग्मास्विति–समशुक्रत्वे स्त्रीपुंसयोर्बोध्यमन्यथा तदाधिक्यस्यैव नियामकत्वोक्तत्वादित्याहुः। वाचनिकस्नाने–गर्भशङ्कित्वहेतोः क्वोपयोग इति चिन्त्यमिति ।

इति महामहोपाध्याय–श्रीरघुनाथविरचितेय माचारादर्शटीका समाप्तेति।

## परिशिष्टम्–(ग)

# मूलग्रन्थोद्धृत-श्लोकसूची

| श्लोकः | आकरग्रन्थः / ऋषिः | पृष्ठसंख्या |
|---|---|---|
| अकृते वैश्वदेवे तु | नरसिंहपुराणम् | ३१२ |
| अग्निष्वाताँस्तथा सौम्यान् | पद्मपुराणम् | १०३ |
| अग्न्यादिगौतमेनोक्तो | – | २३९ |
| अघं स केवलं भुङ्क्ते | यमः | ३६१ |
| अङ्कोलपत्रकुसुमं | भविष्यपुराणम् | २०६ |
| अङ्गिरसो नः पितरो | शुक्लयजुर्वेदः ९/५० | १२८ |
| अङ्गुष्ठमात्रः पुरुषो | बौधायनः | ४५८ |
| अचिन्तितमनाहूतं | पराशर–शातातपौ | ३४२ |
| अदृश्रमस्य केतवो | यजुर्वेदः ८/४० | १५३ |
| अद्यप्रभृतिनिर्माल्यम् | नरसिंहपुराणम् | १९८ |
| अध्यापनं ब्रह्मयज्ञः | मनुः | २५८ |
| अनड्वान् ब्रह्मचारी च | आपस्तम्बः | ४०७ |
| अनिकेता ह्यनाहाराः | विष्णुपुराणम् | ३३१ |
| अन्नप्रकरवत्तस्य | योगियाज्ञवल्क्यः | १३७ |
| अन्वारब्धेन सव्येन | योगियाज्ञवल्क्यः | ६६ |
| अपि कीटपतङ्गानाम् | नन्दिपुराणम् | ३५८ |
| अपि नः स कुले जायात् | यमः | २३ |
| अपि शाकं पचानस्य | यमः | ३३५ |
| अपोशानञ्च गृह्णीयात् | ब्रह्मपुराणम् | ३९७ |
| अप्युद्धृत्य यथाशक्त्यां | छन्दोगपरिशिष्टम् | ३०१ |
| अप्येकपङ्क्त्यां नाश्नीयात् | ब्रह्मपुराणम् | ४२९ |
| अप्येकमाशयेद् विप्रम् | छन्दोगपरिशिष्टम् | ३०१ |
| अप्सु देवा मनुष्याणाम् | शातातपः | १७८ |
| अर्घपात्रे प्रयत्नेन | पद्मपुराणम् | १५९ |

# परिशिष्टम्-(घ)

## मूलग्रन्थोद्धृत-सूत्रसूची

## परिशिष्टम्-(ङ)

# मूलग्रन्थोद्धृत-ग्रन्थर्षि-सूची

| ग्रन्थः/ऋषिः | पृष्ठसंख्या |
|---|---|
| अङ्गिराः | २६७,४४२ |
| आपस्ताबः | १, २५०,२६९, २७२, २७८, ३३१, ३३४, ३४६, ३५८, ३८०, ४०७, ४१२, ४२१, ४४८, ४८२, ५०४ |
| उशनाः | ६१ |
| कात्यायनः | १, ६६, १४८ |
| कालिकापुराणम् | २१५ |
| कार्ष्णाजिनिः | १६, ४४, |
| गृह्यपरिशिष्टम् | २४७ |
| गोभिलः | १३८ |
| गौतमः | २४९, ३१४, ३४४, ३५४, ४२५, ५०४ |
| छन्दोगपरिशिष्टम् | १, ६, १२, ७७, २४५, २४६, २६३, २६७, २६९, २७३, २७६, २७९, २८२, २८३, ३०१, ४१२ |
| जाबालिः | १ |
| दक्षः | ३६८, ३७२, ४६५, ४६९ |
| देवलः | ३२१, ३६३, ४२४, ४४३, ४५७, ४८८ |
| देवीपुराणम् | १८१, २००, २०२ |
| नन्दिपुराणम् | ३५८, ३६२ |
| नरसिंहपुराणम् | १९८, २०५, २१९, २२२, ३१२, ४७४ |
| पद्मपुराणम् | ६९, ९९, १०३, १५९, १६०, ३१९ |
| पराशरः | १३७, ३४२ |
| पारस्करः | ६४, ३२९ |
| पैठीनसिः | ११६, ३६७, ४१७, ४७७ |

## ॥ सम्पादक परिचय ॥



नाम–प्रो. वाचस्पतिशर्मा त्रिपाठी

पितृनाम–स्व. पण्डित गङ्गाधरशर्मा त्रिपाठी
(पूर्व–धर्मशास्त्रविभागाध्यक्ष)

पितामह–स्व. पण्डित यमुनाप्रसाद त्रिपाठी
(पूर्व–धर्मशास्त्रविभागाध्यक्ष)

जन्मस्थान–ग्राम+पत्रालय–तक्कीपुर,
जिला–सीवान (बिहार)

शैक्षणिक योग्यता – साहित्य – पुराण – धर्मशास्त्राचार्य
(तीनों में स्वर्णपदक प्राप्त)

एम.ए. (संस्कृत), एम. ए. (राजनीति विज्ञान)

बी. एड्., विद्या–वारिधि।

अध्यापन (1) केन्द्रीय विद्यालय (स्नातकोत्तराध्यापक)

(2) सदाशिव केन्द्रीय सं. विद्यापीठ, पुरी, उड़ीसा (व्याख्याता, रीडर एवं विभागाध्यक्ष)

(3) स्नातकोत्तर धर्मशास्त्र–विभाग, का. सिं. द. संस्कृत विश्वविद्यालय, दरभंगा (रीडर, आचार्य, विभागाध्यक्ष एवं सङ्कायाध्यक्ष)

= ३६ वर्षों तक

शोधमार्गनिर्देशन–मार्गदर्शन में १४ शोधप्रज्ञों ने विद्यावाचस्पति (डी. लिट्.) तथा २७ ने विद्यावारिधि (पी–एच.डी.) शोधोपाधि प्राप्त की है।

कृतियाँ– (i) प्राचीन भारत की दण्ड–व्यवस्था, (ii) पुराणों में युद्ध एवं सैन्यविज्ञान, (iii) वसिष्ठस्मृति (विद्वन्मोदिनी टीका सहित),

